# KISHKINDHAKANDAM

OF

# SRIMAD RAMAYANAM



**V. RAMASWAMY SASTRULU & SONS**

**292, Subhash Chandra Bose Road**

**MADRAS**

**1951**

॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# ॥ किष्किन्धाकाण्डः ॥



चेन्नपुर्याम्

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

१९५१

## ॥ श्रीरामायणकिष्किन्धाकाण्डफलश्रुतिः ॥

सुग्रीवसख्य मारभ्य यावद्वालिनिषूदनम् ।
श्रुत्वा विजयमाप्नोति मुच्यते जारदोषतः ॥

दण्डादन्यं न पश्यामीत्यत्रैकादश मक्षरम् ।
श्रुत्वा मर्त्यं स्वप्रकाशो लक्ष्मीलोक मवाप्नुयात् ॥

अभिषेकञ्च रामेण रुमायाः प्राप्ति मुत्तमाम् ।
सुग्रीवस्य जयं श्रुत्वा राज्यलाभमवाप्नुयात् ॥

वाक्य मात्महितं चैवेत्यत्र द्वादशवर्णकम् ।
श्रुत्वा रामप्रसादेन सोऽमृतत्वमवाप्नुयात् ॥

किष्किन्धाकाण्डपठनात्तदर्थश्रवणादपि ।
सर्वदा सर्वलोकेषु कामचारो भवेन्नरः ॥

॥ श्रीः ॥

## स्मार्तादीनां सर्वेषां श्रीरामायणपारायणादौ

## ॥ कर्तव्यपूजाविधानम् ॥

आचम्य । प्राणानायम्य । ममोपात्त...शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्र-देवताप्रीत्यर्थं यावच्छक्ति ध्यानावाहनादिषोडशोपचारपूजां करिष्ये ॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये ॥ तदंगत्वेन कलशपूजां करिष्ये ॥ कलशपूजां गणपतिपूजां च कृत्वा ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यांतं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

ततश्श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यांतपूजा विधेया ॥ श्रीरामचन्द्रदेवताभ्यां नमः ॥ ध्यानावाहनादिषोडशोप-चारपूजां च कृत्वा ॥

---

## ॥ श्रीमद्रामायणपारायणारम्भक्रमः ॥

सद्गुरुसकाशाल्लब्धोपदेशोवक्ष्यमाणरीत्या श्रीरामायणपारायणं कुर्यात् - देशकालौ संकीर्त्य—

अस्य श्रीरामायणमहामंत्रस्य वाल्मीकि भगवान् ऋषिः-अनुष्टुप्छन्दः - श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रो देवता - रां बीजं - श्रीं शक्तिः - मं कीलकं - मम श्रीसीतालक्ष्मण-भरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिद्ध्यर्थे पारायणे विनि-

योगः - रः अंगुष्ठाभ्यान्नमः - रीं तर्जनीभ्यां स्वाहा - रूं मध्यमाभ्यां वषट् - रैं अनामिकाभ्यां हुं - रौं कनिष्ठिकाभ्यां वौषट् - रः करतलकरपृष्ठाभ्यां फट् - रां हृदयाय नमः - रीं शिरसे स्वाहा - रूं शिखायै वषट् - रैं कवचाय हुं - रौं नेत्रत्रयाय वौषट् - रः अस्त्राय फट् ॥ लोकत्रयेण दिग्बंधः ॥

ध्यानम्:—

कालांभोधरकांतिकांतमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधान मपरं हस्तांबुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यंतं मकुटांगदादिविविधाकल्पोज्ज्वलांगं भजे ॥

---

## ॥ अथ मानसिकपूजा ॥

लं पृथिव्यात्मने श्रीरामचन्द्रपरब्रह्मणे गंधं समर्पयामि - हं आकाशात्मने श्रीरामचन्द्रपरब्रह्मणे पुष्पं समर्पयामि - यं वाय्वात्मने श्रीरामचन्द्रपरब्रह्मणे धूपमाघ्रापयामि - रं अग्न्यात्मने श्रीरामचन्द्रपरब्रह्मणे दीपं दर्शयामि - वं अमृतात्मने श्रीरामचन्द्रपरब्रह्मणे अमृतोपहारं समर्पयामि - सं सर्वात्मने श्रीरामचन्द्रपरब्रह्मणे सर्वोपचारपूजास्समर्पयामि - इति मानसिकपूजा ॥

मूलमंत्रः—

धर्मात्मा सत्यसंधश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वंद्वश्शरैनं जहि रावणिम् ॥

इति यथाशक्ति जपित्वा श्रीरामायणपारायणं कुर्यात् ॥ अनंतरं पुनः ध्यानं मानसिकपूजां हृदयादिन्यासं च कुर्यात् - श्लोकत्रयेण दिग्विमोकः ॥

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादाद्रघूद्वह ! ॥

---

## श्रीवैष्णवानां

## ॥ श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

प्रथमतः श्रीशैलेशे (रामानुजे)त्यादि स्वस्वसंप्रदायनिर्वाहकाचार्यानुसंधानम् । ततः 'लक्ष्मीनाथे' त्यारभ्य 'प्रणतोऽस्मिनित्य' मित्यंतम् अनंतरं श्रीशैलपूर्णविषयम् 'पितामह 'स्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यन्त विषया स्सांप्रदायिकश्लोका अनुसंधेयाः ॥ यद्वा श्रीधरादिस्वाचार्यपर्यंताः प्रतिव्यक्तिश्लोका अनुसंधेयाः ॥

ततः—

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २

यःपिबन्सततं रामचरितामृतसागरम् ।
अतृप्त स्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ३

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ ५

मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६

उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ७

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदःप्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहु मरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

## ॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्त माख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् । ४

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ६

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ८

पितृभक्ताय सततं भ्रातृभिस्सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गळम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम्॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥ १४

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् । १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥ १६

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गळम् ॥ १७

[कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मनावा प्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥]

ततः 'पितामह' स्येत्यारभ्य स्वाचार्यान्तश्लोका अनुसन्धेयाः ॥

---

## श्रीस्मार्तमाध्वादीनां श्रीमद्रामायण

### ॥ पठनोपक्रमानुसन्धेयः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्यास्सुमनस स्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ २

ततः श्रीमच्छङ्कराचार्यादि गुरुपरम्परानुसन्धेया ॥

दोर्भिर्युक्ता चतुर्भि स्स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना ।
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्यसिन्धो स्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ९

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १०

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२

यः कर्णाञ्जलिसंपुटै रहरह स्सम्यक्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४

वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ १५

श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६

वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।

अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरतश्च पार्श्वदळयो र्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट्तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

[ततश्श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया । पारायणावसाने च पुनः पूजा कर्तव्या ॥]

---

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येनमार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ २

अपुत्राः पुत्त्रिणस्सन्तु पुत्त्रिणस्सन्तु पौत्त्रिणः ।
अधना स्सधनास्सन्तु जीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

शृण्वन् रामायणं भक्त्या यः पादं पद मेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६

यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ॥ ७

यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥ ८

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ९

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥ १०

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥ ११

ऋतवस्सागरा द्वीपा वेदा लोका दिशश्चते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥ १२

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीराघवायेति समर्पयामि ॥ १३

---

## ॥ श्रीगायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकि र्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजित स्सम्यग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्र स्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्यव्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानिच ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६

निरीक्ष्य स मुहूर्तंतु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्र मितोराम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ ११

वन्द्यास्ते तु तपस्सिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्यास्तेऽपि सीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् मारुतात्मजः ॥ १३

धन्या देवा स्सगन्धर्वा स्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४

मङ्गळाभिमुखी तस्य सा तदाऽसीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ १५

हितं महार्थं मृदुपूर्वसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६

धर्मात्मा रक्षसां श्रेष्ठ स्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ १७

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १८

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायण मनामयम् ॥ १९

नते दद्दशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेद मुवाचाग्निसमीपतः ॥ २१

चलनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापि तदाऽऽश्लिष्टा महेश्वरम् ॥ २२

दाराः पुत्त्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायणं सम्पूर्णम् ॥

---

## ॥ देवताप्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाःपतये नमः ॥ २

---

## ॥ वाल्मीकिप्रार्थना ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को नयाति परां गतिम् ॥ २

---

## ॥ आंजनेयप्रार्थना ॥

अंजनानंदनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहंतारं वन्दे लङ्काभयंकरम् ॥ १
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ २
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि । ३

---

## ॥ श्रीरामायणप्रशंसा ॥

श्रीमद्ब्रह्म तदेव बीजममलं यस्याङ्कुरश्चिन्मयः
काण्डैस्सप्तभिरन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकैस्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥
यः कर्णांजलिसंपुटैरहरहस्सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोःपदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥

॥ उमासंहितायां धर्मराजंप्रति ब्रह्मोक्तिः ॥

श्रीरामप्रातिपदिक मवशेनापि संगृणन् ।
मुक्तिं प्राप्नोति मनुजः किंपुन र्बुद्धिपूर्वकम् ॥ १

राशब्दोच्चारणादेव पातका देहपञ्जरात् ।
निर्यान्त्यायान्ति पापानि मवर्णादर्शनात्पुनः ॥ २

राशब्दोच्चारणे जाते वक्त्रात्पापं विगच्छति ।
मकारश्रवणे जाते भस्मीभावं गमिष्यति । ३

॥ तत्रैव तृतीयाध्याये उमां प्रति शिवोक्तिः ॥

रामेति रामचन्द्रेति रामभद्रेति वा मनुम् ।
यावज्जीवं जपन्मर्त्यो जीवन्मुक्तो न संशयः ॥ १

रामायणस्य माहात्म्यं वक्तुं वर्षशतैरपि ।
अशक्यं विस्तराद्वक्तुं संक्षेपाद्वच्मि सांप्रतम् ॥ २

रामायणस्य वाक्यं वा पादं वा पदमेव वा ।
मुक्त्यन्ते तु प्रयुंजानो ब्रह्मभूयाय कल्पते ॥ ३

रामायणकथामेव ये शृण्वंति नरोत्तमाः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ ४

॥ तत्वसंग्रहरामायणे उत्तरकाण्डे एकविंशसर्गे द्वाविंशच्छ्लोकः ॥

संसारतापयुक्तानां जन्तूनां हतचेतसाम् ।
श्रीमद्रामायणाख्यानपीयूषं भेषजं स्मृतम् ॥ ५

॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-किष्किन्धाकाण्डे

## ॥ प्रथमस्सर्गः ॥

स तां पुष्करणीं गत्वा पद्मोत्पलझषाकुलाम् ।
रामस्सौमित्रिसहितो विललापाकुलेन्द्रियः ॥ १
तस्य दृष्ट्वैव तां हर्षा दिन्द्रियाणि चकम्पिरे ।
स कामवश मापन्न स्सौमित्रि मिद मब्रवीत् ॥ २
“सौमित्रे! शोभते पम्पा वैडूर्यविमलोदका ।
फुल्लपद्मोत्पलवती शोभिता विविधै र्द्रुमैः ॥ ३
सौमित्रे! पश्य पम्पायाः काननं शुभदर्शनम् ।
यत्र राजन्ति शैलाभा द्रुमास्सशिखरा इव ॥ ४
मां तु शोकाभिसंतप्तं माधवः पीडयन्निव ।
भरतस्य च दुःखेन वैदेह्या हरणेन च ॥ ५
शोकार्तस्यापि मे पम्पा शोभते चित्रकानना ।
व्यवकीर्णा बहुविधैः पुष्पै श्शीतोदका शिवा ॥ ६
नळिनैरपि संछन्नाह्यत्यर्थं शुभदर्शना ।
सर्पव्याळानुचरिता मृगद्विजसमाकुला ॥ ७
अधिकं प्रतिभात्येतन्नीलपीतं तु शाद्वलम् ।
द्रुमाणां विविधैः पुष्पैः परिस्तोमैरिवार्पितम् ॥ ८
[ नानाप्रख्यातकुसुमैश्छन्ना भूर्भाति लक्ष्मण ! ॥ ]

पुष्पभारसमृद्धानि शिखराणि समन्ततः ।
लताभिः पुष्पिताग्राभि रुपगूढानि सर्वशः ॥ ९

सुखानिलोऽयं सौमित्रे! कालः प्रचुरमन्मथः ।
गन्धवान्सुरभिर्मासो जातपुष्पफलद्रुमः ॥ १०

पश्य रूपाणि सौमित्रे! वनानां पुष्पशालिनाम् ।
सृजतां पुष्पवर्षाणि तोयं तोयमुचामिव ॥ ११

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति गाम् ॥ १२

पतितैः पतमानैश्च पादपस्थैश्च मारुतः ।
कुसुमैः पश्य सौमित्रे! क्रीडन्निव समन्ततः ॥ १३

विक्षिपन्विविधाश्शाखानगानां कुसुमोत्कचाः ।
मारुत श्चलितस्थानै ष्षट्पदैरनुगीयते ॥ १४

मत्तकोकिलसन्नादै र्नर्तयन्निव पादपान् ।
शैलकन्दरनिष्क्रान्तः प्रगीतइव चानिलः ॥ १५

तेन विक्षिपतात्यर्थं पवनेन समन्ततः ।
अमी संसक्तशाखाग्रा ग्रथिता इव पादपाः ॥ १६

स एष सुखसंस्पर्शो वाति चन्दनशीतलः ।
गन्धमभ्यवहन्पुण्यं श्रमापनयनोऽनिलः ॥ १७

अमी पवनविक्षिप्ता विनदन्तीव पादपाः ।
षट्पदै रनुकूजन्तो वनेषु मधुगन्धिषु ॥ १८

गिरिप्रस्थेषु रम्येषु पुष्पवद्भि र्मनोरमैः ।
संसक्तशिखराश्शैला विराजन्ते महाद्रुमैः ॥ १९

पुष्पसंछन्नशिखरा मारुतोत्क्षेपचञ्चलाः ।
अमी मधुकरोत्तंसाः प्रगीता इव पादपाः ॥ २०

पुष्पिताग्रां स्तु पश्येमान्कर्णिकारांत्समन्ततः ।
हाटकप्रतिसंछन्ना न्नरान्पीताम्बरानिव ॥ २१

अयं वसन्त स्सौमित्रे ! नानाविहगनादितः ।
सीतया विप्रहीनस्य शोकसन्दीपनो मम ॥ २२

मां हि शोकसमाक्रान्तं सन्तापयति मन्मथः ।
हृष्टः प्रवदमानश्च मामाह्वयति कोकिलः ॥ २३

एष नत्यूहको हृष्टो रम्ये मां वननिर्झरे ।
प्रणदन्मन्मथाविष्टं शोचयिष्यति लक्ष्मण ! ॥ २४

श्रुत्वैतस्य पुराशब्दमाश्रमस्था मम प्रिया ।
मामाहूय प्रमुदिता परमं प्रत्यनन्दत ॥ २५

एवं विचित्राः पतगा नानारावविराविणः ।
वृक्षगुल्मलताः पश्य सम्पतन्ति ततस्ततः ॥ २६

विश्रमा विहगाः पुम्भि रात्मव्यूहाभिनन्दिताः ।
भृङ्गराजप्रमुदिता स्सौमित्रे ! मधुरस्वनाः ॥ २७

[तस्याः कूले प्रमुदिता श्शकुनास्सङ्घशस्त्विह ।]
नत्यूहरुतविक्रन्दैः पुंस्कोकिलरुतैरपि ॥ २८

स्वनन्ति पादपाश्चेमे ममानङ्गप्रदीपनाः ।
अशोकस्तबकाङ्गारषट्पदस्वननिस्वनः ॥ २९

मां हि पल्लवताम्रार्चि र्वसन्ताग्निः प्रधक्ष्यति ।
नहितां सूक्ष्मपक्ष्माक्षीं सुकेशीं मृदुभाषिणीम् ॥ ३०

अपश्यतो मे सौमित्रे! जीवितेऽस्ति प्रयोजनम्।
अयं हि दयितस्तस्याः कालो रुचिरकाननः॥ ३१
कोकिलाकुलसीमान्तो दयिताया ममानघ!।
मन्मथाऽऽयाससम्भूतो वसन्तगुणवर्धितः॥ ३२
अयं मां धक्ष्यति क्षिप्रं शोकाग्निर्न चिरादिव।
अपश्यत स्तां दयितां पश्यतो रुचिरद्रुमान्॥ ३३
ममायमात्मप्रभवो भूय स्त्व मुपयास्यति।
अदृश्यमाना वैदेही शोकं वर्धयते मम॥ ३४
दृश्यमानो वसन्तश्च स्वेदसंसर्गदूषकः।
मां ह्यद्य मृगशावाक्षी चिन्ताशोकबलात्कृतम्॥ ३५
सन्तापयति सौमित्रे! क्रूरश्चैत्रो वनानिलः।
अमी मयूराश्शोभन्ते प्रनृत्यन्त ततस्ततः॥ ३६
स्वैः पक्षैः पवनोद्धूतैर्गवाक्षैः स्फाटिकैरिव।
शिखिनीभिः परिवृता स्त एते मदमूर्छिताः॥ ३७
मन्मथाभिपरीतस्य मम मन्मथवर्धनाः।
पश्य लक्ष्मण नृत्यन्तं मयूरमुपनृत्यति॥ ३८
शिखिनी मन्मथार्तैषा भर्तारं गिरिसानुषु।
तामेव मन्मथाविष्टो मयूरोऽप्युपधावति॥ ३९
वितत्य रुचिरौ पक्षौ रुतैरुपहसन्निव।
मयूरस्य वने नूनं रक्षसा न हृता प्रिया॥ ४०
तस्मान्नृत्यति रम्येषु वनेषु सहकान्तया।
मम त्वयं वने वासः पुष्पमासे सुदुस्सहः॥ ४१

पश्य लक्ष्मण! संरागं तिर्यग्योनिगतेष्वपि ।
यदेषा शिखिनी कामाद्भर्तारं रमतेऽन्तिके ॥ ४२

ममाप्येवं विशालाक्षी जानकी जातसम्भ्रमा ।
मदनेनाभिवर्तेत यदि नाऽपहृता भवेत् ॥ ४३

पश्य लक्ष्मण! पुष्पाणि निष्फलानि भवन्ति मे ।
पुष्पभारसमृद्धानां वनानां शिशिरात्यये ॥ ४४

रुचिराण्यपि पुष्पाणि पादपानामतिश्रिया ।
निष्फलानि महीं यान्ति समं मधुकरोत्करैः ॥ ४५

वदन्ति रावं मुदिता श्शकुना स्सङ्घशः कलम् ।
आह्वयन्त इवान्योन्यं कामोन्मादकरा मम ॥ ४६

वसन्तो यदि तत्रापि यत्र मे वसति प्रिया ।
नूनं परवशा सीता सापि शोचत्यहं यथा ॥ ४७

नूनं नतु वसन्तोऽयं देशं स्पृशति यत्र सा ।
कथं ह्यसितपद्माक्षी वर्तयेत्सा मया विना ॥ ४८

अथवा वर्तते यत्र वसन्तो यत्र मे प्रिया ।
किं करिष्यति सुश्रोणी सा तु निर्भर्त्सिता परैः ॥ ४९

श्यामा पद्मपलाशाक्षी मृदुपूर्वाभिभाषिणी ।
नूनं वसन्त मासाद्य परित्यक्ष्यति जीवितम् ॥ ५०

दृढं हि हृदये बुद्धिर्मम सम्प्रति वर्तते ।
नालं वर्तयितुं सीता साध्वी मद्विरहं गता ॥ ५१

मयि भावस्तु वैदेह्या स्तत्वतो विनिवेशितः ।
ममापि भावस्सीतायां सर्वथा विनिवेशितः ॥ ५२

एष पुष्पवहो वायुस्सुखस्पर्शो हिमावहः ।
यां विचिन्तयतः कान्तां पावकप्रतिमो मम ॥ ५३

सदा सुखमहं मन्ये यं पुरा सहसीतया ।
मारुतस्स विना सीतां शोकं वर्धयते मम ॥ ५४

तां विना स विहङ्गो यः पक्षी प्रणदित स्तदा ।
वायसः पादपगतः प्रहृष्टमभिनर्दति ॥ ५५

एष वै तत्र वैदेह्या विहगः प्रतिहारकः ।
पक्षी मां तु विशालाक्ष्या स्समीप मुपनेष्यति ॥ ५६

शृणु लक्ष्मण ! सन्नादं वने मदविवर्धनम् ।
पुष्पिताग्रेषु वृक्षेषु द्विजानामुपकूजताम् ॥ ५७

विक्षिप्तां पवनेनैतामसौ तिलकमञ्जरीम् ।
षट्पदस्सहसाऽभ्येति मदोद्धूतामिव प्रियाम् ॥ ५८

कामिनामयमत्यन्तमशोकश्शोकवर्धनः ।
स्तबकैः पवनोत्क्षिप्तै स्तर्जयन्निव मां स्थितः ॥ ५९

अमी लक्ष्मण ! दृश्यन्ते चूताः कुसुमशालिनः ।
विभ्रमोत्सिक्तमनस स्साङ्गरागा नरा इव ॥ ६०

सौमित्रे ! पश्य ! पम्पाया श्चित्रासु वनराजिषु ।
किन्नरा नरशार्दूल ! विचरन्ति तत स्ततः ॥ ६१

इमानि शुभगन्धीनि पश्य लक्ष्मण ! सर्वशः ।
नलिनानि प्रकाशन्ते जले तरुणसूर्यवत् ॥ ६२

एषा प्रसन्नसलिला पद्मनीलोत्पलायुता ।
हंसकारण्डवाकीर्णा पम्पा सौगन्धिकान्विता ॥ ६३

जले तरुणसूर्याभैष्षट्पदाहतकेसरैः ।
पङ्कजैश्शोभते पम्पा समन्तादभिसंवृता ॥ ६४

चक्रवाकयुता नित्यं चित्रस्थवनान्तरा ।
[ क्रौञ्चसारससंघुष्टा विचित्रकुसुमोत्करा ] ॥ ६५

मातङ्गमृगयूथैश्च शोभते सलिलार्थिभिः ।
पवनाहतवेगाभिरूर्मिभिर्विमलेऽम्भसि ॥ ६६

पङ्कजानि विराजन्ते ताड्यमानानि लक्ष्मण ! ।
पद्मपत्रविशालाक्षीं सततं पङ्कजप्रियाम् ॥ ६७

अपश्यतो मे वैदेहीं जीवितं नाभिरोचते ।
अहो कामस्य वामत्वं यो गतामपि दुर्लभाम् ॥ ६८

स्मारयिष्यति कल्याणीं कल्याणतरवादिनीम् ।
शक्यो धारयितुं कामो भवेदद्यागतो मया ॥ ६९

यदि भूयो वसन्तो मां न हन्यात्पुष्पितद्रुमः ।
यानि स्म रमणीयानि तया सह भवन्ति मे ॥ ७०

तान्येवारमणीयानि जायन्ते मे तया विना ।
पद्मकोशपलाशानि द्रष्टुं दृष्टिर्हि मन्यते ॥ ७१

सीताया नेत्रकोशाभ्यां सदृशानीति लक्ष्मण ! ।
पद्मकेसरसंसृष्टो वृक्षान्तरविनिस्सृतः ॥ ७२

निःश्वासइव सीताया वाति वायुर्मनोहरः ।
सौमित्रे ! पश्य पम्पाया दक्षिणे गिरिसानुनि ॥ ७३

पुष्पितां कर्णिकारस्य यष्टिं परमशोभनाम् ।
अधिकं शैलराजोऽयं धातुभिस्सुविभूषितः ॥ ७४

विचित्रं सृजते रेणुं वायुवेगविघट्टितम् ।
गिरिप्रस्थास्तु सौमित्रे ! सर्वतस्सम्प्रपुष्पितैः ॥ ७५

निष्पत्रै स्सर्वतो रम्यैः प्रदीप्ता इव किंशुकैः ।
पम्पातीररुहाश्चेमे संसक्ता मधुगन्धिनः ॥ ७६

मालतीमल्लिकाषण्डाः करवीरा श्च पुष्पिताः ।
केतक्य स्सिन्धुवाराश्च वासन्त्यश्च सुपुष्पिताः ॥ ७७

माधव्यो गन्धपूर्णा श्च कुन्दगुल्मा श्च सर्वशः ।
चिरिबिल्वा मधूकाश्च वञ्जुळा वकुळा स्तथा ॥ ७८

चम्पका स्तिलकाश्चैव नागवृक्षा स्सुपुष्पिताः ।
नीपाश्च वरणा श्चैव खर्जूराश्च सुपुष्पिताः ॥ ७९

पद्मकाश्चैव शोभन्ते नीलाशोकाश्च पुष्पिताः ।
लोध्रा श्च गिरिपृष्ठेषु सिंहकेसरपिञ्जराः ॥ ८०

अङ्कोलाश्च कुरण्टा श्च पूर्णकाः पारिभद्रकाः ।
चूताः पाटलय श्चैव कोविदाराश्च पुष्पिताः ॥ ८१

मुचुळिन्दार्जुना श्चैव दृश्यन्ते गिरिसानुषु ।
केतकोद्दालका श्चैव शिरीषा श्शिंशुपा धवाः ॥ ८२

शाल्मल्यः किंशुका श्चैव रक्ताः कुरवका स्तथा ।
तिनिशा नक्तमाला श्च चन्दना स्स्पन्दनास्तथा ॥ ८३

पुष्पितान्पुष्पिताग्राभिर्लताभिः परिवेष्टितान् ।
द्रुमान्पश्येह सौमित्रे ! पम्पाया रुचिरान्बहून् ॥ ८४

वातविक्षिप्तविटपान्यथासन्नान्द्रुमानिमान् ।
लता स्समनुवर्तन्ते मत्ता इव वरस्त्रियः ॥ ८५

पादपात्पादपं गच्छन् शैलाच्छैलं वनाद्वनम् ।
वाति नैकरसास्वादसम्मोदित इवानिलः ॥ ८६

केचि त्पर्याप्तकुसुमाः पादपा मधुगन्धिनः ।
केचिन्मुकुळसंवीताः श्यामवर्णा इवाऽऽबभुः ॥ ८७

इदं मृष्ट मिदं स्वादु प्रफुल्लमिद मित्यपि ।
रागमत्तो मधुकरः कुसुमेष्ववलीयते ॥ ८८

निलीय पुनरुत्पत्य सहसाऽन्यत्र गच्छति ।
मधुलुब्धो मधुकरः पम्पातीरद्रुमेष्वसौ ॥ ८९

इयं कुसुमसंघातैरुपस्तीर्णा सुखाकृता ।
स्वयं निपतितै र्भूमि श्शयनप्रस्तरैरिव ॥ ९०

विविधा विविधैः पुष्पै स्तैरेव नगसानुषु ।
विकीर्णैः पीतरक्ताहि सौमित्रे! प्रस्तराः कृताः ॥ ९१

हिमान्ते पश्य सौमित्रे वृक्षाणां पुष्पसम्भवम् ।
पुष्पमासे हि तरव स्संघर्षादिव पुष्पिताः ॥ ९२

आह्वयन्त इवान्योन्यं नागाष्षट्पदनादिताः ।
कुसुमोत्तंसविटपा श्शोभन्ते बहु लक्ष्मण! ॥ ९३

एष कारण्डवः पक्षी विगाह्य सलिलं शुभम् ।
रमते कान्तया सार्धं काम मुद्दीपयन्मम ॥ ९४

मन्दाकिन्यास्तु यदिदं रूपमेवं मनोहरम् ।
स्थाने जगति विख्याता गुणास्तस्या मनोरमाः ॥ ९५

यदि दृश्येत सा साध्वी यदि चेह वसेमहि ।
स्पृहयेयं न शक्राय नायोध्यायै रघूत्तम! ॥ ९६

नह्यत्रं रमणीयेषु शाद्वलेषु तया सह ।
रमतो मे भवेच्चिन्ता न स्पृहाऽन्येषु वा भवेत् ॥ ९७

अमी हि विविधैः पुष्पै स्तरवो रुचिरच्छदाः ।
काननेऽस्मिन्विना कान्तां चित्तमुन्मादयन्ति मे ॥ ९८

पश्य शीतजलां चेमां सौमित्रे ! पुष्करायुतम् ।
चक्रवाकानुचरितां कारण्डवनिषेविताम् ॥ ९९

प्लवैः क्रौञ्चै श्च संपूर्णां वराहमृगसेविताम् ।
अधिकं शोभते पम्पा विकूजद्भि र्विहङ्गमैः ॥ १००

दीपयन्तीव मे कामं विविधा मुदिता द्विजाः ।
श्यामां चन्द्रमुखीं स्मृत्वा प्रियां पद्मनिभेक्षणाम् ॥ १०१

पश्य सानुषु चित्रेषु मृगीभिस्सहितान्मृगान् ।
मां पुनर्मृगशाबाक्ष्या वैदेह्या विरहीकृतम् ॥ १०२

व्यथयन्तीव मे चित्तं संचरन्त स्ततस्ततः ।
अस्मिंत्सानुनि रम्ये हि मत्तद्विजगणायुते ॥ १०३

पश्येयं यदि तां कान्तां ततस्स्वस्ति भवेन्मम ।
जीवेयं खलु सौमित्रे ! मया सह सुमध्यमा ॥ १०४

सेवते यदि वैदेही पम्पायाः पवनं सुखम् ।
पद्मसौगन्धिकवहं शिवं शोकविनाशनम् ॥ १०५

धन्या लक्ष्मण ! सेवन्ते पम्पोपवनमारुतम् ।
श्यामा पद्मपलाशाक्षी प्रिया विरहिता मया ॥ १०६

कथं धारयति प्राणान्विवशा जनकात्मजा ।
किन्नु वक्ष्यामि राजानं धर्मज्ञं सत्यवादिनम् ॥ १०७

सीतया जनकं पृष्टः कुशलं जनसंसदि ।
या मा मनुगता मन्दं पित्रा प्रव्राजितं वनम् ॥ १०८

सीता सत्पथमास्थाय क नु सा वर्तते प्रिया ।
तया विहीनः कृपणः कथं लक्ष्मण! धारये ॥ १०९

या मा मनुगता राज्या द्भ्रष्टं विगतचेतसम् ।
तच्चार्वञ्चितपक्ष्माक्षं सुगन्धि शुभमव्रणम् ॥ ११०

अपश्यतो मुखं तस्या स्सीदतीव मनो मम ।
स्मितहास्यान्तरयुतं गुणवन्मधुरं हितम् ॥ १११

वैदेह्या वाक्य मतुलं कदा श्रोष्यामि लक्ष्मण! ।
प्राप्य दुःखं वने श्यामा सा मां मन्मथकर्शितम् ॥ ११२

नष्टदुःखेव हृष्टेव साध्वी साध्वभ्यभाषत ।
किंनु वक्ष्यामि कौसल्यामयोध्यायां नृपात्मज! ॥ ११३

'क्वसा स्नु' षेति पृच्छन्तीं कथं चाति मनस्विनीम् ।
गच्छ लक्ष्मण! पश्य त्वं भरतं भ्रातृवत्सलम् ॥ ११४

नह्यहं जीवितुं शक्तस्ता मृते जनकात्मजाम् ।"
इति रामं महात्मानं विलपन्त मनाथवत् ॥ ११५

उवाच लक्ष्मणो भ्राता वचनं युक्तमव्ययम् ।
"संस्तम्भ! राम! भद्रं ते माशुचः पुरुषोत्तम! ॥ ११६

नेदृशानां मतिर्मन्दा भवत्यकलुषात्मनाम् ।
स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने ॥ ११७

अतिस्नेहपरिष्वङ्गाद्वार्तिरार्द्रापि दह्यते ।
यदि गच्छति पाताळं ततोह्यधिकमेववा ॥ ११८

सर्वथा रावणस्तावन्न भविष्यति राघव ! ।
प्रवृत्तिर्लभ्यतां तावत्तस्य पापस्य रक्षसः ॥ ११९
ततो हास्यति वा सीतां निधनं वा गमिष्यति ।
यदि यात्यदितेर्गर्भं रावण स्सह सीतया ॥ १२०
तत्राप्येनं हनिष्यामि नचेद्धास्यति मैथिलीम् ।
स्वास्थ्यं भद्रं भजस्वार्य ! त्यज्यतां कृपणा मतिः ॥ १२१
अर्थो हि नष्टकार्यार्थैर्नायत्नेनाधिगम्यते ।
उत्साहो बलवानार्य ! नास्त्युत्साहात्परं बलम् ॥ १२२
सोत्साहस्यास्ति लोकेऽस्मिन् न किञ्चिदपि दुर्लभम् ।
उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु ॥ १२३
उत्साहमात्रमाश्रित्य सीतां प्रतिलभेमहि ।
त्यज्यतां कामवृत्तत्वं शोकं सन्न्यस्य पृष्ठतः ॥ १२४
महात्मानं कृतात्मान मात्मानं नावबुध्यसे । ”
एवं सम्बोधित स्तत्र शोकोपहतचेतनः ॥ १२५
न्यस्य शोकञ्च मोहञ्च ततो धैर्यमुपागमत् ।
सोऽभ्यतिक्रामदव्यग्रस्तामचिन्त्यपराक्रमः ॥ १२६
रामः पम्पां सुरुचिरां रम्यपारिप्लवद्रुमाम् ।
निरीक्षमाण स्सहसा महात्मा सर्वं वनं निर्झरकन्दरांश्च ।
उद्विग्नचेतास्सहलक्ष्मणेन विचार्य दुःखोपहतः प्रतस्थे ॥ १२७
तं मत्तमातङ्गविलासगामी गच्छन्त मव्यग्रमना महात्मा ।
स लक्ष्मणो राघवमप्रमत्तो ररक्ष धर्मेण बलेन चैव ॥ १२८

तावृश्यमूकस्य समीपचारी चरन्ददर्शाद्भुतदर्शनीयौ ।
शाखामृगाणामधिपस्तरस्वी वितत्रसे नैव चिचेष्ट किञ्चित् ॥ १२९

स तौ महात्मा गजमन्दगामी शाखामृगस्तत्र चिरं चरन्तौ ।
दृष्ट्वा विषादं परमं जगाम चिन्तापरीतो भयभारमग्नः ॥ १३०

तमाश्रमं पुण्यसुखं शरण्यं सदैव शाखामृगसेवितान्तम् ।
त्रस्ताश्च दृष्ट्वा हरयोऽभिजग्मुर्महौजसौ राघवलक्ष्मणौ तौ ॥ १३१

इति श्रीमत्किष्किन्धाकाण्डे प्रथमस्सर्गः ॥

---

## ॥ द्वितीयस्सर्गः ॥

तौ तु दृष्ट्वा महात्मानौ भ्रातरौ रामलक्ष्मणौ ।
वरायुधधरौ वीरौ सुग्रीवश्शङ्कितोऽभवत् ॥ १

उद्विग्नहृदयस्सर्वा दिशस्समवलोकयन् ।
न व्यतिष्ठत कस्मिंश्चिद्देशे वानरपुङ्गवः ॥ २

नैव चक्रे मनः स्थाने वीक्षमाणो महाबलौ ।
कपेः परमभीतस्य चित्तं व्यवससाद ह ॥ ३

चिन्तयित्वा स धर्मात्मा विमृश्य गुरुलाघवम् ।
सुग्रीवः परमोद्विग्नः सर्वैरनुचरैस्सह ॥ ४

ततस्स सचिवेभ्यस्तु सुग्रीवः प्लवगाधिपः ।
शशंस परमोद्विग्नः पश्यंस्तौ रामलक्ष्मणौ ॥ ५

" एतौ वनमिदं दुर्गं वालिप्रणिहितौ ध्रुवम् ।
छद्मना चीरवसनौ प्रचरन्ताविहागतौ ॥ ६

ततस्सुग्रीवसचिवा दृष्ट्वा परमधन्विनौ ।
जग्मुर्गिरितटात्तस्मादन्यच्छिखरमुत्तमम् ॥ ७

ते क्षिप्रमधिगम्याथ यूथपा यूथपर्षभम् ।
हरयो वानरश्रेष्ठं परिवार्योपतस्थिरे ॥ ८

एकमेकायनगताः प्लवमाना गिरेर्गिरम् ।
प्रकम्पयन्तो वेगेन गिरीणां शिखराण्यपि ॥ ९

ततश्शाखामृगास्सर्वे प्लवमाना महाबलाः ।
बभञ्जुश्च नगां स्तत्र पुष्पितान्दुर्गसंश्रितान् ॥ १०

आप्लवन्तो हरिवरा स्सर्वत स्तं महागिरिम् ।
मृगमार्जारशार्दूलांस्त्रासयन्तो ययुस्तदा ॥ ११

ततस्सुग्रीवसचिवाः पर्वतेन्द्रं समाश्रिताः ।
सङ्गम्य कपिमुख्येन सर्वे प्राञ्जलयस्थिताः ॥ १२

ततस्तं भयसंविग्नं वालिकिल्बिषशङ्कितम् ।
उवाच हनुमान्वाक्यं सुग्रीवं वाक्यकोविदः ॥ १३

"संभ्रम स्त्यज्यता मेष सर्वैर्वालिकृते महान् ।
मलयोऽयं गिरिवरो भयं नेहास्ति वालिनः ॥ १४

यस्मा दुद्विग्नचेता स्त्वं प्रद्रुतो हरिपुङ्गव ! ।
तं क्रूरदर्शनं क्रूरं नेह पश्यामि वालिनम् ॥ १५

यस्मा त्तव भयं सौम्य ! पूर्वकात्पापकर्मणः ।
स नेह वाली दुष्टात्मा न ते पश्याम्यहं भयम् ॥ १६

अहो शाखामृगत्वं ते व्यक्त मेव प्लवङ्गम ! ।
लघुचित्ततयाऽऽत्मानं न स्थापयसि यो मतौ ॥ १७

बुद्धिविज्ञानसंपन्न इङ्गितैस्सर्वमाचर ।
न ह्यबुद्धिं गतो राजा सर्वभूतानि शास्ति हि ॥ ” १८

सुग्रीव स्तु शुभं वाक्यं श्रुत्वा सर्वं हनूमतः ।
ततश्शुभतरं वाक्यं हनूमन्तमुवाच ह ॥ १९

“ दीर्घबाहू विशालाक्षौ शरचापासिधारिणौ ।
कस्य न स्याद्भयं दृष्ट्वा ह्येतौ सुरसुतोपमौ ॥ २०

वालिप्रणिहिता वेतौ शङ्केऽहं पुरुषोत्तमौ ।
राजानो बहुमित्रा श्च विश्वासो नात्र हि क्षमः ॥ २१

अरय श्च मनुष्येण विज्ञेया श्छन्नचारिणः ।
विश्वस्तानामविश्वस्ता रन्ध्रेषु प्रहरन्ति हि ॥ २२

कृत्येषु वाली मेधावी राजानो बहुदर्शनाः ।
भवन्ति परहन्तारस्ते ज्ञेयाः प्राकृतैर्नरैः ॥ २३

तौ त्वया प्राकृतेनैव गत्वा ज्ञेयौ प्लवङ्गम ! ।
इङ्गितानां प्रकारैश्च रूपव्याभाषणेन च ॥ २४

लक्षयस्व तयो र्भावं प्रहृष्टमनसौ यदि ।
विश्वासयन्प्रशंसाभि रिङ्गितैश्च पुनःपुनः ॥ २५

ममैवाभिमुखं स्थित्वा पृच्छ त्वं हरिपुङ्गव ! ।
प्रयोजनं प्रवेशस्य वनस्यास्य धनुर्धरौ ॥ २६

शुद्धात्मानौ यदि त्वेतौ जानीहि त्वं प्लवङ्गम ! ।
व्याभाषितैर्वा विज्ञेया स्यादुष्टादुष्टता तयोः ॥ ” २७

इत्येवं कपिराजेन संदिष्टो मारुतात्मजः ।
चकार गमने बुद्धिं यत्र तौ रामलक्ष्मणौ ॥ २८

'त'थेति सम्पूज्य वच स्तु तत्कपे स्सुभीमस्य दुरासदस्य च ।
महानुभावो हनुमान्ययौ तदा स यत्र रामोऽतिबलश्च लक्ष्मणः ॥

इति श्रीमत्किष्किन्धाकाण्डे द्वितीयस्सर्गः ॥

---

## ॥ तृतीयस्सर्गः ॥

वचो विज्ञाय हनुमांत्सुग्रीवस्य महात्मनः ।
पर्वताहृश्यमूकात्तु पुप्लुवे यत्र राघवौ ॥ १

कपिरूपं परित्यज्य हनूमा न्मारुतात्मजः ।
भिक्षुरूपं ततो भेजे शठबुद्धितया कपिः ॥ २

ततस्स हनूमान्वाचा श्लक्ष्णया सुमनोज्ञया ।
विनीतवदुपागम्य राघवौ प्रणिपत्य च ॥ ३

आबभाषे तदा वीरौ यथावत्प्रशशंस च ।
संपूज्य विधिवद्वीरो हनूमान्मारुतात्मजः ॥ ४

उवाच कामतो वाक्यं मृदुसत्यपराक्रमौ ।
"राजर्षिदेवप्रतिमौ तापसौ संशितव्रतौ ॥ ५

देशं कथमिमं प्राप्तौ भवन्तौ वरवर्णिनौ ।
त्रासयन्तौ मृगगणानन्यां श्च वनचारिणः ॥ ६

पम्पातीररुहान्वृक्षा न्वीक्षमाणौ समन्ततः ।
इमां नदीं शुभजलां शोभयन्तौ तपस्विनौ ॥ ७

धैर्यवन्तौ सुवर्णाभौ कौ युवां चीरवाससौ ।
निःश्वसन्तौ वरभुजौ पीडयन्ताविमाः प्रजाः ॥ ८

सिंहविप्रेक्षितौ वीरौ सिंहातिबलविक्रमौ ।
शक्रचापनिभे चापे गृहीत्वा शत्रुसूदनौ ॥ ९

श्रीमन्तौ रूपसम्पन्नौ वृषभश्रेष्ठविक्रमौ ।
हस्तिहस्तोपमभुजौ द्युतिमन्तौ नरर्षभौ ॥ १०

प्रभया पर्वतेन्द्रोऽयं युवयो रवभासितः ।
राज्यार्हावमरप्रख्यौ कथं देश मिहागतौ ॥ ११

पद्मपत्रेक्षणौ वीरौ जटामण्डलधारिणौ ।
अन्योन्यसदृशौ वीरौ देवलोकादिवागतौ ॥ १२

यदृच्छयेव संप्राप्तौ चन्द्रसूर्यौ वसुन्धराम् ।
विशालवक्षसौ वीरौ मानुषौ देवरूपिणौ ॥ १३

सिंहस्कन्धौ महोत्साहौ समदाविव गोवृषौ ।
आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः ॥ १४

सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ।
उभौ योग्यावहं मन्ये रक्षितुं पृथिवीमिमाम् ॥ १५

ससागरवनां कृत्स्नां विन्ध्यमेरुविभूषिताम् ।
इमे च धनुषी चित्रे श्लक्ष्णे चित्रानुलेपने ॥ १६

प्रकाशेते यथेन्द्रस्य वज्रे हेमविभूषिते ।
सम्पूर्णा निशितैर्बाणै स्तूणा श्च शुभदर्शनाः ॥ १७

जीवितान्तकरै र्घोरै श्श्वसद्भिरिव पन्नगैः ।
महाप्रमाणौ विस्तीर्णौ तप्तहाटकभूषितौ ॥ १८

खड्गावेतौ विराजेते निर्मुक्ताविव पन्नगौ ।
एवं मां परिभाषन्तं कस्माद्वै नाभिभाषथः ॥ १९

सुग्रीवो नाम धर्मात्मा कश्चिद्वानरयूथपः ।
वीरो विनिकृतो भ्रात्रा जगद्भ्रमति दुःखितः ॥ २०

प्राप्तोऽहं प्रेषित स्तेन सुग्रीवेण महात्मना ।
राज्ञा वानरमुख्यानां हनूमा न्नाम वानरः ॥ २१

युवाभ्यां सहधर्मात्मा सुग्रीव स्सख्य मिच्छति ।
तस्य मां सचिवं वित्तं वानरं पवनात्मजम् । २२

भिक्षुरूपप्रतिच्छन्नं सुग्रीवप्रियकाम्यया ।
ऋश्यमूकादिह प्राप्तं कामगं कामरूपिणम् ॥" २३

एव मुक्त्वा तु हनुमां स्तौ वीरौ रामलक्ष्मणौ ।
वाक्यज्ञौ वाक्यकुशलः पुन र्नोवाच किंचन ॥ २४

एतच्छ्रुत्वा वचस्तस्य रामो लक्ष्मणमब्रवीत् ।
प्रहृष्टवदनश्श्रीमान्भ्रातरं पार्श्वतः स्थितम् ॥ २५

"सचिवोऽयं कपीन्द्रस्य सुग्रीवस्य महात्मनः ।
तमेव काङ्क्षमाणस्य ममान्तिकमुपागतः ॥ २६

तमभ्यभाष सौमित्रे! सुग्रीवसचिवं कपिम् ।
वाक्यज्ञं मधुरै र्वाक्यै स्स्नेहयुक्तमरिन्दम! ॥ २७

नानृग्वेदविनीतस्य नायजुर्वेदधारिणः ।
नासामवेदविदुषश्शक्यमेवं प्रभाषितुम् ॥ २८

नूनं व्याकरणं कृत्स्न मनेन बहुधा श्रुतम् ।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम् ॥ २९

न मुखे नेत्रयो र्वापि ललाटे च भ्रुवो स्तथा ।
अन्येष्वपि च गात्रेषु दोष स्संविदितः क्वचित् ॥ ३०

अविस्तरमसंदिग्ध मविलम्बित मद्रुतम् ।
उरस्थं कण्ठगं वाक्यं वर्तते मध्यमे स्वरे ॥ ३१

संस्कारक्रमसम्पन्ना मद्रुता मविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहारिणीम् ॥ ३२

अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चित्त मुद्यतासेररेरपि ॥ ३३

एवंविधो यस्य दूतो न भवेत्पार्थिवस्य तु ।
सिद्ध्यन्ति हि कथं तस्य कार्याणां गतयोऽनघ ! ॥ ३४

एवं गुणगणै र्युक्ता यस्य स्युः कार्यसाधकाः ।
तस्य सिद्ध्यन्ति सर्वार्था दूतवाक्यप्रचोदिताः" ॥ ३५

एवमुक्तस्तु सौमित्रि स्सुग्रीवसचिवं कपिम् ।
अभ्यभाषत वाक्यज्ञो वाक्यज्ञं पवनात्मजम् ॥ ३६

विदिता नौ गुणा विद्वं ! त्सुग्रीवस्य महात्मनः ।
तमेव चाऽऽवां मार्गाव स्सुग्रीवं प्लवगेश्वरम् ॥ ३७

यथा ब्रवीषि हनुमं ! त्सुग्रीववचनादिह ।
तत्तथा हि करिष्यावो वचनात्तव सत्तम !" ॥ ३८

तत्तस्य वाक्यं निपुणं निशम्य प्रहृष्टरूपः पवनात्मजः कपिः ।
मनस्समाधाय जयोपपत्तौ सख्यं तदा कर्तु मियेष ताभ्याम् ॥ ३९

इति श्रीमत्किष्किन्धाकाण्डे तृतीयस्सर्गः ॥

---

## ॥ चतुर्थस्सर्गः ॥

ततः प्रहृष्टो हनुमा 'न्कृत्यवा' निति तद्वचः ।
श्रुत्वा मधुरसंभाषं सुग्रीवं मनसा गतः ॥ १

" भव्यो राज्यागम स्तस्य सुग्रीवस्य महात्मनः ।
यदयं कृत्यवान्प्राप्तः कृत्यं चैत दुपागतम् ॥ २

ततः परमसंहृष्टो हनूमान् प्लवगर्षभः ।
प्रत्युवाच ततो वाक्यं रामं वाक्यविशारदः ॥ ३

" किमर्थं त्वं वनं घोरं पम्पाकाननमण्डितम् ।
आगतस्सानुजो दुर्गं नानाव्याळमृगायुतम् ॥" ४

तस्य तद्वचनं श्रुत्वा लक्ष्मणो रामचोदितः ।
आचचक्षे महात्मानं रामं दशरथात्मजम् ॥ ५

" राजा दशरथो नाम द्युतिमान्धर्मवत्सलः ।
चातुर्वर्ण्यं स्वधर्मेण नित्यमेवाभ्यपालयत् ॥ ६

न द्वेष्टा विद्यते तस्य नच स द्वेष्टि कञ्चन ।
सच सर्वेषु भूतेषु पितामह इवापरः ॥ ७

अग्निष्टोमादिभिर्यज्ञै रिष्टवानाप्तदक्षिणैः ।
तस्यायं पूर्वजः पुत्रो रामो नाम जनैश्श्रुतः ॥ ८

शरण्य स्सर्वभूतानां पितुर्निर्देशपारगः ।
वीरो दशरथस्यायं पुत्राणां गुणवत्तमः ॥ ९

राजलक्षणसम्पन्न स्संरक्तो राजसम्पदा ।
राज्या द्भ्रष्टो वने वस्तुं मया सार्थमिहागतः ॥ १०

भार्यया च महातेजा स्सीतयाऽनुगतो वशी ।
दिनक्षये महातेजाः प्रभयेव दिवाकरः ॥ ११

अहमस्यावरो भ्राता गुणैर्दास्यमुपागतः ।
कृतज्ञस्य बहुज्ञस्य लक्ष्मणो नाम नामतः ॥ १२

सुखार्हस्य महार्हस्य सर्वभूतहितात्मनः ।
ऐश्वर्येण च हीनस्य वनवासाश्रितस्य च ॥ १३

रक्षसाऽपहृता भार्या रहिते कामरूपिणा ।
तच्च न ज्ञायते रक्षः पत्नी येनास्य सा हृता ॥ १४

दनुर्नाम दितेः पुत्रश्शापाद्राक्षसतां गतः ।
आख्यात स्तेन सुग्रीव स्समर्थो वानरर्षभः ॥ १५

स ज्ञास्यति महावीर्यस्तव भार्यापहारिणम् ।
एव मुक्त्वा दनुस्स्वर्गं भ्राजमानो गतस्सुखम् ॥ १६

एतत्ते सर्वमाख्यातं याथातथ्येन पृच्छतः ।
अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥ १७

एष दत्त्वा च वित्तानि प्राप्य चानुत्तमं यशः ।
लोकनाथः पुरा भूत्वा सुग्रीवं नाथ मिच्छति ॥ १८

पिता यस्य पुराह्यासी च्छरण्यो धर्मवत्सलः ।
तस्य पुत्र श्शरण्य श्च सुग्रीवं शरणं गतः ॥ १९

सर्वलोकस्य धर्मात्मा शरण्य श्शरणं पुरा ।
गुरुर्मे राघवस्सोऽयं सुग्रीवं शरणं गतः ॥ २०

यस्य प्रसादे सततं प्रसीदेयुरिमाः प्रजाः ।
स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते ॥ २१

येन सर्वगुणोपेताः पृथिव्यां सर्वपार्थिवाः ।
मानिता स्सततं राज्ञा सदा दशरथेन वै ॥ २२

तस्यायं पूर्वजः पुत्र स्त्रिषु लोकेषु विश्रुतः ।
सुग्रीवं वानरेन्द्रं तु राम श्शरण मागतः ॥ २३

शोकाभिभूते रामे तु शोकार्ते शरणं गते ।
कर्तुमर्हति सुग्रीवः प्रसादं हरियूथपः ॥" २४

एवं ब्रुवाणं सौमित्रिं करुणं साश्रुलोचनम् ।
हनुमान्प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ २५

"ईदृशा बुद्धिसम्पन्ना जितक्रोधा जितेन्द्रियाः ।
द्रष्टव्या वानरेन्द्रेण दिष्ट्या दर्शनमागताः ॥ २६

स हि राज्यात्परिभ्रष्टः कृतवैरश्च वालिना ।
हृतदारो वने त्यक्तो भ्रात्रा विनिकृतो भृशम् ॥ २७

करिष्यति न स्साहाय्यं युवयो र्भास्करात्मजः ।
सुग्रीव स्सह चास्माभि स्सीतायाः परिमार्गणे ॥" २८

इत्येव मुक्तो हनुमान् श्लक्ष्णं मधुरया गिरा ।
बभाषे सोऽ'भिगच्छेम सुग्रीव' मिति राघवम् ॥ २९

एवं ब्रुवाणं धर्मात्मा हनुमन्तं सलक्ष्मणः ।
प्रतिपूज्य यथान्याय मिदं प्रोवाच राघवम् ॥ ३०

"कपिः कथयते हृष्टो यथाऽयं मारुतात्मजः ।
कृत्यवां स्सोऽपि संप्राप्तः कृतकृत्योऽसि राघव ! ॥ ३१

प्रसन्नमुखवर्णश्च व्यक्तं हृष्टश्च भाषते ।
नानृतं वक्ष्यते वीरो हनुमान्मारुतात्मजः ॥" ३२

तत स्सतु महाप्राज्ञो हनुमान्मारुतात्मजः ।
जगामाऽऽदाय तौ वीरौ हरिराजाय राघवौ ॥ ३३

भिक्षुरूपं परित्यज्य वानरं रूप मास्थितः ।
पृष्ठ मारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥ ३४

स तु विपुलयशाः कपिप्रवीरः पवनसुतः कृतकृत्यवत्प्रहृष्टः ।
गिरिवरमुरुविक्रमः प्रयात स्स शुभमति स्सह रामलक्ष्मणाभ्याम् ॥

इति श्रीमत्किष्किन्धाकाण्डे चतुर्थस्सर्गः ॥

---

## ॥ पञ्चमस्सर्गः ॥

ऋश्यमूकात्तु हनुमान्गत्वा तु मलयं गिरिम् ।
आचचक्षे तदा वीरौ कपिराजाय राघवौ ॥ १

"अयं रामो महाप्राज्ञ स्संप्राप्तो दृढविक्रमः ।
लक्ष्मणेन सह भ्रात्रा रामोऽयं सत्यविक्रमः ॥ २

इक्ष्वाकूणां कुले जातो रामो दशरथात्मजः ।
धर्मे निगदित श्चैव पितु र्निर्देशपारगः ॥ ३

तस्यास्य वसतोऽरण्ये नियतस्य महात्मनः ।
रावणेन हृता भार्या स त्वां शरणमागतः ॥ ४

राजसूयाश्वमेधैश्च वह्निर्येनाभितर्पितः ।
दक्षिणाश्च तथोत्सृष्टा गावश्शतसहस्रशः ॥ ५

तपसा सत्यवाक्येन वसुधा येन पालिता ।
स्त्रीहेतो स्तस्य पुत्रोऽयं रामस्त्वां शरणं गतः ॥ ६

भवता सख्यकामौ तौ भ्रातरौ रामलक्ष्मणौ ।
प्रतिगृह्यार्चयस्वैतौ पूजनीयतमावुभौ ॥ ७

श्रुत्वा हनुमतो वाक्यं सुग्रीवो हृष्टमानसः ।
भयं च राघवाद्घोरं प्रजहौ विगतज्वरः ॥ ८

स कृत्वा मानुषं रूपं सुग्रीवः प्लवगाधिपः ।
दर्शनीयतमो भूत्वा प्रीत्या प्रोवाच राघवम् ॥ ९

भवान्धर्मविनीतश्च विक्रान्त स्सर्ववत्सलः ।
आख्याता वायुपुत्रेण तत्त्वतो मे भवद्गुणाः ॥ १०

तन्ममैवैष सत्कारो लाभश्चैवोत्तमः प्रभो ।
यत्त्वमिच्छसि सौहार्दं वानरेण मया सह ॥ ११

रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणि र्मर्यादा बध्यतां ध्रुवा ॥" १२

एतत्तु वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
स प्रहृष्टमनाहस्तं पीडयामास पाणिना । १३

हृद्यं सौहृद माळम्ब्य पर्यष्वजत पीडितम् ।
ततो हनूमां स्सन्त्यज्य भिक्षुरूपमरिन्दमः ॥ १४

काष्ठयो स्स्वेन रूपेण जनयामास पावकम् ।
दीप्यमानं ततो वह्निं पुष्पै रभ्यर्च्य सत्कृतम् ॥ १५

तयोर्मध्येऽथ सुप्रीतो निदधे सुसमाहितः ।
ततोऽग्निं दीप्यमानं तौ चक्रतुश्च प्रदक्षिणम् ॥ १६

सुग्रीवो राघवश्चैव वयस्यत्वमुपागतौ ।
तत स्सुप्रीतमनसौ तावुभौ हरिराघवौ ॥ १७

अन्योन्यमभिवीक्षन्तौ न तृप्तिमुपजग्मतुः ।
"त्वं वयस्योऽसि मे हृद्यो ह्येकं दुःखं सुखं च नौ ॥" १८

सुग्रीवो राघवं वाक्य मित्युवाच प्रहृष्टवत् ।
ततस्स पर्णबहुळां छित्त्वा शाखां सुपुष्पिताम् ॥ १९

सालस्यास्तीर्य सुग्रीवो निषसाद सराघवः ।
लक्ष्मणायाथ संहृष्टो हनूमान् प्लवगर्षभः ॥ २०

शाखां चन्दनवृक्षस्य ददौ परमपुष्पिताम् ।
ततः प्रहृष्ट स्सुग्रीवः श्लक्ष्णं मधुरया गिरा ॥ २१

प्रत्युवाच तदा रामं हर्षव्याकुललोचनः ।
“अहं विनिकृतो राम ! चरामीह भयार्दितः ॥ २२

हृतभार्यो वने त्रस्तो दुर्गमेतदुपाश्रितः ।
सोऽहं त्रस्तो वने भीतो वसाम्युद्भ्रान्तचेतनः ॥ २३

वालिना निकृतो भ्रात्रा कृतवैर श्च राघव ! ।
वालिनो मे महाभाग ! भयार्तस्याभयं कुरु ॥ २४

कर्तु मर्हसि काकुत्स्थ ! भयं मे न भवे द्यथा । ”
एव मुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ॥ २५

प्रत्यभाषत काकुत्स्थ स्सुग्रीवं प्रहसन्निव ।
“उपकारफलं मित्रं विदितं मे महाकपे ! ॥ २६

वालिनं तं वधिष्यामि तव भार्यापहारिणम् ।
अमोघा स्सूर्यसङ्काशा ममैते निशिता श्शराः ॥ २७

तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ।
कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः ॥ २८

तीक्ष्णाग्रा ऋजुपर्वाण स्सरोषा भुजगा इव ।
तमद्य वालिनं पश्य क्रूरैराशीविषोपमैः ॥ २९

शरै र्विनिहतं भूमौ विकीर्ण मिव पर्वतम् । ”
स तु तद्वचनं श्रुत्वा राघवस्यात्मनोहितम् ॥ ३०

सुग्रीवः परमप्रीत स्सुमहद्वाक्यमब्रवीत् ।
तव प्रसादेन नृसिंह ! राघव ! प्रियां च राज्यं च समाप्नुयामहम् ।
तथा कुरु त्वं नरदेव ! वैरिणं यथा निहंस्यद्य रिपुं ममाग्रजम् ॥"
सीताकपीन्द्रक्षणदाचराणां राजीवहेमज्वलनोपमानि ।
सुग्रीवरामप्रणयप्रसङ्गे वामानि नेत्राणि समं स्फुरन्ति ॥ ३२

इति श्रीमत्किष्किन्धाकाण्डे पञ्चमस्सर्गः ॥

---

## ॥ षष्ठस्सर्गः ॥

पुनरेवाब्रवीत्प्रीतो राघवं रघुनन्दनम् ।
" अयं माख्याति मे राम ! सचिवो मन्त्रिसत्तमः ॥ १

हनूमान्यन्निमित्तं त्वं निर्जनं वनमागतः ।
लक्ष्मणेन सह भ्रात्रा वसतश्च वने तव ॥ २

रक्षसाऽपहृता भार्या मैथिली जनकात्मजा ।
त्वया वियुक्ता रुदती लक्ष्मणेन च धीमता ॥ ३

अन्तरप्रेप्सुना तेन हत्वा गृध्रं जटायुषम् ।
भार्यावियोगजं दुःखमचिरात्त्वं विमोक्ष्यसे ॥ ४

अहं तामानयिष्यामि नष्टां वेदश्रुतीमिव ।
रसातले वा वर्तन्तीं वर्तन्तीं वा नभस्स्थले ॥ ५

अह मानीय दास्यामि तव भार्या मरिन्दम ! ।
इदं तथ्यं मम वच स्त्वमवेहि च राघव ! ॥ ६

न शक्या सा जरयितु मपि सेन्द्रै स्सुरासुरैः ।
तव भार्या महाबाहो ! भक्ष्यं विषकृतं यथा ॥ ७

त्यज शोकं महाबाहो ! तां कान्तामानयामि ते ।
अनुमानात्तु जानामि मैथिली सा न संशयः ॥ ८

ह्रियमाणा मया दृष्टा रक्षसा क्रूरकर्मणा ।
क्रोशन्ती 'राम रा'मेति' 'लक्ष्मणेति' च विस्वरम् ॥ ९

स्फुरन्ती रावणस्याङ्के पन्नगेन्द्रवधू र्यथा ।
आत्मना पञ्चमं मां हि दृष्ट्वा शैलतटे स्थितम् ॥ १०

उत्तरीयं तया त्यक्तं शुभान्याभरणानि च ।
तान्यस्माभिर्गृहीतानि निहितानि च राघव ! ॥ ११

आनयिष्याम्यहं तानि प्रत्यभिज्ञातुमर्हसि ।"
तमब्रवीत्ततो राम स्सुग्रीवं प्रियवादिनम् ॥ १२

"आनयस्व सखे ! शीघ्रं किमर्थं प्रविलम्बसे ।"
एव मुक्तस्तु सुग्रीव श्शैलस्य गहनां गुहाम् ॥ १३

प्रविवेश तत श्शीघ्रं राघवप्रियकाम्यया ।
उत्तरीयं गृहीत्वातु शुभान्याभरणानि च ॥ १४

'इदं प' श्येति रामाय दर्शयामास वानरः ।
ततो गृहीत्वा तद्वास श्शुभान्याभरणानि च ॥ १५

अभवद्बाष्पसंरुद्धो नीहारेणेव चन्द्रमाः ।
सीतास्नेहप्रवृत्तेन सतु बाष्पेण दूषितः ॥ १६

'हाप्रि' येति रुदन्धैर्य मुत्सृज्य न्यपतत्क्षितौ ।
हृदि कृत्वातु बहुशस्तमलंकारमुत्तमम् ॥ १७

निशश्वास भृशं सर्पो बिलस्थ इव रोषितः ।
अविच्छिन्नाश्रुवेगस्तु सौमित्रिं वीक्ष्य पार्श्वतः ॥ १८

परिदेवयितुं दीनं राम स्समुपचक्रमे ।
" पश्य लक्ष्मण! वैदेह्या संत्यक्तं ह्रियमाणया ॥ १९

उत्तरीय मिदं भूमौ शरीराद्भूषणानि च ।
शाद्वलिन्यां ध्रुवं भूमौ सीतया ह्रियमाणया ॥ २०

उत्सृष्टं भूषणमिदं तथारूपं हि दृश्यते ।"
एव मुक्तस्तु रामेण लक्ष्मणो वाक्यमब्रवीत् ॥ २१

नाहं जानामि केयूरे नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥" २२

ततस्स राघवो दीनस्सुग्रीवमिदमब्रवीत् ।
" ब्रूहि सुग्रीव ! कं देशं ह्रियन्ती लक्षिता त्वया ॥ २३

रक्षसा रौद्ररूपेण मम प्राणैः प्रियाप्रिया ।
क्व वा वसति तद्रक्षो महद्व्यसनदं मम ॥ २४

यन्निमित्तमहं सर्वान्नाशयिष्यामि राक्षसान् ।
हरता मैथिलीं येन मां च रोषयता भृशम् ॥ २५

आत्मनो जीवितान्ताय मृत्युद्वारमपावृतम् ।
मम दयिततरा हृता वनान्ता द्रजनिचरेण विमथ्य येन सा ।
कथय मम रिपुं त्व मद्य वै प्लवगपते ! यमसादनं नयामि ॥" २६

इति श्रीमत्किष्किन्धाकाण्डे षष्ठस्सर्गः॥

---

## ॥ सप्तमस्सर्गः ॥

एव मुक्तस्तु सुग्रीवो रामेणार्तेन वानरः ।
अब्रवीत्प्राञ्जलिर्वाक्यं सबाष्पं बाष्पगद्गदः ॥ १

" न जाने निलयं तस्य सर्वथा पापरक्षसः ।
सामर्थ्यं विक्रमं वापि दौष्कुले यस्य वा कुलम् ॥ २

सत्यं ते प्रतिजानामि त्यज शोकमरिन्दम ! ।
करिष्यामि तथा यत्नं यथा प्राप्स्यसि मैथिलीम् ॥ ३

रावणं सगणं हत्वा परितोष्यात्मपौरुषम् ।
तथाऽस्मि कर्ता नचिरात्तथा प्रीतो भविष्यसि ॥ ४

अलं वैक्लब्यमालम्ब्य धैर्यमात्मगतं स्मर ।
त्वद्विधानामसदृशमीदृशं विद्धि लाघवम् ॥ ५

मयाऽपि व्यसनं प्राप्तं भार्याहरणजं महत् ।
न चाहमेवं शोचामि नच धैर्यं परित्यजे ॥ ६

नाहं तामनुशोचामि प्राकृतो वानरोऽपि सन् ।
महात्मा च विनीतश्च किंपुनर्धृतिमान्भवान् ॥ ७

बाष्पमापतितं धैर्यान्निगृहीतुं त्वमर्हसि ।
मर्यादां सत्त्वयुक्तानां धृतिं नोत्स्रष्टुमर्हसि ॥ ८

व्यसने वाऽर्थकृच्छ्रे वा भये वा जीवितान्तके ।
विमृशन्वै स्वया बुद्ध्या धृतिमान्नावसीदति ॥ ९

बालिशस्तु नरो नित्यं वैक्लब्यं योऽनुवर्तते ।
स मज्जत्यवशश्शोके भाराक्रान्तेव नौर्जले ॥ १०

एषोऽञ्जलिर्मया बद्धः प्रणयात्त्वां प्रसादये ।
पौरुषं श्रय शोकस्य नान्तरं दातुमर्हसि ॥ ११

ये शोकमनुवर्तन्ते न तेषां विद्यते सुखम् ।
तेजश्च क्षीयते तेषां न त्वं शोचितुमर्हसि ॥ १२

शोकेनाभिप्रपन्नस्य जीविते चापि संशयः ।
स शोकं त्यज राजेन्द्र ! धैर्यमाश्रय केवलम् ॥ १३

हितं वयस्यभावेन ब्रूमि नोपदिशामि ते ।
वयस्यतां पूजयन्मे न त्वं शोचितुमर्हसि ॥" १४

मधुरं सान्त्वितस्तेन सुग्रीवेण स राघवः ।
मुखमश्रुपरिक्लिन्नं वस्त्रान्तेन प्रमार्जयत् ॥ १५

प्रकृतिस्थस्तु काकुत्स्थस्सुग्रीववचनात्प्रभुः ।
सम्परिष्वज्य सुग्रीवमिदं वचनमब्रवीत् ॥ १६

"कर्तव्यं यद्वयस्येन स्निग्धेन च हितेन च ।
अनुरूपं च युक्तं च कृतं सुग्रीव ! तत्त्वया ॥ १७

एष च प्रकृतिस्थोऽहमनुनीतस्त्वया सखे ! ।
दुर्लभो हीदृशो बन्धुरस्मिन्काले विशेषतः ॥ १८

किंतु यत्नस्त्वया कार्यो मैथिल्याः परिमार्गणे ।
राक्षसस्य च रौद्रस्य रावणस्य दुरात्मनः ॥ १९

मया च यदनुष्ठेयं विस्रब्धेन तदुच्यताम् ।
वर्षास्विव च सुक्षेत्रे सर्वं सम्पद्यते मयि ॥ २०

मया च यदिदं वाक्यमभिमानात्समीरितम् ।
तत्त्वया हरिशार्दूल ! तत्त्वमित्युपधार्यताम् ॥ २१

अनृतं नोक्तपूर्वं मे नच वक्ष्ये कदाचन ।
एतत्ते प्रतिजानामि सत्येनैव च ते शपे ॥" २२

ततः प्रहृष्टस्सुग्रीवो वानरैस्साचिवैस्सह ।
राघवस्य वचश्श्रुत्वा प्रतिज्ञातं विशेषतः ॥ २३

एवमेकान्तसम्पृक्तौ ततस्तौ नरवानरौ ।
उभावन्योन्यसदृशं सुखं दुःखं प्रभाषताम् ॥ २४

महानुभावस्य वचो निशम्य हरिर्नराणामृषभस्य तस्य ।
कृतं स मेने हरिवीरमुख्यस्तदा स्वकार्यं हृदयेन विद्वान् ॥ २५

इति श्रीमत्किष्किन्धाकाण्डे सप्तमस्सर्गः ॥

---

## ॥ अष्टमस्सर्गः ॥

परितुष्टस्तु सुग्रीवस्तेन वाक्येन वानरः ।
लक्ष्मणस्याग्रतो राममिदं वचनमब्रवीत् ॥ १

"सर्वथाऽह मनुग्राह्यो देवतानामसंशयः ।
उपपन्नगुणोपेतस्सखा यस्य भवान्मम ॥ २

शक्यं खलु भवेद्राम! सहायेन त्वयाऽनघ! ।
सुरराज्यमपि प्राप्तुं स्वराज्यं किंपुनः प्रभो! ॥ ३

सोऽहं सभाज्यो बन्धूनां सुहृदां चैव राघव! ।
यस्याग्निसाक्षिकं मित्रं लब्धं राघववंशजम् ॥ ४

अहमप्यनुरूपस्ते वयस्यो ज्ञास्यसे शनैः ।
न तु वक्तुं समर्थोऽहं स्वयमात्मगतान्गुणान् ॥ ५

महात्मनां तु भूयिष्ठं त्वद्विधानां कृतात्मनाम् ।
निश्चला भवति प्रीतिर्धैर्यमात्मवतामिव ॥ ६

रजतं वा सुवर्णं वा वस्त्राण्याभरणानि च ।
अविभक्तानि साधूनामवगच्छन्ति साधवः ॥ ७

आढ्यो वापि दरिद्रो वा दुःखितस्सुखितोऽपिवा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ॥ ८

धनत्यागस्सुखत्यागो देहत्यागोऽपिवा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥ ९

'तत्तथे' त्यब्रवीद्रामस्सुग्रीवं प्रियवादिनम् ।
लक्ष्मणस्याग्रतो लक्ष्म्या वासवस्येव धीमतः ॥ १०

ततो रामं स्थितं दृष्ट्वा लक्ष्मणं च महाबलम् ।
सुग्रीवस्सर्वतश्चक्षुर्वने लोलमपातयत् ॥ ११

स ददर्श ततस्साल मविदूरे हरीश्वरः ।
सुपुष्पमीषत्पत्राढ्यं भ्रमरैरुपशोभितम् ॥ १२

तस्यैकां पर्णबहुळां भङ्क्त्वा शाखां सुपुष्पिताम् ।
सालस्यास्तीर्य सुग्रीवो निषसाद स राघवः ॥ १३

तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् ।
सालशाखां समुत्पाट्य विनीत मुपवेशयत् ॥ १४

सुखोपविष्टं रामं तु प्रसन्नमुदधिं यथा ।
फलपुष्पसमाकीर्णे तस्मिन्गिरिवरोत्तमे ॥ १५

ततः प्रहृष्टस्सुग्रीवः श्लक्ष्णं मधुरया गिरा ।
उवाच प्रणया द्रामं हर्षव्याकुलिताक्षरम् ॥ १६

"अहं विनिकृतो भ्रात्रा चराम्येष भयार्दितः ।
ऋश्यमूकं गिरिवरं हृतभार्यस्सुदुःखितः ॥ १७

सोऽहं त्रस्तो भये मग्नो वसाम्युद्भ्रान्तचेतनः ।
वालिना निकृतो भ्रात्रा कृतवैरश्च राघव ! ॥ १८

वालिनो मे भयार्तस्य सर्वलोकाभयंकर ! ।
ममापि त्वमनाथस्य प्रसादं कर्तुमर्हसि ॥ " १९

एव मुक्तस्तु तेजस्वी धर्मज्ञो धर्मवत्सलः ।
प्रत्युवाच स काकुत्स्थस्सुग्रीवं प्रहसन्निव ॥ २०

" उपकारफलं मित्रमपकारोऽरिलक्षणम् ।
अद्यैवं तं हनिष्यामि तव भार्यापहारिणम् ॥ २१

इमे हि मे महावेगाः पत्रिणस्तिग्मतेजसः ।
कार्तिकेयवनोद्भूताश्शरा हेमविभूषिताः ॥ २२

कङ्कपत्रप्रतिच्छन्ना महेन्द्राशनिसन्निभाः ।
सुपर्वाणस्सुतीक्ष्णाग्रा स्सरोषा भुजगा इव ॥ २३

भ्रातृसंज्ञममित्रं ते वालिनं कृतकिल्बिषम् ।
शरैर्विनिहतं पश्य विकीर्णमिव पर्वतम् ॥ " २४

राघवस्य वच श्श्रुत्वा सुग्रीवो वाहिनीपतिः ।
प्रहर्ष मतुलं लेभे ' साधुसा ' ध्विति चाब्रवीत् ॥ २५

" राम ! शोकाभिभूतोऽहं शोकार्तानां भवान्गतिः ।
वयस्य इति कृत्वा हि त्वय्यहं परिदेवये ॥ २६

त्वं हि पाणिप्रदानेन वयस्यो मेऽग्निसाक्षिकम् ।
कृतः प्राणैर्बहुमत स्सत्येनापि शपामि ते ॥ २७

वयस्य इति कृत्वा च विस्रब्धं प्रवदाम्यहम् ।
दुःखमन्तर्गतं यन्मे मनो हरति नित्यशः ॥ " २८

एतावदुक्त्वा वचनं बाष्पदूषितलोचनः ।
बाष्पोपहतया वाचा नोच्चैश्शक्नोति भाषितुम् ॥ २९

बाष्पवेगं तु सहसा नदीवेगमिवागतम् ।
धारयामास धैर्येण सुग्रीवो रामसन्निधौ ॥ ३०

सन्निगृह्य तु तं बाष्पं प्रमृज्य नयने शुभे ।
विनिश्वस्य च तेजस्वी राघवं वाक्य मब्रवीत् ॥ ३१

“ पुराऽहं वालिना राम ! राज्यात्स्वादवरोपितः ।
परुषाणि च संश्राव्य निर्धूतोऽस्मि बलीयसा ॥ ३२

हृता भार्या च मे तेन प्राणेभ्योऽपि गरीयसी ।
सुहृदश्च मदीया ये संयता बन्धनेषु ते ॥ ३३

यत्नवांश्च सुदुष्टात्मा मद्विनाशाय राघव ! ।
बहुश स्तत्प्रयुक्ताश्च वानरा निहता मया ॥ ३४

शङ्कया त्वेतया चेह दृष्ट्वा त्वामपि राघव ! ।
नोपसर्पाम्यहं भीतो ‘ भये सर्वे हि बिभ्यति ’ ॥ ३५

केवलं हि सहाया मे हनुमत्प्रमुखास्त्विमे ।
अतोऽहं धारयाम्यद्य प्राणान् कृच्छ्रगतोऽपि सन् ॥ ३६

एते हि कपयस्स्निग्धा मां रक्षन्ति समन्ततः ।
सहगच्छन्ति गन्तव्ये नित्यं तिष्ठन्ति च स्थिते ॥ ३७

संक्षेपस्त्वेष मे राम ! किमुक्त्वा विस्तरं हि ते ।
स मे ज्येष्ठो रिपुर्भ्राता वाली विश्रुतपौरुषः ॥ ३८

तद्विनाशाद्धि मे दुःखं प्रणष्टं स्यादनन्तरम् ।
सुखं मे जीवितं चैव तद्विनाशनिबन्धनम् ॥ ३९

एष मे राम ! शोकान्त श्शोकार्तेन निवेदितः ।
दुःखितस्सुखितो वापि सख्युर्नित्यं सखा गतिः ॥ ” ४०

श्रुत्वैतद्वचनं रामस्सुग्रीवमिदमब्रवीत् ।
" किंनिमित्तमभूद्वैरं श्रोतुमिच्छामि तत्त्वतः ॥ ४१
सुखं हि कारणं श्रुत्वा वैरस्य तव वानर ! ॥
आनन्तर्यं विधास्यामि संप्रधार्य बलाबलम् ॥ ४२
बलवान् हि ममामर्षश्श्रुत्वा त्वामवमानितम् ।
वर्तते हृदयोत्कम्पी प्रावृड्वेग इवाम्भसः ॥ ४३
हृष्टः कथय विस्रब्धो यावदारोप्यते धनुः ।
सृष्टश्च हि मया बाणो निरस्तश्च रिपुस्तव ॥" ४४
एवमुक्तस्तु सुग्रीवः काकुत्स्थेन महात्मना ।
प्रहर्षमतुलं लेभे चतुर्भि स्सह वानरैः ॥ ४५
ततः प्रहृष्टवदनस्सुग्रीवो लक्ष्मणाग्रजे ।
वैरस्य कारणं तत्त्वमाख्यातुमुपचक्रमे ॥ ४६

इति श्रीमत्किष्किन्धाकाण्डे अष्टमस्सर्गः ॥

---

## ॥ नवमस्सर्गः ॥

[श्रूयतां राम ! यद्वृत्त मादितः प्रभृति त्वया ।
यथा वैरं समुद्भूतं यथा चाहं निराकृतः ॥] १
" वाली नाम मम भ्राता ज्येष्ठ श्शत्रुनिषूदनः ।
पितुर्बहुमतो नित्यं ममापि च तथा पुरा ॥ २
पितर्युपरतेऽस्माकं ज्येष्ठोऽय मिति मन्त्रिभिः ।
कपीनामीश्वरो राज्ये कृतः परमसम्मतः ॥ ३

राज्यं प्रशासतस्तस्य पितृपैतामहं महत् ।
अहं सर्वेषु कालेषु प्रणतः प्रेष्यवत् स्थितः ॥ ४

मायावी नाम तेजस्वी पूर्वजो दुन्दुभेः सुतः ।
तेन तस्य महद्वैरं स्त्रीकृतं विश्रुतं पुरा ॥ ५

स तु सुप्तजने रात्रौ किष्किन्धाद्वारमागतः ।
नर्दति स्म सुसंरब्धो वालिनं चाह्वयद्रणे ॥ ६

प्रसुप्तस्तु मम भ्राता नर्दितं भैरवस्वनम् ।
श्रुत्वा न ममृषे वाली निष्पपात जवात्तदा ॥ ७

स तु वै निःसृतः क्रोधात्तं हन्तुमसुरोत्तमम् ।
वार्यमाणस्तत स्त्रीभिर्मया च प्रणतात्मना ॥ ८

स तु निर्धूय सर्वान्नो निर्जगाम महाबलः ।
ततोऽहमपि सौहार्दान्निःसृतो वालिना सह ॥ ९

स तु मे भ्रातरं दृष्ट्वा मां च दूरादवस्थितम् ।
असुरो जातसंत्रासः प्रदुद्राव ततो भृशम् ॥ १०

तस्मिन् द्रवति संत्रस्ते ह्यावां द्रुततरं गतौ ।
प्रकाशश्च कृतो मार्गश्चन्द्रेणोद्गच्छता तदा ॥ ११

स तृणैरावृतं दुर्गं धरण्या विवरं महत् ।
प्रविवेशासुरो वेगा दावामासाद्य विष्ठितौ ॥ १२

तं प्रविष्टं रिपुं दृष्ट्वा बिलं रोषवशं गतः ।
मामुवाच तदा वाली वचनं क्षुभितेन्द्रियः ॥ १३

'इह त्वं तिष्ठ सुग्रीव ! बिलद्वारि समाहितः ।
यावत्तत्र प्रविश्याहं निहन्मि सहसा रिपुम् ॥' १४

मया त्वेतद्वचश्श्रुत्वा याचितस्स परन्तपः ।
शापयित्वा तु मां पद्भ्यां प्रविवेश बिलं महत् ॥ १५

तस्य प्रविष्टस्य बिलं साग्रस्संवत्सरो गतः ।
स्थितस्य च मम द्वारि स कालो व्यत्यवर्तत ॥ १६

अहं तु नष्टं ज्ञात्वा तं स्नेहादागतसम्भ्रमः ।
भ्रातरं न च पश्यामि पापाशङ्कि च मे मनः ॥ १७

अथ दीर्घस्य कालस्य बिलात्तस्माद्विनिस्सृतम् ।
सफेनं रुधिरं रक्तमहं दृष्ट्वा सुदुःखितः ॥ १८

नर्दतामसुराणां च ध्वनि र्मे श्रोत्रमागतः ।
निरस्तस्य च सङ्ग्रामे क्रोशतो निस्स्वनो गुरोः ॥ १९

अहंत्ववगतो बुद्ध्या चिह्नैस्तै र्भ्रातरं हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥ २०

शोकार्तश्चोदकं कृत्वा किष्किंधा मागत स्सखे ! ।
गूहमानस्य मे तत्त्वं यत्नतो मन्त्रिभिश्श्रुतम् ॥ २१

ततोऽहं तैस्समागम्य सम्मतै रभिषेचितः ।
राज्यं प्रशासत स्तस्य न्यायतो मम राघव ! ॥ २२

आजगाम रिपुं हत्वा वाली तमसुरोत्तमम् ।
अभिषिक्तं तु मां दृष्ट्वा वाली संरक्तलोचनः ॥ २३

मदीयान्मन्त्रिणो बद्ध्वा परुषं वाक्यमब्रवीत् ।
निग्रहेऽपि समर्थस्य तं पापं प्रति राघव ! ॥ २४

न प्रावर्तत मे बुद्धि र्भ्रातुगौंरवयन्त्रिता ।
हत्वा शत्रुं स मे भ्राता प्रविवेश पुरं तदा ॥ २५

मानयं स्तं महात्मानं यथावच्चाभ्यवादयम् ।
उक्ताश्च नाशिषस्तेन सन्तुष्टेनान्तरात्मना ॥ २६

नत्वा पादावहं तस्य मकुटेनास्पृशं प्रभो! ।
अपि वाली मम क्रोधा न्न प्रसादं चकार सः ॥" २७

इति श्रीमत्किष्किन्धाकाण्डे नवमस्सर्गः ॥

---

## ॥ दशमस्सर्गः ॥

ततः क्रोधसमाविष्टं संरब्धं तमुपागतम् ।
अहं प्रसादयांचक्रे भ्रातरं प्रियकाम्यया ॥ १

'दिष्ट्याऽसि कुशली प्राप्तो निहतश्च त्वया रिपुः ।
अनाथस्य हि मे नाथस्त्वमेकोऽनाथनन्दनः ॥ २

इदं बहुशलाकं ते पूर्णचन्द्रमिवोदितम् ।
छत्रं सवालव्यजनं प्रतीच्छस्व मयोद्यतम् ॥ ३

आर्तश्चाथ बिलद्वारि स्थितस्संवत्सरं नृप! ।
दृष्ट्वाऽहं शोणितं द्वारि बिलाच्चापि समुत्थितम् ॥ ४

शोकसंविग्नहृदयो भृशं व्याकुलितेन्द्रियः ।
अपिधाय बिलद्वारं शैलशृङ्गेण तत्तथा ॥ ५

तस्माद्देशा दपाक्रम्य किष्किन्धां प्राविशं पुनः ।
विषादात्विह मां दृष्ट्वा पौरैर्मन्त्रिभिरेव च ॥ ६

अभिषिक्तो न कामेन तन्मे त्वं क्षन्तुमर्हसि ।
त्वमेव राजा मानार्ह स्सदा चाहं यथापुरम् ॥ ७

राजभावे नियोगोऽयं मया त्वद्विरहात्कृतः ।
सामात्यपौरनगरं स्थितं निहतकण्टकम् ॥ ८

न्यासभूतमिदं राज्यं तव निर्यातयाम्यहम् ।
माच रोषं कृथा सौम्य! मयि शत्रुनिबर्हण! ॥ ९

याचे त्वां शिरसा राजन्! मया बद्धोऽयमञ्जलिः ।
बलादस्मि समागम्य मन्त्रिभिः पुरवासिभिः ॥ १०

राजभावे नियुक्तोऽहं शून्यदेशजिगीषया ।'
स्निग्ध मेवं ब्रुवाणं मां स तु निर्भर्त्स्य वानरः ॥ ११

'धिक्त्वा' मिति च मामुक्त्वा बहु तत्तदुवाच ह ।
प्रकृतीश्च समानीय मन्त्रिणश्चैव सम्मतान् ॥ १२

मामाह सुहृदां मध्ये वाक्यं परमगर्हितम् ।
"विदितं वो यथा रात्रौ मायावी स महासुरः । १३

मां समाह्वयत क्रूरो युद्धकाङ्क्षी सुदुर्मतिः ।
तस्य तद्वचनं श्रुत्वा निस्सृतोऽहं नृपालयात् ॥ १४

अनुयातश्च मां तूर्णं मयं भ्राता सुदारुणः ।
स तु दृष्ट्वैव मां रात्रौ सद्वितीयं महाबलः ॥ १५

प्राद्रवद्भयसन्त्रस्तो वीक्ष्याऽऽवां तमनुद्रुतौ ।
अनुद्रुतश्च वेगेन प्रविवेश महाबिलम् ॥ १६

त प्रविष्टं विदित्वा तु सुघोरं सुमहद्बिलम् ।
अयमुक्तोऽथ मे भ्राता मया तु क्रूरदर्शनः ॥ १७

अहत्वा नास्ति मे शक्तिः प्रतिगन्तुमितः पुरीम् ।
बिलद्वारि प्रतीक्ष त्वं यावदेनं निहन्म्यहम् ॥ १८

'स्थितोऽय' मिति मत्वा तु प्रविष्टोऽहं दुरासदम् ।
तं च मे मार्गमाणस्य गतस्संवत्सरस्तदा ॥ १९

स तु दृष्टो मया शत्रुरनिर्वेदाद्भयावहः ।
निहतश्च मया तत्र सोऽसुरो बन्धुभिस्सह ॥ २०

तस्यास्यात्तु प्रवृत्तेन रुधिरौघेन तद्बिलम् ।
पूर्णमासीद्दुराक्रामंस्तनतस्तस्य भूतले ॥ २१

सूदयित्वा तु तं शत्रुं विक्रान्तं दुन्दुभेस्सुतम् ।
निष्क्रामन्नेव पश्यामि बिलस्य पिहितं मुखम् ॥ २२

विक्रोशमानस्य तु मे 'सुग्री'वेति पुनःपुनः ।
यदा प्रतिवचो नास्ति ततोऽहं भृशदुःखितः ॥ २३

पादप्रहारैस्तु मया बहुभिस्तद्विदारितम् ।
ततोऽहं तेन निष्क्रम्य यथा पुरमुपागतः ॥ २४

अत्रानेनास्मि संरुद्धो राज्यं प्रार्थयताऽऽत्मनः ।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥' २५

एवमुक्त्वा तु मां तत्र वस्त्रेणैकेन वानरः ।
निर्वासयामास तदा वाली विगतसाध्वसः ॥ २६

तेनाहमपविद्धश्च हृतदारश्च राघव ! ।
तद्भयाच्च मही कृत्स्ना क्रान्तेयं सवनार्णवा ॥ २७

ऋश्यमूकं गिरिवरं भार्याहरणदुःखितः ।
प्रविष्टोऽस्मि दुराधर्षं वालिनः कारणान्तरे ॥ २८

एतत्ते सर्वमाख्यातं वैरानुकथनं महत् ।
अनागसा मया प्राप्तं व्यसनं पश्य राघव ! ॥ २९

वालिनस्तु भयार्तस्य सर्वलोकाभयंकर! ।
कर्तुमर्हसि मे वीर! प्रसादं तस्य निग्रहात् ॥" ३०

एवमुक्तस्स तेजस्वी धर्मज्ञो धर्मसंहितम् ।
वचनं वक्तुमारेभे सुग्रीवं प्रहसन्निव ॥ ३१

"अमोघा स्सूर्यसङ्काशा ममैते निशिताश्शराः ।
तस्मिन्वालिनि दुर्वृत्ते निपतिष्यन्ति वेगिताः ॥ ३२

यावत्तं नाभिपश्यामि तव भार्यापहारिणम् ।
तावत्स जीवेत्पापात्मा वाली चारित्रदूषकः ॥ ३३

आत्मानुमानात्पश्यामि मग्नं त्वां शोकसागरे ।
त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम् ॥" ३४

तस्य तद्वचनं श्रुत्वा राघवस्यात्मनो हितम् ।
सुग्रीवः परमप्रीतस्सुमहद्वाक्य मब्रवीत् ॥ ३५

इति श्रीमत्किष्किन्धाकाण्डे दशमस्सर्गः ॥

---

## ॥ एकादशस्सर्गः ॥

रामस्य वचनं श्रुत्वा हर्षपौरुषवर्धनम् ।
सुग्रीवः पूजयांचक्रे राघवं प्रशशंस च ॥ १

"असंशयं प्रज्वलितै स्तीक्ष्णैर्मर्मातिगैश्शरैः ।
त्वं दहेः कुपितो लोकान्युगान्त इव भास्करः ॥ २

वालिनः पौरुषं यत्तद्यच्च वीर्यं धृतिश्च या ।
तन्ममैकमनाश्श्रुत्वा विधत्स्व यदनन्तरम् ॥ ३

समुद्रात्पश्चिमात्पूर्वं दक्षिणा दपि चोत्तरम् ।
क्रामत्यनुदिते सूर्ये वाली व्यपगतक्लमः ॥ ४

अग्राण्यारुह्य शैलानां शिखराणि महान्त्यपि ।
ऊर्ध्वं मुत्क्षिप्य तरसा प्रतिगृह्णाति वीर्यवान् ॥ ५

बहवस्सारवन्त श्च वनेषु विविधा द्रुमाः ।
वालिना तरसा भग्ना बलं प्रथयताऽऽत्मनः ॥ ६

महिषो दुन्दुभिर्नाम कैलासशिखरप्रभः ।
बलं नागसहस्रस्य धारयामास वीर्यवान् ॥ ७

वीर्योत्सेकेन दुष्टात्मा वरदानाच्च मोहितः ।
जगाम सुमहाकायस्समुद्रं सरितां पतिम् ॥ ८

ऊर्मिमन्तमभिक्रम्य सागरं रत्नसञ्चयम् ।
'मह्यं युद्धं प्रय' च्छेति तमुवाच महार्णवम् ॥ ९

ततस्समुद्रो धर्मात्मा समुत्थाय महाबलः ।
अब्रवीद्वचनं राजन्! नसुरं कालचोदितम् ॥ १०

'समर्थो नास्ति ते दातुं युद्धं युद्धविशारद! ।
श्रूयतां चाभिधास्यामि यस्ते युद्धं प्रदास्यति ॥ ११

शैलराजो महारण्ये तपस्विशरणं परम् ।
शङ्करश्वशुरो नाम्ना हिमवानिति विश्रुतः ॥ १२

गुहाप्रस्रवणोपेतो बहुकन्दरनिर्दरः ।
स समर्थस्तव प्रीतिमतुलां कर्तु माहवे' ॥ १३

'तं भीतं' इति विज्ञाय समुद्रमसुरोत्तमः ।
हिमवद्वनमागच्छ च्छरश्चापादिव च्युतः ॥ १४

ततस्तस्य गिरेश्श्वेता गजेन्द्रविपुला श्शिलाः ।
चिक्षेप बहुधा भूमौ दुन्दुभिर्विननाद च ॥ 15

ततश्श्वेताम्बुदाकारः सौम्यः प्रीतिकराकृतिः ।
हिमवानब्रवी द्वाक्यं स्वएव शिखरे स्थितः ॥ 16

" क्लेष्टुमर्हसि मां न त्वं दुन्दुभे! धर्मवत्सल ।
रणकर्मस्वकुशलस्तपस्विशरणं ह्यहम् " ॥ 17

तस्य तद्वचनं श्रुत्वा गिरिराजस्य धीमतः ।
उवाच दुन्दुभि र्वाक्यं रोषात्संरक्तलोचनः ॥ 18

" यदि युद्धे समर्थ स्त्वं मद्भया द्वा निरुद्यमः ।
तमाचक्ष्व प्रदद्यान्मे योऽद्य युद्धं युयुत्सतः ॥ " 19

हिमवा नब्रवी द्वाक्यं श्रुत्वा वाक्यविशारदः ।
अनुक्तपूर्वं धर्मात्मा क्रोधात्तमसुरोत्तमम् ॥ 20

" वाली नाम महाप्राज्ञ श्शक्रतुल्यपराक्रमः ।
अध्यास्ते वानरश्श्रीमान्किष्किन्धामतुलप्रभाम् ॥ 21

स समर्थो महाप्राज्ञस्तव युद्धविशारदः ।
द्वन्द्वयुद्धं महद्दातुं नमुचे रिव वासवः ॥ 22

तं शीघ्र मभिगच्छ त्वं यदि युद्ध मिहेच्छसि ।
सहि दुर्धर्षणो नित्यं शूरस्समरकर्मणि ॥" 23

श्रुत्वा हिमवतो वाक्यं क्रोधाविष्ट स्स दुन्दुभिः ।
जगाम तां पुरीं तस्य किष्किन्धां वालिनस्तदा ॥ 24

धारयन्माहिषं रूपं तीक्ष्णशृङ्गो भयावहः ।
प्रावृषीव महामेघ स्तोयपूर्णो नभस्स्थले ॥ 25

ततस्तु द्वारमागम्य किष्किन्धाया महाबलः ।
ननर्द कम्पयन्भूमिं दुन्दुभिं दुन्दुभिर्यथा ॥ २६

समीपस्थान्द्रुमान्भञ्जन्वसुधां दारयन्खुरैः ।
विषाणेनोल्लिखन्दर्पात्तद्द्वारं द्विरदो यथा ॥ २७

अन्तःपुरगतो वाली श्रुत्वा शब्दममर्षणः ।
निष्पपात सह स्त्रीभि स्ताराभि रिव चन्द्रमाः ॥ २८

मितं व्यक्ताक्षरपदं तमुवाचाथ दुन्दुभिम् ।
हरीणामीश्वरो वाली सर्वेषां वनचारिणाम् ॥ २९

" किमर्थं नगरद्वार मिदं रुद्ध्वा विनर्दसि ।
दुन्दुभे ! विदितो मेऽसि रक्ष प्राणान्महाबल ! ॥ ३०

तस्य तद्वचनं श्रुत्वा वानरेन्द्रस्य धीमतः ।
उवाच दुन्दुभि र्वाक्यं रोषात्संरक्तलोचनः ॥ ३१

" न त्वं स्त्रीसन्निधौ वीर ! वचनं वक्तुमर्हसि ।
मम युद्धं प्रयच्छाद्य ततो ज्ञास्यामि ते बलम् ॥ ३२

अथवा धारयिष्यामिक्रोध मद्य निशामिमाम् ।
गृह्यतामुदयस्स्वैरं कामभोगेषु वानर ! ॥ ३३

दीयतां सम्प्रदानं च परिष्वज्य च वानरान् ।
सर्वशाखामृगेन्द्रस्त्वं संपादय सुहृज्जनान् ॥ ३४

सुदृष्टां कुरु किष्किन्धां कुरुष्वात्मसमं पुरे ।
क्रीडस्व च सहस्त्रीभिरहं ते दर्पनाशनः ॥ ३५

यो हि मत्तं प्रमत्तं वा सुप्तं वा रहितं भृशम् ।
हन्यात्स भ्रूणहा लोके त्वद्विधं मदमोहितम् ॥ " ३६

स प्रहस्याब्रवीन्मन्दं क्रोधात्तमसुरोत्तमम् ।
विसृज्य ताः स्त्रियः सर्वास्ताराप्रभृतिकास्तदा ॥ ३७

"मत्तोऽयमिति मामंस्था यद्यभीतोऽसि संयुगे ।
मदोऽयं सम्प्रहारेऽस्मिन्वीरपाणं समर्थ्यताम् ॥" ३८

तमेवमुक्त्वा संक्रुद्धो मालामुत्क्षिप्य काञ्चनीम् ।
पित्रा दत्तां महेन्द्रेण युद्धाय व्यवतिष्ठत ॥ ३९

विषाणयोर्गृहीत्वा तं दुन्दुभिं गिरिसन्निभम् ।
आविद्ध्यत तदा वाली विनदन्कपिकुञ्जरः ॥ ४०

वाली व्यापादयांचक्रे ननर्द च महास्वनम् ।
श्रोत्राभ्यामथ रक्तं तु तस्य सुस्राव पात्यतः ॥ ४१

तयोस्तु क्रोधसंरम्भात्परस्परजयैषिणोः ।
युद्धं समभवद्घोरं दुन्दुभेर्वानरस्य च ॥ ४२

अयुद्ध्यत तदा वाली शक्रतुल्यपराक्रमः ।
मुष्टिभिर्जानुभिश्चैव शिलाभिः पादपैस्तथा ॥ ४३

परस्परं घ्नतोस्तत्र वानरासुरयोस्तदा ।
असीदनसुरो युद्धे शक्रसूनुर्व्यवर्धत ॥ ४४

व्यापारवीर्यधैर्यैश्च परिक्षीणं पराक्रमैः ।
तं तु दुन्दुभिमुत्पाट्य धरण्यामभ्यपातयत् ॥ ४५

युद्धे प्राणहरे तस्मिन्निष्पिष्टो दुन्दुभिस्तदा ।
[स्रोतोभ्यो बहुरक्तं तु तस्य सुस्राव पात्यतः] ॥ ४६

पपात च महाकायः क्षितौ पञ्चत्वमागतः ।
तं तोलयित्वा बाहुभ्यां गतसत्त्वमचेतनम् ॥ ४७

चिक्षेप बलवान्वाली वेगेनैकेन योजनम् ।
तस्य वेगप्रविद्धस्य वक्त्रात्क्षतजबिन्दवः ॥ ४८
प्रपेतुर्मारुतोत्क्षिप्ता मतङ्गस्याश्रमं प्रति ।
तान्दृष्ट्वा पतितांस्तस्य मुनिश्शोणितविप्रुषः ॥ ४९
क्रुद्धस्तत्र महाभागश्चिन्तयामास " कोन्वयम् ।
येनाऽहं सहसा स्पृष्टश्शोणितेन दुरात्मना ॥ ५०
कोऽयं दुरात्मा दुर्बुद्धिरकृतात्मा च बालिशः ।"
इत्युक्त्वाथ विनिष्क्रम्य ददर्श मुनिसत्तमः ॥ ५१
महिषं पर्वताकारं गतासुं पतितं भुवि ।
स तु विज्ञाय तपसा वानरेण कृतं हि तत् ॥ ५२
उत्ससर्ज महाशापं क्षेप्तारं वालिनं प्रति ।
" इह तेनाप्रवेष्टव्यं प्रविष्टस्य वधो भवेत् ॥ ५३
वनं मत्संश्रयं येन दूषितं रुधिरस्रवैः ।
सम्भग्नाः पादपाश्चेमे क्षिपतेहासुरीं तनुम् ॥ ५४
समन्ताद्योजनं पूर्णमाश्रमं मामकं यदि ।
आगमिष्यति दुर्बुद्धिर्व्यक्तं स न भविष्यति ॥ ५५
ये चापि सचिवास्तस्य संश्रिता मामकं वनम् ।
नच तैरिह वस्तव्यं श्रुत्वा यान्तु यथासुखम् ॥ ५६
यदि तेऽपीह तिष्ठन्ति शपिष्ये तानपि ध्रुवम् ।
वनेऽस्मिन्मामके नित्यं पुत्रवत्परिरक्षिते । ५७
पत्राङ्कुरविनाशाय फलमूलाभवाय च ।
दिवसश्चास्य मर्यादा यं द्रष्टा श्वोऽस्मि वानरम् ॥ ५८

बहुवर्षसहस्राणि स वै शैलो भविष्यति ।"
ततस्ते वानरास्श्रुत्वा गिरं मुनिसमीरिताम् ॥ ५९

निश्चक्रमुर्वनात्तस्मात्तान्दृष्ट्वा वालिरब्रवीत् ।
"किं भवन्तस्समस्ताश्च मतङ्गवनवासिनः ॥ ६०

मत्समीपमनुप्राप्ता अपि स्वस्ति वनौकसाम् ।
ततस्ते कारणं सर्वं तदा शापं च वालिनः ॥ ६१

शशंसुर्वानरास्सर्वे वालिने हेममालिने ।
एतच्छ्रुत्वा तदा वाली वचनं वानरेरितम् ॥ ६२

'स महर्षिं तदासाद्य याचते स्म कृताञ्जलिः ।
महर्षिस्तमनादृत्य प्रविवेशाश्रमं तदा ॥ ६३

शापधारणभीतस्तु वाली विह्वलतां गतः ।
ततश्शापभयाद्भीत ऋश्यमूकं महागिरिम् ॥ ६४

प्रवेष्टुं नेच्छति हरिर्द्रष्टुं वापि नरेश्वर ! ।
तस्याप्रवेशं ज्ञात्वाऽहमिदं राम ! महावनम् ॥ ६५

विचरामि सहामात्यो विषादेन विवर्जितः ।
एषोऽस्थिनिचयस्तस्य दुन्दुभेस्संप्रकाशते ॥ ६६

वीर्योत्सेकान्निरस्तस्य गिरिकूटोपमो महान् ।
इमे च विपुलास्सालास्सप्त शाखावलम्बिनः ॥ ६७

यंत्रकै घटते वाली निष्पत्रयितुमोजसा ।
एतदस्यासमं वीर्यं मया राम ! प्रकीर्तितम् ॥ ६८

कथं तं वालिनं हन्तुं समरे शक्ष्यसे नृप ! ।"
तथा ब्रुवाणं सुग्रीवं प्रहसन्लक्ष्मणोऽब्रवीत् ॥ ६९

कस्मिन्कर्मणि निर्वृत्ते श्रद्दध्या वालिनो वधम् । ”
तमुवाचाथ सुग्रीवस्तत्र सालानिमान्पुरा ॥ ७०

एवमेकैकशो वाली विव्याधाथ स चासकृत् ।
रामोऽपि दारयेदेषां बाणेनैकेन चेद्द्रुमम् ॥ ७१

वालिनं निहतं मन्ये दृष्ट्वा रामस्य विक्रमम् ।
हतस्य महिषस्यास्थि पादेनैकेन लक्ष्मण ! ॥ ७२

उद्यम्याथ प्रक्षिपेच्चेत्तरसा द्वे धनुश्शते । ”
एवमुक्त्वा तु सुग्रीवो रामं रक्तान्तलोचनम् ॥ ७३

ध्यात्वा मुहूर्तं काकुत्स्थं पुनरेव वचोऽब्रवीत् ।
“ शूरश्च शूरघाती च प्रख्यातबलपौरुषः ॥ ७४

बलवान्वानरो वाली संयुगेष्वपराजितः ।
दृश्यन्ते चास्य कर्माणि दुष्कराणि सुरैरपि ॥ ७५

यानि संचिन्त्य भीतोऽहमृश्यमूकं समाश्रितः ।
तमजय्यमधृष्यं च वानरेन्द्रममर्षणम् ॥ ७६

विचिन्तयन्न मुञ्चामि ऋश्यमूकमहं त्विमम् ।
उद्विग्नश्शङ्कितश्चापि विचरामि महावने ॥ ७७

अनुरक्तैस्सहामात्यैर्हनुमत्प्रमुखैर्वरैः ।
उपलब्धं च मे श्लाघ्यं सन्मित्रं मित्रवत्सल ! ॥ ७८

त्वामहं पुरुषव्याघ्र ! हिमवन्तमिवाश्रितः ।
किंतु तस्य बलज्ञोऽहं दुर्भ्रातुर्बलशालिनः ॥ ७९

अप्रत्यक्षं तु मे वीर्यं समरे तव राघव ! ।
न खल्वहं त्वां तुलये नावमन्ये न भीषये ॥ ८०

कर्मभिस्तस्य भीमैस्तु कातर्यं जनितं मम ।
कामं राघव! ते वाणी प्रमाणं धैर्यमाकृतिः ॥ ८१

सूचयन्ति परं तेजो भस्मच्छन्नमिवानलम् ।"
तस्य तद्वचनं श्रुत्वा सुग्रीवस्य महात्मनः ॥ ८२

स्मितपूर्वमथो रामः प्रत्युवाच हरिं प्रभुः ।
"यदि न प्रत्ययोऽस्मासु विक्रमे तव वानर! ॥ ८३

प्रत्ययं समरे श्लाघ्यमहमुत्पादयामि ते ।"
एवमुक्त्वा तु सुग्रीवं सान्त्वं लक्ष्मणपूर्वजः ॥ ८४

राघवो दुन्दुभेः कायं पादाङ्गुष्ठेन लीलया ।
तोलयित्वा महाबाहुश्चिक्षेप दशयोजनम् ॥ ८५

असुरस्य तनुं शुष्कां पादाङ्गुष्ठेन वीर्यवान् ।
क्षिप्तं दृष्ट्वा ततः कायं सुग्रीवः पुनरब्रवीत् ॥ ८६

लक्ष्मणस्याग्रतो राममिदं वचनमर्थवत् ।
"आर्द्रस्समांसः प्रत्यग्रः क्षिप्तः कायः पुरा सखे ॥ ८७

लघुस्सम्प्रति निर्मांसस्तृणभूतश्च राघव!।
परिश्रान्तेन मत्तेन भ्रात्रा मे वालिना तदा ॥ ८८

क्षिप्तमेवं प्रहर्षेण भवता रघुनन्दन!।
नात्र शक्यं बलं ज्ञातुं तव वा तस्य वाधिकम् ॥ ८९

'आर्द्रं शुष्कमिति ह्येतत्सुमहद्राघवान्तरम् ।
स एव संशयस्तात! तव तस्य च यद्बले ॥ ९०

सालमेकं तु निर्भिन्द्या भवेद्व्यक्तिर्बलाबले ।
कृत्वेदं कार्मुकं सज्यं हस्तिहस्तमिवाततम् ॥ ९१

आकर्णपूर्णमायम्य विसृजस्व महाशरम् ।
इमं हि सालं सहितस्त्वया शरो नसंशयोऽत्रास्ति विदारयिष्यति ।
अलं विमर्शेन मम प्रियं ध्रुवं कुरुष्व राजात्मज! शापितो मया ॥
यथा हि तेजस्सु वरस्सदा रविर्यथाहि शैलो हिमवान्महाद्रिषु ।
यथा चतुष्पात्सु च केसरी वरस्तथा नराणामसि विक्रमे वरः ॥ "

इति श्रीमत्किष्किन्धाकाण्डे एकादशस्सर्गः ॥

---

## ॥ द्वादशस्सर्गः ॥

एतच्च वचनं श्रुत्वा सुग्रीवेण सुभाषितम् ।
प्रत्ययार्थं महातेजा रामो जग्राह कार्मुकम् ॥ १

स गृहीत्वा धनुर्घोरं शरमेकं च मानदः ।
सालमुद्दिश्य चिक्षेप ज्यास्वनैः पूरयन्दिशः ॥ २

स विसृष्टो बलवता बाणस्स्वर्णपरिष्कृतः ।
भित्त्वा सालान्गिरिप्रस्थे सप्तभूमिं विवेश ह ॥ ३

प्रविष्टश्च मुहूर्तेन धरां भित्त्वा महाजवः ।
निष्पत्य च पुनस्तूर्णं स्वतूणीं प्रविवेश ह ॥ ४

तान्दृष्ट्वा सप्त निर्भिन्नांत्सालान्वानरपुङ्गवः ।
रामस्य शरवेगेन विस्मयं परमं गतः ॥ ५

स मूर्ध्ना न्यपतद्भूमौ प्रलम्बीकृतभूषणः ।
सुग्रीवः परमप्रीतो राघवाय कृताञ्जलिः ॥ ६

इदं चोवाच धर्मज्ञं कर्मणा तेन हर्षितः ।
" रामं सर्वास्त्रविदुषां श्रेष्ठं शूरमवस्थितम् ॥ ७

सेन्द्रानपि सुरांत्सर्वास्त्वं बाणैः पुरुषर्षभ ! ।
समर्थस्समरे हन्तुं किंपुन र्वालिनं प्रभो ! ॥ ८

येन सप्त महासाला गिरिर्भूमिश्च दारिताः ।
बाणेनैकेन काकुत्स्थ ! स्थाता ते तोरणाग्रतः ॥ ९

अद्य मे विगतश्शोकः प्रीतिरद्य परा मम ।
सुहृदं त्वां समासाद्य महेन्द्रवरुणोपमम् ॥ १०

तमद्यैव प्रियार्थं मे वैरिणं भ्रातृरूपिणम् ।
वालिनं जहि काकुत्स्थ ! मया बद्धोऽयमञ्जलिः ॥" ११

ततो रामः परिष्वज्य सुग्रीवं प्रियदर्शनम् ।
प्रत्युवाच महाप्राज्ञो लक्ष्मणानुमतं वचः ॥ १२

"अस्माद्गच्छेम किष्किन्धां क्षिप्रं गच्छ त्वमग्रतः ।
गत्वा चाह्वय सुग्रीव ! वालिनं भ्रातृगन्धिनम् ॥" १३

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिनः पुरीम् ।
वृक्षैरात्मानमावृत्य व्यतिष्ठन्गहने वने ॥ १४

सुग्रीवो व्यनदद्घोरं वालिनोऽऽह्वानकारणात् ।
गाढं परिहितो वेगान्नादैर्भिन्दन्निवाम्बरम् ॥ १५

तं श्रुत्वा निनदं भ्रातुः क्रुद्धो वाली महाबलः ।
निश्चक्राम सुसंरब्धो भास्करोऽस्ततटादिव ॥ १६

ततस्सुतुमुलं युद्धं वालिसुग्रीवयोरभूत् ।
गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥ १७

[ अग्नचर्कयोर्यथाऽऽकाशे मेरुमन्दरयोरिव ।
हिमवद्विन्ध्ययोश्चैव यथा मैनाकक्रौञ्चयोः ॥ १८

वज्रगोकर्णयोश्चैव महेन्द्रारिष्टयोरिव । ]
तलैरशनिकल्पैश्च वज्रकल्पैश्च मुष्टिभिः ॥ १९

जघ्नतुस्समरेऽन्योन्यं भ्रातरौ क्रोधमूर्छितौ ।
ततो रामो धनुष्पाणिस्तावुभौ समुदीक्ष्य तु ॥ २०

अन्योन्यसदृशौ वीरावुभौ देवाविवाश्विनौ ।
यन्नावगच्छत्सुग्रीवं वालिनं वापि राघवः ॥ २१

ततो न कृतवान्बुद्धिं मोक्तुमन्तकरं शरम् ।
एतस्मिन्नन्तरे भग्नस्सुग्रीवस्तेन वालिना ॥ २२

अपश्यन्राघवं नाथमृश्यमूकं प्रदुद्रुवे ।
क्लान्तो रुधिरसिक्ताङ्गः प्रहारैर्जर्झरीकृतः ॥ २३

वालिनाऽभिद्रुतः क्रोधात्प्रविवेश महावनम् ।
तं प्रविष्टं वनं दृष्ट्वा वाली शापभयार्दितः ॥ २४

'मुक्तो ह्यसि त्वमित्युक्त्वा सन्निवृत्तो महाद्युतिः ।
[ निवृत्तस्स्वपुरीं प्रायात्क्रोधाविष्टो महाबलः ॥ ] २५

राघवोऽपि सह भ्रात्रा सह चैव हनूमता ।
तदेव वनमागच्छत्सुग्रीवो यत्र वानरः ॥ २६

तं समीक्ष्यागतं रामं सुग्रीवस्सहलक्ष्मणम् ।
ह्रीमान्दीनमुवाचेदं वसुधामवलोकयन् ॥ २७

'आह्वय 'स्वेति मामुक्त्वा दर्शयित्वा च विक्रमम् ।
वैरिणा घातयित्वा च किमिदानीं त्वया कृतम् ॥ २८

तामेव वेळां वक्तव्यं त्वया राघव ! तत्त्वतः ।
वालिनं न निहन्मीति ततो नाहमितो व्रजे ॥ " २९

तस्य चैवं ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
करुणं दीनया वाचा राघवः पुनरब्रवीत् ॥ ३०

"सुग्रीव ! श्रूयतां तात ! क्रोधश्च व्यपनीयताम् ।
कारणं येन बाणोऽयं न मया स विसर्जितः ॥ ३१

अलंकारेण वेषेण प्रमाणेन गतेन च ।
त्वं च सुग्रीव ! वाली च सदृशौ स्थः परस्परम् ॥ ३२

स्वरेण वर्चसा चैव प्रेक्षितेन च वानर ! ।
विक्रमेण च वाक्यैश्च व्यक्तिं वां नोपलक्षये ॥ ३३

ततोऽहं रूपसादृश्यान्मोहितो वानरोत्तम ! ।
नोत्सृजामि महावेगं शरं शत्रुनिबर्हणम् ॥ ३४

जीवितान्तकरं घोरं सादृश्यात्तु विशङ्कितः ।
मूलघातो न नौ स्याद्धि द्वयोरपि कृतो मया ॥ ३५

त्वयि वीरे विपन्ने हि अज्ञानाल्लाघवान्मया ।
मौढ्यं च मम बाल्यं च ख्यापितं स्यात्कपीश्वर ॥ ३६

दत्ताभयवधो नाम पातकं महदुच्यते ।
अहं च लक्ष्मणश्चैव सीता च वरवर्णिनी ॥ ३७

त्वदधीना वयं सर्वे वनेऽस्मिन् शरणं भवान् ।
तस्माद्युध्यस्व भूयस्त्वं मा मा शङ्कीश्च वानर ! ॥ ३८

एतन्मुहूर्ते सुग्रीव ! पश्य वालिनमाहवे ।
निरस्तमिषुणैकेन वेष्टमानं महीतले ॥ ३९

अभिज्ञानं कुरुष्व त्वमात्मनो वानरेश्वर ! ।
येन त्वामभिजानीयां द्वन्द्वयुद्धमुपागतम् ॥" ४०

गजपुष्पीमिमां फुल्लामुत्पाट्य शुभलक्षणाम् ।
कुरु लक्ष्मण! कण्ठेऽस्य सुग्रीवस्य महात्मनः ॥" ४१

ततो गिरितटे जाता मुत्पाट्य कुसुमाकुलाम् ।
लक्ष्मणो गजपुष्पीं तां तस्य कण्ठे व्यसर्जयत् ॥ ४२

स तया शुशुभे श्रीमान् लतया कण्ठसक्तया ।
विपरीत इवाकाशे सूर्यो नक्षत्रमालया ॥ ४३

मालयेव बलाकानां ससन्ध्य इव तोयदः ।
विभ्राजमानो वपुषा रामवाक्यसमाहितः ॥ ४४

जगाम सह रामेण किष्किन्धां वालिपलिताम् ।

इति श्रीमत्किष्किन्धाकाण्डे द्वादशस्सर्गः ॥

---

## ॥ त्रयोदशस्सर्गः ॥

ऋश्यमूकात्स धर्मात्मा किष्किन्धां लक्ष्मणाग्रजः ।
जगाम सहसुग्रीवो वालिविक्रमपालिताम् ॥ १

समुद्यम्य महच्चापं रामः काञ्चनभूषितम् ।
शरांश्चादित्यसङ्काशान्गृहीत्वा रणसाधकान् ॥ २

अग्रतस्तु ययौ तस्य राघवस्य महात्मनः ।
सुग्रीवस्संहतग्रीवो लक्ष्मणश्च महाबलः ॥ ३

पृष्ठतो हनुमान्वीरो नळो नीलश्च वानरः ।
तारश्चैव महातेजा हरियूथपयूथपः ॥ ४

ते वीक्षमाणा वृक्षांश्च पुष्पभारावलम्बिनः ।
प्रसन्नाम्बुवहाश्चैव सरितस्सागरंगमाः ॥ ५

कन्दराणि च शैलांश्च निर्दराणि गुहास्तथा ।
शिखराणि च मुख्यानि दरीश्च प्रियदर्शनाः ॥ ६

वैडूर्यविमलैः पर्णैः पद्मैश्चाकोशकुड्मलैः ।
शोभितांस्सजलान्मार्गे तटाकांश्च व्यलोकयन् ॥ ७

कारण्डैस्सारसैर्हंसैः वञ्जुळैर्जलकुक्कुटैः ।
चक्रवाकैस्तथा चान्यैश्शकुनैरुपनादितान् ॥ ८

मृदुशष्पाङ्कुराहारान्निर्भयान्वनगोचरान् ।
चरतस्सर्वतः पश्यन् स्थलीषु हरिणान् स्थितान् ॥ ९

तटाकवैरिणश्चापि शुक्लदन्तविभूषितान् ।
घोरानेकचरान्वन्यान्द्विरदान्कूलघातिनः ॥ १०

मत्तान्गिरितटोत्कृष्टान्पर्वतानिव जङ्गमान् ।
वारणान्वारिदप्रख्यान्महीरेणुसमुक्षितान् ॥ ११

वने वनचरांश्चान्यान्खेचरांश्च विहङ्गमान् ।
पश्यन्तस्त्वरिता जग्मुस्सुग्रीववशवर्तिनः ॥ १२

तेषां तु गच्छतां तत्र त्वरितं रघुनन्दनः ।
द्रुमषण्डं वनं दृष्ट्वा रामस्सुग्रीवमब्रवीत् ॥ १३

"एष मेघ इवाकाशे वृक्षषण्डः प्रकाशते ।
मेघसङ्घातविपुलः पर्यन्तकदळीवृतः ॥ १४

किमेतत् ज्ञातुमिच्छामि सखे! कौतूहलं हि मे ।
कौतूहलापनयनं कर्तुमिच्छाम्यहं त्वया ॥" १५

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः ।
गच्छन्नेवाचचक्षेऽथ सुग्रीवस्तन्महद्वनम् ॥ १६

“ एतद्राघव ! विस्तीर्णमाश्रमं श्रमनाशनम् ।
उद्यानवनसंपन्नं स्वादुमूलफलोदकम् ॥ १७

अत्र सप्तजना नाम मुनयस्संश्रितव्रताः ।
सप्तैवासन्नधश्शीर्षा नियतं जलशायिनः ॥ १८

सप्तरात्रकृताहारा वायुना वनवासिनः ।
दिवं वर्षशतैर्यातास्सप्तभिस्सकळेबराः ॥ १९

तेषामेवंप्रभावानां द्रुमप्राकारसंवृतः ।
आश्रमस्सुदुराधर्षे अपि सेन्द्रैस्सुरासुरैः ॥ २०

पक्षिणो वर्जयन्त्येतत्तथाऽन्ये वनचारिणः ।
विशन्ति मोहाद्येऽप्यत्र निवर्तन्ते न ते पुनः ॥ २१

विभूषणरवास्तत्र श्रूयन्ते सकलाक्षराः ।
तूर्यगीतस्वराश्चात्र गन्धो दिव्यश्च राघव ! ॥ २२

त्रेताग्नयोऽपि दीप्यन्ते धूमो यत्र प्रकाशते ।
वेष्टयन्निव वृक्षाग्रान्कपोताङ्गारुणो घनः ॥ २३

एते वृक्षाः प्रकाशन्ते धूमसंसक्तमस्तकाः ।
मेघजालप्रतिच्छन्ना वैडूर्यगिरयो यथा ॥ २४

कुरु प्रणामं धर्मात्मंस्तांत्समुद्दिश्य राघव ! ।
लक्ष्मणेन सह भ्रात्रा प्रयतस्संयताञ्जलिः ॥ २५

प्रणमन्ति हि ये तेषां मुनीनां भावितात्मनाम् ।
न तेषामशुभं किंचिच्छरीरे राम ! दृश्यते ॥ ” २६

ततो रामस्सह भ्रात्रा लक्ष्मणेन कृताञ्जलिः ।
समुद्दिश्य महात्मानस्तानृषीनभ्यवादयत् ॥ २७

अभिवाद्य तु धर्मात्मा रामो भ्राता च लक्ष्मणः ।
सुग्रीवो वानराश्चैव जग्मुस्संहृष्टमानसाः ॥ २८
त गत्वा दूरमध्वानं तस्मात्सप्तजनाश्रमात् ।
ददृशुस्तां दुराधर्षां किष्किन्धां वालिपालिताम् ॥ २९
ततस्तु रामानुजरामवानराः प्रगृह्य शस्त्राण्युदिताग्र्यतेजसः ॥
पुरीं सुरेशात्मजवीर्यपालितां वधाय शत्रोः पुनरागतास्सह ॥ ३०

इति श्रीमत्किष्किन्धाकाण्डे त्रयोदशस्सर्गः ॥

---

## ॥ चतुर्दशस्सर्गः ॥

सर्वे ते त्वरितं गत्वा किष्किन्धां वालिपालिताम् ।
वृक्षैरात्मानमावृत्य व्यतिष्ठन्गहने वने ॥ १
विचार्य सर्वतो दृष्टिं कानने काननप्रियः ।
सुग्रीवो विपुलग्रीवः क्रोधमाहारयद्भृशम् ॥ २
ततस्स निनदं घोरं कृत्वा युद्धाय चाह्वयत् ।
परिवारैः परिवृतो नादैर्भिन्दन्निवाम्बरम् ॥ ३
गर्जन्निव महामेघो वायुवेगपुरस्सरः ।
अथ बालार्कसदृशो दृप्तसिंहगतिस्तदा ॥ ४
दृष्ट्वा रामं क्रियादक्षं सुग्रीवो वाक्यमब्रवीत् ।
“ हरिवागुरया व्याप्तां तप्तकाञ्चनतोरणाम् ॥ ५
प्राप्ताः स्म ध्वजयन्त्राढ्यां किष्किन्धां वालिनः पुरीम् ।
प्रतिज्ञा या त्वया वीर ! कृता वालिवधे पुरा ॥ ६

सफलां तां कुरु क्षिप्रं लतां काल इवागतः ।"
एवमुक्तस्तु धर्मात्मा सुग्रीवेण स राघवः ॥ ७

तमथोवाच सुग्रीवं वचनं शत्रुसूदनः ।
"कृताभिज्ञानचिह्नस्त्वमनया गजसाह्वया ॥ ८

लक्ष्मणेन समुत्पाट्य यैषा कण्ठे कृता तव ।
शोभसे ह्यधिकं वीर! लतया कण्ठसक्तया ॥ ९

विपरीत इवाकाशे सूर्यो नक्षत्रमालया ।
अद्य वालिसमुत्थं ते भयं वैरं च वानर! ॥ १०

एकेनाहं प्रमोक्ष्यामि बाणमोक्षेण संयुगे ।
मम दर्शय सुग्रीव! वैरिणं भ्रातृरूपिणम् ॥ ११

वाली विनिहतो यावद्वने पांसुषु वेष्टते ।
यदि दृष्टिपथं प्राप्तो जीवंत्स न निवर्तते ॥ १२

ततो दोषेण मागच्छेत्सद्यो गर्हेच्च मा भवान् ।
प्रत्यक्षं सप्त ते साला मया बाणेन दारिताः ॥ १३

तेनावेहि बलेनाद्य वालिनं निहतं मया ।
अनृतं नोक्तपूर्वं मे वीर! कृच्छ्रेऽपि तिष्ठता ॥ १४

धर्मलोभपरीतेन न च वक्ष्ये कथंचन ।
सफलां च करिष्यामि प्रतिज्ञां जहि संभ्रमम् ॥ १५

प्रसूतं कलमं क्षेत्रे वर्षेणेव शतक्रतुः ।
तदाह्वाननिमित्तं त्वं वालिनो हेममालिनः ॥ १६

सुग्रीव! कुरु तं शब्दं निष्पतेद्येन वानरः ।
जितकाशी बलश्लाघी त्वया चाधर्षितः पुरा ॥ १७

निष्पतिष्यत्यसङ्गेन वाली स प्रियसंयुगः ।
रिपूणां धर्षणं शूरा मर्षयन्ति न संयुगे ॥ १८

जानन्तस्तु स्वकं वीर्यं स्त्रीसमक्षं विशेषतः ।”
स तु रामवचश्श्रुत्वा सुग्रीवो हेमपिङ्गळः ॥ १९

ननर्द क्रूरनादेन विनिर्भिन्दन्निवाम्बरम् ।
तस्य शब्देन वित्रस्ता गावो यान्ति हतप्रभाः ॥ २०

राजदोषपरामृष्टाः कुलस्त्रिय इवाकुलाः ।
द्रवन्ति च मृगाश्शीघ्रं भग्ना इव रणे हयाः ॥ २१

पतन्ति च खगा भूमौ क्षीणपुण्या इव ग्रहाः ।
ततस्स जीमूतगणप्रणादो नादं ह्यमुञ्चत्त्वरया प्रतीतः ।
सूर्यात्मजश्शौर्यविवृद्धतेजास्सरित्पतिर्वाऽनिलचञ्चलोर्मिः ॥ २२

इति श्रीमत्किष्किन्धाकाण्डे चतुर्दशस्सर्गः ॥

---

## ॥ पञ्चदशस्सर्गः ॥

अथ तस्य निनादं तु सुग्रीवस्य महात्मनः ।
शुश्रावान्तःपुरगतो वाली भ्रातुरमर्षणः ॥ १

श्रुत्वा तु तस्य निनदं सर्वभूतप्रकम्पनम् ।
मदश्चैकपदे नष्टः क्रोधश्चापतितो महान् ॥ २

स तु रोषपरीताङ्गो वाली सन्ध्यातपप्रभः ।
उपरक्त इवादित्यस्सद्यो निष्प्रभतां गतः ॥ ३

वाली दंष्ट्राकराळस्तु क्रोधाद्दीप्ताग्निसन्निभः ।
भात्युत्पतितपद्मस्तु समृणाळ इव ह्रदः ॥ ४

शब्दं दुर्मर्षणं श्रुत्वा निष्पपात ततो हरिः ।
वेगेन चरणन्यासैर्दारयन्निव मेदिनीम् ॥ ५

तं तु तारा परिष्वज्य स्नेहाद्दर्शितसौहृदा ।
उवाच त्रस्तसंभ्रान्ता हितोदर्कमिदं वचः ॥ ६

साधु क्रोधमिमं वीर ! नदीवेगमिवागतम् ।
शयनादुत्थितः काल्यं त्यज भुक्तामिव स्रजम् ॥ ७

काल्यमेतेन संग्रामं करिष्यसि च वानर ! ।
वीर ! ते शत्रुबाहुल्यं फल्गुता वा न विद्यते ॥ ८

सहसा तव निष्क्रामो मम तावन्न रोचते ।
श्रूयतां चाभिधास्यामि यन्निमित्तं निवार्यसे ॥ ९

पूर्वमापतितः क्रोधात्स त्वामाह्वयते युधि ।
निष्पत्य च निरस्तस्ते हन्यमानो दिशो गतः ॥ १०

त्वया तस्य निरस्तस्य पीडितस्य विशेषतः ।
इहैत्य पुनराह्वानं शङ्कां जनयतीव मे ॥ ११

दर्पश्च व्यवसायश्च यादृशस्तस्य नर्दतः ।
निनादश्चापि संरम्भो नैतदल्पं हि कारणम् ॥ १२

नासहायमहं मन्ये सुग्रीवं तमिहागतम् ।
अवष्टब्धसहायश्च यमाश्रित्यैष गर्जति ॥ १३

प्रकृत्या निपुणश्चैव बुद्धिमांश्चैव वानरः ।
अपरीक्षितवीर्येण सुग्रीवस्सह नैष्यति ॥ १४

पूर्वमेव मया वीर ! श्रुतं कथयतो वचः ।
अङ्गदस्य कुमारस्य वक्ष्यामि त्वा हितं वचः ॥ १५

अङ्गदस्तु कुमारोऽयं वनान्तमुपनिर्गतः ।
प्रवृत्तिस्तेन कथिता चारैराप्तैर्निवेदिता ॥ १६

अयोध्याधिपतेः पुत्रौ शूरौ समरदुर्जयौ ।
इक्ष्वाकूणां कुले जातौ प्रथितौ रामलक्ष्मणौ ॥ १७

सुग्रीवप्रियकामार्थं प्राप्तौ तत्र दुरासदौ ।
तव भ्रातुर्हि विख्यातस्सहायो रणकर्कशः ॥ १८

रामः परबलामर्दी युगान्ताग्निरिवोत्थितः ।
निवासवृक्षस्साधूनामापन्नानां परा गतिः ॥ १९

आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ।
ज्ञानविज्ञानसंपन्नो निदेशे निरतः पितुः ॥ २०

धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ।
तत्क्षमं न विरोधस्ते सह तेन महात्मना ॥ २१

दुर्जयेनाप्रमेयेन रामेण रणकर्मसु ।
शूर ! वक्ष्यामि ते किंचिन्न चेच्छाम्यभ्यसूयितुम् ॥ २२

श्रूयतां क्रियतां चैव तव वक्ष्यामि यद्धितम् ।
यौवराज्येन सुग्रीवं तूर्णं साध्वभिषेचय ॥ २३

विग्रहं मा कृथा वीर ! भ्रात्रा राज ! न्बलीयसा ।
अहं हि ते क्षमं मन्ये तेन रामेण सौहृदम् ॥ २४

सुग्रीवेण च संप्रीतिं वैरमुत्सृज्य दूरतः ।
लालनीयो हि ते भ्राता यवीयानेष वानरः ॥ २५

तत्र वा सन्निहस्थो वा सर्वथा बन्धुरेव ते ।
न हि तेन समं बन्धुं भुवि पश्यामि कंचन ॥ २६

दानमानादिसत्कारैः कुरुष्व प्रत्यनन्तरम् ।
वैरमेतत्समुत्सृज्य तव पार्श्वे स तिष्ठतु ॥ २७
सुग्रीवो विपुलग्रीवस्तव बन्धुस्सदा मतः ।
भ्रातुस्सौहृदमालम्ब्य नान्या गतिरिहास्ति ते ॥ २८
यदि ते मत्प्रियं कार्यं यदि चावैषि मां हिताम् ।
याच्यमानः प्रयत्नेन साधु वाक्यं कुरुष्व मे ॥ २९
प्रसीद पथ्यं शृणु जल्पितं हि मे न रोषमेवानुविधातुमर्हसि ।
क्षमो हि ते कोसलराजसूनुना न विग्रहश्शक्रसमानतेजसा ॥ ३०
तदा हि तारा हितमेव वाक्यं तं वालिनं पथ्यमिदं बभाषे ।
न रोचते तद्वचनं हि तस्य कालाभिपन्नस्य विनाशकाले ॥ ३१

इति श्रीमत्किष्किन्धाकाण्डे पञ्चदशस्सर्गः ॥

---

## ॥ षोडशस्सर्गः ॥

तामेवं ब्रुवतीं तारां ताराधिपनिभाननाम् ।
वाली निर्भर्त्सयामास वचनं चेदमब्रवीत् ॥ १
गर्जतोऽस्य च संरम्भं भ्रातुश्शत्रोर्विशेषतः ।
मर्षयिष्याम्यहं केन कारणेन वरानने ! ॥ २
अधर्षितानां शूराणां समरेष्वनिवर्तिनाम् ।
धर्षणामर्षणं भीरु ! मरणादतिरिच्यते ॥ ३
सोढुं न च समर्थोऽहं युद्धकामस्य संयुगे ।
सुग्रीवस्य च संरम्भं हीनग्रीवस्य गर्जतः ॥ ४

न च कार्यो विषादस्ते राघवं प्रति मत्कृते ।
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥ ५

निवर्तस्व सह स्त्रीभिः कथं भूयोऽनुगच्छसि ।
सौहृदं दर्शितं तारे! मयि भक्तिः कृता त्वया ॥ ६

प्रतियोत्स्याम्यहं गत्वा सुग्रीवं जहि संभ्रमम् ।
दर्पमात्रं विनेष्यामि न च प्राणैर्विमोक्ष्यते ॥ ७

अहं ह्याजौ स्थितस्यास्य करिष्यामि यथेप्सितम् ।
वृक्षैर्मुष्टिप्रहारैश्च पीडितः प्रतियास्यति ॥ ८

न मे गर्वितमायस्तं सहिष्यति दुरात्मवान् ।
कृतं तारे सहायत्वं सौहृदं दर्शितं मयि ॥ ९

शापितासि मम प्राणैर्निवर्तस्व जयेन च ।
अहं जित्वा निवर्तिष्ये तमरिं भ्रातरं रणे ॥" १०

तं तु तारा परिष्वज्य वालिनं प्रियवादिनी ।
चकार रुदती मन्दं दक्षिणा सा प्रदक्षिणम् ॥ ११

ततस्स्वस्त्ययनं कृत्वा मन्त्रवद्विजयैषिणी ।
अन्तःपुरं सह स्त्रीभिः प्रविष्टा शोकमोहिता ॥ १२

प्रविष्टायां तु तारायां सह स्त्रीभिस्स्वमालयम् ।
नगरान्निर्ययौ क्रुद्धो महासर्प इव श्वसन् ॥ १३

स निःश्वस्य महातेजा वाली परमरोषणः ।
सर्वतश्चारयन्दृष्टिं शत्रुदर्शनकाङ्क्षया ॥ १४

स ददर्श ततश्श्रीमांत्सुग्रीवं हेमपिङ्गळम् ।
सुसंवीतमवष्टब्धं दीप्यमानमिवानलम् ॥ १५

स तं दृष्ट्वा महावीर्यं सुग्रीवं पर्यवस्थितम् ।
गाढं परिदधे वासो वाली परमरोषणः ॥ १६

स वाली गाढसंवीतो मुष्टिमुद्यम्य वीर्यवान् ।
सुग्रीवमेवाभिमुखो ययौ योद्धुं कृतक्षणः ॥ १७

श्लिष्टमुष्टिं समुद्यम्य संरब्धतरमागतः ।
सुग्रीवोऽपि तमुद्दिश्य वालिनं हेममालिनम् ॥ १८

तं वाली क्रोधताम्राक्षस्सुग्रीवं रणपण्डितम् ।
आपतन्तं महावेगमिदं वचनमब्रवीत् ॥ १९

"एष मुष्टिर्मया बद्धो गाढस्सन्निहिताङ्गुलिः ।
मया वेगविमुक्तस्ते प्राणानादाय यास्यति ॥" २०

एवमुक्तस्तु सुग्रीवः क्रुद्धो वालिनमब्रवीत् ।
"तवैव चाहरन्प्राणान्मुष्टिः पततु मूर्धनि ॥" २१

ताडितस्तेन संक्रुद्धस्स समभिक्रम्य वेगितः ।
अभवच्छोणितोद्गारी सोत्पीड इव पर्वतः ॥ २२

सुग्रीवेण तु निस्सङ्गं सालमुत्पाट्य तेजसा ।
गात्रेष्वभिहतो वाली वज्रेणेव महागिरिः ॥ २३

स तु वाली प्रचलितस्सालताडनविह्वलः ।
गुरुभारसमाक्रान्तो नौसार्थइव सागरे ॥ २४

तौ भीमबलविक्रान्तौ सुपर्णसमवेगिनौ ।
प्रवृद्धौ घोरवपुषौ चन्द्रसूर्याविवाम्बरे ॥ २५

परस्परममित्रघ्नौ छिद्रान्वेषणतत्परौ ।
ततोऽवर्धत वाली तु बलवीर्यसमन्वितः ॥ २६

सूर्यपुत्रो महावीर्यस्सुग्रीवः परिहीयते ।
वालिना भग्नदर्पस्तु सुग्रीवो मन्दविक्रमः ॥ २७

वालिनं प्रति सामर्षो दर्शयामास लाघवम् ।
वृक्षैस्सशाखैस्सशिखैर्वज्रकोटिनिभैर्नखैः ॥ २८

मुष्टिभिर्जानुभिः पद्भिर्बाहुभिश्च पुनःपुनः ।
तयोर्युद्धमभूद्धोरं वृत्रवासवयोरिव ॥ २९

तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ ।
मेघाविव महाशब्दैस्तर्जयानौ परस्परम् ॥ ३०

हीयमानमथोऽपश्यत्सुग्रीवं वानरेश्वरम् ।
वीक्षमाणं दिशश्चैव राघवस्स मुहुर्मुहुः ॥ ३१

ततो रामो महातेजा आर्तं दृष्ट्वा हरीश्वरम् ।
शरं च वीक्षते वीरो वालिनो वधकारणात् ॥ ३२

ततो धनुषि सन्धाय शरमाशीविषोपमम् ।
पूरयामास तच्चापं कालचक्रमिवान्तकः ॥ ३३

तस्य ज्यातलघोषेण त्रस्ताः पत्ररथेश्वराः ।
प्रदुद्रुवुर्मृगाश्चैव युगान्त इव मोहिताः ॥ ३४

मुक्तस्तु वज्रनिर्घोषः प्रदीप्ताशनिसन्निभः ।
राघवेण महाबाणो वालिवक्षसि पातितः ॥ ३५

ततस्तेन महातेजा वीर्योत्सिक्तः कपीश्वरः ।
वेगेनाभिहतो वाली निपपात महीतले ॥ ३६

इन्द्रध्वज इवोद्धूतः पौर्णमास्यां महीतले ।
आश्वयुक्समये मासि गतश्रीको विचेतनः ॥ ३७

नरोत्तमः कालयुगान्तकोपमं शरोत्तमं काञ्चनरूप्यभूषितम् ।
ससर्ज दीप्तं तममित्रमर्दनं सधूममग्निं मुखतो यथा हरः ॥ ३८

अथोक्षितश्शोणिततोयविस्रवैस्सुपुष्पिताशोक इवानलोद्धतः ।
विचेतनो वासवसूनुराहवे विभ्रंशितेन्द्रध्वजवत्क्षितिं गतः ॥ ३९

इति श्रीमत्किष्किन्धाकाण्डे षोडशस्सर्गः ॥

---

## ॥ सप्तदशस्सर्गः ॥

ततश्शरेणाभिहतो रामेण रणकर्कशः ।
पपात सहसा वाली निकृत्त इव पादपः ॥ १

स भूमौ न्यस्तसर्वाङ्गस्तप्तकाञ्चनभूषणः ।
अपतद्देवराजस्य मुक्तरश्मिरिव ध्वजः ॥ २

तस्मिन्निपतिते भूमौ वानराणां गणेश्वरे ।
नष्टचन्द्रमिव व्योम न व्यराजत भूतलम् ॥ ३

भूमौ निपतितस्यापि तस्य देहं महात्मनः ।
न श्रीर्जहाति न प्राणा न तेजो न पराक्रमः ॥ ४

शक्रदत्ता वरा माला काञ्चनी वज्रभूषिता ।
दधार हरिमुख्यस्य प्राणांस्तेजश्श्रियं च सा ॥ ५

स तया मालया वीरो हैमया हरियूथपः ।
सन्ध्यानुगतपर्यन्तः पयोधर इवाभवत् ॥ ६

तस्य माला च देहश्च मर्मघाती च यश्शरः ।
त्रिधेव रचिता लक्ष्मीः पतितस्यापि शोभते ॥ ७

तदस्त्रं तस्य वीरस्य स्वर्गमार्गप्रभावनम् ।
रामबाणासनक्षिप्तमावहत्परमां गतिम् ॥ ८

तं तदापतितं संख्ये गतार्चिषमिवानलम् ।
बहुमान्य च तं वीरं वीक्षमाणं शनैरिव ॥ ९

ययातिमिव पुण्यान्ते देवलोकात्परिच्युतम् ।
आदित्यमिव कालेन युगान्ते भुवि पातितम् ॥ १०

महेन्द्रमिव दुर्धर्षं महेन्द्रमिव दुस्सहम् ।
महेन्द्रपुत्रं पतितं वालिनं हेममालिनम् ॥ ११

सिंहोरस्कं महाबाहुं दीप्तास्यं हरिलोचनम् ।
लक्ष्मणानुगतो रामो ददर्शोपससर्प च ॥ १२

तं दृष्ट्वा राघवं वाली लक्ष्मणं च महाबलम् ।
अब्रवीत्प्रश्रितं वाक्यं परुषं धर्मसंहितम् ॥ १३

"त्वं नराधिपतेः पुत्रः प्रथितः प्रियदर्शनः ।
कुलीनस्सत्त्वसंपन्नस्तेजस्वी चरितव्रतः ॥ १४

पराङ्मुखवधं कृत्वा को नु प्राप्तस्त्वया गुणः ।
यदहं युद्धसंरब्धश्शरेणोरसि ताडितः ॥ १५

रामः करुणवेदी च प्रजानां च हिते रतः ।
सानुक्रोशो जितोत्साहस्समयज्ञो दृढव्रतः ॥ १६

इति ते सर्वभूतानि कथयन्ति यशो भुवि ।
दमश्शमः क्षमा धर्मो धृतिस्सत्यं पराक्रमः ॥ १७

पार्थिवानां गुणा राजन्दण्डश्चाप्यपराधिषु ।
तान्गुणांत्संप्रधार्याहमग्र्यं चाभिजनं तव ॥ १८

तारया प्रतिषिद्धोऽपि सुग्रीवेण समागतः।
न मामन्येन संरब्धं प्रमत्तं योद्धुमर्हति ॥ १९

इति मे बुद्धिरुत्पन्ना बभूवादर्शने तव।
न त्वां विनिहतात्मानं धर्मध्वजमधार्मिकम् ॥ २०

जाने पापसमाचारं तृणैः कूपमिवावृतम्।
सतां वेषधरं पापं प्रच्छन्नमिव पावकम् ॥ २१

नाहं त्वामभिजानामि धर्मच्छद्माभिसंवृतम्।
विषये वा पुरे वा ते यदा नापकारोम्यहम् ॥ २२

न च त्वामवजाने च कस्मात्त्वं हंस्यकिल्बिषम्।
फलमूलाशिनं नित्यं वानरं वनगोचरम् ॥ २३

मामिहाप्रतियुध्यन्तमन्येन च समागतम्।
लिङ्गमप्यस्ति ते राजन्! दृश्यते धर्मसंहितम् ॥ २४

कः क्षत्रियकुले जातश्श्रुतवान्नष्टसंशयः।
धर्मलिङ्गप्रतिच्छन्नः क्रूरं कर्म समाचरेत् ॥ २५

राम! राजकुले जातो धर्मवानिति विश्रुतः।
अभव्यो भव्यरूपेण किमर्थं परिधावसि ॥ २६

साम दानं क्षमा धर्मस्सत्यं धृतिपराक्रमौ।
पार्थिवानां गुणा राजन्! दण्डश्चाप्यपराधिषु ॥ २७

वयं वनचरा राम! मृगा मूलफलाशनाः।
एषा प्रकृतिरस्माकं पुरुषस्त्वं नरेश्वरः ॥ २८

भूमिर्हिरण्यं च रूप्यं च विग्रहे कारणानि च।
अत्र कस्ते वने लोभो मदीयेषु फलेषु वा ॥ २९

नयश्च विनयश्चोभौ विनयानुग्रहावपि ।
राजवृत्तिरसंकीर्णा न नृपाः कामवृत्तयः ॥ ३०

त्वं तु कामप्रधानश्च कोपनश्चानवस्थितः ।
राजवृत्तैश्च संकीर्णश्शरासनपरायणः ॥ ३१

न तेऽस्त्यपचितिर्धर्मे नार्थे बुद्धिरवस्थिता ।
इन्द्रियैः कामवृत्तस्सन्कृष्यसे मनुजेश्वर! ॥ ३२

हत्वा बाणेन काकुत्स्थ! मामिहानपराधिनम् ।
किं वक्ष्यसि सतां मध्ये कर्म कृत्वा जुगुप्सितम् ॥ ३३

राजहा ब्रह्महा गोघ्नश्चोरः प्राणिवधे रतः ।
नास्तिकः परिवेत्ता च सर्वे निरयगामिनः ॥ ३४

सूचकश्च कदर्यश्च मित्रघ्नो गुरुतल्पगः ।
लोकं पापात्मनामेते गच्छन्ते नात्र संशयः ॥ ३५

अधार्यं चर्म मे सद्भीरोमाण्यस्थि च वर्जितम् ।
अभक्ष्याणि मांसानि त्वद्विधैर्धर्मचारिभिः ॥ ३६

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव! ।
शल्यकश्श्वाविधो गोधा शशः कूर्मश्च पञ्चमः ॥ ३७

चर्म चास्थि च मे राजन्! न स्पृशन्ति मनीषिणः ।
अभक्ष्याणि च मांसानि सोऽहं पञ्चनखो हतः ॥ ३८

तारया वाक्यमुक्तोऽहं सत्यं सर्वज्ञया हितम् ।
तदतिक्रम्य मोहेन कालस्य वशमागतः ॥ ३९

त्वया नाथेन काकुत्स्थ! न सनाथा वसुन्धरा ।
प्रमदा शीलसम्पन्ना धूर्तेन पतिना यथा ॥ ४०

शठो नैकृतिकः क्षुद्रो मिथ्याप्रश्रितमानसः ।
कथं दशरथेन त्वं जातः पापो महात्मना ॥ ४१

छिन्नचारित्रकक्ष्येण सतां धर्मातिवर्तिना ।
त्यक्तधर्माङ्कुशेनाहं निहतो रामहस्तिना ॥ ४२

अशुभं चाप्ययुक्तं च सतां चैव विगर्हितम् ।
वक्ष्यसे चेदृशं कृत्वा सद्भिस्सह समागतः ॥ ४३

उदासीनेषु योऽस्मासु विक्रमस्ते प्रकाशितः ।
अपकारिषु तं राज ! न हि पश्यामि विक्रमम् ॥ ४४

दृश्यमानस्तु युद्ध्येथा मया यदि नृपात्मज ! ।
अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया ॥ ४५

त्वयाऽदृश्येन तु रणे निहतोऽहं दुरासदः ।
प्रसुप्तः पन्नगेनेव नरः पानवशं गतः ॥ ४६

मामेव यदि पूर्वं त्वमेतदर्थमचोदयः ।
मैथिलीमहमेकाह्ना तव चानीतवान्भवेत् ॥ ४७

सुग्रीवप्रियकामेन यत्कृतेऽस्मि हतस्त्वया ।
कण्ठे बद्ध्वा प्रदद्यां ते निहतं रावणं रणे ॥ ४८

न्यस्तां सागरतोये वा पाताळे वापि मैथिलीम् ।
आनयेयं तवादेशाच्छ्वेतामश्वतरीमिव ॥ ४९

युक्तं यत्प्राप्नुयाद्राज्यं सुग्रीवस्स्वर्गते मयि ।
अयुक्तं यदधर्मेण त्वयाऽहं निहतो रणे ॥ ५०

काममेवंविधो लोकः कालेन विनियुज्यते ।
क्षमं चेद्भवता प्राप्तमुत्तरं साधु चिन्त्यताम् ॥" ५१

इत्येवमुक्त्वा परिशुष्कवक्त्रश्शराभिघाताद्व्यथितो महात्मा ।
समीक्ष्य रामं रविसन्निकाशं तूष्णीं बभूवामरराजसूनुः ॥ ५२

इति श्रीमत्किष्किन्धाकाण्डे सप्तदशस्सर्गः ॥

---

## ॥ अष्टादशस्सर्गः ॥

इत्युक्तः प्रश्रितं वाक्यं धर्मार्थसहितं हितम् ।
परुषं वालिना रामो निहतेन विचेतसा ॥ १

तं निष्प्रभमिवादित्यं मुक्ततोयमिवाम्बुदम् ।
उक्तवाक्यं हरिश्रेष्ठमुपशान्तमिवानलम् ॥ २

धर्मार्थगुणसंपन्नं हरीश्वरमनुत्तमम् ।
अधिक्षिप्तस्तदा रामः पश्चाद्वालिनमब्रवीत् ॥ ३

" धर्ममर्थं च कामं च समयं चापि लौकिकम् ।
अविज्ञाय कथं बाल्यान्मामिहाद्य विगर्हसे ॥ ४

अपृष्ट्वा बुद्धिसम्पन्नान्वृद्धानाचार्यसम्मतान् ।
सौम्य ! वानरचापल्यात्किं मा वक्तुमिहेच्छसि ॥ ५

इक्ष्वाकूणामियं भूमिस्सशैलवनकानना ।
मृगपक्षिमनुष्याणां निग्रहप्रग्रहावपि ॥ ६

तां पालयति धर्मात्मा भरतस्सत्यवानृजुः ।
धर्मकामार्थतत्त्वज्ञो निग्रहानुग्रहे रतः ॥ ७

नयश्च नियमश्चोभौ यस्मिन्सत्यं च सुस्थितम् ।
विक्रमश्च यथा दृष्टस्स राजा देशकालवित् ॥ ८

तस्य धर्मकृतादेशा वयमन्ये च पार्थिवाः ।
चरामो वसुधां कृत्स्नां धर्मसन्तानमिच्छवः ॥ ९

तस्मिन्नृपतिशार्दूले भरते धर्मवत्सले ।
पालयत्यखिलां भूमिं कश्चरेद्धर्मनिग्रहम् ॥ १०

ते वयं धर्मविभ्रष्टं स्वधर्मे परमे स्थिताः ।
भरताज्ञां पुरस्कृत्य निगृह्णीमो यथाविधि ॥ ११

त्वं तु संक्लिष्टधर्मा च कर्मणा च विगर्हितः ।
कामतन्त्रप्रधानश्च न स्थितो राजवर्त्मनि ॥ १२

ज्येष्ठो भ्राता पिता चैव यश्च विद्यां प्रयच्छति ।
त्रयस्ते पितरो ज्ञेया धर्मे पथि हि वर्तिनः ॥ १३

यवीयानात्मनः पुत्रश्शिष्यश्चापि गुणोदितः ।
पुत्रवत्ते त्रयश्चिन्त्या धर्मश्चेदत्र कारणम् ॥ १४

सूक्ष्मः परमदुर्ज्ञेयस्सतां धर्मः प्लवङ्गम !
हृदिस्थस्सर्वभूतानामात्मा वेद शुभाशुभम् ॥ १५

चपलश्चपलैस्सार्धं वानरैरकृतात्मभिः ।
जात्यन्ध इव जात्यन्धैर्मन्त्रयन् द्रक्ष्यसे नु किम् ॥ १६

अहं तु व्यक्ततामस्य वचनस्य ब्रवीमि ते ।
न हि मां केवलं रोषात्त्वं विगर्हितुमर्हसि ॥ १७

तदेतत्कारणं पश्य यदर्थं त्वं मया हतः ।
भ्रातुर्वर्तसि भार्यायां त्यक्त्वा धर्मं सनातनम् ॥ १८

अस्य त्वं धरमाणस्य सुग्रीवस्य महात्मनः ।
रुमायां वर्तसे कामात्स्नुषायां पापकर्मकृत् ॥ १९

तव्द्यतीतस्य ते धर्मात्कामवृत्तस्य वानर ! ।
भ्रातृभार्यावमर्शेऽस्मिन्दण्डोऽयं प्रतिपादितः ॥ २०

न हि धर्मविरुद्धस्य लोकवृत्तादपेयुषः ।
दण्डादन्यत्र पश्यामि निग्रहं हरियूथप ॥ २१

न हि ते मर्षये पापं क्षत्रियोऽहं कुलोद्भवः ।
औरसीं भगिनीं वापि भार्यां वाप्यनुजस्य यः ॥ २२

प्रचरेत नरः कामात्तस्य दण्डो वधः स्मृतः ।
भरतस्तु महीपालो वयं त्वादेशवर्तिनः ॥ २३

त्वं तु धर्मादतिक्रान्तः कथं शक्य उपेक्षितुम् ।
गुरुर्धर्मव्यतिक्रान्तं प्राज्ञो धर्मेण पालयन् ॥ २४

भरतः कामवृत्तानां निग्रहे पर्यवस्थितः ।
वयं तु भरतादेशविधिं कृत्वा हरीश्वर ! ॥ २५

त्वद्विधान्भिन्नमर्यादान्नियन्तुं पर्यवस्थिताः ।
सुग्रीवेण च मे सख्यं लक्ष्मणेन यथा तथा ॥ २६

दारराज्यनिमित्तं च निःश्रेयसि रतस्स मे ।
प्रतिज्ञा च मया दत्ता तदा वानरसन्निधौ ॥ २७

प्रतिज्ञा च कथं शक्या मद्विधेनानवेक्षितुम् ।
तदेभिः कारणैस्सर्वैर्महद्भिर्धर्मसंहितैः ॥ २८

शासनं तव यद्युक्तं तद्भवाननुमन्यताम् ।
सर्वथा धर्म इत्येव द्रष्टव्यस्तव निग्रहः ॥ २९

वयस्यस्यापि कर्तव्यं धर्ममेवानुपश्यता ।
शक्यं त्वयाऽपि तत्कार्यं धर्ममेवानुपश्यता ॥ ३०

श्रूयेते मनुना गीतौ श्लोकौ चारित्रवत्सलौ ।
गृहीतौ धर्मकुशलैस्तत्तथा चरितं हरे ! ॥ ३१

" राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥ ३२

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते ।
राजा त्वशासन्पापस्य तदवाप्नोति किल्बिषम् ॥ " ३३

आर्येण मम मान्धात्रा व्यसनं घोरमीप्सितम् ।
श्रमणेन कृते पापे यथा पापं कृतं त्वया ॥ ३४

अन्यैरपि कृतं पापं प्रमत्तैर्वसुधाधिपैः ।
प्रायश्चित्तं च कुर्वन्ति तेन तच्छाम्यते रजः ॥ ३५

तदलं परितापेन धर्मतः परिकल्पितः ।
वधो वानरशार्दूल ! न वयं स्ववशे स्थिताः ॥ ३६

शृणु चाप्यपरं भूयः कारणं हरिपुङ्गव ! ।
यच्छ्रुत्वा हेतुमद्वीर ! न मन्युं कर्तुमर्हसि ॥ ३७

न मे तत्र मनस्तापो न मन्युर्हरियूथप ! ।
वागुराभिश्च पाशैश्च कूटैश्च विविधैर्नराः ॥ ३८

प्रतिच्छन्नाश्च दृश्याश्च गृह्णन्ति सुबहून्मृगान् ।
प्रधावितान्वा वित्रस्तान्विस्रब्धांश्चापि निष्ठितान् ॥ ३९

प्रमत्तानप्रमत्तान्वा नरा मांसार्थिनो भृशम् ।
विध्यन्ति विमुखांश्चापि न च दोषोऽत्र विद्यते ॥ ४०

यान्ति राजर्षयश्चात्र मृगयां धर्मकोविदाः ।
तस्मात्त्वं निहतो युद्धे मया बाणेन वानर ! ॥ ४१

अयुध्यन्प्रतियुध्यन्वा यस्माच्छाखामृगो ह्यसि ।
दुर्लभस्य च धर्मस्य जीवितस्य शुभस्य च ॥ ४२

राजानो वानरश्रेष्ठ ! प्रदातारो न संशयः ।
तान्न हिंस्यान्न चाक्रोशेन्नाक्षिपेन्नाप्रियं वदेत् ॥ ४३

देवा मानुषरूपेण चरन्त्येते महीतले ।
त्वं तु धर्ममविज्ञाय केवलं रोषमास्थितः ॥ ४४

प्रदूषयसि मां धर्मे पितृपैतामहे स्थितम् ।"
एवमुक्तस्तु रामेण वाली प्रव्यथितो भृशम् ॥ ४५

न दोषं राघवे दध्यौ धर्मेऽधिगतनिश्चयः ।
प्रत्युवाच ततो रामं प्राञ्जलिर्वानरेश्वरः ॥ ४६

" यत्त्वमात्थ नरश्रेष्ठ ! तदेवं नात्र संशयः ।
प्रतिवक्तुं प्रकृष्टे हि नाप्रकृष्टस्तु शक्नुयात् ॥ ४७

तदयुक्तं मया पूर्वं प्रमादादुक्तमप्रियम् ।
तत्रापि खलु मे दोषं कर्तुं नार्हसि राघव ॥ ४८

त्वं हि दृष्टार्थतत्त्वज्ञः प्रजानां च हिते रतः ।
कार्यकारणसिद्धौ ते प्रसन्ना बुद्धिरव्यया ॥ ४९

मामप्यगतधर्माणं व्यतिक्रान्तपुरस्कृतम् ।
धर्मसंहितया वाचा धर्मज्ञ ! परिपालय ॥ ५०

बाष्पसंरुद्धकण्ठस्तु वाली सार्तरवश्शनैः ।
उवाच रामं संप्रेक्ष्य पङ्कलग्न इव द्विपः ॥ ५१

न त्वात्मानमहं शोचे न तारां न च बान्धवान् ।
यथा पुत्रं गुणज्येष्ठमङ्गदं कनकाङ्गदम् ॥ ५२

स ममादर्शनाद्दीनो बाल्यात्प्रभृति लालितः।
तटाक इव पीताम्बुरुपशोषं गमिष्यति ॥ ५३

बालश्चाकृतबुद्धिश्च एकपुत्रश्च मे प्रियः।
तारेयो राम! भवता रक्षणीयो महाबलः ॥ ५४

सुग्रीवे चाङ्गदे चैव विधत्स्व मतिमुत्तमाम्।
त्वं हि शास्ता च गोप्ता च कार्याकार्यविधौ स्थितः ॥ ५५

या ते नरपते! वृत्तिर्भरते लक्ष्मणे च या।
सुग्रीवे चाङ्गदे राजं! स्तां त्वमाधातुमर्हसि ॥ ५६

मद्दोषकृतदोषां तां यथा तारां तपस्विनीम्।
सुग्रीवो नावमन्येत तथाऽवस्थातुमर्हसि ॥ ५७

त्वया ह्यनुगृहीतेन राज्यं शक्यमुपस्थितम्।
त्वद्वशे वर्तमानेन तव चित्तानुवर्तिना ॥ ५८

शक्यं दिवं चार्जयितुं वसुधां चापि शासितुम्।
त्वत्तोऽहं वधमाकाङ्क्षन्वार्यमाणोऽपि तारया ॥ ५९

सुग्रीवेण सह भ्रात्रा द्वन्द्वयुद्धमुपागतः।"
इत्युक्त्वा सन्नतो रामं विरराम हरीश्वरः। ६०

स तमाश्वासयद्रामो वालिनं व्यक्तदर्शनम्।
सामसंपन्नया वाचा धर्मतत्त्वार्थयुक्तया ॥ ६१

न संतापस्त्वया कार्य एतदर्थं प्लवङ्गम!।
न वयं भवता चिन्त्या नाप्यात्मा हरिसत्तम ॥ ६२

वयं भवद्विशेषेण धर्मतः कृतनिश्चयाः।
दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चापि दण्ड्यते ॥ ६३

कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ।
तद्भवान्दण्डसंयोगादस्माद्विगतकल्मषः ॥ ६४

गतस्स्वां प्रकृतिं धर्म्यां धर्मदृष्टेन वर्त्मना ।
त्यज शोकं च मोहं च भयं च हृदये स्थितम् ॥ ६५

त्वया विधानं हर्यग्र! न शक्यमतिवर्तितुम् ।
यथा त्वय्यङ्गदो नित्यं वर्तते वानरेश्वर! ॥ ६६

तथा वर्तेत सुग्रीवे मयि चापि न संशयः ।"
स तस्य वाक्यं मधुरं महात्मनस्समाहितं धर्मपथानुवर्तिनः ।
निशम्य रामस्य रणावमर्दिनो वचस्सुयुक्तं निजगाद वानरः ॥" ६७

शराभितप्तेन विचेतसा मया प्रदूषितस्त्वं यदजानता प्रभो! ।
इदं महेन्द्रोपमभीमविक्रम! प्रसादितस्त्वं क्षम मे नरेश्वर! ॥ ६८

इति श्रीमत्किष्किन्धाकाण्डे अष्टादशस्सर्गः ॥

---

## ॥ एकोनविंशस्सर्गः ॥

स वानरमहाराजश्शयानश्शरविक्षतः ।
प्रत्युक्तो हेतुमद्वाक्यैर्नोत्तरं प्रत्यपद्यत ॥ १

अश्मभिः प्रविभिन्नाङ्गः पादपैराहतो भृशम् ।
रामबाणेन चाक्रान्तो जीवितान्ते मुमोह सः ॥ २

तं भार्या बाणमोक्षेण रामदत्तेन संयुगे ।
हतं प्लवगशार्दूलं तारा शुश्राव वालिनम् ॥ ३

सा सपुत्राऽप्रियं श्रुत्वा वधं भर्तुस्सुदारुणम् ।
निष्पपात भृशं त्रस्ता विविधाद्गिरिगह्वरात् ॥ ४

येत्वङ्गदपरीवारा वानरा भीमविक्रमाः ।
ते सकार्मुकमालोक्य रामं त्रस्ताः प्रदुद्रुवुः ॥ ५

सा ददर्श ततस्त्रस्तान्हरीनपि ततो भृशम् ।
यूथादिव परिभ्रष्टान्मृगान्निहतयूथपान् ॥ ६

तानुवाच समासाद्य दुःखितान्दुःखिता सती ।
रामवित्रासितांस्सर्वाननुबद्धानिवेषुभिः ॥ ७

"वानरा! राजसिंहस्य यस्य यूयं पुरस्सराः ।
तं विहाय सुसंत्रस्ताः कस्माद्द्रवथ दुर्गताः ॥ ८

राज्यहेतोस्स चेद्भ्राता भ्रात्रा रौद्रेण पातितः ।
रामेण प्रहितैरौद्रैर्मार्गणैर्दूरपातिभिः ॥ ९

कपिपत्न्या वचश्श्रुत्वा कपयः कामरूपिणः ।
प्राप्तकालमविक्लिष्टमूचुर्वचनमङ्गनाम् ॥ १०

"जीवपुत्रे! निवर्तस्व पुत्रं रक्षस्व चाङ्गदम् ।
अन्तको रामरूपेण हत्वा नयति वालिनम् ॥ ११

क्षिप्तान् वृक्षान्समाविध्य विपुलाश्च शिलास्तथा ।
वाली वज्रसमैर्बाणै रामेण विनिपातितः ॥ १२

अभिद्रुतमिदं सर्वं विद्रुतं प्रसृतं बलम् ।
अस्मिन् प्लवगशार्दूले हते शक्रसमप्रभे ॥ १३

रक्ष्यतां नगरद्वारमङ्गदश्चाभिषिच्यताम् ।
पदस्थं वालिनः पुत्रं भजिष्यन्ति प्लवङ्गमाः ॥ १४

अथवाऽनुचितं स्थानमिह ते रुचिरानने ! ।
आविशन्ति हि दुर्गाणि क्षिप्रमन्यानि वानराः ॥ १५

अभार्याश्च सभार्याश्च सन्त्यत्र वनचारिणः ।
लुब्धेभ्यो विप्रयुक्तेभ्यस्तेभ्यो नस्तुमुलं भयम् ॥" १६

अल्पान्तरगतानां तु श्रुत्वा वचनमङ्गना ।
आत्मनः प्रतिरूपं सा बभाषे चारुहासिनी ॥ १७

"पुत्रेण मम किं कार्यं किं राज्येन किमात्मना ।
कपिसिंहे महाभागे तस्मिन्भर्तरि नश्यति ॥ १८

पादमूलं गमिष्यामि तस्यैवाहं महात्मनः ।
योऽसौ रामप्रयुक्तेन शरेण विनिपातितः ॥" १९

एवमुक्त्वा प्रदुद्राव रुदन्ती शोककर्शिता ।
शिरश्चोरश्च बाहुभ्यां दुःखेन समभिघ्नती ॥ २०

आव्रजन्ती ददर्शाथ पतिं निपतितं भुवि ।
हन्तारं दानवेन्द्राणां समरेष्वनिवर्तिनाम् ॥ २१

क्षेप्तारं पर्वतेन्द्राणां वज्राणामिव वासवम् ।
महावातसमाविष्टं महामेघौघनिस्वनम् ॥ २२

शक्रतुल्यपराक्रान्तं वृष्ट्वेवोपरतं घनम् ।
नर्दन्तं नर्दतां भीमं शूरं शूरेण पातितम् ॥ २३

शार्दूलेनामिषस्यार्थे मृगराजं यथा हतम् ।
अर्चितं सर्वलोकस्य सपताकं सवेदिकम् ॥ २४

नागहेतोस्सुपर्णेन चैत्यमुन्मथितं यथा ।
अवष्टभ्य च तिष्ठन्तं ददर्श धनुरुत्तमम् ॥ २५

रामं रामानुजं चैव भर्तुश्चैवानुजं शुभा ।
तानतीत्य समासाद्य भर्तारं निहतं रणे ॥ २६

समीक्ष्य व्यथिता भूमौ संभ्रान्ता निपपात ह ।
सुप्तेव पुनरुत्थाय 'आर्यपु' त्रेति शोचति ॥ २७

रुरोद सा पतिं दृष्ट्वा संदितं मृत्युदामभिः ।
तामवेक्ष्य तु सुग्रीवः क्रोशन्तीं कुररीमिव ॥ २८

विषादमगमत्कष्टं दृष्ट्वा चाङ्गदमागतम् ॥

इति श्रीमत्किष्किन्धाकाण्डे एकोनविंशस्सर्गः ॥

---

## ॥ विंशस्सर्गः ॥

रामचापविसृष्टेन शरेणान्तकरेण तम् ।
दृष्ट्वा विनिहतं भूमौ तारा ताराधिपानना ॥ १

सा समासाद्य भर्तारं पर्यष्वजत भामिनी ।
इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् ॥ २

वानरेन्द्रं महेन्द्राभं शोकसंतप्तमानसा ।
तारा तरुमिवोन्मूलं पर्यदेवयदातुरा ॥ ३

"रणे दारुण विक्रान्त प्रवीर! प्लवतां वर! ।
किं दीनामपुरोभागामद्य त्वं नाभिभाषसे ॥ ४

उत्तिष्ठ हरिशार्दूल! भजस्व शयनोत्तमम् ।
नैवंविधाश्शेरते हि भूमौ नृपतिसत्तमाः ॥ ५

अतीव खलु ते कान्ता वसुधा वसुधाधिप! ।
गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥ ६

व्यक्तमन्या त्वया वीर! धर्मतस्संप्रवर्तिता ।
किष्किन्धेव पुरी रम्या स्वर्गमार्गे विनिर्मिता ॥ ७

अन्यस्माभिस्त्वया सार्धं वनेषु मधुगन्धिषु ।
विहृतानि त्वया काले तेषामुपरमः कृतः ॥ ८

निरानन्दा निराशाऽहं निमग्ना शोकसागरे ।
त्वयि पञ्चत्वमापन्ने महायूथपयूथपे ॥ ९

हृदयं सुस्थिरं मह्यं दृष्ट्वा विनिहतं पतिम् ।
यन्न शोकाभिसंतप्तं स्फुटतेऽद्य सहस्रधा ॥ १०

सुग्रीवस्य त्वया भार्या हृता स च विवासितः ।
यत्तु तस्य त्वया व्युष्टिः प्राप्तेयं प्लवगाधिप ! ॥ ११

निःश्रेयसपरा मोहात्त्वया चाहं विगर्हिता ।
यैषाऽब्रुवं हितं वाक्यं वानरेन्द्र ! हितैषिणी ॥ १२

रूपयौवनदृप्तानां दक्षिणानां च मानद ! ।
नूनमप्सरसामार्य ! चित्तानि प्रमथिष्यसि ॥ १३

कालो निस्संशयो नूनं जीवितान्तकरस्तव ।
बलाद्येनावपन्नोऽसि सुग्रीवस्यावशो वशम् ॥ १४

वैधव्यं शोकसंतापं कृपणं कृपणा सती ।
अदुःखोपचिता पूर्वं वर्तयिष्याम्यनाथवत् ॥ १५

लालितश्चाङ्गदो वीरस्सुकुमारस्सुखोचितः ।
वत्स्यते कामवस्थां मे पितृव्ये क्रोधमूर्छिते ! ॥" १६

"कुरुष्व पितरं पुत्र ! सुदृष्टं धर्मवत्सलम् ।
दुर्लभं दर्शनं वत्स ! तव तस्य भविष्यति ॥" १७

सा समासाद्य भर्तारं पर्यष्वजत भामिनी ।
इषुणाऽभिहतं दृष्ट्वा वालिनं कुञ्जरोपमम् ॥ १८

"समाश्वासय पुत्रं त्वं संदेशं संदिशस्व च।
मूर्ध्नि चैनं समाघ्राय प्रवासं प्रस्थितो ह्यसि ॥ १९
रामेण हि महत्कर्म कृतं त्वामभिनिघ्नता।
आनृण्यं च गतं तस्य सुग्रीवस्य प्रतिश्रवे॥" २०
"सकामो भव सुग्रीव! रुमां त्वं प्रतिपत्स्यसे।
भुङ्क्ष्व राज्यमनुद्विग्नश्शस्तो भ्राता रिपुस्तव॥" २१
किं मामेवं विलपतीं प्रेम्णा त्वं नाभिभाषसे।
इमाः पश्य वरा बह्वीर्भार्यास्ते वानरेश्वर!॥" २२
तस्या विलपितं श्रुत्वा वानर्यस्सर्वतश्च ताः।
परिगृह्याङ्गदं दीनं दुःखार्ताः परिचुक्रुशुः॥ २३
"किमङ्गदं साङ्गदवीरबाहो! विहाय यास्यद्यचिरप्रवासम्।
न युक्तमेवंगुणसन्निकृष्टं विहाय पुत्रं प्रियपुत्र! गन्तुम्॥ २४
किमप्रियं ते प्रिय! चारुवेष! मया कृतं नाथ! सुतेन वा ते।
सहाङ्गदां मां प्रविहाय वीर! यत्प्रस्थितो दीर्घमितः प्रवासम्॥ २५
यद्यप्रियं किंचिदसंप्रधार्य कृतं मया स्यात्तव दीर्घबाहो।
क्षमस्व मे तद्धरिवंशनाथ! व्रजामि मूर्ध्ना तव वीर! पादौ॥ २६
तथा तु तारा करुणं रुदन्ती भर्तुस्समीपे सह वानरीभिः।
व्यवस्यत प्रायमुपोपवेष्टुमनिन्द्यवर्णा भुवि यत्र वाली॥ २७

इति श्रीमत्किष्किन्धाकाण्डे विंशस्सर्गः॥

---

## ॥ एकविंशस्सर्गः ॥

ततो निपतितां तारां च्युतां तारामिवाम्बरात्।
शनैराश्वासयामास हनूमान्हरियूथपः॥ १

" गुणदोषकृतं जन्तुस्स्वकर्मफलहेतुकम् ।
अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ २

शोच्या शोचसि कं शोच्यं दीनं दीनाऽनुकम्पसे ।
कस्य को वाऽनुशोच्योऽस्ति देहेऽस्मिन्बुद्बुदोपमे ॥ ३

अङ्गदस्तु कुमारोऽयं द्रष्टव्यो जीवपुत्रया ।
आयत्यां च विधेयानि समर्थान्यस्य चिन्तय ॥ ४

जानास्यनियतामेवं भूतानामागतिं गतिम् ।
तस्माच्छुभं हि कर्तव्यं पण्डितेनैह लौकिकम् ॥ ५

यस्मिन्हरिसहस्राणि प्रयुतान्यर्बुदानि च ।
वर्तयन्ति कृतांशानि सोऽयं दिष्टान्तमागतः ॥ ६

यदयं न्यायदृष्टार्थस्सामदानक्षमापरः ।
गतो धर्मजितां भूमिं नैनं शोचितुमर्हसि ॥ ७

सर्वे हि हरिशार्दूलाः पुत्रश्चायं तवाङ्गदः ।
इदं हर्यृक्षराज्यं च त्वत्सनाथमनिन्दिते ! ॥ ८

ताविमौ शोकसंतापौ शनैः प्रेरय भामिनि ! ।
त्वया परिगृहीतोऽयमङ्गदश्शास्तु मेदिनीम् ॥ ९

सन्ततिश्च यथा दृष्टा कृत्यं यच्चापि सांप्रतम् ।
राज्ञस्तत्क्रियतां सर्वमेष कालस्य निश्चयः ॥ १०

संस्कार्यो हरिराजश्च अङ्गदश्चाभिषिच्यताम् ।
सिंहासनगतं पुत्रं पश्यन्ती शान्तिमेष्यसि ॥ ११

सा तस्य वचनं श्रुत्वा भर्तृव्यसनपीडिता ।
अब्रवीदुत्तरं तारा हनूमन्तमवस्थितम् ॥ १२

" अङ्गदप्रतिरूपाणां पुत्राणामेकतश्शतम् ।
हतस्याप्यस्य वीरस्य गात्रसंश्लेषणं वरम् ॥ १३
न चाहं हरिराजस्य प्रभवाम्यङ्गदस्य वा ।
पितृव्यस्तस्य सुग्रीवस्सर्वकार्येष्वनन्तरः ॥ १४
न ह्येषा बुद्धिरास्थेया हनूम ! अङ्गदं प्रति ।
पिता हि बन्धुः पुत्रस्य न माता हरिसत्तम ! ॥ १५
न हि मम हरिराजसंश्रयात्क्षमतरमस्ति परत्र चेह वा ।
अभिमुखहत ! वीरसेवितं शयनमिदं मम सेवितुं क्षमम् ॥ " १६

इति श्रीमत्किष्किन्धाकाण्डे एकविंशस्सर्गः ॥

---

## ॥ द्वाविंशस्सर्गः ॥

वीक्षमाणस्तु मन्दासुस्सर्वतो मन्दमुच्छ्वसन् ।
आदावेतत्तु सुग्रीवं ददर्श त्वात्मजाग्रतः ॥ १
तं प्राप्तविजयं वाली सुग्रीवं प्लवगेश्वरः ।
आभाष्य व्यक्तया वाचा सस्नेहमिदमब्रवीत् ॥ २
सुग्रीव ! दोषेण न मां गन्तुमर्हसि किल्बिषात् ।
कृष्यमाणं भविष्येण बुद्धिमोहेन मां बलात् ॥ ३
युगपद्विहितं तात ! न मन्ये सुखमावयोः ।
सौहार्दं भ्रातृयुक्तं हि तदिदं तात ! नान्यथा ॥ ४
प्रतिपद्य त्वमद्यैव राज्यमेषां वनौकसाम् ।
मामप्यद्यैव गच्छन्तं विद्धि वैवस्वतक्षयम् ॥ ५

जीवितं च हि राज्यं च श्रियं च विपुलामिमाम् ।
प्रजहाम्येष वै तूर्णं महच्चागर्हितं यशः ॥ ६

अस्यां त्वहमवस्थायां वीर! वक्ष्यामि यद्वचः ।
यद्यप्यसुकरं राज! न्कर्तुमेव तदर्हसि ॥ ७

सुखार्हं सुखसंवृद्धं बालमेनमबालिशम् ।
बाष्पपूर्णमुखं पश्य भूमौ पतितमङ्गदम् ॥ ८

मम प्राणैः प्रियतरं पुत्रं पुत्रमिवौरसम्।
मया हीनमहीनार्थं सर्वतः परिपालय ॥ ९

त्वमेवास्य हि दाता च परित्राता च सर्वतः ।
भयेष्वभयदश्चैव वधाऽर्हं प्लवगेश्वर! ॥ १०

एष तारात्मजः श्रीमांस्त्वया तुल्यपराक्रमः ।
रक्षसां तु वधे तेषामग्रतस्ते भविष्यति ॥ ११

अनुरूपाणि कर्माणि विक्रम्य बलवान्रणे ।
करिष्यत्येष तारेयस्तरस्वी तरुणोऽङ्गदः ॥ १२

सुषेणदुहिता चेयमर्थसूक्ष्मविनिश्चये ।
औत्पातिके च विविधे सर्वतः परिनिष्ठिता ॥ १३

यदेषा साध्विति ब्रूयात्कार्यं तन्मुक्तसंशयम् ।
न हि तारामतं किंचिदन्यथा परिवर्तते ॥ १४

राघवस्य च ते कार्यं कर्तव्यमविशङ्कया ।
स्यादधर्मो ह्यकरणे त्वां च हिंस्याद्विमानितः ॥ १५

इमां च मालामाधत्स्व दिव्यां सुग्रीव! काञ्चनीम् ।
उदारा श्रीस्स्थिता ह्यस्यां संप्रजह्यान्मृते मयि ॥" १६

इत्येवमुक्तस्सुग्रीवो वालिना भ्रातृसौहृदात् ।
हर्षं त्यक्त्वा पुनर्दीनो ग्रहग्रस्त इवोडुराट् ॥ १७

तद्वालिवचनाच्छान्तः कुर्वन्युक्तमतन्द्रितः ।
जग्राह सोऽभ्यनुज्ञातो मालां तां चैव काञ्चनीम् ॥ १८

तां मालां काञ्चनीं दत्त्वा वाली दृष्ट्वाऽऽत्मजं स्थितम् ।
संसिद्धः प्रेत्यभावाय स्नेहादङ्गदमब्रवीत् ॥ १९

"देशकालौ भजस्वाद्य क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ २०

यथा हि त्वं महाबाहो ! लालितस्सततं मया ।
स तथा वर्तमानं त्वां सुग्रीवो बहुमंस्यते ॥ २१

मास्यामित्रैर्गतं गच्छेर्मा शत्रुभिररिन्दम ! ।
भर्तुरर्थपरो दान्तस्सुग्रीववशगो भव ॥ २२

न चातिप्रणयः कार्यः कर्तव्योऽप्रणयश्च ते ।
उभयं हि महान्दोषस्तस्मादन्तरदृग्भव ॥" २३

इत्युक्त्वाऽथ विवृत्ताक्षश्शरसंपीडितो भृशम् ।
विवृत्तैर्दशनैर्भीमैर्बभूवोत्क्रान्तजीवितः ॥ २४

ततो विचुक्रुशुस्तत्र वानरा हरियूथपाः ।
परिदेवयमानास्ते सर्वे प्लवगपुङ्गवाः ॥ २५

"किष्किन्धा ह्यद्य शून्याऽसीत्स्वर्गते वानराधिपे ।
उद्यानानि च शून्यानि पर्वताः काननानि च ॥ २६

हते प्लवगशार्दूले निष्प्रभाः वानराः कृताः ।
यस्य वेगेन महता काननानि वनानि च ॥ २७

पुष्पौघेनानुबध्यन्ते करिष्यति तदद्य कः ।
येन दत्तं महद्युद्धं गन्धर्वस्य महात्मनः ॥ २८

गोलभस्य महाबाहोर्दश वर्षाणि पञ्च च ।
नैव रात्रौ न दिवसे तद्युद्धमुपशाम्यति ॥ २९

ततस्तु षोडशे वर्षे गोलभो विनिपातितः ।
हत्वा तं दुर्विनीतं तु वाली दंष्ट्राकरालवान् ॥ ३०

सर्वाभयकरोऽस्माकं कथमेष निपातितः ।"

हते तु वीरे प्लवगाधिपे तदा प्लवङ्गमास्तत्र न शर्म लेभिरे ।
वनेचरास्सिंहयुते महावने यथा हि गावो निहते गवां पतौ ॥ ३१

ततस्तु तारा व्यसनार्णवाप्लुता मृतस्य भर्तुर्वदनं समीक्ष्य सा ।
जगाम भूमिं परिरभ्य वालिनं महाद्रुमं छिन्नमिवाश्रिता लता ॥

इति श्रीमत्किष्किन्धाकाण्डे द्वाविंशस्सर्गः ॥

---

## ॥ त्रयोविंशस्सर्गः ॥

ततस्समुपजिघ्रन्ती कपिराजस्य तन्मुखम् ।
पतिं लोकाच्च्युतं तारा मृतं वचनमब्रवीत् ॥ १

"शेषे त्वं विषमे दुःखमकृत्वा वचनं मम ।
उपलोपचिते वीरे ! सुदुःखे वसुधातले ॥ २

मत्तः प्रियतरा नूनं वानरेन्द्र ! मही तव ।
शेषे हि तां परिष्वज्य मां च न प्रतिभाषसे ॥ ३

सुग्रीवस्य वशं प्राप्तो विधिरेष भवत्यहो ।
सुग्रीव एव विक्रान्तो वीर ! साहसिक प्रिय ! ॥ ४

ऋक्षवानरमुख्यास्त्वां बलिनः पर्युपासते ।
एषां विलपितं कृच्छ्रमङ्गदस्य च शोचतः ॥ ५
मम चेमां गिरं श्रुत्वा किं त्वं न प्रतिबुध्यसे ।
इदं तच्छूरशयनं यत्र शेषे हतो युधि ॥ ६
शायिता निहता यत्र त्वयैव रिपवः पुरा ।
विशुद्धसत्त्वाभिजन ! प्रिययुद्ध ! मम प्रिय ! ॥ ७
मामनाथां विहायैकां गतस्त्वमसि मानद ! ।
शूराय न प्रदातव्या कन्या खलु विपश्चिता ॥ ८
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ।
अवभग्नश्च मे मानो भग्ना मे शाश्वती गतिः ॥ ९
अगाधे च निमग्नाऽस्मि विपुले शोकसागरे ।
अश्मसारमयं नूनमिदं मे हृदयं दृढम् ॥ १०
भर्तारं निहतं दृष्ट्वा यन्नाद्य शतधा गतम् ।
सुहृच्चैव हि भर्ता च प्रकृत्या मम च प्रियः ॥ ११
आहवे च पराक्रान्तश्शूरः पञ्चत्वमागतः ।
पतिहीना तु या नारी कामं भवतु पुत्रिणी ॥ १२
धनधान्यैस्सुपूर्णाऽपि विधवेत्युच्यते जनैः ।
स्वगात्रप्रभवे वीर ! शेषे रुधिरमण्डले ॥ १३
क्रिमिरागपरिस्तोमे त्वमात्मशयने यथा ।
रेणुशोणितसंवीतं गात्रं तव समन्ततः ॥ १४
परिरब्धुं न शक्नोमि भुजाभ्यां प्लवगर्षभ ! ।
कृतकृत्योऽद्य सुग्रीवो वैरेऽस्मिन्नतिदारुणे ॥ १५

यस्य रामवियुक्तेन हृतमेकेषुणा भयम् ।
शरेण हृदि लग्नेन गात्रसंस्पर्शने तव ॥ १६

वार्यामि त्वां निरीक्षन्तो त्वयि पञ्चत्वमागते ।"
उद्ववर्ह शरं नीलस्तस्य गात्रगतं तदा ॥ १७

गिरिगह्वरसंलीनं दीप्तमाशीविषं यथा ।
तस्य निष्कृष्यमाणस्य बाणस्य च बभौ द्युतिः ॥ १८

अस्तमस्तकसंरुद्धो रश्मिर्दिनकरादिव ।
पेतुः क्षतजधारास्तु व्रणेभ्यस्तस्य सर्वशः ॥ १९

ताम्रगैरिकसंपृक्ता धारा इव धराधरात् ।
अवकीर्णं विमार्जन्ती भर्तारं रणरेणुना ॥ २०

अस्रैर्नयनजैश्शूरं सिषेचास्त्रसमाहतम् ।
रुधिरोक्षितसर्वाङ्गं दृष्ट्वा विनिहतं पतिम् ॥ २१

उवाच तारा पिङ्गाक्षं पुत्रमङ्गदमङ्गना ।
"अवस्थां पश्चिमां पश्य पितुः पुत्र! सुदारुणम् ॥ २२

संप्रसक्तस्य वैरस्य गतोऽन्तः पापकर्मणा ।
बालसूर्योदयतनुं प्रयान्तं यमसादनम् ॥ २३

अभिवादय राजानं पितरं पुत्र! मानदम् ।"
एवमुक्तस्समुत्थाय जग्राह चरणौ पितुः ॥ २४

भुजाभ्यां पीनवृत्ताभ्या 'मङ्गदोऽह' मिति ब्रुवन् ।
"अभिवादयमानं त्वामङ्गदं त्वं यथा पुरा ॥ २५

'दीर्घायुर्भव पु' त्रेति किमर्थं नाभिभाषसे ।
अहं पुत्रसहाया त्वामुपासे गतचेतनम् ॥ २६

सिंहेन निहतं सद्यो गौस्सवत्सेव गोवृषम् ।
इष्ट्वा संग्राममयज्ञेन रामप्रहरणाम्भसि ॥ २७

अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ।
या दत्ता देवराजेन तव तुष्टेन संयुगे ॥ २८

शातकुम्भमयीं मालां तां ते पश्यामि नेह किम् ।
राजश्रीर्न जहाति त्वां गतासुमपि मानद ! ॥ २९

सूर्यस्यावर्तमानस्य शैलराजमिव प्रभा ।
न मे वचः पथ्यमिदं त्वया कृतं न चास्मि शक्ता विनिवारणे तव ।
हता सपुत्राऽस्मि हतेन संयुगे सह त्वया श्रीर्विजहाति मामिह ॥”

इति श्रीमत्किष्किन्धाकाण्डे त्रयोविंशस्सर्गः ॥

---

## ॥ चतुर्विंशस्सर्गः ॥

तां चाश्रुवेगेन दुरासदेन त्वभिप्लुतां शोकमहार्णवेन ।
पश्यंस्तदा वाल्यनुजस्तरस्वी भ्रातुर्वधेनाप्रतिमेन तेपे ॥ १

स बाष्पपूर्णेन मुखेन वीक्ष्य क्षणेन निर्विण्णमना मनस्वी ।
जगाम रामस्य शनैस्समीपं भृत्यैर्वृतस्संपरिदूयमानः ॥ २

स तं समासाद्य गृहीतचापमुदात्तमाशीविषतुल्यबाणम् ।
यशस्विनं लक्ष्मणलक्षिताङ्गमवस्थितं राघवमित्युवाच ॥ ३

“यथा प्रतिज्ञातमिदं नरेन्द्र ! कृतं त्वया दृष्टफलं च कर्म ।
ममाद्य भोगेषु नरेन्द्रपुत्र ! मनो निवृत्तं सह जीवितेन ॥ ४

अस्यां महिष्यां तु भृशं रुदन्त्यां पुरे च विक्रोशति दुःखतप्ते ।
हतेऽग्रजे संशयितेऽङ्गदे च न राम ! राज्ये रमते मनो मे ॥ ५

क्रोधादमर्षादतिविप्रधर्षाद्भ्रातुर्वधो मेऽनुमतः पुरस्तात् ।
हते त्विदानीं हरियूथपेऽस्मिन्सुतीव्रमिक्ष्वाकुकुमार ! तप्स्ये ॥ ६

श्रेयोऽद्य मन्ये मम शैलमुख्ये तस्मिन्निवासश्चिरमृश्यमूके ।
यथा तथा वर्तयतस्स्ववृत्त्या नेमं निहत्य त्रिदिवस्य लाभः ॥ ७

'न त्वां जिघांसामि च'रेति यन्मामयं महात्मा मतिमानुवाच ।
तस्यैव तद्राम ! वचोऽनुरूपमिदं पुनः कर्म च मेऽनुरूपम् ॥ ८

भ्राता कथं नाम महागुणस्य भ्रातुर्वधं राघव ! रोचयेत ! ।
राज्यस्य दुःखस्य च वीर ! सारं न चिन्तयन्कामपुरस्कृतस्सन् ॥ ९

वधो हि मे मतो नासीत्स्वमाहात्म्याव्यतिक्रमात् ।
ममाऽऽसीद्बुद्धिदौरात्म्यात्प्राणहारी व्यतिक्रमः ॥ १०

द्रुमशाखावभग्नोऽहं मुहूर्तं परिनिष्टनन् ।
सान्त्वयित्वा त्वनेनोक्तो न पुनः कर्तुमर्हसि ॥ ११

भ्रातृत्वमार्यभावश्च धर्मश्चानेन रक्षितः ।
मया क्रोधश्च कामश्च कपित्वं च प्रदर्शितम् ॥ १२

अचिन्तनीयं परिवर्जनीयमनीप्सनीयं स्वनवेक्षणीयम् ।
प्राप्तोऽस्मि पाप्मानमिमं नरेन्द्र ! भ्रातुर्वधात्त्वाष्ट्रवधादिवेन्द्रः ॥ १३

पाप्मानमिन्द्रस्य मही जलं च वृक्षाश्च कामं जगृहुः स्त्रियश्च ।
को नाम पाप्मानमिमं क्षमेत शाखामृगस्य प्रतिपत्तुमिच्छन् ॥ १४

नार्हामि सम्मानमिमं प्रजानां न यौवराज्यं कुतएव राज्यम् ।
अधर्मयुक्तं कुलनाशयुक्तमेवंविधं राघव ! कर्म कृत्वा ॥ १५

पापस्य कर्ताऽस्मि विगर्हितस्य क्षुद्रस्य लोकापकृतस्य चैव ।
शोको महान्मामभिवर्ततेऽयं वृष्टेर्यथा निम्नमिवाम्बुवेगः ॥ १६

सोदर्यघातापरगात्रवालस्सन्तापहस्ताक्षिशिरोविषाणः ।
एनोमयो मामभिहन्ति हस्ती दृप्तो नदीकूलमिव प्रवृद्धः ॥ १७

अंहो बतेदं नृवरा विषह्य निवर्तते मे हृदि साधु वृत्तम् ।
विवर्णमग्नौ परितप्यमानं किट्टं यथा राघव ! जातरूपम् ॥ १८

महाबलानां हरियूथपानामिदं कुलं राघव ! मन्निमित्तम् ।
अस्याङ्गदस्यापि च शोकतापादर्धस्थितप्राणमितीव मन्ये ॥ १९

सुतस्सुलभ्यस्सुजनस्सुवश्यः कुतस्सुपुत्रस्सदृशोऽङ्गदेन ।
न चापि विद्येत स वीर ! देशो यस्मिन्भवेत्सोदरसन्निकर्षः ॥ २०

यद्यङ्गदो वीर ! वरार्ह ! जीवेज्जीवेच्च माता परिपालनार्थम् ।
विना तु पुत्रं परितापदीना तारा न जीवेदिति निश्चितं मे ॥ २१

सोऽहं प्रवेक्ष्याम्यतिदीप्तमग्निं भ्राता च पुत्रेन च सख्यमिच्छन् ।
इमे विचेष्यन्ति हरिप्रवीरास्सीतां निदेशे तव वर्तमानाः ॥ २२

कृत्स्नं तु ते सेत्स्यति कार्यमेतन्मय्यप्रतीते मनुजेन्द्रपुत्र ! ।
कुलस्य हन्तारमजीवनार्हं रामानुजानीहि कृतागसं माम् ॥" २३

इत्येवमार्तस्य रघुप्रवीरश्श्रुत्वा वचो वाल्यनुजस्य तस्य ।
संजातबाष्पः परवीरहन्ता रामो मुहूर्तं विमना बभूव ॥ २४

तस्मिन् क्षणेऽभीक्ष्णमवेक्षमाणः क्षितिक्षमावान्भुवनस्य गोप्ता ।
रामो रुदन्तीं व्यसने निमग्नां समुत्सुकस्सोऽथ ददर्श ताराम् ॥ २५

तां चारुनेत्रां कपिसिंहनाथं पतिं समाश्लिष्य तदा शयानाम् ।
उत्थापयामासुरदीनसत्त्वां मन्त्रिप्रधानाः कपिवीरपत्नीम् ॥ २६

सा विष्फुरन्ती परिरभ्यमाणा भर्तुस्सकाशादपनीयमाना ।
ददर्श रामं शरचापपाणिं स्वतेजसा सूर्यमिव ज्वलन्तम् ॥ २७

सुसंवृतं पार्थिवलक्षणैश्च तं चारुनेत्रं मृगशावनेत्रा ।
अदृष्टपूर्वं पुरुषप्रधान 'मयं स काकुत्स्थ' इति प्रजज्ञे ॥ २८
तस्येन्द्रकल्पस्य दुरासदस्य महानुभावस्य समीपमार्या ।
आर्ताऽतितूर्णं व्यसनाभिपन्ना जगाम तारा परिविह्वलन्ती ॥ २९
सा तं समासाद्य विशुद्धसत्त्वा शोकेन संभ्रान्तशरीरभावा ।
मनस्विनी वाक्यमुवाच तारा रामं रणोत्कर्षणलब्धलक्षम् ॥ ३०
" त्वमप्रमेयश्च दुरासदश्च जितेन्द्रियश्चोत्तमधार्मिकश्च ।
अक्षय्यकीर्तिश्च विचक्षणश्च क्षितिक्षमावान्क्षतजोपमाक्षः ॥ ३१
त्वमात्तबाणासनबाणपाणिर्महाबलस्संहननोपपन्नः ।
मनुष्यदेहाभ्युदयं विहाय दिव्येन देहाभ्युदयेन युक्तः ॥ ३२
येनैकबाणेन हतः प्रियो मे तेनैव मां त्वं जहि सायकेन ।
हता गमिष्यामि समीपमस्य न मामृते राम ! रमेत वाली ॥ ३३
स्वर्गेऽपि पद्मामलपत्रनेत्रस्समेत्य संप्रेक्ष्य च मामपश्यन् ।
न ह्येष उच्चावचताम्रचूडा विचित्रवेषाप्सरसोऽभजिष्यत् ॥ ३४
स्वर्गेऽपि शोकं च विवर्णतां च मया विना प्राप्स्यति वीर ! वाली ।
रम्ये नगेन्द्रस्य तटावकाशे विदेहकन्यारहितो यथा त्वम् ॥ ३५
त्वं वेत्थ यावद्वनिताविहीनः प्राप्नोति दुःखं पुरुषः कुमारः ।
तत्त्वं प्रजानन् जहि मां न वाली दुःखं ममादर्शनजं भजेत ॥ ३६
यच्चापि मन्येत भवान्महात्मा स्त्रीघातदोषो न भवेत्तु मह्यम् ।
आत्मेयमस्येति च मां जहि त्वं न स्त्रीवधस्स्यान्मनुजेन्द्रपुत्र ! ॥ ३७
शास्त्रप्रयोगाद्विविधाच्च वेदादात्मा ह्यनन्यः पुरुषस्य दाराः ।
दारप्रदानान्न हि दानमन्यत्प्रदृश्यते ज्ञानवतां हि लोके ॥ ३८

त्वं चापि मां तस्य मम प्रियस्य प्रदास्यसे धर्ममवेक्ष्य वीर ! ।
अनेन दानेन न लप्स्यसे त्वमधर्मयोगं मम वीरघातात् ॥ ३९
आर्तामनाथामपनीयमानामेवंविधामर्हसि मां निहन्तुम् ।
अहं हि मातङ्गविलासगामिना प्लवङ्गमानामृषभेण धीमता ॥ ४०
विना वराहोत्तमहेममालिना चिरं न शक्ष्यामि नरेन्द्र ! जीवितुम् ।
" इत्येवमुक्तस्तु विभुर्महात्मा तारां समाश्वास्य हितं बभाषे ॥ ४१
" मा वीरभार्ये ! विमतिं कुरुष्व लोको हि सर्वो विहितो विधात्रा ।
तं चैव सर्वं सुखदुःखयोगं लोकोऽब्रवीत्तेन कृतं विधात्रा ॥ ४२
त्रयो हि लोका विहितं विधानं नातिक्रमन्ते वशगा हि तस्य ।
प्रीतिं परां प्राप्स्यसि तां तथैव पुत्रस्तु ते प्राप्स्यति यौवराज्यम् ॥ ४३
धात्रा विधानं विहितं तथैव न शूरपत्न्यः परिदेवयन्ति ।"
आश्वासिता तेन च राघवेण प्रभावयुक्तेन परन्तपेन ॥ ४४
सा वीरपत्नी ध्वनता मुखेन सुवेषरूपा विरराम तारा ॥

इति श्रीमत्किष्किन्धाकाण्डे चतुर्विंशस्सर्गः ॥

---

## ॥ पञ्चविंशस्सर्गः ॥

सुग्रीवं चैव तारां च साङ्गदं सहलक्ष्मणः ।
समानशोकः काकुत्स्थस्सान्त्वयन्निदमब्रवीत् ॥ १
" न शोकपरितापेन श्रेयसा युज्यते मृतः ।
यदत्रानन्तरं कार्यं तत्समाधातुमर्हथ ॥ २
लोकवृत्तमनुष्ठेयं कृतं वो बाष्पमोक्षणम् ।
न कालादुत्तरं किंचित्कर्म शक्यमुपासितुम् ॥ ३

नियतिः कारणं लोके नियतिः कर्मसाधनम् ।
नियतिस्सर्वभूतानां नियोगेष्विह कारणम् ॥ ४
न कर्ता कस्यचित्कश्चिन्नियोगे चापि नेश्वरः ।
स्वभावे वर्तते लोकस्तस्य कालः परायणम् ॥ ५
न कालः कालमत्येति न कालः परिहीयते ।
स्वभावं च समासाद्य न कश्चिदतिवर्तते ॥ ६
न कालस्यास्ति बन्धुत्वं न हेतुर्न पराक्रमः ।
न मित्रज्ञातिसंबन्धः कारणं नात्मनो वशः ॥ ७
किंतु कालपरीणामो द्रष्टव्यस्साधु पश्यता ।
धर्मश्चार्थश्च कामश्च कालक्रमसमाहिताः ॥ ८
इतस्स्वां प्रकृतिं वाली गतः प्राप्तः क्रियाफलम् ।
धर्मार्थकामसंयोगैः पवित्रं प्लवगेश्वरः ॥ ९
स्वधर्मस्य च संयोगाज्जितस्तेन महात्मना ।
स्वर्गः परिगृहीतश्च प्राणानपरिरक्षता ॥ १०
एषा वै नियतिः श्रेष्ठा यां गतो हरियूथपः ।
तदलं परितापेन प्राप्तकालमुपास्यताम् ॥" ११
वचनान्ते तु रामस्य लक्ष्मणः परवीरहा ।
अवदत्प्रश्रितं वाक्यं सुग्रीवं गतचेतसम् ॥ १२
"कुरु त्वमस्य सुग्रीव ! प्रेतकार्यमनन्तरम् ।
ताराङ्गदाभ्यां सहितो वालिनो दहनं प्रति ॥ १३
समाज्ञापय काष्ठानि शुष्कानि च बहूनि च ॥
चन्दनादीनि दिव्यानि वालिसंस्कारकारणात् ॥ १४

समाश्वासय चैनं त्वमङ्गदं दीनचेतसम् ।
माभूर्वालिशबुद्धिस्त्वं त्वदधीनमिदं पुरम् ॥ १५

अङ्गदस्त्वानयेन्माल्यं वस्त्राणि विविधानि च ।
घृतं तैलमथो गन्धान्यच्चात्र समनन्तरम् ॥ १६

त्वं तार! शिबिकां शीघ्रमादायागच्छ संभ्रमात् ।
त्वरा गुणवती युक्ता ह्यस्मिन्काले विशेषतः ॥ १७

सज्जीभवन्तु प्लवगा शिबिकावहनोचिताः ।
समर्था बलिनश्चैव निर्हरिष्यन्ति वालिनम् ॥" १८

एवमुक्त्वा तु सुग्रीवं सुमित्रानन्दवर्धनः ।
तस्थौ भ्रातृसमीपस्थो लक्ष्मणः परवीरहा ॥ १९

लक्ष्मणस्य वचश्श्रुत्वा तारस्संभ्रान्तमानसः ।
प्रविवेश गुहां शीघ्रं शिबिकासक्तमानसः ॥ २०

आदाय शिबिकां तारस्स तु पर्यपतत्पुनः ।
वानरैरुह्यमानां तां शूरैरुद्वहनोचितैः ॥ २१

दिव्यां भद्रासनयुतां शिबिकां स्यन्दनोपमाम् ।
पक्षिकर्मभिराचित्रां द्रुमकर्मविभूषिताम् ॥ २२

आचितां चित्रपत्तीभिस्सुनिविष्टां समन्ततः ।
विमानमिव सिद्धानां जालवातायनान्विताम् ॥ २३

सुनियुक्तां विशालां च सुकृतां विश्वकर्मणा ।
दारुपर्वतकोपेतां चारुकर्मपरिष्कृताम् ॥ २४

वराभरणहारैश्च चित्रमाल्योपशोभिताम् ।
गुहागहनसंच्छन्नां रक्तचन्दनरूषिताम् ॥ २५

पुष्पौघैस्समभिच्छन्नां पद्ममालाभिरेव च ।
तरुणादित्यवर्णाभिर्भ्राजमानाभिरावृताम् ॥ २६

ईदृशीं शिबिकां दृष्ट्वा रामो लक्ष्मणमब्रवीत् ।
"क्षिप्रं विनीयतां वाली प्रेतकार्यं विधीयताम् ॥ २७

ततो वालिनमुद्यम्य सुग्रीवश्शिबिकां तदा ।
आरोपयत विक्रोशन्नङ्गदेन सहैव तु ॥ २८

आरोप्य शिबिकां चैव वालिनं गतजीवितम् ।
अलंकारैश्च विविधैर्माल्यैर्वस्त्रैश्च भूषितम् ॥ २९

आज्ञापयत्तदा राजा सुग्रीवः प्लवगेश्वरः ।
और्ध्वदैहिकमार्यस्य क्रियतामनुरूपतः ॥ ३०

विश्राणयन्तो रत्नानि विविधानि बहून्यपि ।
अग्रतः प्लवगा यान्तु शिबिका समनन्तरम् ॥ ३१

राज्ञामृद्धिविशेषा हि दृश्यन्ते भुवि यादृशाः ।
तादृशं वालिनः क्षिप्रं प्राकुर्वन्नौर्ध्वदैहिकम् ॥ ३२

अङ्गदं परिगृह्याऽशु तारप्रभृतयस्तदा ।
क्रोशन्तः प्रययुस्सर्वे वानरा हतबान्धवाः ॥ ३३

ततः प्रणिहितास्सर्वा वानर्योऽस्य वशानुगाः ।
चुक्रुशु 'र्वीर' वीरेति भूयः क्रोशन्ति ताः स्त्रियः ॥ ३४

ताराप्रभृतयस्सर्वा वानर्यो हतयूथपाः ।
अनुजग्मुर्हि भर्तारं क्रोशन्त्यः करुणस्वनाः ॥ ३५

तासां रुदितशब्देन वानरीणां वनान्तरे ।
वनानि गिरयस्सर्वे विक्रोशन्तीव सर्वतः ॥ ३६

पुळिने गिरिनद्यास्तु विविक्ते जलसंवृते ।
चितां चक्रुस्सुबह्वो वानराश्शोककर्शिताः ॥ ३७

अवरोप्य ततस्कन्धाच्छिबिकां वह्नोचिताः ।
तस्थुरेकान्तमाश्रित्य सर्वे शोकसमन्विताः ॥ ३८

ततस्तारा पतिं दृष्ट्वा शिबिकातलशायिनम् ।
आरोप्याङ्के शिरस्तस्य विललाप सुदुःखिता ॥ ३९

हा वानर! महाराज! हा नाथ मम वत्सल!।
हा महार्ह! महाबाहो! हा मम प्रिय! पश्य माम् ॥ ४०

जनं न पश्यसीमं त्वं कस्माच्छोकाभिपीडितम् ।
प्रहृष्टमिव ते वक्त्रं गतासोरपि मानद! ॥ ४१

अस्तार्कसमवर्णं च लक्ष्यते जीवतो यथा ।
एष त्वां रामरूपेण कालः कर्षति वानर! ॥ ४२

येन स्म विधवास्सर्वाः कृता एकेषुणा वने ।
इमास्तास्तव राजेन्द्र! वानर्यो वल्लभास्सदा ॥ ४३

पादैर्विकृष्टमध्वानमागताः किं न बुद्ध्यसे ।
तवेष्टा ननु नामैता भार्याश्चन्द्रनिभाननाः ॥ ४४

इदानीं नेक्षसे कस्मात्सुग्रीवं प्लवगेश्वरम् ।
एते हि सचिवा राजंस्ताराप्रभृतयस्तव ॥ ४५

पुरवासी जनश्चायं परिवार्यासतेऽनघ!।
विसर्जयैतान्प्लवगान्यथोचितमरिन्दम! ॥ ४६

ततः क्रीडामहे सर्वा वनेषु मदनोत्कटाः ।"
एवं विलपतीं तारां पतिशोकपरिप्लुताम् ॥ ४७

उत्थापयन्ति स्म तदा वानर्यश्शोककर्शिताः ।
सुग्रीवेण ततस्सार्धमङ्गदः पितरं रुदन् ॥ ४८

चितामारोपयामास शोकेनाभिहतेन्द्रियः ।
ततोऽग्निं विधिवद्दत्त्वा सोऽपसव्यं चकार ह ॥ ४९

पितरं दीर्घमध्वानं प्रस्थितं व्याकुलेन्द्रियः ।
संस्कृत्य वालिनं ते तु विधिपूर्वं प्लवङ्गमाः ॥ ५०

आजग्मुरुदकं कर्तुं नदीं शीतजलां शिवाम् ।
ततस्ते सहितास्तत्र ह्यङ्गदं स्थाप्य चाग्रतः ॥ ५१

सुग्रीवतारासहितास्सिषिचुर्वालिने जलम् ।
सुग्रीवेणैव दीनेन दीनो भूत्वा महाबलः ॥ ५२

समानशोकः काकुत्स्थः प्रेतकार्याण्यकारयत् ॥
ततस्तु तं वालिनमग्र्यपौरुषं प्रकाशमिक्ष्वाकुवरेषुणा हतम् ।
प्रदीप्य दीप्ताग्निसमौजसं तदा सलक्ष्मणं राममुपेयिवान्हरिः ॥ ५३

इति श्रीमत्किष्किन्धाकाण्डे पञ्चविंशस्सर्गः ॥

---

## ॥ षड्विंशस्सर्गः ॥

ततश्शोकाभिसंतप्तं सुग्रीवं क्लिन्नवाससम् ।
शाखामृगमहामात्राः परिवार्योपतस्थिरे ॥ १

अभिगम्य महाबाहुं राममक्लिष्टकारिणम् ।
स्थिताः प्राञ्जलयस्सर्वे पितामहमिवर्षयः ॥ २

ततः काञ्चनशैलाभस्तरुणार्कनिभाननः ।
अब्रवीत्प्राञ्जलिर्वाक्यं हनूमान्मारुतात्मजः ॥ ३

"भवत्प्रसादात्सुग्रीवः पितृपैतामहं महत् ।
वानराणां सुदुष्प्रापं प्राप्तो राज्यमिदं प्रभो ! ॥ ४

भवता समनुज्ञातः प्रविश्य नगरं शुभम् ।
संविधास्यति कार्याणि सर्वाणि ससुहृज्जनः ॥ ५

स्नातोऽयं विविधैर्गन्धैरौषधैश्च यथाविधि ।
अर्चयिष्यति रत्नैश्च माल्यैश्च त्वां विशेषतः ॥ ६

इमां गिरिगुहां रम्यामभिगन्तुमितोऽर्हसि ।
कुरुष्व स्वामिसंबन्धं वानरान्संप्रहर्षयन् ॥" ७

एवमुक्तो हनुमता राघवः परवीरहा ।
प्रत्युवाच हनूमन्तं बुद्धिमान्वाक्यकोविदः ॥ ८

चतुर्दश समास्सौम्य ! ग्रामं वा यदि वा पुरम् ।
न प्रवेक्ष्यामि हनुमन् ! पितुर्निर्देशपालकः ॥ ९

सुसमृद्धां गुहां रम्यां सुग्रीवो वानरर्षभः ।
प्रविष्टो विधिवद्वीरः क्षिप्रं राज्येऽभिषिच्यताम् ॥" १०

एवमुक्त्वा हनूमन्तं रामस्सुग्रीवमब्रवीत् ।
वृत्तज्ञो वृत्तसम्पन्नमुदारबलविक्रमम् ॥ ११

"इममप्यङ्गदं वीर ! यौवराज्येऽभिषेचय ।
ज्येष्ठस्य स सुतो ज्येष्ठस्सदृशो विक्रमेण ते ॥ १२

अङ्गदोऽयमदीनात्मा यौवराज्यस्य भाजनम् ।
पूर्वोऽयं वार्षिको मासश्श्रावणस्सलिलागमः ॥ १३

प्रवृत्तास्सौम्य ! चत्वारो मासा वार्षिकसंज्ञिकाः ।
नायमुद्योगसमयः प्रविश त्वं पुरीं शुभाम् ॥ १४

अस्मिन्वत्स्याम्यहं सौम्य ! पर्वते सहलक्ष्मणः ।
इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ १५
प्रभूतसलिला सौम्य ! प्रभूतकमलोत्पला ।
कार्तिके समनुप्राप्ते त्वं रावणवधे यत ॥ १६
एष नस्समयस्सौम्य ! प्रविश त्वं स्वमालयम् ।
अभिषिक्तस्स्वराज्ये च सुहृदस्संप्रहर्षय ॥" १७
इति रामाभ्यनुज्ञातस्सुग्रीवो वानराधिपः ।
प्रविवेश पुरीं रम्यां किष्किन्धां वालिपालिताम् ॥ १८
तं वानरसहस्राणि प्रविष्टं वानरेश्वरम् ।
अभिवाद्य प्रविष्टानि सर्वतः पर्यवारयन् ॥ १९
ततः प्रकृतयस्सर्वा दृष्ट्वा हरिगणेश्वरम् ।
प्रणम्य मूर्ध्ना पतिता वसुधायां समाहिताः ॥ २०
सुग्रीवः प्रकृतीस्सर्वास्संभाष्योत्थाप्य वीर्यवान् ।
भ्रातुरन्तः पुरं सौम्यं प्रविवेश महाबलः ॥ २१
प्रविश्य त्वभिनिष्क्रान्तं सुग्रीवं प्लवगेश्वरम् ।
अभ्यषिञ्चन्त सुहृदस्सहस्राक्षमिवामराः ॥ २२
तस्य पाण्डरमाजह्रुश्छत्रं हेमपरिष्कृतम् ।
शुक्ले च वालव्यजने हेमदण्डे यशस्करे ॥ २३
तथा सर्वाणि रत्नानि सर्वबीजौषधीरपि ।
सक्षीराणां च वृक्षाणां प्ररोहान्कुसुमानि च ॥ २४
शुक्लानि चैव वस्त्राणि श्वेतं चैवानुलेपनम् ।
सुगन्धीनि च माल्यानि स्थलजान्यम्बुजानि च ॥ २५

चन्दनानि च दिव्यानि गन्धांश्च विविधान्बहून् ।
अक्षतं जातरूपं च प्रियङ्गुमधुसर्पिषी ॥ २६

दधि चर्म च वैयाघ्रं वाराही चाप्युपानहौ ।
समालम्भनमादाय रोचनां समनश्शिलाम् ॥ २७

आजग्मुस्तत्र मुदिता वराः कन्यास्तु षोडश ।
ततस्ते वानरश्रेष्ठं यथाकालं यथाविधि ॥ २८

रत्नैर्वस्त्रैश्च भक्ष्यैश्च तोषयित्वा द्विजर्षभान् ।
ततः कुशपरिस्तीर्णं समिद्धं जातवेदसम् ॥ २९

मन्त्रपूतेन हविषा हुत्वा मन्त्रविदो जनाः ।
ततो हेमप्रतिष्ठाने वरास्तरणसंवृते ॥ ३०

प्रासादशिखरे रम्ये चित्रमाल्योपशोभिते ।
प्राङ्मुखं विविधैर्मन्त्रैः स्थापयित्वा वरासने ॥ ३१

नदीनदेभ्यस्संहृत्य तीर्थेभ्यश्च समन्ततः ।
आहृत्य च समुद्रेभ्यस्सर्वेभ्यो वानरर्षभाः ॥ ३२

अपः कनककुम्भेषु निधाय विमलाश्शुभाः ।
शुभैर्वृषभशृङ्गैश्च कलशैश्चापि काञ्चनैः ॥ ३३

शास्त्रदृष्टेन विधिना महर्षिविहितेन च ।
गजो गवाक्षो गवयश्शरभो गन्धमादनः ॥ ३४

मैन्दश्च द्विविदश्चैव हनूमान्जाम्बवान्नळः ।
अभ्यषिञ्चन्त सुग्रीवं प्रसन्नेन सुगन्धिना ॥ ३५

सलिलेन सहस्राक्षं वसवो वासवं यथा ।
अभिषिक्ते तु सुग्रीवे सर्वे वानरपुङ्गवाः ॥ ३६

प्रचुक्रुशुर्महात्मानो हृष्टास्तत्र सहस्रशः ।
रामस्य तु वचः कुर्वत्सुग्रीवो हरिपुङ्गवः ॥ ३७

अङ्गदं संपरिष्वज्य यौवराज्येऽभ्यषेचयत् ।
अङ्गदे चाभिषिक्ते तु सानुक्रोशाः प्लवङ्गमाः ॥ ३८

'साधुसा' ध्विति सुग्रीवं महात्मानोऽभ्यपूजयन् ।
रामं चैव महात्मानं लक्ष्मणं च पुनः पुनः ॥ ३९

प्रीताश्च तुष्टुवुस्सर्वे तादृशे तत्र वर्तति ।
हृष्टपुष्टजनाकीर्णा पताकाध्वजशोभिता ॥ ४०

बभूव नगरी रम्या किष्किंधागिरिगह्वरे ।
निवेद्य रामाय तदा महात्मने महाभिषेकं कपिवाहिनीपतिः ।
रुमां च भार्यां प्रतिलभ्य वीर्यवानवाप राज्यं त्रिदशाधिपो यथा ॥

इति श्रीमत्किष्किन्धाकाण्डे षड्विंशस्सर्गः ॥

---

## ॥ सप्तविंशस्सर्गः ॥

अभिषिक्ते तु सुग्रीवे प्रविष्टे वानरे गुहाम् ।
आजगाम सह भ्रात्रा रामः प्रस्रवणं गिरिम् ॥ १

शार्दूलमृगसंघुष्टं सिंहैर्भीमरवैर्वृतम् ।
नानागुल्मलतागूढं बहुपादपसंकुलम् ॥ २

ऋक्षवानरगोपुच्छैर्मार्जारैश्च निषेवितम् ।
मेघराशिनिभं शैलं नित्यं शुचिजलाश्रयम् ॥ ३

तस्य शैलस्य शिखरे महतीमायतां गुहाम् ।
प्रत्यगृह्णत वासार्थं रामस्सौमित्रिणा सह ॥ ४

कृत्वा च समयं सौम्यस्सुग्रीवेन सहानघः ।
कालयुक्तं महद्वाक्यमुवाच रघुनन्दनः ॥ ५

विनीतं भ्रातरं भ्राता लक्ष्मणं लक्ष्मिवर्धनम् ।
"इयं गिरिगुहा रम्या विशाला युक्तमारुता ॥ ६

अस्यां वसाम सौमित्रे! वर्षरात्रमरिन्दम! ।
गिरिशृङ्गमिदं रम्यमुन्नतं पार्थिवात्मज! ॥ ७

श्वेताभिः कृष्णताम्राभिश्शिलाभिरुपशोभितम् ।
नानाधातुसमाकीर्णं दरीनिर्झरशोभितम् ॥ ८

विविधैर्वृक्षषण्डैश्च चारुचित्रलतावृतम् ।
नानाविहगसंघुष्टं मयूरवनादितम् ॥ ९

मालतीकुन्दगुल्मैश्च सिन्धुवारकुरण्टकैः ।
कदम्बार्जुनसर्जैश्च पुष्पितैरुपशोभितम् ॥ १०

इयं च नळिनी रम्या फुल्लपङ्कजमण्डिता ।
नातिदूरे गुहा या नौ भविष्यति नृपात्मज! ॥ ११

प्रागुदक्प्रवणे देशे गुहा साधु भविष्यति ।
पश्चाच्चैवोन्नता सौम्य! निवातेयं भविष्यति ॥ १२

गुहाद्वारे च सौमित्रे! शिला समतला शुभा ।
श्लक्ष्णा चैवायता चैव भिन्नाञ्जनचयोपमा ॥ १३

गिरिशृङ्गमिदं तात! पश्य चोत्तरतश्शुभम् ।
भिन्नाञ्जनचयाकारमम्भोधरमिवोत्थितम् ॥ १४

दक्षिणस्यामपि दिशि स्थितं श्वेतमिवापरम् ।
कैलासशिखरप्रख्यं नानाधातुविभूषितम् ॥ १५

प्राचीनवाहिनीं चैव नदीं भृशमकर्दमाम् ।
गुहायां सर्वतः पश्य त्रिकूटे जाह्नवीमिव ॥ १६

चम्पकैस्तिलकैस्तालैस्तमालैरतिमुक्तकैः ।
पद्मकैस्सरळैश्चैव अशोकैश्चैव शोभितम् ॥ १७

वानीरैस्तिमिशैश्चैव वकुळैः केतकैर्धवैः ।
हिन्तालैस्तिरिटैर्नीपैर्वेत्रकैः कृतमालकैः ॥ १८

तीरजैश्शोभिता भाति नानारूपैस्ततस्ततः ।
वसनाभरणोपेता प्रमदेवाभ्यलंकृता ॥ १९

शतशः पक्षिसंघैश्च नानानादैर्विनादिता ।
एकैकमनुरक्तैश्च चक्रवाकैरलंकृता ॥ २०

पुळिनैरतिरम्यैश्च हंससारससेवितैः ।
प्रहसन्तीव भात्येषा नारी सर्वविभूषिता ॥ २१

क्वचिन्नीलोत्पलैश्छन्ना भाति रक्तोत्पलैः क्वचित् ।
क्वचिदाभाति शुक्लैश्च दिव्यैः कुमुदकुड्मलैः ॥ २२

पारिप्लवशतैर्जुष्टा बर्हिणक्रौञ्चनादिता ।
रमणीया नदी सौम्य! मुनिसंघैर्निषेविता ॥ २३

पश्य चन्दनवृक्षाणां पङ्क्तीस्सुरचिता इव ।
ककुभानां च दृश्यन्ते मनसेवोदितास्समम् ॥ २४

अहो सुरमणीयोऽयं देशश्शत्रुनिषूदन! ।
इदं रंस्याव सौमित्रे! साध्वत्र निवसावहै ॥ २५

इतश्च नातिदूरे सा किष्किन्धा चित्रकानना ।
सुग्रीवस्य पुरी रम्या भविष्यति नृपात्मज! ॥ २६

गीतवादित्रनिर्घोषश्श्रूयते जयतां वर! ।
नर्दतां वानराणां च मृदङ्गाडम्बरैस्सह ॥ २७

लब्ध्वा भार्यां कपिवरः प्राप्य राज्यं सुहृद्वृतः ।
ध्रुवं नन्दति सुग्रीवस्संप्राप्य महतीं श्रियम् ॥ २८

"इत्युक्त्वा न्यवसत्तत्र राघवस्सह लक्ष्मणः ।
बहुदृश्यदरीकुञ्जे तस्मिन्प्रस्रवणे गिरौ ॥ २९

सुसुखेऽपि बहुद्रव्ये तस्मिन्हि धरणीधरे ।
वसतस्तस्य रामस्य रतिरल्पाऽपि नाभवत् ॥ ३०

हृतां हि भार्यां स्मरतः प्राणेभ्योऽपि गरीयसीम् ।
उदयाभ्युदितं दृष्ट्वा शशाङ्कं च विशेषतः ॥ ३१

आविवेश न तं निद्रा निशासु शयनं गतम् ।
तत्समुत्थेन शोकेन बाष्पोपहतचेतसम् ॥ ३२

तं शोचमानं काकुत्स्थं नित्यं शोकपरायणम् ।
तुल्यदुःखोऽब्रवीद्भ्राता लक्ष्मणोऽनुनयन्वचः ॥ ३३

"अलं वीर! व्यथां गत्वा न त्वं शोचितुमर्हसि ।
शोचतो व्यवसीदन्ति सर्वार्था विदितं हि ते ॥ ३४

भवान्क्रियापरो लोके भवान् दैवपरायणः ।
आस्तिको धर्मशीलश्च व्यवसायी च राघव! ॥ ३५

न ह्यव्यवसितश्शत्रुं राक्षसं तं विशेषतः ।
समर्थस्त्वं रणे हन्तुं विक्रमे जिह्मकारिणम् ॥ ३६

समुन्मूल्य शोकं त्वं व्यवसायं स्थिरं कुरु ।
ततस्सपरिवारं तं निर्मूलं कुरु राक्षसम् ॥ ३७

पृथिवीमपि काकुत्स्थ ! ससागरवनावलीम् ।
परिवर्तयितुं शक्तः किमङ्ग पुन रावणम् ॥ ३८
शरत्कालं प्रतीक्षस्व प्रावृट्कालोऽयमागतः ।
ततस्सराष्ट्रं सगणं रावणं त्वं वधिष्यसि ॥ ३९
अहं तु खलु ते वीर्यं प्रसुप्तं प्रतिबोधये ।
दीप्तैराहुतिभिः काले भस्मच्छन्नमिवानलम् ॥ ४०
लक्ष्मणस्य तु तद्वाक्यं प्रतिपूज्य हितं शुभम् ।
राघवस्सुहृदं स्निग्धमिदं वचनमब्रवीत् ॥ ४१
"वाच्य यदनुरक्तेन स्निग्धेन च हितेन च ।
सत्यविक्रमयुक्तेन तदुक्तं लक्ष्मण ! त्वया ॥ ४२
एष शोकः परित्यक्तस्सर्वकार्यावसादकः ।
विक्रमेष्वप्रतिहतं तेजः प्रोत्साहयाम्यहम् ॥ ४३
शरत्कालं प्रतीक्षिष्ये स्थितोऽस्मि वचने तव ।
सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ४४
उपकारेण वीरस्तु प्रतीकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥" ४५
अथैवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिस्तत्प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनश्शुभम् ॥ ४६
"यथोक्तमेत्तव सर्वमीप्सितं नरेन्द्र ! कर्ता नचिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवाञ्जलप्रपातं रिपुनिग्रहे धृतः ॥ ४७
नियम्य कोपं प्रतिपाल्यतां शरत्क्षमस्व मासांश्चतुरो मया सह ।
वसाचलेऽस्मिन्मृगराजसेविते संवर्तयन् शत्रुवधे समुद्यमम् ॥ ४८

इति श्रीमत्किष्किन्धाकाण्डे सप्तविंशस्सर्गः ॥

## ॥ अष्टाविंशस्सर्गः ॥

स तदा वालिनं हत्वा सुग्रीवमभिषिच्य च ।
वसन्माल्यवतः पृष्ठे रामो लक्ष्मणमब्रवीत् ॥ १

" अयं स कालस्संप्राप्तस्समयोऽद्य जलागमः ।
संपश्य त्वं नभो मेघैस्संवृतं गिरिसन्निभैः ॥ २

नवमासधृतं गर्भं भास्करस्य गभस्तिभिः ।
पीत्वा रसं समुद्राणां द्यौः प्रसूते रसायनम् ॥ ३

शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः ।
कुटजार्जुनमालाभिरलंकर्तुं दिवाकरम् ॥ ४

सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धव्रणमिवाम्बरम् ॥ ५

मन्दमारुतनिःश्वासं संध्याचन्दनरञ्जितम् ।
आपाण्डुजलदं भाति कामातुरमिवाम्बरम् ॥ ६

एषा घर्मपरिक्लिष्टा नववारिपरिप्लुता ।
सीतेव शोकसंतप्ता मही बाष्पं विमुञ्चति ॥ ७

मेघोदरविनिर्मुक्ताः कह्लारसुखशीतलाः ।
शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः ॥ ८

एष फुल्लार्जुनश्शैलः केतकैरधिवासितः ।
सुग्रीव इव शान्तारिर्धाराभिरभिषिच्यते ॥ ९

मेघकृष्णाजिनधराः धारा यज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ १०

कशाभिरिव हैमीभिर्विद्युद्भिरिव ताडितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ११

नीलमेघाश्रिता विद्युत्स्फुरन्ती प्रतिभाति मा ।
स्फुरन्ती रावणस्याङ्के वैदेहीव तपस्विनी ॥ १२

इमा स्ता मन्मथवतां हिताः प्रतिहता दिशः ।
अनुलिप्ता इव घनैर्नष्टग्रहनिशाकराः ॥ १३

क्वचिद्बाष्पाभिसंरुद्धान्वर्षागमसमुत्सुकान् ।
कुटजान्पश्य सौमित्रे! पुष्पितान्गिरिसानुषु ॥ १४

मम शोकाभिभूतस्य कामसंदीपनान् स्थितान् ।
रजः प्रशान्तं सहिमोऽद्य वायुर्निदाघदोषप्रसराः प्रशान्ताः ।
स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नरास्स्वदेशान् ॥
संप्रस्थिता मानसवासलुब्धाः प्रियान्वितास्संप्रति चक्रवाकाः ।
अभीक्ष्णवर्षोदकविक्षतेषु यानानि मार्गेषु न संपतन्ति ॥ १६

क्वचित्प्रकाशं क्वचिदप्रकाशं नभः प्रकीर्णाम्बुधरं विभाति ।
क्वचित्क्वचित्पर्वतसन्निरुद्धं रूपं यथा शान्तमहार्णवस्य ॥ १७

व्यामिश्रितं सर्जकदम्बपुष्पैर्नवं जलं पर्वतधातुताम्रम् ।
मयूरकेकाभिरनुप्रयातं शैलापगाश्शीघ्रतरं वहन्ति ॥ १८

रसाकुलं षट्पदसन्निकाशं प्रभुज्यते जम्बुफलं प्रकामम् ।
अनेकवर्णं पवनावधूतं भूमौ पतत्याम्रफलं विपक्वम् ॥ १९

विद्युत्पताकास्सबलाकमालाश्शैलेन्द्रकूटाकृतिसन्निकाशाः ।
गर्जन्ति मेघास्समुदीर्णनादा मत्ता गजेन्द्रा इव संयुगस्थाः ॥ २०

वर्षोदकाप्यायितशाद्वलानि प्रवृत्तनृत्तोत्सवबर्हिणानि ।
वनानि निर्वृष्टवलाहकानि पश्यापराह्णेष्वधिकं विभान्ति ॥ २१

समुद्वहन्तस्सलिलातिभारं बलाकिनो वारिधरा नदन्तः ।
महत्सु शृङ्गेषु महीधराणां विश्रम्य विश्रम्य पुनः प्रयान्ति ॥ २२

मेघाभिकामा परिसंपतन्ती संमोदिता भाति बलाकपङ्क्तिः ।
वातावधूता वरपौण्डरीकी लम्बेव माला रचिताऽम्बरस्य ॥ २३

बालेन्द्रगोपान्तरचित्रितेन विभाति भूमिर्नवशाद्वलेन ।
गात्रानुवृत्तेन शुकप्रभेण नारीव लाक्षोक्षितकम्बलेन ॥ २४

निद्रा शनैः केशवमभ्युपैति द्रुतं नदी सागरमभ्युपैति ।
हृष्टा बलाका घनमभ्युपैति कान्ता सकामा प्रियमभ्युपैति ॥ २५

जाता वनान्ताश्शिखिसंप्रवृत्ता जाताः कदम्बास्सकदम्बशाखाः ।
जाता वृषा गोषु समानकामा जाता मही सस्यवनाभिरामा ॥ २६

वहन्ति वर्षन्ति नदन्ति भान्ति ध्यायन्ति नृत्यन्ति समाश्वसन्ति ।
नद्यो घना मत्तगजा वनान्ताः प्रियाविहीनाश्शिखिनः प्लवङ्गाः ॥

प्रहर्षिताः केतकपुष्पगन्धमाघ्राय हृष्टा वननिर्झरेषु ।
प्रपातशब्दाकुलिता गजेन्द्रास्सार्धं मयूरैस्समदा नदन्ति ॥ २८

धारानिपातैरभिहन्यमानाः कदम्बशाखासु विलम्बमानाः ।
क्षणार्जितं पुष्परसावगाढं शनैर्मदं षट्चरणास्त्यजन्ति ॥ २९

अङ्गारचूर्णोत्करसन्निकाशैः फलैस्सुपर्याप्तरसैस्समृद्धैः ।
जम्बूद्रुमाणां प्रविभान्ति शाखा निलीयमाना इव षट्पदौघैः ॥ ३०

तडित्पताकाभिरलंकृतानामुदीर्णगम्भीरमहार्णवाणाम् ।
विभान्ति रूपाणि बलाहकानां रणोद्यतानामिव वारणानाम् ॥ ३१

मार्गानुगश्शैलवनानुसारी संप्रस्थितो मेघरवं निशम्य ।
युद्धाभिकामः प्रतिनागशङ्की मत्तो गजेन्द्रः प्रतिसन्निवृत्तः ॥ ३२

क्वचित्प्रगीता इव षट्पदौघैः क्वचित्प्रनृत्ता इव नीलकण्ठैः ।
क्वचित्प्रमत्ता इव वारणेन्द्रैर्विभान्त्यनेकाश्रयिणो वनान्ताः ॥ ३३

कदम्बसर्जार्जुनकन्दळाढ्या वनान्तभूमिर्नववारिपूर्णा ।
मयूरमत्ताभिरुतप्रनृत्तैरापानभूमिप्रतिमा विभाति ॥ ३४

मुक्तासकाशं सलिलं पतद्वै सुनिर्मलं पत्रपुटेषु लग्नम् ।
हृष्टा विवर्णच्छदना विहङ्गास्सुरेन्द्रदत्तं तृषिताः पिबन्ति ॥ ३५

षट्पादतन्त्री मधुराभिधानं प्लवङ्गमोदीरितकण्ठताळम् ।
आविष्कृतं मेघमृदङ्गनादैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३६

क्वचित्प्रवृत्तैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णकायैः ।
व्यालम्बबर्हाभरणैर्मयूरैर्वनेषु संगीतमिव प्रवृत्तम् ॥ ३७

स्वनैर्घनानां प्लवगाः प्रबुद्धा विहाय निद्रां चिरसन्निरुद्धाम् ।
अनेकरूपाकृतिवर्णनादा नवाम्बुधाराभिहता नदन्ति ॥ ३८

नद्यस्समुद्वाहितचक्रवाकास्तटानि शीर्णान्यपवाहयित्वा ।
दृप्ता नवप्राभृतपूर्णभोगा द्रुतं स्वभर्तारमुपोपयान्ति ॥ ३९

नीलेषु नीलाः प्रविभान्ति सक्ता मेघेषु मेघा नववारिपूर्णाः ।
दवाग्निदग्धेषु दवाग्निदग्धाश्शैलेषु शैला इव बद्धमूलाः ॥ ४०

प्रहृष्टसन्नादितबर्हिणानि सशक्रगोपाकुलशाद्वलानि ।
चरन्ति नीपार्जुनवासितानि गजास्सुरम्याणि वनान्तराणि ॥ ४१

नवाम्बुधाराहतकेसराणि द्रुतं परित्यज्य सरोरुहाणि ।
कदम्बपुष्पाणि सकेसराणि नवानि हृष्टा भ्रमराः पतन्ति ॥ ४२

मत्ता गजेन्द्रा मुदिता गवेन्द्रा वनेषु विश्रान्ततरा मृगेन्द्राः ।
रम्या नगेन्द्रा निभृता नरेन्द्राः प्रक्रीडितो वारिधरैस्सुरेन्द्रः ॥ ४३

मेघास्समुद्भूतसमुद्रनादा महाजलौघैर्गगनावलम्बाः ।
नदीस्तटाकानि सरांसि वापीर्महीं च कृत्स्नामपवाहयन्ति ॥ ४४

वर्षप्रवेगा विपुलाः पतन्ति प्रवान्ति वातास्समुदीर्णघोषाः ।
प्रणष्टकूलाः प्रवहन्ति शीघ्रं नद्यो जलैर्विप्रतिपन्नमार्गाः ॥ ४५

नरैर्नरेन्द्रा इव पर्वतेन्द्रास्सुरेन्द्रदत्तैः पवनोपनीतैः ।
घनाम्बुकुम्भैरभिषिच्यमाना रूपं श्रियं स्वामिव दर्शयन्ति ॥ ४६

घनोपगूढं गगनं सतारं नभास्करो दर्शनमभ्युपैति ।
नवैर्जलौघैर्धरणी वितृप्ता तमोविलिप्ता न दिशः प्रकाशाः ॥ ४७

महान्ति कूटानि महीधराणां धाराभिधौतान्यधिकं विभान्ति ।
महाप्रमाणैर्विपुलैः प्रपातैर्मुक्ताकलापैरिव लम्बमानैः ॥ ४८

शैलोपलप्रस्खलमानवेगाश्शैलोत्तमानां विपुलाः प्रपाताः ।
गुहासु सन्नादितबर्हिणासु हारा विकीर्यन्त इवावभान्ति ॥ ४९

शीघ्रप्रवेगा विपुलाः प्रपाता निर्धौतशृङ्गोपतला गिरीणाम् ।
मुक्ताकलापप्रतिमाः पतन्तो महागुहोत्सङ्गतलैर्ध्रियन्ते ॥ ५०

सुरतामर्दविच्छिन्नास्स्वर्गस्त्रीहारमौक्तिकाः ।
पतन्तीवाकुला दिक्षु तोयधारास्समन्ततः ॥ ५१

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः । ५२

वृत्ता यात्रा नरेन्द्राणां सेना प्रतिनिवर्तते ।
वैराणि चैव मार्गाश्च सलिलेन समीकृताः ॥ ५३

मासि प्रोष्ठपदे ब्रह्म ब्राह्मणानां विवक्षताम् ।
अयमध्यायसमयस्सामगानामुपस्थितः ॥ ५४

निवृत्तकर्मायतनो नूनं संचितसंचयः ।
आषाढीमभ्युपगतो भरतः कोसलाधिपः ॥ ५५

नूनमापूर्यमाणायास्सरय्वा वर्धते रयः ।
मां समीक्ष्य समायान्तमयोध्याया इव स्वनः ॥ ५६

इमास्स्फीतगुणा वर्षास्सुग्रीवस्सुखमश्नुते ।
विजितारिस्सदारश्च राज्ये महति च स्थितः ॥ ५७

अहन्तु हृतदारश्च राज्याच्च महतश्च्युतः ।
नदीकूलमिव क्लिन्नमवसीदामि लक्ष्मण ! ॥ ५८

शोकश्च मम विस्तीर्णो वर्षाश्च भृशदुर्गमाः ।
रावणश्च महान् शत्रुरपारं प्रतिभाति मे ॥ ५९

अयात्रां चैव दृष्ट्वेमां मार्गांश्च भृशदुर्गमान् ।
प्रणते चैव सुग्रीवे न मया किंचिदीरितम् ॥ ६०

अपि चातिपरिक्लिष्टं चिराद्दारैस्समागतम् ।
आत्मकार्यगरीयस्त्वाद्वक्तुं नेच्छामि वानरम् ॥ ६१

स्वयमेव हि विश्रम्य ज्ञात्वा कालमुपागतम् ।
उपकारं च सुग्रीवो वेत्स्यते नात्र संशयः ॥ ६२

तस्मात्कालप्रतीक्षोऽहं स्थितोऽस्मि शुभलक्षण ! ।
सुग्रीवस्य नदीनां च प्रसादमनुपालयन् ॥ ६३

उपकारेण वीरो हि प्रतिकारेण युज्यते ।
अकृतज्ञोऽप्रतिकृतो हन्ति सत्त्ववतां मनः ॥ ” ६४

तमेवमुक्तः प्रणिधाय लक्ष्मणः कृताञ्जलिः प्रतिपूज्य भाषितम् ।
उवाच रामं स्वभिरामदर्शनं प्रदर्शयन्दर्शनमात्मनश्शुभम् ॥ ६५

" यथोक्तमेतत्तव सर्वमीप्सितं नरेन्द्र! कर्ता न चिराद्धरीश्वरः ।
शरत्प्रतीक्षः क्षमतामिमं भवान्जलप्रपातं रिपुनिग्रहे धृतः ॥ ६६

इति श्रीमत्किष्किन्धाकाण्डे अष्टाविंशस्सर्गः ॥

---

## ॥ एकोनत्रिंशस्सर्गः ॥

समीक्ष्य विमलं व्योम गतविद्युद्बलाहकम् ।
सारसारवसंघुष्टं रम्यज्योत्स्नानुलेपनम् ॥ १

समृद्धार्थं च सुग्रीवं मन्दधर्मार्थसंग्रहम् ।
अत्यर्थमसतां मार्गमेकान्तगतमानसम् ॥ २

निर्वृत्तकार्यं सिद्धार्थं प्रमदाभिरतं सदा ।
प्राप्तवन्तमभिप्रेतांत्सर्वानेव मनोरथान् ॥ ३

स्वां च पत्नीमभिप्रेतां तारां चापि समीप्सिताम् ।
विहरन्तमहोरात्रं कृतार्थं विगतज्वरम् ॥ ४

क्रीडन्तमिव देवेशं नन्दनेऽप्सरसां गणैः ।
मन्त्रिषु न्यस्तकार्यं च मन्त्रिणामनवेक्षकम् ॥ ५

उत्सन्नराज्यसंदेशं कामवृत्तमवस्थितम् ।
निश्चितार्थोऽर्थतत्त्वज्ञः कालधर्मविशेषवित् ॥ ६

प्रसाद्य वाक्यैर्मधुरैर्हेतुमद्भिर्मनोरमैः ।
वाक्यविद्वाक्यतत्त्वज्ञं हरीशं मारुतात्मजः ॥ ७

हितं तत्त्वं च पथ्यं च सामधर्मार्थनीतिमत् ।
प्रणयप्रीतिसंयुक्तं विश्वासकृतनिश्चयम् ॥ ८

हरीश्वरमुपागम्य हनूमान्वाक्यमब्रवीत् ।
"राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ॥ ९

मित्राणां संग्रहश्शेषस्तं भवान्कर्तुमर्हति ।
यो हि मित्रेषु कालज्ञस्सततं साधु वर्तते ॥ १०

तस्य राज्यं च कीर्तिश्च प्रतापश्चाभिवर्धते ।
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप! ॥ ११

समवेतानि सर्वाणि स राज्यं महदश्नुते ।
तद्भवान्वृत्तसंपन्नः स्थितः पथि निरत्यये ॥ १२

मित्रार्थमभिनीतार्थं यथावत्कर्तुमर्हति ।
संत्यज्य सर्वकर्माणि मित्रार्थे योऽनुवर्तते ॥ १३

संभ्रमाद्धि कृतोत्साहस्सोऽनर्थैर्नावरुध्यते ।
यस्तु कालव्यतीतेषु मित्रकार्येषु वर्तते ॥ १४

स कृत्वा महतोऽप्यर्थान्न मित्रार्थेन युज्यते ।
यदिदं वीरकार्यं नो मित्रकार्यमरिन्दम! ॥ १५

क्रियतां राघवस्यैतद्वैदेह्याः परिमार्गणम् ।
तदिदं वीर! कार्यं ते कालातीतमरिन्दम! ॥ १६

न च कालमतीतं ते निवेदयति कालवित् ।
त्वरमाणोऽपि सन्प्राज्ञस्तव राज! न्वशानुगः ॥ १७

कुलस्य हेतुः स्फीतस्य दीर्घबन्धुश्च राघवः ।
अप्रमेयप्रभावश्च स्वयं चाप्रतिमो गुणैः ॥ १८

तस्य त्वं कुरु वै कार्यं पूर्वं तेन कृतं तव ।
हरीश्वर! हरिश्रेष्ठानाज्ञापयितुमर्हसि ॥ १९

न हि तावत्भवेत्कालो व्यतीतश्चोदनादृते ।
चोदितस्य हि कार्यस्य भवेत्कालव्यतिक्रमः ॥ २०

अकर्तुरपि कार्यस्य भवान्कर्ता हरीश्वर! ।
किं पुनः प्रतिकर्तुस्ते राज्येन च धनेन च ॥ २१

शक्तिमानपि विक्रान्तो वानरर्क्षगणेश्वर! ।
कर्तुं दाशरथेः प्रीतिमाज्ञायां किन्न सज्जसे ॥ २२

कामं खलु शरैश्शक्तस्सुरासुरमहोरगान् ।
वशे दाशरथिः कर्तुं त्वत्प्रतिज्ञां तु काङ्क्षते ॥ २३

प्राणत्यागाविशङ्केन कृतं तेन तव प्रियम् ।
तस्य मार्गाम वैदेहीं पृथिव्यामपि चाम्बरे ॥ २४

न देवा न च गन्धर्वा नासुरा न मरुद्गणाः ।
न च यक्षा भयं तस्य कुर्युः किमुत राक्षसाः ॥ २५

तदेवं शक्तियुक्तस्य पूर्वं विप्रकृतस्तव ।
रामस्यार्हसि पिङ्गेश! कर्तुं सर्वात्मना प्रियम् ॥ २६

नाधस्तादवनौ नाप्सु गतिर्नोपरि चाम्बरे ।
कस्यचित्सज्जतेऽस्माकं कपीश्वर! तवाज्ञया ॥ २७

तदाज्ञापय कः किं ते कृते कुत्र व्यवस्यतु ।
हरयोऽप्यप्रधृष्यास्ते सन्ति कोट्यग्रतोऽनघाः ॥ २८

तस्य तद्वचनं श्रुत्वा काले साधु निवेदितम् ।
सुग्रीवस्सत्त्वसंपन्नश्चकार मतिमुत्तमाम् ॥ २९

स संदिदेशाभिमतं नीलं नित्यकृतोद्यमम् ।
दिक्षु सर्वासु सर्वेषां सैन्यानामुपसंग्रहे ॥ ३०

यथा सेना समग्रा मे यूथपालाश्च सर्वशः ।
समागच्छन्त्यसङ्गेन सेनाग्राणि तथा कुरु ॥ ३१

ये त्वन्तपालाः प्लवगाश्शीघ्रगा व्यवसायिनः ।
समानयन्तु ते सैन्यं त्वरिताश्शासनान्मम ॥ ३२

स्वयं चानन्तरं सैन्यं भवानेवानुपश्यतु ।
त्रिपञ्चरात्रादूर्ध्वं यः प्राप्नुयान्नेह वानरः ॥ ३३

तस्य प्राणान्तिको दण्डो नात्र कार्या विचारणा ।
हरींश्च वृद्धानुपयातु साङ्गदो भवान्ममाज्ञामधिकृत्य निश्चिताम् ।
इति व्यवस्थां हरिपुङ्गवेश्वरो विधाय वेश्म प्रविवेश वीर्यवान् ॥

इति श्रीमत्किष्किन्धाकाण्डे एकोनत्रिंशस्सर्गः ॥

---

## ॥ त्रिंशस्सर्गः ॥

गुहां प्रविष्टे सुग्रीवे विमुक्ते गगने घनैः ।
वर्षरात्रोषितो रामः कामशोकाभिपीडितः ॥ १

पाण्डुरं गगनं दृष्ट्वा विमलं चन्द्रमण्डलम् ।
शारदीं रजनीं चैव दृष्ट्वा ज्योत्स्नानुलेपनाम् ॥ २

कामवृत्तं च सुग्रीवं नष्टां च जनकात्मजाम् ।
बुद्ध्वा कालमतीतं च मुमोह परमातुरः ॥ ३

स तु संज्ञामुपागम्य मुहूर्तान्मतिमान्पुनः ।
मनस्स्थामपि वैदेहीं चिन्तयामास राघवः ॥ ४

आसीनः पर्वतस्याग्रे हेमधातुविभूषिते ।
शारदं गगनं दृष्ट्वा जगाम मनसा प्रियाम् ॥ ५

दृष्ट्वा च विमलं व्योम गतविद्युद्बलाहकम् ।
सारसारवसंघुष्टं विललापाऽऽर्तया गिरा ॥ ६

सारसारवसन्नादैस्सारसारवनादिनी ।
याऽऽश्रमे रमते बाला साऽद्य मे रमते कथम् ॥ ७

पुष्पितांश्चासनान्दृष्ट्वा काञ्चनानिव निर्मलान् ।
कथं सा रमते बाला पश्यन्ती मामपश्यती ॥ ८

या पुरा कलहंसानां स्वरेण कलभाषिणी ।
बुध्यते चारुसर्वाङ्गी साऽद्य मे बुध्यते कथम् ॥ ९

निस्वनं चक्रवाकानां निशम्य सहचारिणाम् ।
पुण्डरीकविशालाक्षी कथमेषा भविष्यति ॥ १०

सरांसि सरितो वापीः काननानि वनानि च ।
तां विना मृगशावाक्षीं चरन्नाद्य सुखं लभे ॥ ११

अपि तां मद्वियोगाच्च सौकुमार्याच्च भामिनीम् ।
न दूरं पीडयेत्कामश्शरद्गुणनिरन्तरः ॥ ” १२

एवमादि नरश्रेष्ठो विललाप नृपात्मजः ।
विहङ्ग इव सारङ्गस्सलिलं त्रिदशेश्वरात् ॥ १३

ततश्चञ्चूर्य रम्येषु फलार्थी गिरिसानुषु ।
ददर्श पर्युपावृत्तो लक्ष्मीवान् लक्ष्मणोऽग्रजम् ॥ १४

तं चिन्तया दुस्सहया परीतं विसंज्ञमेकं विजने मनस्वी ।
भ्रातुर्विषादात्परितापदीनस्समीक्ष्य सौमित्रिरुवाच रामम् ॥ १५

"किमार्य! कामस्य वशं गतेन किमात्मपौरुष्यपराभवेन ।
अयं सदा संह्रियते समाधिः किमत्र योगेन निवर्तितेन ॥ १६
क्रियाभियोगं मनसः प्रसादं समाधियोगानुगतं च कालम् ।
सहायसामर्थ्यमदीनसत्त्व! स्वकर्महेतुं च कुरुष्व हेतुम् ॥ १७
न जानकी मानववंशनाथ! त्वया सनाथा सुलभा परेण ।
न चाग्निचूडां ज्वलितामुपेत्य न दह्यते वीरवरार्ह कश्चित् ॥" १८
सलक्षणं लक्ष्मणमप्रधृष्यं स्वभावजं वाक्यमुवाच रामः ।
हितं च पथ्यं च नयप्रसक्तं ससामधर्मार्थसमाहितं च ॥ १९
"निस्संशयं कार्यमवेक्षणीयं क्रियाविशेषो ह्यनुवर्तितव्यः ।
ननु प्रवृत्तस्य दुरासदस्य कुमार! कार्यस्य फलं न चिन्त्यम् ॥" २०
अथ पद्मपलाशाक्षीं मैथिलीमनुचिन्तयन् ।
उवाच लक्ष्मणं रामो मुखेन परिशुष्यता ॥ २१
"तर्पयित्वा सहस्राक्षस्सलिलेन वसुन्धराम् ।
निर्वर्तयित्वा सस्यानि कृतकर्मा व्यवस्थितः ॥ २२
स्निग्धगम्भीरनिर्घोषाश्शैलद्रुमपुरोगमाः ।
विसृज्य सलिलं मेघाः परिश्रान्ता नृपात्मज! ॥ २३
नीलोत्पलदळश्यामाश्श्यामीकृत्वा दिशो दश ।
विमदा इव मातङ्गाश्शान्तवेगाः पयोधराः ॥ २४
जलगर्भा महावेगाः कुटजार्जुनगन्धिनः ।
चरित्वा विरतास्सौम्य! वृष्टिवातास्समुद्यताः ॥ २५
घनानां वारणानां च मयूराणां च लक्ष्मण! ।
नादः प्रस्रवणानां च प्रशान्तस्सहसाऽनघ! ॥ २६

अभिवृष्टा महामेघैर्निर्मलाश्चित्रसानवः ।
अनुलिप्ता इवाऽऽभान्ति गिरयश्चित्रदीप्तिभिः ॥ २७

दर्शयन्ति शरन्नद्यः पुळिनानि शनैश्शनैः ।
नवसङ्गमसव्रीडा जघनानीव योषितः ॥ २८

शाखासु सप्तच्छदपादपानां प्रभासुतारार्कनिशाकराणाम् ।
लीलासु चैवोत्तमवारणानां श्रियं विभज्याद्य शरत्प्रवृत्ता ॥ २९

संप्रत्यनेकाश्रयचित्रशोभा लक्ष्मीश्शरत्कालगुणोपनीता ।
सूर्याग्रहस्तप्रतिबोधितेषु पद्माकरेष्वभ्यधिकं विभाति ॥ ३०

सप्तच्छदानां कुसुमोपगन्धी षट्पादबृन्दैरनुगीयमाणः ।
मत्तद्विपानां पवनोऽनुसारी दर्पं वनेष्वभ्यधिकं करोति ॥ ३१

अभ्यागतैश्चारुविशालपक्षैस्सरःप्रियैः पद्मरजोवकीर्णैः ।
महानदीनां पुळिनोपयातैः क्रीडन्ति हंसास्सहचक्रवाकैः ॥ ३२

मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु ।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता ॥ ३३

नभस्समीक्ष्याम्बुधरैर्विमुक्तं विमुक्तबर्हाभरणा वनेषु ।
प्रियास्वसक्ता विनिवृत्तशोभा गतोत्सवा ध्यानपरा मयूराः ॥ ३४

मनोज्ञगन्धैः प्रियकैरनल्पैः पुष्पातिभारावनताग्रशाखैः ।
सुवर्णगौरैर्नयनाभिरामैरुद्योतितानीव वनान्तराणि ॥ ३५

प्रियान्वितानां नळिनीप्रियाणां वनेरतानां कुसुमोद्धतानाम् ।
मदोत्कटानां मदलालसानां गजोत्तमानां गतयोऽद्य मन्दाः ॥ ३६

व्यभ्रं नभश्शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि ।
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥ ३७

सूर्यातपक्रामणनष्टपङ्का भूमिस्समुत्पादितसान्द्ररेणुः ।
अन्योन्यवैरामर्षयुतानामुद्योगकालोऽद्य नराधिपानाम् ॥ ३८

शरद्गुणाप्यायितरूपशोभाः प्रहर्षिताः पांसुसमुक्षिताङ्गाः ।
मदोत्कटास्संप्रति युद्धलुब्धा वृषा गवां मध्यगता नदन्ति ॥ ३९

समन्मथं तीव्रगतानुरागाः कुलान्विता मन्दगतिं करिण्यः ।
मदान्वितं संपरिवार्य यान्तं वनेषु भर्तारमनुप्रयान्ति ॥ ४०

त्यक्त्वा वराण्यात्मविभूषणानि बर्हाणि तीरोपगता नदीनाम् ।
निर्भर्त्स्यमाना इव सारसौघैः प्रयान्ति दीना विमदा मयूराः ॥ ४१

वित्रास्य कारण्डवचक्रवाकान्महारवैर्भिन्नकटा गजेन्द्राः ।
सरस्सु बद्धाम्बुजभूषणेषु विक्षोभ्य विक्षोभ्य जलं पिबन्ति ॥ ४२

व्यपेतपङ्कासु सवालुकासु प्रसन्नतोयासु सगोकुलासु ।
ससारसारावविनादितासु नदीषु हृष्टानि पतन्ति हंसाः ॥ ४३

नदीघनप्रस्रवणोदकानामतिप्रवृद्धानिलबर्हिणानाम् ।
प्लवङ्गमानां च गतोत्सवानां द्रुतं रवास्संप्रति संप्रणष्टाः ॥ ४४

अनेकवर्णास्सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः ।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः ॥ ४५

चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका ।
अहो रागवती संध्या जहाति स्वयमम्बरम् ॥ ४६

रात्रिश्शशाङ्कोदितसौम्यवक्त्रा तारागणोन्मीलितचारुनेत्रा ।
ज्योत्स्नांशुकप्रावरणा विभाति नारीव शुक्लांशुकसंवृताङ्गी ॥ ४७

विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः ।
नभस्समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥ ४८

सुप्तैकहंसं कुमुदैरुपेतं महाह्रदस्थं सलिलं विभाति ।
घनैर्विमुक्तं निशि पूर्णचन्द्रं तारागणाकीर्णमिवान्तरिक्षम् ॥ ४९

प्रकीर्णहंसाकुलमेखलानां प्रबुद्धपद्मोत्पलमालिनीनाम् ।
वाप्युत्तमानामधिकाऽद्य लक्ष्मीर्वराङ्गनानामिव भूषितानाम् ॥ ५०

वेणुस्वनव्यञ्जिततूर्यमिश्रः प्रत्यूषकालानिलसम्प्रवृद्धः ।
सम्मूर्छितो गर्गरगोवृषाणामन्योन्यमापूरयतीव शब्दः ॥ ५१

नवैर्नदीनां कुसुमप्रहासैर्व्याधूयमानैर्मृदुमारुतेन ।
धौतामलक्षौमपटप्रकाशैः कूलानि काशैरुपशोभितानि ॥ ५२

वनप्रचण्डा मधुपानशौण्डाः प्रियान्विताष्षट्चरणाः प्रहृष्टाः ।
वनेषु मत्ताः पवनानुयात्रां कुर्वन्ति पद्मासनरेणुगौराः ॥ ५३

जलं प्रसन्नं कुमुदं प्रभासं क्रौञ्चस्वनश्शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रश्शंसन्ति वर्षव्यपनीतकालम् ॥ ५४

मीनोपसंदर्शितमेखलानां नदीवधूनां गतयोऽद्य मन्दाः ।
कान्तोपभुक्तालसगामिनीनां प्रभातकालेष्विव कामिनीनाम् ॥ ५५

सचक्रवाकानि सशैवलानि काशैर्दुकूलैरिव संवृतानि ।
सपत्रलेखानि सरोचनानि वधूमुखानीव नदीमुखानि ॥ ५६

प्रफुल्लबाणासनचित्रितेषु प्रहृष्टषट्पादनिकूजितेषु ।
गृहीतचापोद्यतचण्डदण्डः प्रचण्डचारोऽद्य वनेषु कामः॥ ५७

लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा ।
निष्पन्नसस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रणष्टाः ॥५८

प्रसन्नसलिलास्सौम्य ! कुमारीभिर्विनादिताः ।
चक्रवाकगणाकीर्णा विभान्ति सलिलाशयाः ॥ ५९

असनास्सप्तपर्णाश्च कोविदाराश्च पुष्पिताः ।
दृश्यते बन्धुजीवाश्च श्यामाश्च गिरिसानुषु ॥ ६०

हंससारसचक्राह्वैः कुररैश्च समन्ततः ।
पुलिनान्यवकीर्णानि नदीनां पश्य लक्ष्मण ! ॥ ६१

अन्योन्यबद्धवैराणां जिगीषूणां नृपात्मज ! ।
उद्योगसमयस्सौम्य ! पार्थिवानामुपस्थितः ॥ ६२

इयं सा प्रथमा यात्रा पार्थिवानां नृपात्मजः ! ।
न च पश्यामि सुग्रीवमुद्योगं वा तथाविधम् ॥ ६३

चत्वारो वार्षिका मासा गता वर्षशतोपमाः ।
मम शोकाभिभूतस्य सौम्य सीतामपश्यतः ॥ ६४

चक्रवाकीव भर्तारं पृष्ठतोऽनुगता वनम् ।
विषमं दण्डकारण्यमुद्यानमिव याऽऽगता ॥ ६५

प्रियाविहीने दुःखार्ते हृतराज्ये विवासिते ।
कृपां न कुरुते राजा सुग्रीवो मयि लक्ष्मण ! । ६६

'अनाथो हृतराज्योऽयं रावणेन च धर्षितः ॥
दीनो दूरगृहः कामी मां चैव शरणं गतः ॥ ६७

इत्येतैः कारणैस्सौम्य ! सुग्रीवस्य दुरात्मनः ।
अहं वानरराजस्य परिभूतः परंतप ॥ ६८

सकालं परिसंख्याय सीतायाः परिमार्गणे ।
कृतार्थस्समयं कृत्वा दुर्मतिर्नावबुध्यते ॥ ६९

त्वं प्रविश्य च किष्किन्धां ब्रूहि वानरपुङ्गवम् ।
मूर्खं ग्राम्यसुखे सक्तं सुग्रीवं वचनान्मम ॥ ७०

अर्थिनामुपपन्नानां पूर्वं चाप्युपकारिणाम् ।
आशां संश्रित्य यो हन्ति स लोके पुरुषाधमः ॥ ७१

शुभं वा यदि वा पापं यो हि वाक्यमुदीरितम् ।
सत्येन प्रतिगृह्णाति स वीरः पुरुषोत्तमः ॥ ७२

कृतार्था ह्यकृतार्थानां मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ७३

नूनं काञ्चनपृष्ठस्य विकृष्टस्य मया रणे ।
द्रष्टुमिच्छति चापस्य रूपं विद्युद्गणोपमम् ॥ ७४

घोरं ज्यातलनिर्घोषं क्रुद्धस्य मम संयुगे ।
निर्घोषमिव वज्रस्य पुनस्संश्रोतुमिच्छति ॥ ७५

काममेवं गतेऽप्यस्य परिज्ञाते पराक्रमे ।
त्वत्सहायस्य मे वीर ! न चिन्ता स्यान्नृपात्मज ! ॥ ७६

यदर्थमयमारम्भः कृतः परपुरञ्जय ! ।
समयं नाभिजानाति कृतार्थः प्लवगेश्वरः ॥ ७७

वर्षासमयकालं तु प्रतिज्ञाय हरीश्वरः ।
व्यतीतांश्चतुरो मासान्विहरन्नावबुध्यते ॥ ७८

सामात्यपरिषत्क्रीडन्पानमेवोपसेवते ।
शोकदीनेषु नास्मासु सुग्रीवः कुरुते दयाम् ॥ ७९

उच्यतां गच्छ सुग्रीवस्त्वया वत्स ! महाबल ! ।
मम रोषस्य यद्रूपं ब्रूयाश्चैनमिदं वचः ॥ ८०

" न च संकुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः ॥ ८१

एक एव रणे वाली शरेण निहतो मया ।
त्वां तु सत्यादतिक्रान्तं हनिष्यामि सबान्धवम् ॥ ८२
तदेवं विहिते कार्ये यद्धितं पुरुषर्षभ ! ।
तत्तद्ब्रूहि नरश्रेष्ठ ! त्वर कालव्यतिक्रमः ॥ ८३
कुरुष्व सत्यं मयि वानरेश्वर ! प्रतिश्रुतं धर्ममवेक्ष्य शाश्वतम् ।
मा वालिनं प्रेत्यगतो यमक्षयं त्वमद्य पश्येर्मम चोदितैश्शरैः ॥ ' ८४
सपूर्वजं तीव्रविवृद्धकोपं लालप्यमानं प्रसमीक्ष्य दीनम् ।
चकार तीव्रां मतिमुग्रतेजा हरीश्वरे मानववंशनाथः ॥ ८५

इति श्रीमत्किष्किन्धाकाण्डे त्रिंशस्सर्गः ॥

## ॥ एकत्रिंशस्सर्गः ॥

स कामिनं दीनमदीनसत्त्वं शोकाभिपन्नं समुदीर्णकोपम् ।
नरेन्द्रसूनुर्नरदेवपुत्रं रामानुजः पूर्वजमित्युवाच ॥ १
"न वानरः स्थास्यति साधुवृत्ते न मंस्यते कर्मफलानुषङ्गान् ।
न भोक्ष्यते वानरराज्यलक्ष्मीं तथा हि नाभिक्रमतेऽस्य बुद्धिः ॥ २
मतिक्षयाद्ग्राम्यसुखेषु सक्तस्तव प्रसादाप्रतिकारबुद्धिः ।
हतोऽग्रजं पश्यतु वीर ! तस्य न राज्यमेवं विगुणस्य देयम् ॥ ३
न धारये कोपमुदीर्णवेगं निहन्मि सुग्रीवमसत्यमद्य ।
हरिप्रवीरैस्सह वालिपुत्रो नरेन्द्र ! पत्न्या विचयं करोतु ॥" ४
तमात्तबाणासनमुत्पतन्तं निवेदितार्थं रणचण्डकोपम् ।
उवाच रामः परवीरहन्ता स्ववेक्षितं सानुनयं च वाक्यम् ॥ ५

"न हि वै त्वद्विधो लोके पापमेवं समाचरेत् ।
पापमार्येण यो हन्ति स वीरः पुरुषोत्तमः ॥ ६

नेदमद्य त्वया ग्राह्यं साधुवृत्तेन लक्ष्मण ! ।
तां प्रीतिमनुवर्तस्व पूर्ववृत्तं च सङ्गतम् ॥ ७

सामोपहितया वाचा रूक्षाणि परिवर्जयन् ।
वक्तुमर्हसि सुग्रीवं व्यतीतं कालपर्यये ॥" ८

सोऽग्रजेनानुशिष्टार्थो यथावत्पुरुषर्षभः ।
प्रविवेश पुरीं वीरो लक्ष्मणः परवीरहा ॥ ९

ततश्शुभमतिः प्राज्ञो भ्रातुः प्रियहिते रतः ।
लक्ष्मणः प्रतिसंरब्धो जगाम भवनं कपेः ॥ १०

शक्रबाणासनप्रख्यं धनुः कालान्तकोपमः ।
प्रगृह्य गिरिशृङ्गाभं मन्दरस्सानुमानिव ॥ ११

यथोक्तकारी वचनमुत्तरं चैव सोत्तरम् ।
बृहस्पतिसमो बुद्ध्या मत्वा रामानुजस्तथा ॥ १२

कामक्रोधसमुत्थेन भ्रातुः कोपाग्निना वृतः ।
प्रभञ्जन इवाप्रीतः प्रययौ लक्ष्मणस्तदा ॥ १३

सालतालाश्वकर्णांश्च तरसा पातयन्बहून् ।
पर्यस्यन्गिरिकूटानि द्रुमानन्यांश्च वेगतः ॥ १४

शिलाश्च शकलीकुर्वन्पद्भ्यां गज इवाशुगः ।
दूरमेकपदं त्यक्त्वा ययौ कार्यवशाद्द्रुतम् ॥ १५

तामपश्यद्बलाकीर्णां हरिराजमहापुरीम् ।
दुर्गामिक्ष्वाकुशार्दूलः किष्किन्धां गिरिसंकटे ॥ १६

रोषात्प्रस्फुरमाणोष्ठस्सुग्रीवं प्रति लक्ष्मणः ।
ददर्श वानरान्भीमान्किष्किन्धाया बहिश्चरान् ॥ १७

तं दृष्ट्वा वानरास्सर्वे लक्ष्मणं पुरुषर्षभम् ।
शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ॥ १८

जगृहुः कुञ्जरप्रख्या वानराः पर्वतान्तरे ।
तान्गृहीतप्रहरणान्हरीन्दृष्ट्वा तु लक्ष्मणः ॥ १९

बभूव द्विगुणं क्रुद्धो बह्विन्धन इवानलः ।
तं ते भयपरीताङ्गाः क्रुद्धं दृष्ट्वा प्लवङ्गमाः ॥ २०

कालमृत्युयुगान्ताभं शतशो विद्रुता दिशः ।
ततस्सुग्रीवभवनं प्रविश्य हरिपुङ्गवाः ॥ २१

क्रोधमागमनं चैव लक्ष्मणस्य न्यवेदयन् ।
तारया सहितः कामी सक्तः कपिवृषो रहः ॥ २२

न तेषां कपिवीराणां शुश्राव वचनं तदा ।
ततस्सचिवसंदिष्टा हरयो रोमहर्षणाः ॥ २३

गिरिकुञ्जरमेघाभा नगर्या निर्ययुस्तदा ।
नखदंष्ट्रायुधा घोरास्सर्वे विकृतदर्शनाः ॥ २४

सर्वे शार्दूलदर्पाश्च सर्वे च विकृताननाः ।
दशनागबलाः केचित्केचिद्दशगुणोत्तराः ॥ २५

केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ।
सन्ति चौघबलाः केचित्केचिद्वायुबलोत्तराः ॥ २६

अप्रमेयबलाः केचित्तत्राऽऽसन्हरिपुङ्गवाः ।
तेन वानरसैन्येन सुग्रीवस्य महात्मनः ॥ २७

पर्यधावत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ।]
कृत्स्नां हि कपिभिर्व्याप्तां द्रुमहस्तैर्महाबलैः ॥ २८

अपश्यल्लक्ष्मणः क्रुद्धः किष्किन्धां तु दुरासदाम् ।
ततस्ते हरयस्सर्वे प्राकारपरिघान्तरात् ॥ २९

निष्क्रम्योदग्रसत्त्वास्तु तस्थुराविष्कृतं तदा ।
सुग्रीवस्य प्रमादं च पूर्वजं चार्तमात्मवान् ॥ ३०

बुद्ध्वा कोपवशं वीरः पुनरेव जगाम सः ।
सदीर्घोष्णमहोच्छ्वासः कोपसंरक्तलोचनः ॥ ३१

बभूव नरशार्दूलस्सधूम इव पावकः ।
बाणशल्यस्फुरज्जिह्वस्सायकासनभोगवान् ॥ ३२

स्वतेजोविषसंघातः पञ्चास्य इव पन्नगः ।
तं दीप्तमिव कालाग्निं नागेन्द्रमिव कोपितम् ॥ ३३

समासाद्याङ्गदस्त्रासाद्विषादमगमद्भृशम् ।
सोऽङ्गदं रोषताम्राक्षस्संदिदेश महायशाः ॥ ३४

"सुग्रीवः कथ्यतां वत्स ! ममागमनमित्युत ।
एष रामानुजः प्राप्तस्त्वत्सकाशमरिन्दमः ॥ ३५

भ्रातृव्यसनसंतप्तो द्वारि तिष्ठति लक्ष्मणः ।
तस्य वाक्ये यदि रुचिः क्रियतां साधु वानर ! ॥ ३६

इत्युक्त्वा शीघ्रमागच्छ वत्स ! वाक्यमरिन्दम ! ।"
लक्ष्मणस्य वचः श्रुत्वा शोकाविष्टोऽङ्गदोऽब्रवीत् ॥ ३७

पितुस्समीपमागम्य 'सौमित्रिरयमागतः ।'
अथाङ्गदस्तस्य वचो निशम्य संभ्रान्तभावः परिदीनवक्त्रः ॥ ३८

निपत्य तूर्णं नृपतेस्तरस्वी ततः कुमारश्चरणौ ववन्दे ।
संगृह्य पादौ पितुरग्र्यतेजा जग्राह मातुः पुनरेव पादौ ॥ ३९

पादौ रुमायाश्च निपीडयित्वा निवेदयामास ततस्तमर्थम् ।
स निद्रामदसंवीतो वानरो न विबुद्धवान् ॥ ४०

बभूव मदमत्तश्च मदनेन च मोहितः ।
ततः किलकिलां चक्रुर्लक्ष्मणं प्रेक्ष्य वानराः ॥ ४१

प्रसादयन्तस्तं क्रुद्धं भयमोहितचेतसः ।
ते महौघनिभं दृष्ट्वा वज्राशनिसमस्वनम् ॥ ४२

सिंहनादं समं चक्रुर्लक्ष्मणस्य समीपतः ।
तेन शब्देन महता प्रत्युबुध्यत वानरः ॥ ४३

मदविह्वलताम्राक्षो व्याकुलस्रग्विभूषणः ।
अथाङ्गदवचः श्रुत्वा तेनैव च समागतौ ॥ ४४

मन्त्रिणौ वानरेन्द्रस्य सम्मतौ दारदर्शिनौ ।
प्लक्षश्चैव प्रभावश्च मन्त्रिणावर्थधर्मयोः ॥ ४५

वक्तुमुच्चावचं प्राप्तं लक्ष्मणं तौ शशंसतुः ।
प्रसादयित्वा सुग्रीवं वचनैस्सामनिश्चितैः ॥ ४६

आसीनं पर्युपासीनौ यथा शक्रं मरुत्पतिम् ।
[सुग्रीवसचिवास्सर्वे मन्त्रार्थे समुपाविशन् ॥ ४७

विनीतश्च सुषेणश्च नीलोऽथ नळ एव च ।
अङ्गदो वालिसूनुश्च हनूमांश्चैव बुद्धिमान् ॥ ४८

एते सर्वे महात्मानस्सुग्रीवं वानरोत्तमाः ।
आसीनं पर्युपासन्त शक्रं सुरगणा इव ॥ ४९

बलविक्रमसंयुक्ता मन्त्रे च परिनिष्ठिताः ।
सुग्रीवसचिवास्सर्वे मन्त्राणामर्थनिश्चये ॥ ५०

वक्तुमुच्चावचं प्राप्तं लक्ष्मणं ते शशंसिरे ।
प्रसादयित्वा सुग्रीवं वचनैस्सामनिश्चितैः ॥ ५१

उवाच हनुमान्वीरो यथा शक्रं बृहस्पतिः ।]
" सत्यसन्धौ महाभागौ भ्रातरौ रामलक्ष्मणौ ॥ ५२

वयस्यभावं संप्राप्तौ राज्यार्हौ राज्यदायिनौ ।
तयोरेको धनुष्पाणिर्द्वारि तिष्ठति लक्ष्मणः ॥ ५३

यस्य भीताः प्रवेपन्तो नादान्मुञ्चन्ति वानराः ।
स एष राघवभ्राता लक्ष्मणो वाक्यसारथिः ॥ ५४

व्यवसायरथः प्राप्तस्तस्य रामस्य शासनात् ।
अयं च दयितो राजं! स्तारायास्तनयोऽङ्गदः ॥ ५५

लक्ष्मणेन सकाशं ते प्रेषितस्त्वरयाऽनघ ! ।
सोऽयं रोषपरीताक्षो द्वारि तिष्ठति वीर्यवान् ॥ ५६

वानरान्वानरपते ! चक्षुषा प्रदहन्निव ।
तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रस्सह बन्धुभिः ॥ ५७

गच्छ शीघ्रं महाराज ! रोषो ह्यस्य निवर्त्यताम् ।
यदाह रामो धर्मात्मा तत्कुरुष्व समाहितः ॥ ५८

राजं ! स्तिष्ठस्व समये भव सत्यप्रतिश्रवः । "

इति श्रीमत्किष्किन्धाकाण्डे एकत्रिंशस्सर्गः ॥

---

## ॥ द्वात्रिंशस्सर्गः ॥

अङ्गदस्य वचः श्रुत्वा सुग्रीवस्सचिवैस्सह ।
लक्ष्मणं कुपितं श्रुत्वा मुमोचासनमात्मवान् ॥ १

सचिवानब्रवीद्वाक्यं निश्चित्य गुरुलाघवम् ।
मन्त्रज्ञान्मन्त्रकुशलो मन्त्रेषु परिनिष्ठितान् ॥ २

"न मे दुर्व्याहृतं किंचिन्नापि मे दुरनुष्ठितम् ।
लक्ष्मणो राघवभ्राता क्रुद्धः किमिति चिन्तये ॥ ३

असुहृद्भिर्ममामित्रैर्नित्यमन्तरदर्शिभिः ।
मम दोषानसंभूतान् श्रावितो राघवानुजः ॥ ४

अत्र तावद्यथाबुद्धि सर्वैरेव यथाविधि ।
भावस्य निश्चयस्तावद्विज्ञेयो निपुणं शनैः ॥ ५

न खल्वस्ति मम त्रासो लक्ष्मणान्नापि राघवात् ।
मित्रं त्वस्थानकुपितं जनयत्येव संभ्रमम् ॥ ६

सर्वथा सुकरं मित्रं दुष्करं परिपालनम् ।
अनित्यत्वाच्च चित्तानां प्रीतिरल्पेऽपि भिद्यते ॥ ७

अतोऽनिमित्तं त्रस्तोऽहं रामेण तु महात्मना ।
यन्ममोपकृतं शक्यं प्रतिकर्तुं न तन्मया ॥" ८

सुग्रीवेणैवमुक्तस्तु हनूमान्हरिपुङ्गवः ।
उवाच स्वेन तर्केण मध्ये वानरमन्त्रिणाम् ॥ ९

"सर्वथा नैतदाश्चर्यं यस्त्वं हरिगणेश्वर! ।
न विस्मरसि सुस्निग्धमुपकारकृतं शुभम् ॥ १०

राघवेण तु वीरेण भयमुत्सृज्य दूरतः ।
त्वत्प्रियार्थं हतो वाली शक्रतुल्यपराक्रमः ॥ ११

सर्वथा प्रणयात्क्रुद्धो राघवो नात्र संशयः ।
भ्रातरं संप्रहितवान्लक्ष्मणं लक्ष्मिवर्धनम् ॥ १२

त्वं प्रमत्तो न जानीषे कालं कालविदां वर ! ।
फुल्लसप्तच्छदश्यामा प्रवृत्ता तु शरच्छिवा ॥ १३

निर्मलग्रहनक्षत्रा द्यौः प्रणष्टवलाहका ।
प्रसन्नाश्च दिशस्सर्वास्सरितश्च सरांसि च ॥ १४

प्राप्तमुद्योगकालं तु नावैषि हरिपुङ्गव ! ।
त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ १५

आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् ।
वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ १६

कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ १७

नियुक्तैर्मन्त्रिभिर्वाच्योह्यवश्यं पार्थिवो हितम् ।
अत एव भयं त्यक्त्वा ब्रवीम्यवधृतं वचः ॥ १८

अभिक्रुद्धस्समर्थो हि चापमुद्यम्य राघवः ।
सदेवासुरगन्धर्वं वशे स्थापयितुं जगत् ॥ १९

न स क्षमः कोपयितुं यः प्रसाद्यः पुनर्भवेत् ।
पूर्वोपकारं स्मरता कृतज्ञेन विशेषतः ॥ २०

तस्य मूर्ध्ना प्रणम्य त्वं सपुत्रस्ससुहृज्जनः ।
राजन् ! तिष्ठस्व समये भर्तुर्भार्येव यद्वशः ॥ २१

न रामरामानुजशासनं त्वया कपीन्द्र ! युक्तं मनसाऽप्यपोहितुम् ।
मनो हि ते ज्ञास्यति मानुषं बलं सराघवस्यास्य सुरेन्द्रवर्चसः ॥ २२

इति श्रीमत्किष्किन्धाकाण्डे द्वात्रिंशस्सर्गः ॥

## ॥ त्रयस्त्रिंशस्सर्गः ॥

अथ प्रतिसमादिष्टो लक्ष्मणः परवीरहा ।
प्रविवेश गुहां घोरां किष्किन्धां रामशासनात् ॥ १

द्वारस्था हरयस्तत्र महाकाया महाबलाः ।
बभूवुर्लक्ष्मणं दृष्ट्वा सर्वे प्राञ्जलयः स्थिताः ॥ २

निःश्वसन्तं तु तं दृष्ट्वा क्रुद्धं दशरथात्मजम् ।
बभूवुर्हरयस्त्रस्ता न चैनं पर्यवारयन् ॥ ३

स तां रत्नमयीं श्रीमान्दिव्यां पुष्पितकाननाम् ।
रम्यां रत्नसमाकीर्णां ददर्श महतीं गुहाम् ॥ ४

हर्म्यप्रासादसंबाधां नानापण्योपशोभिताम् ।
सर्वकामफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ॥ ५

देवगन्धर्वपुत्रैश्च वानरैः कामरूपिभिः ।
दिव्यमाल्याम्बरधरैश्शोभितां प्रियदर्शनैः ॥ ६

चन्दनागरुपद्मानां गन्धैस्सुरभिगन्धिनाम् ।
मैरेयाणां मधूनां च सम्मोदितमहापथाम् ॥ ७

[ विन्ध्यमेरुगिरिप्रख्यैः प्रासादैः परिभूषिताम् ।
ददर्श गिरिनद्यश्च विमलास्तत्र राघवः ॥ ८

अङ्गदस्य गृहं रम्यं मैन्दस्य द्विविदस्य च ।
गवयस्य गवाक्षस्य गजस्य शरभस्य ॥ ९

विद्युन्मालेश्च संपातेस्सूर्याक्षस्य हनूमतः ।
वीरबाहोस्सुबाहोश्च नळस्य च महात्मनः ॥ १०

कुमुदस्य सुषेणस्य ताराजाम्बवतोस्तथा ।
दधिवक्त्रस्य नीलस्य सुपाटलसुनेत्रयोः ॥ ११

एतेषां कपिमुख्यानां राजमार्गे महात्मनाम् ।
ददर्श गृहमुख्यानि महासाराणि लक्ष्मणः ॥ १२

पाण्डुराभ्रप्रकाशानि दिव्यमाल्ययुतानि च ।
प्रभूतधनधान्यानि स्त्रीरत्नैश्शोभितानि च ॥ १३

पाण्डुरेण तु सालेन परिक्षिप्तं दुरासदम् ।
वानरेन्द्रगृहं रम्यं महेन्द्रसदनोपमम् ॥ १४

शुक्लैः प्रासादशिखरैः कैलासशिखरोपमैः ।
सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभितम् ॥ १५

महेन्द्रदत्तैश्श्रीमद्भिर्नीलजीमूतसन्निभैः ।
दिव्यपुष्पफलैर्वृक्षैश्शीतच्छायैर्मनोरमैः ॥ १६

हरिभिस्संवृतद्वारं बलिभिश्शस्त्रपाणिभिः ।
दिव्यमाल्यावृतं शुभ्रं तप्तकाञ्चनतोरणम् ॥ १७

सुग्रीवस्य गृहं रम्यं प्रविवेश महाबलः ।
अवार्यमाणस्सौमित्रिर्महाभ्रमिव भास्करः ॥ १८

स सप्तकक्ष्या धर्मात्मा नानाजनसमाकुलाः ।
प्रविश्य सुमहद्गुप्तं ददर्शान्तःपुरं महत् ॥ १९

हैमराजतपर्यङ्कैर्बहुभिश्च वरासनैः ।
महार्हास्तरणोपेतैस्तत्र तत्रोपशोभितम् ॥ २०

प्रविशन्नेव सततं शुश्राव मधुरस्वरम् ।
तन्त्रीगीतसमाकीर्णं समगीतपदाक्षरम् ॥ २१

बह्वीश्च विविधाकारा रूपयौवनगर्विताः ।
स्त्रियस्सुग्रीवभवने ददर्श सुमहाबलः ॥ २२

दृष्ट्वाऽभिजनसंपन्नाश्चित्रमाल्यकृतस्रजः ।
फलमाल्यकृतव्यग्रा भूषणोत्तमभूषिताः ॥ २३

नातृप्तान्नापि चाव्यग्रान्नानुदात्तपरिच्छदान् ।
सुग्रीवानुचरांश्चापि लक्षयामास लक्ष्मणः ॥ २४

कूजितं नूपुराणां च काञ्चीनां निनदं तथा ।
सन्निशम्य ततश्श्रीमांत्सौमित्रिर्लज्जितो भवेत् ॥ २५

रोषवेगप्रकुपितश्श्रुत्वा चाभरणस्वनम् ।
चकार ज्यास्वनं वीरो दिशश्शब्देन पूरयन् ॥ २६

चारित्रेण महाबाहुरपकृष्टस्सलक्ष्मणः ।
तस्थावेकान्तमाश्रित्य रामकोपसमन्वितः ॥ २७

तेन चापस्वनेनाथ सुग्रीवः प्लवगाधिपः ।
विज्ञायाऽऽगमनं त्रस्तस्संचचाल वरासनात् ॥ २८

"अङ्गदेन यथा मह्यं पुरस्तात्प्रतिवेदितम् ।
सुव्यक्तमेष संप्राप्तस्सौमित्रिर्भ्रातृवत्सलः ॥" २९

अङ्गदेन समाख्यातं ज्यास्वनेन च वानरः ।
बुबुधे लक्ष्मणं प्राप्तं मुखं चास्य व्यशुष्यत ॥ ३०

ततस्तारां हरिश्रेष्ठस्सुग्रीवः प्रियदर्शनाम् ।
उवाच हितमव्यग्रस्त्रासंसंभ्रान्तमानसः ॥ ३१

" किन्नु तत्कारणं सुभ्रु! प्रकृत्या मृदुमानसः ।
सरोष इव संप्राप्तो येनायं राघवानुजः ॥ ३२

किं पश्यसि कुमारस्य रोषस्थानमनिन्दिते! ।
न खल्वकारणे कोपमाहरेन्नरसत्तमः ॥ ३३

यदस्य कृतमस्माभिर्बुध्यसे किंचिदप्रियम् ।
तद्बुद्ध्या संप्रधार्याशु क्षिप्रमर्हसि भाषितुम् ॥ ३४

अथवा स्वयमेवैनं द्रष्टुमर्हसि भामिनि! ।
वचनैस्सान्त्वयुक्तैश्च प्रसादयितुमर्हसि ॥ ३५

त्वद्दर्शनविशुद्धात्मा न स कोपं करिष्यति ।
न हि स्त्रीषु महात्मानः क्वचित्कुर्वन्ति दारुणम् ॥ ३६

त्वया सान्त्वैरुपक्रान्तं प्रसन्नेन्द्रियमानसम् ।
ततः कमलपत्त्राक्षं द्रक्ष्याम्यहमरिन्दमम् ॥ " ३७

सा प्रस्खलन्ती मदविह्वलाक्षी प्रलम्बकाञ्चीगुणहेमसूत्रा ।
सलक्षणा लक्ष्मणसन्निधानं जगाम तारा नमिताङ्गयष्टिः ॥ ३८

स तां समीक्ष्यैव हरीशपत्नीं तस्थावुदासीनतया महात्मा ।
अवाङ्मुखोऽभून्मनुजेन्द्रपुत्रः स्त्रीसन्निकर्षाद्विनिवृत्तकोपः ॥ ३९

सा पानयोगाद्विनिवृत्तलज्जा दृष्टिप्रसादाच्च नरेन्द्रसूनोः ।
उवाच तारा प्रणयप्रगल्भं वाक्यं महार्थं परिसान्त्वपूर्वम् ॥ ४०

" किं कोपमूलं मनुजेन्द्रपुत्त्र! कस्ते न संतिष्ठति वाङ्निदेशे ।
कश्शुष्कवृक्षं वनमापतन्तं दवाग्निमासीदति निर्विशङ्कः ॥ " ४१

स तस्या वचनं श्रुत्वा सान्त्वपूर्वमशङ्कितम् ।
भूयः प्रणयदृष्टार्थं लक्ष्मणो वाक्यमब्रवीत् ॥ ४२

" किमयं कामवृत्तस्ते लुप्तधर्मार्थसंग्रहः ।
भर्ता भर्तृहिते युक्ते न चैनमवबुद्ध्यसे ॥ ४३

न चिन्तयति राज्यार्थं नास्मान् शोकपरायणान् ।
सामात्यपरिषत्तारे ! पानमेवोपसेवते ॥ ४४

स मासांश्चतुरः कृत्वा प्रमाणं प्लवगेश्वरः ।
व्यतीतांस्तान्मदव्यग्रो विहरन्नावबुद्ध्यते ॥ ४५

नहि धर्मार्थसिद्ध्यर्थं पानमेवं प्रशस्यते ।
पानादर्थश्च धर्मश्च कामश्च परिहीयते ॥ ४६

धर्मलोपो महांस्तावत्कृते ह्यप्रतिकुर्वतः ।
अर्थलोपश्च मित्रस्य नाशो गुणवतो महान् ॥ ४७

मित्रं ह्यर्थगुणश्रेष्ठं सत्यधर्मपरायणम् ।
तद्द्वयं तु परित्यक्तं न तु धर्मे व्यवस्थितम् ॥ ४८

तदेवं प्रस्तुते कार्ये कार्यमस्माभिरुत्तरम् ।
यत्कार्यं कार्यतत्त्वज्ञे ! तदुदाहर्तुमर्हसि ॥" ४९

सा तस्य धर्मार्थसमाधियुक्तं निशम्य वाक्यं मधुरस्वभावम् ।
तारा गतार्थे मनुजेन्द्रकार्ये विश्वासयुक्तं तमुवाच भूयः ॥ ५०

" न कोपकालः क्षितिपालपुत्र ! न चातिकोपस्स्वजने विधेयः ।
त्वदर्थकामस्य जनस्य तस्य प्रमादमप्यर्हसि वीर ! सोढुम् ॥ ५१

कोपं कथं नाम गुणप्रकृष्टः कुमार कुर्यादपकृष्टसत्त्वे ।
कस्त्वद्विधः कोपवशं हि गच्छेत्सत्त्वावरुद्धस्तपसः प्रसूतिः ॥ ५२

जानामि रोषं हरिवीरबन्धोर्जानामि कार्यस्य च कालसङ्गम् ।
जानामि कार्यं त्वयि यत्कृतं नस्तच्चापि जानामि यदत्र कार्यम् ॥

तच्चापि जानामि यथा विषह्यं बलं नरश्रेष्ठ! शरीरजस्य ।
जानामि यस्मिंश्च जनेऽवबद्धं कामेन सुग्रीवमसक्तमद्य ॥ ५४

न कामतन्त्रे तव बुद्धिरस्ति त्वं वै यथा मन्युवशं प्रपन्नः ।
न देशकालौ हि न चार्थधर्मावपेक्षते कामरतिर्मनुष्यः ॥ ५५

तं कामवृत्तं मम सन्निकृष्टं कामाभियोगाच्च निवृत्तलज्जम् ।
क्षमस्व तावत्परवीरहन्त! त्वद्भ्रातरं वानरवंशनाथम् ॥ ५६

महर्षयो धर्मतपोभिकामाः कामानुकामाः प्रतिबद्धमोहाः ।
अयं प्रकृत्या चपलः कपिस्तु कथं न सज्जेत सुखेषु राजा ॥" ५७

इत्येवमुक्त्वा वचनं महार्थं सा वानरी लक्ष्मणमप्रमेयम् ।
पुनस्सखेलं मदविह्वलं च भर्तुर्हितं वाक्यमिदं बभाषे ॥ ५८

"उद्योगस्तु चिराज्ञप्तस्सुग्रीवेण नरोत्तम! ।
कामस्यापि विधेयेन तवार्थप्रतिसाधने ॥ ५९

आगता हि महावीर्या हरयः कामरूपिणः ।
कोटीशतसहस्राणि नानानगनिवासिनः ॥ ६०

तदागच्छ महाबाहो! चारित्रं रक्षितं त्वया ।
अच्छलं मित्रभावेन सतां दारावलोकनम् ॥" ६१

तारया चाभ्यनुज्ञातस्त्वरया चाति चोदितः ।
प्रविवेश महाबाहुरभ्यन्तरमरिन्दमः ॥ ६२

ततस्सुग्रीवमासीनं काञ्चने परमासने ।
महार्हास्तरणोपेते ददर्शादित्यसन्निभम् ॥ ६३

दिव्याभरणचित्राङ्गं दिव्यरूपं यशस्विनम् ।
दिव्यमाल्याम्बरधरं महेन्द्रमिव दुर्जयम् ॥ ६४

दिव्याभरणमाल्याभिः प्रमदाभिस्समावृतम् ।
[लक्ष्मणः परवीरघ्नो रामकोपाभिपीडितः ॥] ६५

संरब्धतररक्ताक्षो बभूवान्तकसन्निभः ।
रुमां तु वीरः परिरभ्य गाढं वरासनस्थो वरहेमवर्णः ।
ददर्श सौमित्रिमदीनसत्त्वं विशालनेत्रस्सुविशालनेत्रम् ॥ ६६

इति श्रीमत्किष्किन्धाकाण्डे त्रयस्त्रिंशस्सर्गः ॥

---

## ॥ चतुस्त्रिंशस्सर्गः ॥

तमप्रतिहतं क्रुद्धं प्रविष्टं पुरुषर्षभम् ।
सुग्रीवो लक्ष्मणं दृष्ट्वा बभूव व्यथितेन्द्रियः ॥ १

क्रुद्धं निःश्वसमानं तं प्रदीप्तमिव तेजसा ।
भ्रातुर्व्यसनसंतप्तं दृष्ट्वा दशरथात्मजम् ॥ २

उत्पपात हरिश्रेष्ठो हित्वा सौवर्णमासनम् ।
महान्महेन्द्रस्य यथा स्वलंकृत इव ध्वजः ॥ ३

उत्पतन्तमनूत्पेतू रुमाप्रभृतयः स्त्रियः ।
सुग्रीवं गगने पूर्णचन्द्रं तारागणा इव ॥ ४

संरक्तनयनः श्रीमान्विचचाल कृताञ्जलिः ।
बभूवावस्थितस्तत्र कल्पवृक्षो महानिव ॥ ५

रुमाद्वितीयं सुग्रीवं नारीमध्यगतं स्थितम् ।
अब्रवील्लक्ष्मणः क्रुद्धस्सतारं शशिनं यथा ॥ ६

"सत्त्वाभिजनसंपन्नस्सानुक्रोशो जितेन्द्रियः ।
कृतज्ञस्सत्यवादी च राजा लोके महीयते ॥ ७

यस्तु राजा स्थितो धर्मे मित्राणामुपकारिणाम् ।
मिथ्या प्रतिज्ञां कुरुते को नृशंसतरस्ततः ॥ ८

शतमश्वानृते हन्ति सहस्रं तु गवानृते ।
आत्मानं स्वजनं हन्ति पुरुषः पुरुषानृते ॥ ९

पूर्वं कृतार्थो मित्राणां न तत्प्रतिकरोति यः ।
कृतघ्नस्सर्वभूतानां स वध्यः प्लवगेश्वर ! ॥ १०

गीतोऽयं ब्रह्मणा श्लोकस्सर्वलोकनमस्कृतः ।
दृष्ट्वा कृतघ्नं क्रुद्धेन तन्निबोध प्लवङ्गम ! ॥ ११

ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२

अनार्यस्त्वं कृतघ्नश्च मिथ्यावादी च वानर ! ।
पूर्वं कृतार्थो रामस्य न तत्प्रतिकरोषि यत् ॥ १३

ननु नाम कृतार्थेन त्वया रामस्य वानर ।
सीताया मार्गणे यत्नः कर्तव्यः कृतमिच्छता ॥ १४

स त्वं ग्राम्येषु भोगेषु सक्तो मिथ्याप्रतिश्रवः ।
न त्वां रामो विजानीते सर्पं मण्डूकराविणम् ॥ १५

महाभागेन रामेण पापः करुणवेदिना ।
हरीणां प्रापितो राज्यं त्वं दुरात्मा महात्मना ॥ १६

कृतं चेन्नाभिजानीषे रामस्याक्लिष्टकर्मणः ।
सद्यस्त्वं निशितैर्बाणैर्हतो द्रक्ष्यसि वालिनम् ॥ १७

न च संकुचितः पन्था येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव! मा वालिपथमन्वगाः ॥ १८
न नूनमिक्ष्वाकुवरस्य कार्मुकच्युतान् शरान्पश्यसि वज्रसन्निभान् ।
ततस्सुखं नाम निषेवसे सुखी न रामकार्यं मनसाऽप्यवेक्षसे ॥"

इति श्रीमत्किष्किन्धाकाण्डे चतुस्त्रिंशस्सर्गः ॥

---

## ॥ पञ्चत्रिंशस्सर्गः ॥

तथा ब्रुवाणं सौमित्रिं प्रदीप्तमिव तेजसा ।
अब्रवील्लक्ष्मणं तारा ताराधिपनिभानना ॥ १
"नैवं लक्ष्मण! वक्तव्यो नायं परुषमर्हति ।
हरीणामीश्वरश्श्रोतुं तव वक्त्राद्विशेषतः ॥ २
नैवाकृतज्ञस्सुग्रीवो न शठो नापि दारुणः ।
नैवानृतकथो वीर! न जिह्मश्च कपीश्वरः ॥ ३
उपकारं कृतं वीरो नाप्ययं विस्मृतः कपिः ।
रामेण वीर! सुग्रीवो यदन्यैर्दुष्करं रणे ॥ ४
रामप्रसादात्कीर्तिं च कपिराज्यं च शाश्वतम् ।
प्राप्तवानिह सुग्रीवो रुमां मां च परन्तप! ॥ ५
सुदुःखं शयितः पूर्वं प्राप्येदं सुखमुत्तमम् ।
प्राप्तकालं न जानीते विश्वामित्रो यथा मुनिः ॥ ६
घृताच्यां किल संसक्तो दशवर्षाणि लक्ष्मण! ।
अहोऽमन्यत धर्मात्मा विश्वामित्रो महामुनिः ॥ ७

स हि प्राप्तं न जानीते कालं कालविदां वरः ।
विश्वामित्रो महातेजाः किंपुनर्यः पृथग्जनः ॥ ८

देहधर्मं गतस्यास्य परिश्रान्तस्य लक्ष्मण ! ।
अवितृप्तस्य कामेषु कामं क्षन्तुमिहार्हसि ॥ ९

न च रोषवशं तात ! तं त्वमर्हसि लक्ष्मण ।
निश्चयार्थमविज्ञाय सहसा प्राकृतो यथा ॥ १०

सत्त्वयुक्ता हि पुरुषास्त्वद्विधाः पुरुषर्षभ ! ।
अविमृश्य न रोषस्य सहसा यान्ति पश्यताम् । ११

प्रसादये त्वां धर्मज्ञ ! सुग्रीवार्थे समाहिता ।
महान्रोषस्समुत्पन्नस्संरम्भस्त्यज्यतामयम् ॥ १२

रुमां मां कपिराज्यं च धनधान्यवसूनि च ।
रामप्रियार्थं सुग्रीवस्त्यजेदिति मतिर्मम ॥ १३

समानेष्यति सुग्रीवस्सीतया सह राघवम् ।
शशाङ्कमिव रोहिण्या निहत्वा रावणं रणे ॥ १४

शतकोटिसहस्राणि लङ्कायां किल राक्षसाः ।
अयुतानि च षट्त्रिंशत्सहस्राणि शतानि च ॥ १५

अहत्वा तांश्च दुर्धर्षान्राक्षसान्कामरूपिणः ।
न शक्यो रावणो हन्तुं येन सा मैथिली हृता ॥ १६

तेन शक्या रणे हन्तुमसहायेन लक्ष्मण ! ।
रावणः क्रूरकर्मा च सुग्रीवेण विशेषतः ॥" १७

एवमाख्यातवान्वाली स ह्यभिज्ञो हरीश्वरः ।
आगमस्तु न मे व्यक्तश्श्रवात्तस्माद्ब्रवीम्यहम् ॥ १८

त्वत्सहायनिमित्तं वै प्रेषिता हरिपुङ्गवाः ।
आनेतुं वानरान्युद्धे सुबहून्हरियूथपान् ॥ १९

तांश्च प्रतीक्षमाणोऽयं विक्रान्तांत्सुमहाबलान् ।
राघवस्यार्थसिद्ध्यर्थं न निर्याति हरीश्वरः ॥ २०

कृता तु संस्था सौमित्रे! सुग्रीवेण यथा पुरा ।
अद्य तैर्वानरैस्सर्वैरागन्तव्यं महाबलैः ॥ २१

ऋक्षकोटिसहस्राणि गोलाङ्गूलशतानि च ।
अद्य त्वामुपयास्यन्ति जहि कोपमरिन्दम! ॥ २२

कोट्योऽनेकास्तु काकुत्स्थ! कपीनां दीप्ततेजसाम् ।
तव हि मुखमिदं निरीक्ष्य कोपात्क्षतजनिभे नयने निरीक्षमाणः ।
हरिवरवनिता न यान्ति शान्तिं प्रथमभयस्य हि शङ्कितास्तु सर्वाः ॥

इति श्रीमत्किष्किन्धाकाण्डे पञ्चत्रिंशस्सर्गः ॥

---

## ॥ षट्त्रिंशस्सर्गः ॥

इत्युक्तस्तारया वाक्यं प्रश्रितं धर्मसंहितम् ।
मृदुस्वभावस्सौमित्रिः प्रतिजग्राह तद्वचः ॥ १

तस्मिन्प्रतिगृहीते तु वाक्ये हरिगणेश्वरः ।
लक्ष्मणात्सुमहत्त्रासं वस्त्रं क्लिन्नमिवात्यजत् ॥ २

ततः कण्ठगतं माल्यं चित्रं बहुगुणं महत् ।
चिच्छेद विमदश्चासीत्सुग्रीवो वानरेश्वरः ॥ ३

स लक्ष्मणं भीमबलं सर्ववानरसत्तमः ।
अब्रवीत्प्रश्रितं वाक्यं सुग्रीवस्संप्रहर्षयन् ॥ ४

"प्रणष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ।
रामप्रसादात्सौमित्रे ! पुनः प्राप्तमिदं मया ॥ ५

कश्शक्तस्तव देवस्य ख्यातस्य स्वेन कर्मणा ।
तादृशं विक्रमं वीर ! प्रतिकर्तुमरिन्दम ! ॥ ६

सीतां प्राप्स्यति धर्मात्मा वधिष्यति च रावणम् ।
सहायमात्रेण मया राघवस्स्वेन तेजसा ॥ ७

सहायकृत्यं किं तस्य येन सप्त महाद्रुमाः ।
शैलश्च वसुधा चैव बाणेनैकेन दारिताः ॥ ८

धनुर्विष्फारयानस्य यस्य शब्देन लक्ष्मण ! ।
सशैला कम्पिता भूमिस्सहायैस्तस्य किन्नु वै ॥ ९

अनुयात्रां नरेन्द्रस्य करिष्येऽहं नरर्षभ ! ।
गच्छतो रावणं हन्तुं वैरिणं सपुरस्सरम् ॥ १०

यदि किंचिदतिक्रान्तं विश्वासात्प्रणयेन वा ।
प्रेष्यस्य क्षमितव्यं मे न कश्चिन्नापराध्यति ॥" ११

इति तस्य ब्रुवाणस्य सुग्रीवस्य महात्मनः ।
अभवल्लक्ष्मणः प्रीतः प्रेम्णा चैवमुवाच ह ॥ १२

"सर्वथा हि मम भ्राता सनाथो वानरेश्वर ! ।
त्वया नाथेन सुग्रीव ! प्रश्रितेन विशेषतः ॥ १३

यस्ते प्रभावस्सुग्रीव ! यच्च ते शौचमार्जवम् ।
अर्हस्त्वं कपिराज्यस्य श्रियं भोक्तुमनुत्तमाम् ॥ १४

सहायेन च सुग्रीव ! त्वया रामः प्रतापवान् ।
वधिष्यति रणे शत्रूनचिरान्नात्र संशयः ॥ १५

धर्मज्ञस्य कृतज्ञस्य संग्रामेष्वनिवर्तिनः ।
उपपन्नं च युक्तं च सुग्रीव! तव भाषितम् ॥ १६
दोषज्ञस्सति सामर्थ्ये कोऽन्यो भाषितुमर्हति ।
वर्जयित्वा मम ज्येष्ठं त्वां च वानरसत्तम! ॥ १७
सदृशश्चासि रामस्य विक्रमेण बलेन च ।
सहायो दैवतैर्दत्तश्चिराय हरिपुङ्गव! ॥ १८
किंतु शीघ्रमितो वीर! निष्क्राम त्वं मया सह ।
सान्त्वयस्व वयस्यं त्वं भार्याहरणकर्शितम् ॥ १९
यच्च शोकाभिभूतस्य श्रुत्वा रामस्य भाषितम् ।
मया त्वं परुषाण्युक्तस्तच्च त्वं क्षन्तुमर्हसि ॥" २०

इति श्रीमत्किष्किन्धाकाण्डे षट्त्रिंशस्सर्गः ॥

---

## ॥ सप्तत्रिंशस्सर्गः ॥

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
हनूमन्तं स्थितं पार्श्वे सचिवं त्विदमब्रवीत् ॥ १
"महेन्द्रहिमवद्विन्ध्यकैलासशिखरेषु च ।
मन्दरे पाण्डुशिखरे पञ्चशैलेषु ये स्थिताः ॥ २
तरुणादित्यवर्णेषु भ्राजमानेषु सर्वतः ।
पर्वतेषु समुद्रान्ते पश्चिमायां च ये दिशि ॥ ३
आदित्यभवने चैव गिरौ सन्ध्याभ्रसन्निभे ।
पद्मताळवनं भीमं संश्रिता हरिपुङ्गवाः ॥ ४

अञ्जनाम्बुदसंकाशाः कुञ्जरप्रतिमौजसः ।
अञ्जने पर्वते चैव ये वसन्ति प्लवङ्गमाः । ५

मनश्शिलागुहावासा वानराः कनकप्रभाः ।
मेरुपार्श्वगताश्चैव ये धूम्रगिरिसंश्रिताः ॥ ६

तरुणादित्यवर्णाश्च पर्वते च महारुणे ।
पिबन्तो मधु मैरेयं भीमवेगाः प्लवङ्गमाः ॥ ७

वनेषु च सुरम्येषु सुगन्धिषु महत्सु च ।
तापसानां च रम्येषु वनान्तेषु समन्ततः ॥ ८

तांस्तांस्समानय क्षिप्रं पृथिव्यां सर्ववानरान् ।
सामदानादिभिस्सर्वैराशु प्रेषय वानरान् ॥ ९

प्रेषिताः प्रथमं ये च मया दूता महाजवाः ।
त्वरणार्थं तु भूयस्त्वं हरींस्संप्रेषयापरान् ॥ १०

ये प्रसक्ताश्च कामेषु दीर्घसूत्राश्च वानराः ।
इहानयस्व तांत्सर्वान् शीघ्रं तु मम शासनात् ॥ ११

अहोभिर्दशभिर्ये च नागच्छन्ति ममाज्ञया ।
हन्तव्यास्ते दुरात्मानो राजशासनदूषकाः ॥ १२

शतान्यथ सहस्राणां कोट्यश्च मम शासनात् ।
प्रयान्तु कपिसिंहानां दिशो मम मते स्थिताः ॥ १३

मेघपर्वतसंकाशाश्छादयन्त इवाम्बरम् ।
घोररूपाः कपिश्रेष्ठा यान्तु मच्छासनादितः ॥ १४

ते गतिज्ञा गतिं ज्ञात्वा पृथिव्यां सर्ववानराः ।
आनयन्तु हरींत्सर्वांस्त्वरिताश्शासनान्मम ॥" १५

तस्य वानरराजस्य श्रुत्वा वायुसुतो वचः ।
दिक्षु सर्वासु विक्रान्तान्प्रेषयामास वानरान् ॥ १६

ते पदं विष्णुविक्रान्तं पतत्रिज्योतिरध्वगाः ।
प्रयाताः प्रहिता राज्ञा हरयस्तत्क्षणेन वै ॥ १७

ते समुद्रेषु गिरिषु वनेषु च सरस्सु च ।
वानरा वानरांत्सर्वान्रामहेतोरचोदयन् ॥ १८

मृत्युकालोपमस्याज्ञां राजराजस्य वानराः ।
सुग्रीवस्याऽऽययुश्श्रुत्वा सुग्रीवभयदर्शिनः ॥ १९

ततस्तेऽञ्जनसंकाशा गिरेस्तस्मान्महाजवाः ।
तिस्रः कोट्यः प्लवङ्गानां निर्ययुर्यत्र राघवः ॥ २०

अस्तं गच्छति यत्रार्कस्तस्मिन्गिरिवरे स्थिताः ।
तप्तहेममहाभासस्तस्मात्कोट्यो दश च्युताः ॥ २१

कैलासशिखरेभ्यश्च सिंहकेसरवर्चसाम् ।
ततः कोटिसहस्राणि वानराणामुपागमन् ॥ २२

फलमूलेन जीवन्तो हिमवन्तमुपाश्रिताः ।
तेषां कोटिसहस्राणां सहस्रं समवर्तत ॥ २३

अङ्गारकसमानानां भीमानां भीमकर्मणाम् ।
विन्ध्याद्वानरकोटीनां सहस्राण्यपतन्द्रुतम् ॥ २४

क्षीरोदवेलानिलयास्तमालवनवासिनः ।
नारिकेळाशनाश्चैव तेषां संख्या न विद्यते ॥ २५

वनेभ्यो गह्वरेभ्यश्च सरिद्भ्यश्च महाजवा ।
आगच्छद्वानरी सेना पिबन्तीव दिवाकरम् ॥ २६

ये तु त्वरयितुं याता वानरास्सर्ववानरान् ।
ते वीरा हिमवच्छैलं ददृशुस्तं महाद्रुमम् ॥ २७
तस्मिन्गिरिवरे रम्ये यज्ञो माहेश्वरः पुरा ।
सर्वदेवमनस्तोषो बभौ दिव्यो मनोहरः ॥ २८
अन्ननिष्यन्दजातानि मूलानि च फलानि च ।
अमृतास्वादकल्पानि ददृशुस्तत्र वानराः ॥ २९
तदन्नसंभवं दिव्यं फलं मूलं मनोहरम् ।
यः कश्चित्सकृदश्नाति मासं भवति तर्पितः ॥ ३०
तानि मूलानि दिव्यानि फलानि च फलाशनाः ।
औषधानि च दिव्यानि जगृहुर्हरियूथपाः ॥ ३१
तस्माच्च यज्ञायतनात्पुष्पाणि सुरभीणि च ।
आनिन्युर्वानरा गत्वा सुग्रीवप्रियकारणात् ॥ ३२
ते तु सर्वे हरिवराः पृथिव्यां सर्ववानरान् ।
स चोदयित्वा त्वरिता यूथानां जग्मुरग्रतः ॥ ३३
ते तु तेन मुहूर्तेन यूथपाश्शीघ्रगामिनः ।
किष्किन्धां त्वरया प्राप्तास्सुग्रीवो यत्र वानरः ॥ ३४
ते गृहीत्वौषधीस्सर्वाः फलं मूलं च वानराः ।
"तं प्रतिग्राहयामासुर्वचनं चेदमब्रुवन् ॥ ३५
सर्वे परिगताश्शैलास्समुद्राश्च वनानि च ।
पृथिव्यां वानरास्सर्वे शासनादुपयान्ति ते ॥" ३६
एवं श्रुत्वा ततो हृष्टस्सुग्रीवः प्लवगाधिपः ।
प्रतिजग्राह तत्प्रीतस्तेषां सर्वमुपायनम् ॥ ३७

इति श्रीमत्किष्किन्धाकाण्डे सप्तत्रिंशस्सर्गः ॥

---

## ॥ अष्टत्रिंशस्सर्गः ॥

प्रतिगृह्य च तत्सर्वमुपायनमुपाहृतम् ।
वानरांत्सान्त्वयित्वा च सर्वानेव व्यसर्जयत् ॥ १

विसर्जयित्वा स हरीन् शूरांस्तान्कृतकर्मणः ।
मेने कृतार्थमात्मानं राघवं च महाबलम् ॥ २

स लक्ष्मणो भीमबलं सर्ववानरसत्तमम् ।
अब्रवीत्प्रश्रितं वाक्यं सुग्रीवं संप्रहर्षयन् ॥ ३

किष्किन्धाया विनिष्क्राम यदि ते सौम्य! रोचते ।"
तस्य तद्वचनं श्रुत्वा लक्ष्मणस्य सुभाषितम् ॥ ४

सुग्रीवः परमप्रीतो वाक्यमेतदुवाच ह ।
"एवं भवतु गच्छावः स्थेयं त्वच्छासने मया॥" ५

तमेवमुक्त्वा सुग्रीवो लक्ष्मणं शुभलक्षणम् ।
विसर्जयामास तदा तारामन्याश्च योषितः ॥ ६

एतेत्युच्चैर्हरिवरान्सुग्रीवस्समुदाहरत् ।
तस्य तद्वचनं श्रुत्वा हरयश्शीघ्रमाययुः ॥ ७

बद्धाञ्जलिपुटास्सर्वे ये स्युः स्त्रीदर्शनक्षमाः ।
तानुवाच ततः प्राप्तान्राजाऽर्कसदृशप्रभः ॥ ८

"उपस्थापयत क्षिप्रं शिबिकां मम वानराः ।"
श्रुत्वा तु वचनं तस्य हरयश्शीघ्रविक्रमाः ॥ ९

समुपस्थापयामासुश्शिबिकां प्रियदर्शनाम् ।
तामुपस्थापितां दृष्ट्वा शिबिकां वानराधिपः ॥ १०

'लक्ष्मणा! ऽरुह्यतां शीघ्र' मिति सौमित्रिमब्रवीत्।
इत्युक्त्वा काञ्चनं यानं सुग्रीवस्सूर्यसन्निभम् ॥ ११
बृहद्भिर्हरिभिर्युक्तमारुरोह सलक्ष्मणः।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ १२
शुक्लैश्च वालव्यजनैर्धूयमानैस्समन्ततः।
शङ्खभेरीनिनादैश्च हरिभिश्चाभिनन्दितः ॥ १३
निर्ययौ प्राप्य सुग्रीवो राज्यश्रियमनुत्तमाम्।
सवानरशतैस्तीक्ष्णैर्बहुभिश्शस्त्रपाणिभिः ॥ १४
परिकीर्णो ययौ तत्र यत्र रामो व्यवस्थितः।
स तं देशमनुप्राप्य श्रेष्ठं रामनिषेवितम् ॥ १५
अवातरन्महातेजाश्शिबिकायास्सलक्ष्मणः।
आसाद्य च ततो रामं कृताञ्जलिपुटोऽभवत् ॥ १६
कृताञ्जलौ स्थिते तस्मिन्वानराश्चाभवंस्तथा।
[उद्धृताञ्जलिपद्मास्ते सुग्रीवस्य समन्ततः ॥] १७
तटाकमिव तद्दृष्ट्वा रामः कुट्मलपङ्कजम्।
वानराणां महत्सैन्यं सुग्रीवे प्रीतिमानभूत् ॥ १८
पादयोः पतितं मूर्ध्ना तमुत्थाप्य हरीश्वरम्।
प्रेम्णा च बहुमानाच्च राघवः परिषस्वजे ॥ १९
परिष्वज्य च धर्मात्मा निषीदेति ततोऽब्रवीत्।
तं निषण्णं ततो दृष्ट्वा क्षितौ रामोऽब्रवीद्वचः ॥ २०
''धर्ममर्थं च कामं च यस्तु काले निषेवते।
विभज्य सततं वीर! स राजा हरिसत्तम! ॥ २१

हित्वा धर्मं तथार्थं च कामं यस्तु निषेवते ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥ २२

अमित्राणां वधे युक्तो मित्राणां संग्रहे रतः ।
त्रिवर्गफलभोक्ता तु राजा धर्मेण युज्यते ॥ २३

उद्योगसमयस्त्वेष प्राप्तश्शत्रुविनाशन ! ।
संचिन्त्यतां हि पिङ्गेश ! हरिभिस्सह मन्त्रिभिः ॥" २४

एवमुक्तस्तु सुग्रीवो रामं वचनमब्रवीत् ।
"प्रणष्टा श्रीश्च कीर्तिश्च कपिराज्यं च शाश्वतम् ॥ २५

त्वत्प्रसादान्महाबाहो ! पुनः प्राप्तमिदं मया ।
तव देव ! प्रसादाच्च भ्रातुश्च जयतां वर ! ॥ २६

कृतं न प्रतिकुर्याद्यः पुरुषाणां स दूषकः ।
एते वानरमुख्याश्च शतशश्शत्रुसूदन ! ॥ २७

प्राप्ताश्चादाय बलिनः पृथिव्यां सर्ववानरान् ।
ऋक्षाश्चावहितारशूरा गोलाङ्गूलाश्च राघव ! ॥ २८

कान्तारवनदुर्गाणामभिज्ञा घोरदर्शनाः ।
देवगन्धर्वपुत्राश्च वानराः कामरूपिणः ॥ २९

स्वैस्स्वैः परिवृतास्सैन्यैर्वर्तन्ते पथि राघव ! ।
शतैश्शतसहस्रैश्च कोटिभिश्च प्लवङ्गमाः ॥ ३०

अयुतैश्चावृता वीराश्शङ्कुभिश्च परन्तप ! ।
अर्बुदैरर्बुदशतैर्मध्यैश्चान्तैश्च वानराः ॥ ३१

समुद्रैश्च परार्धैश्च हरयो हरियूथपाः ।
आगमिष्यन्ति ते राजन् ! महेन्द्रसमविक्रमाः ॥ ३२

मेरुमन्दरसंकाशा विन्ध्यमेरुकृतालयाः ।
ते त्वामभिगमिष्यन्ति राक्षसं ये सबान्धवम् ॥ ३३
निहत्य रावणं संख्ये ह्यानयिष्यन्ति मैथिलीम् ।"
ततस्समुद्योगमवेक्ष्य बुद्धिमान्हरिप्रवीरस्य निदेशवर्तिनः ।
बभूव हर्षाद्वसुधाधिपात्मजः प्रबुद्धनीलोत्पलतुल्यदर्शनः ॥ ३४

इति श्रीमत्किष्किन्धाकाण्डे अष्टत्रिंशस्सर्गः ॥

---

## ॥ एकोनचत्वारिंशस्सर्गः ॥

इति ब्रुवाणं सुग्रीवं रामो धर्मभृतां वरः ।
बाहुभ्यां संपरिष्वज्य प्रत्युवाच कृताञ्जलिम् ॥ १
"यदिन्द्रो वर्षते वर्षं न तच्चित्रं भवेत्क्वचित् ।
आदित्यो वा सहस्रांशुः कुर्याद्वितिमिरं नभः ॥ २
चन्द्रमा रश्मिभिः कुर्यात्पृथिवीं सौम्य! निर्मलाम् ।
त्वद्विधो वाऽपि मित्राणां प्रतिकुर्यात्परन्तप! ॥ ३
एवं त्वयि न तच्चित्रं भवेद्यत्सौम्य! शोभनम् ।
जानाम्यहं त्वां सुग्रीव! सततं प्रियवादिनम् ॥ ४
त्वत्सनाथस्सखे! संख्ये जेताऽस्मि सकलानरीन् ।
त्वमेव मे सुहृन्मित्रं साहाय्यं कर्तुमर्हसि ॥ ५
जहाराऽऽत्मविनाशाय वैदेहीं राक्षसाधमः ।
वञ्चयित्वा तु पौलोमीमनुह्लादो यथा शचीम् ॥ ६
न चिरात्तं हनिष्यामि रावणं निशितैश्शरैः ।
पौलोम्याः पितरं दृप्तं शतक्रतुरिवाऽऽहवे ॥ ७

एतस्मिन्नन्तरे चैव रजस्समभिवर्तत ।
उष्णां तीव्रां सहस्रांशोश्छादयद्गगने प्रभाम् ॥ ८

दिशः पर्याकुलाश्चासन्रजसा तेन मूर्छिता ।
चचाल च मही सर्वा सशैलवनकानना ॥ ९

ततो नगेन्द्रसंकाशैस्तीक्ष्णदंष्ट्रैर्महाबलैः ॥
कृत्स्ना संछादिता भूमिरसंख्येयैः प्लवङ्गमैः ॥ १०

निमेषान्तरमात्रेण ततस्तैर्हरियूथपैः ।
कोटीशतपरीवारैः कामरूपिभिरावृता ॥ ११

नादेयैः पार्वतीयैश्च सामुद्रैश्च महाबलैः ।
हरिभिर्मेघनिर्ह्रादैरन्यैश्च वनचारिभिः ॥ १२

तरुणादित्यवर्णैश्च शशिगौरैश्च वानरैः ।
पद्मकेसरवर्णैश्च श्वेतैर्मेरुकृतालयैः ॥ १३

कोटीसहस्रैर्दशभिः श्रीमान्परिवृतस्तदा ।
वीरश्शतवलिर्नाम वानरः प्रत्यदृश्यत ॥ १४

ततः काञ्चनशैलाभस्ताराया वीर्यवान्पिता ।
अनेकैर्दशसाहस्रैः कोटिभिः प्रत्यदृश्यत ॥ १५

तथा परेण कोटीनां सहस्रेण समन्वितः ।
पिता रुमायास्संप्राप्तस्सुग्रीवो श्वशुरो विभुः ॥ १६

पद्मकेसरसंकाशस्तरुणार्कनिभाननः ।
बुद्धिमान्वानरश्रेष्ठस्सर्ववानरसत्तमः ॥ १७

अनीकैर्बहुसाहस्रैर्वानराणां समन्वितः ।
पिता हनुमतश्श्रीमान्केसरी प्रत्यदृश्यत ॥ १८

गोलाङ्गूलमहाराजो गवाक्षो भीमविक्रमः ।
वृतः कोटिसहस्रेण वानराणामदृश्यत ॥ १९

ऋक्षाणां भीमवेगानां धूम्रश्शत्रुनिबर्हणः ।
वृतः कोटिसहस्राभ्यां द्वाभ्यां समभिवर्तत ॥ २०

महाचलनिभैर्घोरैः पनसो नाम यूथपः ।
आजगाम महावीर्यस्तिसृभिः कोटिभिर्वृतः ॥ २१

नीलाञ्जनचयाकारो नीलो नामाऽथ यूथपः ।
अदृश्यत महाकायः कोटिभिर्दशभिर्वृतः ॥ २२

ततः काञ्चनशैलाभो गवयो नाम यूथपः ।
आजगाम महावीर्यः पञ्चभिः कोटिभिर्वृतः ॥ २३

दरीमुखश्च बलवान्यूथपोऽभ्याययौ तदा ।
वृतः कोटिसहस्रेण सुग्रीवं समुपस्थितः ॥ २४

मैन्दश्च द्विविदश्चोभावश्विपुत्रौ महाबलौ ।
कोटिकोटिसहस्रेण वानराणामदृश्यताम् ॥ २५

गजश्च बलवान्वीरः कोटिभिस्तिसृभिर्वृतः ।
आजगाम महातेजास्सुग्रीवस्य समीपतः ।
ऋक्षराजो महातेजा जाम्बवान्नाम नामतः ॥ २६

कोटिभिर्दशभिः प्राप्तस्सुग्रीवस्य वशे स्थितः ।
रुमण्वान्नाम विक्रान्तो वानरो वानरेश्वरम् ॥ २७

आययौ बलवांस्तूर्णं कोटीशतसमावृतः ।
ततः कोटिसहस्राणां सहस्रेण शतेन च ॥ २८

पृष्ठतोऽनुगतः प्राप्तो हरिभिर्गन्धमादनः ।
ततः पद्मसहस्रेण वृतश्शङ्कुशतेन च ॥ २९

युवराजोऽङ्गदः प्राप्तः पितृतुल्यपराक्रमः ।
ततस्ताराद्युतिस्तारो हरिर्भीमपराक्रमः ॥ ३०

पञ्चभिर्हरिकोटीभिर्दूरतः प्रत्यदृश्यत ।
इन्द्रजानुः कपिर्वीरो यूथपः प्रत्यदृश्यत ॥ ३१

एकादशानां कोटीनामीश्वरस्तैस्समावृतः ।
ततो रम्भस्त्वनुप्राप्तस्तरुणादित्यसन्निभः ॥ ३२

अयुतेनावृतश्चैव सहस्रेण शतेन च ।
ततो यूथपतिर्वीरो दुर्मुखो नाम वानरः ॥ ३३

प्रत्यदृश्यत कोटीभ्यां द्वाभ्यां परिवृतो बली ।
कैलासशिखराकारैर्वानरैर्भीमविक्रमैः ॥ ३४

वृतः कोटीसहस्रेण हनूमान्प्रत्यदृश्यत ।
नळश्चापि महावीर्यस्संवृतो द्रुमवासिभिः ॥ ३५

कोटीशतेन संप्राप्तस्सहस्रेण शतेन च ।
ततो दधिमुखश्श्रीमान्कोटिभिर्दशभिर्वृतः ॥ ३६

संप्राप्तोऽभिमतस्तस्य सुग्रीवस्य महात्मनः ।
शरभः कुमुदो वह्निर्वानरो रंह एव च ॥ ३७

एते चान्ये च बहवो वानराः कामरूपिणः ।
आवृत्य पृथिवीं सर्वां पर्वतांश्च वनानि च ॥ ३८

यूथपास्समनुप्राप्तास्तेषां संख्या न विद्यते ।
आगताश्च विशिष्टाश्च पृथिव्या सर्ववानराः ॥ ३९

आप्लुवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यवर्तन्त सुग्रीवं सूर्यमभ्रगणा इव ॥ ४०
कुर्वाणा बहुशब्दांश्च प्रहृष्टा बाहुशालिनः ।
शिरोभिर्वानरेन्द्राय सुग्रीवाय न्यवेदयन् ॥ ४१
अपरे वानरश्रेष्ठास्संयम्य च यथोचितम् ।
सुग्रीवेण समागम्य स्थिताः प्राञ्जलयस्तदा ॥ ४२
सुग्रीवस्त्वरितो रामे सर्वांस्तान्वानरर्षभान् ।
निवेदयित्वा धर्मज्ञः स्थितः प्राञ्जलिरब्रवीत् ॥ ४३
" यथासुखं पर्वतनिर्झरेषु वनेषु सर्वेषु च वानरेन्द्राः ।
निवेशयित्वा विधिवद्बलानि बलं बलज्ञः प्रतिपत्तुमीष्टे ॥" ४४

इति श्रीमत्किष्किन्धाकाण्डे एकोनचत्वारिंशस्सर्गः ॥

---

## ॥ चत्वारिंशस्सर्गः ॥

अथ राजा समृद्धार्थस्सुग्रीवः प्लवगेश्वरः ।
उवाच नरशार्दूलं रामं परबलार्दनम् ॥ १
" आगता विनिविष्टाश्च बलिनः कामरूपिणः ।
वानरा वारणेन्द्राभा ये मद्विषयवासिनः ॥ २
त इमे बहुविक्रान्तैर्हरिभिर्भीमविक्रमैः ।
आगता वानरा घोरा दैत्यदानवसन्निभाः ॥ ३
ख्यातकर्मापदानाश्च बलवन्तो जितक्लमाः ।
पराक्रमेषु विख्याता व्यवसायेषु चोत्तमाः ॥ ४

पृथिव्यम्बुचरा राम! नानानगनिवासिनः ।
कोटद्यग्रश इमे प्राप्ता वानरास्तव किंकिराः ॥ ५

निदेशवर्तिनस्सर्वे सर्वे गुरुहिते रताः ।
अभिप्रेतमनुज्ञातुं तव शक्ष्यन्त्यरिन्दम! ॥ ६

त इमे बहुसाहस्रैरनीकैर्भीमविक्रमैः ।
यन्मन्यसे नरव्याघ्र! प्राप्तकालं तदुच्यताम् ॥ ७

त्वत्सैन्यं त्वद्वशे युक्तमाज्ञापयितुमर्हसि ।
काममेषामिदं कार्यं विदितं मम तत्त्वतः ॥ ८

तथापि तु यथातत्त्वमाज्ञापयितुमर्हसि ॥"
इति ब्रुवाणं सुग्रीवं रामो दशरथात्मजः ॥ ९

बाहुभ्यां संपरिष्वज्य इदं वचनमब्रवीत् ।
"ज्ञायतां मम वैदेही यदि जीवति वा नवा ॥ १०

स च देशो महाप्राज्ञ! यस्मिन्वसति रावणः ।
अधिगम्य तु वैदेहीं निलयं रावणस्य च ॥ ११

प्राप्तकालं विधास्यामि तस्मिन्काले सह त्वया ।
नाहमस्मिन् प्रभुः कार्ये वानरेश! न लक्ष्मणः ॥ १२

त्वमस्य हेतुः कार्यस्य प्रभुश्च प्लवगेश्वर! ।
त्वमेवाऽऽज्ञापय विभो! मम कार्यविनिश्चयम् ॥ १३

त्वं हि जानासि यत्कार्यं मम वीर! न संशयः ।
सुहृद्द्वितीयो विक्रान्तः प्राज्ञः कालविशेषवित् ॥ १४

भवानस्मद्धिते युक्तस्सुकृतार्थोऽर्थवित्तमः ।"
एवमुक्तस्तु सुग्रीवो विनतं नाम यूथपम् ॥ १५

अब्रवीद्रामसांनिध्ये लक्ष्मणस्य च धीमतः ।
शैलाभं मेघनिर्घोषमूर्जितं प्लवगेश्वरः ॥ १६

सोमसूर्यात्मजैस्सार्धं वानरैर्वानरोत्तम ! ।
देशकालनयैर्युक्तः कार्याकार्यविनिश्चये ॥ १७

वृतश्शतसहस्रेण वानराणां तरस्विनाम् ।
अधिगच्छ दिशं पूर्वां सशैलवनकाननाम् ॥ १८

तत्र सीतां च वैदेहीं निलयं रावणस्य च ।
मार्गध्वं गिरिशृङ्गेषु वनेषु च नदीषु च ॥ १९

नदीं भागीरथीं रम्यां सरयूं कौशिकीं तथा ।
कालिन्दीं यमुनां रम्यां यामुनं च महागिरिम् ॥ २०

सरस्वतीं च सिन्धुं च शोणं मणिनिभोदकम् ।
महीं कालमहीं चैव शैलकाननशोभिताम् ॥ २१

ब्रह्ममालान्विदेहांश्च माळवान्काशिकोसलान् ।
मागधांश्च महाग्रामान्पुण्ड्रान्वङ्गांस्तथैव च ॥ २२

पत्तनं कोशकाराणां भूमिं च रजताकराम् ।
सर्वमेतद्विचेतव्यं मृगयद्भिस्ततस्ततः ॥ २३

रामस्य दयितां भार्यां सीतां दशरथस्नुषाम् ।
समुद्रमवगाढांश्च पर्वतान्पत्तनानि च ॥ २४

मन्दरस्य च ये कोटिं संश्रिताः केचिदायताम् ।
कर्णप्रावरणाश्चैव तथा चाप्योष्ठकर्णकाः ॥ २५

घोरा लोहमुखाश्चैव जवनाश्चैकपादकाः ।
अक्षया बलवन्तश्च पुरुषाः पुरुषादकाः ॥ २६

किराताः कर्णचूडाश्च हेमाङ्गाः प्रियदर्शनाः ।
आममीनाशनास्तत्र किराता द्वीपवासिनः ॥ २७
अन्तर्जलचरा घोरा नरव्याघ्रा इति श्रुताः ।
एतेषामालयास्सर्वे विचेयाः काननौकसः ॥ २८
गिरिभिर्ये च गम्यन्ते प्लवनेन प्लवेन च ।
रत्नवन्तं यवद्वीपं सप्तराज्योपशोभितम् ॥ २९
सुवर्णरूप्यकं चैव सुवर्णाकरमण्डितम् ।
यवद्वीपमतिक्रम्य शिशिरो नाम पर्वतः ॥ ३०
दिवं स्पृशति शृङ्गेण देवदानवसेवितः ।
एतेषां गिरिदुर्गेषु प्रपातेषु वनेषु च ॥ ३१
मार्गध्वं सहितास्सर्वे रामपत्नीं यशस्विनीम् ।
ततो रक्तजलं शोणमगाधं शीघ्रगामिनम् ॥ ३२
गत्वा पारं समुद्रस्य सिद्धचारणसेवितम् ।
तस्य तीर्थेषु रम्येषु विचित्रेषु वनेषु च ॥ ३३
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ।
पर्वतप्रभवा नद्यस्सुरम्या बहुनिष्कुटाः ॥ ३४
मार्गितव्या दरीमन्तः पर्वताश्च वनानि च ।
ततस्समुद्रद्वीपांश्च सुभीमान्द्रष्टुमर्हथ ॥ ३५
ऊर्मिमन्तं समुद्रं च क्रोशन्तमनिलोद्धतम् ।
तत्रासुरा महाकायाश्छायां गृह्णन्ति नित्यशः ॥ ३६
ब्रह्मणा समनुज्ञाता दीर्घकालं बुभुक्षिताः ।
तं कालमेघप्रतिमं महोरगनिषेवितम् ॥ ३७

अभिगम्य महानादं तीर्थेनैव महोदधिम् ।
ततो रक्तजलं भीमं लोहितं नाम सागरम् ॥ ३८

गता द्रक्ष्यथ तां चैव बृहतीं कूटशाल्मलीम् ।
गृहं च वैनतेयस्य नानारत्नविभूषितम् ॥ ३९

तत्र कैलाससंकाशं विहितं विश्वकर्मणा ।
तत्र शैलनिभा भीमा मन्देहा नाम राक्षसाः ॥ ४०

शैलशृङ्गेषु लम्बन्ते नानारूपा भयावहाः ।
ते पतन्ति जले नित्यं सूर्यस्योदयनं प्रति ॥ ४१

निहता ब्रह्मतेजोभिरहन्यहनि राक्षसाः ।
अभितप्ताश्च सूर्येण लम्बन्ते स्म पुनःपुनः ॥ ४२

ततः पाण्डुरमेघाभं क्षीरोदं नाम सागरम् ।
गता द्रक्ष्यथ दुर्धर्षा मुक्ताहारमिवोर्मिभिः ॥ ४३

तस्य मध्ये महान् श्वेत ऋषभो नाम पर्वतः ।
दिव्यगन्धैः कुसुमितै राजतैश्च नगैर्वृतः ॥ ४४

सरश्च राजतैः पद्मैर्ज्वलितैर्हेमकेसरैः ।
नाम्ना सुदर्शनं नाम राजहंसैस्समाकुलम् ॥ ४५

विबुधाश्चारणा यक्षाः किन्नरास्साप्सरोगणाः ।
हृष्टास्समभिगच्छन्ति नलिनीं तां रिरंसवः ॥ ४६

क्षीरोदं समतिक्रम्य ततो द्रक्ष्यथ वानराः ! ।
जलोदं सागरश्रेष्ठं सर्वभूतभयावहम् ॥ ४७

तत्र तत्कोपजं तेजः कृतं हयमुखं महत् ।
अस्याहुस्तन्महावेगमोदनं सचराचरम् ॥ ४८

तत्र विक्रोशतां नादो भूतानां सागरौकसाम् ।
श्रूयते च समर्थानां दृष्ट्वा तद्वडबामुखम् ॥ ४९

स्वादूदस्योत्तरे देशे योजनानि त्रयोदश ।
जातरूपशिलो नाम महान्कनकपर्वतः ॥ ५०

तत्र चन्द्रप्रतीकाशं पन्नगं धरणीधरम् ।
पद्मपत्रविशालाक्षं ततो द्रक्ष्यथ वानराः ! ॥ ५१

आसीनं पर्वतस्याग्रे सर्वभूतनमस्कृतम् ।
सहस्रशिरसं देवमनन्तं नीलवाससम् ॥ ५२

त्रिशिराः काञ्चनः केतुस्तालस्तस्य महात्मनः ।
स्थापितः पर्वतस्याग्रे विराजति सवेदिकः ॥ ५३

पूर्वस्यां दिशि निर्माणं कृतं तत्त्रिदशेश्वरैः ।
ततः परं हेममयश्श्रीमानुदयपर्वतः ॥ ५४

तस्य कोटिर्दिवं स्पृष्ट्वा शतयोजनमायता ।
जातरूपमयी दिव्या विराजति सवेदिका ॥ ५५

सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ।
जातरूपमयैर्दिव्यैश्शोभते सूर्यसन्निभैः ॥ ५६

तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ।
शृङ्गं सौमनसं नाम जातरूपमयं ध्रुवम् ॥ ५७

तत्र पूर्वं पदं कृत्वा पुरा विष्णुस्त्रिविक्रमे ।
द्वितीयं शिखरे मेरोश्चकार पुरुषोत्तमः ॥ ५८

उत्तरेण परिक्रम्य जम्बूद्वीपं दिवाकरः ।
दृश्यो भवति भूयिष्ठं शिखरं तन्महोच्छ्रयम् ॥ ५९

तत्र वैखानसा नाम वालखिल्या महर्षयः।
प्रकाशमाना दृश्यन्ते सूर्यवर्णास्तपस्विनः ॥ ६०

अयं सुदर्शनो द्वीपः पुरो यस्य प्रकाशते।
यस्मिंस्तेजश्च चक्षुश्च सर्वप्राणभृतामपि ॥ ६१

शैलस्य तस्य शृङ्गेषु कन्दरेषु वनेषु च।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६२

काञ्चनस्य च शैलस्य सूर्यस्य च महात्मनः।
आविष्टा तेजसा संध्या पूर्वारक्ता प्रकाशते ॥ ६३

पूर्वमेतत्कृतं द्वारं पृथिव्या भुवनस्य च।
सूर्यस्योदयनं चैव पूर्वा ह्येषा दिगुच्यते ॥ ६४

तस्य शैलस्य पृष्ठेषु निर्झरेषु गुहासु च।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ६५

ततः परमगम्या स्यादिक्पूर्वा त्रिदशावृता।
रहिता चन्द्रसूर्याभ्यामदृश्या तिमिरावृता ॥ ६६

शैलेषु तेषु सर्वेषु कन्दरेषु वनेषु च।
ये च नोक्ता मया देशा विचेया तेषु जानकी ॥ ६७

एतावद्वानरैश्शक्यं गन्तुं वानरपुङ्गवाः!।
अभास्करममर्यादं न जानीमस्ततः परम् ॥ ६८

अधिगम्य तु वैदेहीं निलयं रावणस्य च।
मासे पूर्णे निवर्तध्वमुदयं प्राप्य पर्वतम् ॥ ६९

ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम।
सिद्धार्थास्सन्निवर्तध्वमधिगम्य तु मैथिलीम् ॥ ७०

महेन्द्रकान्तां वनषण्डमण्डितां दिशं चरित्वा निपुणेन वानराः ! ।
अवाप्य सीतां रघुवंशजप्रियां ततो निवृत्तास्सुखिनो भविष्यथ ॥

इति श्रीमत्किष्किन्धाकाण्डे चत्वारिंशस्सर्गः ॥

---

## ॥ एकचत्वारिंशस्सर्गः ॥

ततः प्रस्थाप्य सुग्रीवस्तन्महद्वानरं बलम् ।
दक्षिणां प्रेषयामास वानरानभिलक्षितान् ॥ १

नीलमग्निसुतं चैव हनूमन्तं च वानरम् ।
पितामहसुतं चैव जाम्बवन्तं महाबलम् ॥ २

सुहोत्रं च शरारिं च शरगुल्मं तथैव च ।
गजं गवाक्षं गवयं सुषेणमृषभं तथा ॥ ३

मैन्दं च द्विविदं चैव विजयं गन्धमादनम् ।
उल्कामुखमसङ्गं च हुताशनसुतावुभौ ॥ ४

अङ्गदप्रमुखान्वीरान्वीरः कपिगणेश्वरः ।
वेगविक्रमसंपन्नान्संदिदेश विशेषवित् ॥ ५

तेषामग्रेसरं चैव महद्बलमसङ्गगम् ।
विधाय हरिवीराणामादिशद्दक्षिणां दिशम् ॥ ६

ये केचन समुद्देशास्तस्यां दिशि सुदुर्गमाः ।
कपीशः कपिमुख्यानां स तेषां तानुदाहरत् ॥ ७

" सहस्रशिरसं विन्ध्यं नानाद्रुमलतायुतम् ।
नर्मदां च नदीं दुर्गां महोरगनिषेविताम् ॥ ८

ततो गोदावरीं रम्यां कृष्णवेणीं महानदीम् ।
वरदां च महाभागां महोरगनिषेविताम् ॥ ९

मेखलामुत्कलां चैव दशार्णनगराण्यपि ।
अश्ववन्तीमवन्तीं च सर्वमेवानुपश्यत ॥ १०

विदर्भानृषिकांश्चैव रम्यान्माहिषकानपि ।
तथा वङ्गान् कलिङ्गांश्च कौशिकांश्च समन्ततः ॥ ११

अन्वीक्ष्य दण्डकारण्यं सपर्वतनदीगुहम् ।
नदीं गोदावरीं चैव सर्वमेवानुपश्यत ॥ १२

तथैवान्ध्रांश्च पुण्ड्रांश्च चोळान्पाण्ड्यांत्सकेरळान् ।
अयोमुखश्च गन्तव्यः पर्वतो धातुमण्डितः ॥ १३

विचित्रशिखरश्श्रीमांश्चित्रपुष्पितकाननः ।
सचन्दनवनोद्देशो मार्गितव्यो महागिरिः ॥ १४

ततस्तामापगां दिव्यां प्रसन्नसलिलां शिवाम् ।
तत्र द्रक्ष्यथ कावेरीं विहितामप्सरोगणैः ॥ १५

तस्यासीनं नगस्याग्रे मलयस्य महौजसम् ।
द्रक्ष्यथादित्यसंकाशमगस्त्यमृषिसत्तमम् ॥ १६

ततस्तेनाभ्यनुज्ञाताः प्रसन्नेन महात्मना ।
ताम्रपर्णीं ग्राहजुष्टां तरिष्यथ महानदीम् ॥ १७

सा चन्दनवनैर्दिव्यैः प्रछन्ना द्वीपशालिनी ।
कान्तेव युवतिः कान्तं समुद्रमवगाहते ॥ १८

ततो हेममयं दिव्यं मुक्तामणिविभूषितम् ।
युक्तं कवाटं पाण्ड्यानां गता द्रक्ष्यथ वानराः ! ॥ १९

ततस्समुद्रमासाद्य सम्प्रधार्यार्थनिश्चयम् ।
अगस्त्येनान्तरे तत्र सागरे विनिवेशितः ॥ २०

चित्रनानानगश्श्रीमान्महेन्द्रः पर्वतोत्तमः ।
जातरूपमयश्श्रीमानवगाढो महार्णवम् ॥ २१

नानाविधैर्नगैस्सर्वैर्लताभिश्चोपशोभितम् ।
देवर्षियक्षप्रवरैरप्सरोभिश्च सेवितम् ॥ २२

सिद्धचारणसंघैश्च प्रकीर्णं सुमनोहरम् ।
तमुपैति सहस्राक्षस्सदा पर्वसु पर्वसु ॥ २३

द्वीपस्तस्यापरे पारे शतयोजनमायतः ।
अगम्यो मानुषैर्दीप्तस्तं मार्गध्वं समन्ततः ॥ २४

तत्र सर्वात्मना सीता मार्गितव्या विशेषतः ।
स हि देशस्तु वध्यस्य रावणस्य दुरात्मनः ॥ २५

राक्षसाधिपतेर्वासस्सहस्राक्षसमद्युतेः ।
दक्षिणस्य समुद्रस्य मध्ये तस्य तु राक्षसी ॥ २६

अङ्गारकेति विख्याता छायामाकृष्य भोजिनी ।
एष निस्संशयान्कृत्वा संशयान्नष्टसंशयाः ॥ २७

मृगयध्वं नरेन्द्रस्य पत्नीममिततेजसः ।
तमतिक्रम्य लक्ष्मीवांस्समुद्रे शतयोजने ॥ २८

गिरिः पुष्पितको नाम सिद्धचारणसेवितः ।
चन्द्रसूर्यांशुसंकाशस्सागराम्बुसमावृतः ॥ २९

भ्राजते विपुलैश्शृङ्गैरम्बरं विलिखन्निव ।
तस्यैकं काञ्चनं शृङ्गं सेवतेऽयं निशाकरः ॥ ३०

श्वेतं राजतमेकं च सेवतेऽयं दिवाकरः ।
न तं कृतघ्नाः पश्यन्ति न नृशंसा न नास्तिकाः ॥ ३१

प्रणम्य शिरसा शैलं तं विमार्गत वानराः !
तमतिक्रम्य दुर्धर्षास्सूर्यवान्नाम पर्वतः ॥ ३२

अध्वना दुर्विगाहेन योजनानि चतुर्दश ।
ततस्तमप्यतिक्रम्य वैद्युतो नाम पर्वतः ॥ ३३

सर्वकामफलैर्वृक्षैस्सर्वकालमनोहरैः ।
तत्र भुक्त्वा वरार्हाणि मूलानि च फलानि च ॥ ३४

मधूनि पीत्वा मुख्यानि परं गच्छत वानराः ! ।
तत्र नेत्रमनःकान्तः कुञ्जरो नाम पर्वतः ॥ ३५

अगस्त्यभवनं यत्र निर्मितं विश्वकर्मणा ।
तत्र योजनविस्तारमुच्छ्रितं दशयोजनम् ॥ ३६

शरणं काञ्चनं दिव्यं नानारत्नविभूषितम् ।
तत्र भोगवती नाम सर्पाणामालयः पुरी ॥ ३७

विशालकक्ष्या दुर्धर्षा सर्वतः परिरक्षिता ।
रक्षिता पन्नगैर्घोरैस्तीक्ष्णदंष्ट्रैर्महाविषैः ॥ ३८

सर्पराजो महाप्राज्ञो यस्यां वसति वासुकिः ।
निर्याय मार्गितव्या च सा च भोगवती पुरी ॥ ३९

तत्र चानन्तरा देशा ये केचन सुसंवृताः ।
तं च देशमतिक्रम्य महानृषभसंस्थितः ॥ ४०

सर्वरत्नमयः श्रीमान् ऋषभो नाम पर्वतः ।
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ॥ ४१

दिव्यमुत्पद्यते यत्र तच्चैवाग्निसमप्रभम् ।
न तु तच्चन्दनं दृष्ट्वा स्प्रष्टव्यं च कदाचन ॥ ४२
रोहिता नाम गन्धर्वा घोरा रक्षन्ति तद्वनम् ।
तत्र गन्धर्वपतयः पञ्च सूर्यसमप्रभाः ॥ ४३
शैलूषो ग्रामणीश्शिग्रुश्शुभ्रो बभ्रुस्तथैव च ।
रविसोमाग्निवपुषां निवासः पुण्यकर्मणाम् ॥ ४४
अन्ते पृथिव्या दुर्धर्षास्तत्र स्वर्गजितः स्थिताः ।
ततः परं न वस्सेव्यः पितृलोकस्सुदारुणः ॥ ४५
राजधानी यमस्यैषा कष्टेन तमसा वृता ।
एतावदेव युष्माभिर्वीरा! वानरपुङ्गवाः! ॥ ४६
शक्यं विचेतुं गन्तुं वा नातो गतिमतां गतिः ।
सर्वमेतत्समालोक्य यच्चान्यदपि दृश्यते ॥ ४७
गतिं विदित्वा वैदेह्यास्सन्निवर्तितुमर्हथ ।
यस्तु मासान्निवृत्तोऽग्रे 'दृष्टा सी' तेति वक्ष्यति ॥ ४८
मत्तुल्यविभवो भोगैस्सुखं स विहरिष्यति ।
ततः प्रियतरो नास्ति मम प्राणाद्विशेषतः ॥ ४९
कृतापराधो बहुशो मम बन्धुर्भविष्यति ।
अमितबलपराक्रमा भवन्तो विपुलगुणेषु कुलेषु च प्रसूताः ।
मनुजपतिसुतां यथा लभध्वं तदधिगुणं पुरुषार्थमारभध्वम् ॥"

इति श्रीमत्किष्किन्धाकाण्डे एकचत्वारिंशस्सर्गः ॥

## ॥ द्विचत्वारिंशस्सर्गः ॥

अथ प्रस्थाप्य सुग्रीवस्तान्हरीन्दक्षिणां दिशम् ।
अब्रवीन्मेघसंकाशं सुषेणं नाम यूथपम् ॥ १

तारायाः पितरं राजा श्वशुरं भीमविक्रमम् ।
अब्रवीत्प्राञ्जलिर्वाक्यमभिगम्य प्रणम्य च ॥ २

मरीचपुत्रं मारीचमर्चिष्मन्तं महाकपिम् ।
वृतं कपिवरैश्शूरैर्महेन्द्रसदृशद्युतिम् ॥ ३

बुद्धिविक्रमसम्पन्नं वैनतेयसमद्युतिम् ।
मरीचिपुत्त्रान्मारीचानर्चिर्मालान्महाबलान् ॥ ४

ऋषिपुत्रांश्च तान्सर्वान्प्रतीचीमादिशद्दिशम् ।
द्वाभ्यां शतसहस्राभ्यां कपीनां कपिसत्तमाः ! ॥ ५

सुषेणप्रमुखा यूयं वैदेहीं परिमार्गत ।
सुराष्ट्रांत्सह बाह्लीकान् शूरान्भीमांस्तथैव च ॥ ६

स्फीताञ्जनपदान्रम्यान्विपुलानि पुराणि च ।
पुन्नागगहनं कुक्षिं वकुळोद्दालकाकुलम् ॥ ७

तथा केतकषण्डांश्च मार्गध्वं हरियूथपाः ! ।
प्रत्यक्स्रोतोगमाश्चैव नद्यश्शीतजलाश्शिवाः ॥ ८

तापसानामरण्यानि कान्तारा गिरयश्च ये ।
ततस्स्थलीं मरुप्रायामत्युच्चशिरसश्शिलाः ॥ ९

गिरिजालावृतां दुर्गां मार्गित्वा पश्चिमां दिशम् ।
ततः पश्चिममासाद्य समुद्रं द्रष्टुमर्हथ ॥ १०

तिमिनक्रायुतजलमक्षोभ्यमथ वानराः ! ।
ततः केतकषण्डेषु तमालगहनेषु च ॥ ११

कपयो विहरिष्यन्ति नारिकेलवनेषु च ।
तत्र सीतां च मार्गध्वं निलयं रावणस्य च ॥ १२

वेलातटनिविष्टेषु पर्वतेषु वनेषु च ।
मुरचीपत्तनं चैव रम्यं चैव जटीपुरम् ॥ १३

अवन्तीमङ्गलोपां च तथा चालक्षितं वनम् ।
राष्ट्राणि च विशालानि पत्तनानि ततस्ततः ॥ १४

सिन्धुसागरयोश्चैव सङ्गमे तत्र पर्वतः ।
महान्हेमगिरिर्नाम शतशृङ्गो महाद्रुमः ॥ १५

तस्य प्रस्थेषु रम्येषु सिंहाः पक्षगमाः स्थिताः ।
तिमिमत्स्यगजांश्चैव नीडान्यारोपयन्ति ते ॥ १६

तानि नीडानि सिंहानां गिरिशृङ्गगताश्च ये ।
दृप्तास्तृप्ताश्च मातङ्गास्तोयदस्वननिस्वनाः ॥ १७

विचरन्ति विशालेऽस्मिन्स्तोयपूर्णे समन्ततः ।
तस्य शृङ्गं दिवस्पर्शं काञ्चनं चित्रपादपम् ॥ १८

सर्वमाशु विचेतव्यं कपिभिः कामरूपिभिः ।
कोटिं तत्र समुद्रे तु काञ्चनीं शतयोजनाम् ॥ १९

दुर्दर्शां पारियात्रस्य गता द्रक्ष्यथ वानराः ! ।
कोट्यस्तत्र चतुर्विंशद्गन्धर्वाणां तरस्विनाम् ॥ २०

वसन्त्यग्निनिकाशानां घोराणां कामरूपिणाम् ।
ावकार्चिःप्रतीकाशास्समवेतास्सहस्रशः ॥ २१

नात्यासादयितव्यास्ते वानरैर्भीमविक्रमैः ।
नादेयं च फलं तस्माद्देशात्किंचित् प्लवङ्गमैः ॥ २२

दुरासदा हि ते वीरास्सत्त्ववन्तो महाबलाः ।
फलमूलानि ते तत्र रक्षन्ते भीमविक्रमाः ॥ २३

तत्र यत्नश्च कर्तव्यो मार्गितव्या च जानकी ।
न हि तेभ्यो भयं किंचित्कपित्वमनुवर्तताम् ॥ २४

तत्र वैडूर्यवर्णाभो वज्रसंस्थानसंस्थितः ।
नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः ॥ २५

श्रीमांत्समुदितस्तत्र योजनानां शतं समम् ।
गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः ! ॥ २६

चतुर्भागे समुद्रस्य चक्रवान्नाम पर्वतः ।
तत्र चक्रं सहस्रारं निर्मितं विश्वकर्मणा ॥ २७

तत्र पञ्चजनं हत्वा हयग्रीवं च दानवम् ।
आजहार ततश्चक्रं शङ्खं च पुरुषोत्तमः ॥ २८

तस्य सानुषु चित्रेषु विशालासु गुहासु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २९

योजनानां ततष्षष्टिर्वराहो नाम पर्वतः ।
सुवर्णशृङ्गस्सुश्रीमानगाधे वरुणालये ॥ ३०

तत्र प्राग्ज्योतिषं नाम जातरूपमयं पुरम् ।
यस्मिन्वसति दुष्टात्मा नरको नाम दानवः ॥ ३१

तत्र सानुषु चित्रेषु विशालासु गुहासु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ३२

तमतिक्रम्य शैलेन्द्रं काञ्चनान्तरनिर्दरः ।
पर्वतस्सर्वसौवर्णो धाराप्रस्रवणायुतः ॥ ३३

तं गजाश्च वराहाश्च सिंहव्याघ्राश्च सर्वतः ।
अभिगर्जन्ति सततं तेन शब्देन दर्पिताः ॥ ३४

यस्मिन्हरिहयश्श्रीमान्महेन्द्रः पाकशासनः ।
अभिषिक्तस्सुरैराजा मेघवान्नाम पर्वतः ॥ ३५

तमतिक्रम्य शैलेन्द्रं महेन्द्रपरिपालितम् ।
षष्टिर्गिरिसहस्राणि काञ्चनानि गमिष्यथ ॥ ३६

तरुणादित्यवर्णानि भ्राजमानानि सर्वतः ।
जातरूपमयैर्वृक्षैश्शोभितानि सुपुष्पितैः ॥ ३७

तेषां मध्ये स्थितो राजा मेरुरुत्तरपर्वतः ।
आदित्येन प्रसन्नेन शैलो दत्तवरः पुरा ॥ ३८

तेनैवमुक्तश्शैलेन्द्रस्सर्व एव त्वदाश्रयाः ।
मत्प्रसादाद्भविष्यन्ति दिवारात्रं च काञ्चनाः ॥ ३९

त्वयि ये चापि वत्स्यन्ति देवगन्धर्वदानवाः ।
ते भविष्यन्ति रक्ताश्च प्रभया काञ्चनप्रभाः ॥ ४०

विश्वेदेवाश्च मरुतो वसवश्च दिवौकसः ।
आगम्य पश्चिमां सन्ध्यां मेरुमुत्तमपर्वतम् ॥ ४१

आदित्यमुपतिष्ठन्ति तैश्च सूर्योऽभिपूजितः ।
अदृश्यस्सर्वभूतानामस्तं गच्छति पर्वतम् ॥ ४२

योजनानां सहस्राणि दश तानि दिवाकरः ।
मुहूर्तार्धेन तं शीघ्रमभियाति शिलोच्चयम् ॥ ४३

शृङ्गे तस्य महद्दिव्यं भवनं सूर्यसन्निभम् ।
प्रासादगणसंबाधं विहितं विश्वकर्मणा ॥ ४४

शोभितं तरुभिश्चित्रैर्नानापक्षिसमाकुलैः ।
निकेतं पाशहस्तस्य वरुणस्य महात्मनः ॥ ४५

अन्तरा मेरुमस्तं च तालोदकशिरा महान् ।
जातरूपमयश्श्रीमान्भ्राजते चित्रवेदिकः ॥ ४६

तेषु सर्वेषु दुर्गेषु सरस्सु च सरित्सु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ ४७

यत्र तिष्ठति धर्मज्ञस्तपसा स्वेन भावितः ।
मेरुसावर्णिरित्येव ख्यातो वै ब्रह्मणा समः ॥ ४८

प्रष्टव्यो मेरुसावर्णिर्महर्षिस्सूर्यसन्निभः ।
प्रणम्य शिरसा भूमौ प्रवृत्तिं मैथिलीं प्रति ॥ ४९

एतावज्जीवलोकस्य भास्करो रजनीक्षये ।
कृत्वा वितिमिरं सर्वमस्तं गच्छति पर्वतम् ॥ ५०

एतावद्वानरैश्शक्यं गन्तुं वानरपुङ्गवाः ! ।
अभास्करममर्यादं न जानीमस्ततःपरम् ॥ ५१

अधिगम्य तु वैदेहीं निलयं रावणस्य च ।
अस्तपर्वतमासाद्य पूर्णे मासे निवर्तत ॥ ५२

ऊर्ध्वं मासान्न वस्तव्यं वसन्वध्यो भवेन्मम ।
सहैव शूरो युष्माभिश्श्वशुरो मे गमिष्यति ॥ ५३

श्रोतव्यं सर्वमेतस्य भवद्भिर्दिष्टकारिभिः ।
गुरुरेष महाबाहुश्श्वशुरो मे महाबलः ॥ ५४

भवन्तश्चापि विक्रान्ताः प्रमाणं सर्वकर्मसु ।
प्रमाणमेनं संस्थाप्य पश्यध्वं पश्चिमां दिशम् ॥ ५५

[ भवन्तः परिपश्यन्तु यथा दृश्येत जानकी ] ।
दृष्टायां तु नरेन्द्रस्य पत्न्याममिततेजसः ॥ ५६

कृतकृत्या भविष्यामः कृतस्य प्रतिकर्मणा ।
अतोऽन्यदपि यत्कार्यं कार्यस्यास्य हितं भवेत् ॥ ५७

संप्रधार्य भवद्भिश्च देशकालार्थसंहितम् ।"
ततस्सुषेणप्रमुखाः प्लवङ्गास्सुग्रीववाक्यं निपुणं निशम्य ।
आमन्त्र्य सर्वे प्लवगाधिपं ते जग्मुर्दिशं तां वरुणाभिगुप्ताम् ॥ ५८

इति श्रीमत्किष्किन्धाकाण्डे द्विचत्वारिंशस्सर्गः ॥

---

## ॥ त्रिचत्वारिंशस्सर्गः ॥

ततस्संदिश्य सुग्रीवश्श्वशुरं पश्चिमां दिशम् ।
वीरं शतवलिं नाम वानरं वानरर्षभः ॥ १

उवाच राजा धर्मज्ञस्सर्ववानरसत्तमम् ।
वाक्यमात्महितं चैव रामस्य च हितं तथा ॥ २

" वृतश्शतसहस्रेण त्वद्विधानां वनौकसाम् ।
वैवस्वतसुतैस्सार्धं प्रतिष्ठस्व स्वमन्त्रिभिः ॥ ३

दिशं ह्युदीचीं विक्रान्तां हिमशैलावतंसकाम् ।
सर्वतः परिमार्गध्वं रामपत्नीमनिन्दिताम् ॥ ४

अस्मिन्कार्ये विनिर्वृत्ते कृते दाशरथेः प्रिये ।
ऋणान्मुक्ता भविष्यामः कृतार्थार्थविदां वराः ! ॥ ५

कृतं हि प्रियमस्माकं राघवेण महात्मना ।
तस्य चेत्प्रतिकारोऽस्ति सफलं जीवितं भवेत् ॥ ६

अर्थिनः कार्यनिर्वृत्तिमकर्तुरपि यश्चरेत् ।
तस्य स्यात्सफलं जन्म किं पुनः पूर्वकारिणः ॥ ७

एतां बुद्धिमवस्थाय दृश्यते जानकी यथा ।
तथा भवद्भिः कर्तव्यमस्मत्प्रियहितैषिभिः ॥ ८

अयं हि सर्वभूतानां मान्यस्तु नरसत्तमः ।
अस्मासु चागतप्रीती रामः परपुरञ्जयः ॥ ९

इमानि वनदुर्गाणि नद्यश्शैलान्तराणि च ।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसंपदा ॥ १०

तत्र म्लेच्छान्पुलिन्दांश्च शूरसेनांस्तथैव च ।
प्रस्थलान्भरतांश्चैव कुरूंश्च सह मद्रकैः ॥ ११

काम्भोजान्यवनांश्चैव शकानारट्टकानपि ।
बाह्लीकानृषिकांश्चैव पौरवानथ टङ्कणान् ॥ १२

चीनान्परमचीनांश्च नीहारांश्च पुनः पुनः ।
अन्विष्य दरदांश्चैव हिमवन्तं तथैव च ॥ १३

लोध्रपद्मकषण्डेषु देवदारुवनेषु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १४

ततस्सोमाश्रमं गत्वा देवगन्धर्वसेवितम् ।
काळं नाम महासानुं पर्वतं तु गमिष्यथ ॥ १५

महत्सु तस्य शैलस्य निर्दरेषु गुहासु च ।
विचिनुध्वं महाभागां रामपत्नीं ततस्ततः ॥ १६

तमतिक्रम्य शैलेन्द्रं हेमगर्भं महागिरिम् ।
ततस्सुदर्शनं नाम गन्तुमर्हथ पर्वतम् ॥ १७

ततो देवसखो नाम पर्वतः पर्वतालयाः ।
नानापक्षिगणाकीर्णो विविधद्रुमभूषितः ॥ १८

तस्य काननषण्डेषु निर्झरेषु गुहासु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ १९

तमतिक्रम्य चाकाशं सर्वतश्शतयोजनम् ।
अपर्वतनदीवृक्षं सर्वसत्त्वविवर्जितम् ॥ २०

तं तु शीघ्रमतिक्रम्य कान्तारं रोमहर्षणम् ।
कैलासं पाण्डुरं शैलं प्राप्य हृष्टा भविष्यथ ॥ २१

तत्र पाण्डुरमेघाभं जाम्बूनदपरिष्कृतम् ।
कुबेरभवनं दिव्यं निर्मितं विश्वकर्मणा ॥ २२

विशाला नलिनी यत्र प्रभूतकमलोत्पला ।
हंसकारण्डवाकीर्णा ह्यप्सरोगणसेविता ॥ २३

तत्र वैश्रवणो राजा सर्वभूतनमस्कृतः ।
धनदो रमते श्रीमान्गुह्यकैस्सह यक्षराट् ॥ २४

तस्य चन्द्रनिकाशेषु पर्वतेषु गुहासु च ।
रावणस्सह वैदेह्या मार्गितव्यस्ततस्ततः ॥ २५

क्रौञ्चं तु गिरिमासाद्य बिलं तस्य सुदुर्गमम् ।
अप्रमत्तैः प्रवेष्टव्यं दुष्प्रवेशं हि तत्स्मृतम् ॥ २६

वसन्ति हि महात्मानस्तत्र सूर्यसमप्रभाः ।
देवैरप्यर्चितास्सम्यग्देवरूपा महर्षयः ॥ २७

क्रौञ्चस्य तु गुहाश्चान्यास्सानूनि शिखराणि च ।
निर्दराश्च नितम्बाश्च विचेतव्यास्ततस्ततः ॥ २८

क्रौञ्चस्य शिखरं चापि निरीक्ष्य च ततस्ततः ।
अवृक्षं कामशैलं च मानसं विहगालयम् ॥ २९

न गतिस्तत्र भूतानां देवदानवरक्षसाम् ।
स च सर्वैर्विचेतव्यस्ससानुप्रस्थभूधरः ॥ ३०

क्रौञ्चं गिरिमतिक्रम्य मैनाको नाम पर्वतः ।
मयस्य भवनं यत्र दानवस्य स्वयं कृतम् ॥ ३१

मैनाकस्तु विचेतव्यस्ससानुप्रस्थकन्दरः ।
स्त्रीणामश्वमुखीनां तु निकेतास्तत्र तत्र तु ॥ ३२

तं देशं समतिक्रम्य आश्रमं सिद्धसेवितम् ।
सिद्धा वैखानसास्तत्र वालखिल्याश्च तापसाः ॥ ३३

वन्द्यास्ते तु तपस्सिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्या चापि सीतायाः प्रवृत्तिर्विनयान्वितैः ॥ ३४

हेमपुष्करसंछन्नं तस्मिन्वैखानसं सरः ।
तरुणादित्यसंकाशैर्हंसैर्विचरितं शुभैः ॥ ३५

औपवाह्यः कुबेरस्य सार्वभौम इति स्मृतः ।
गजः पर्येति तं देशं सदा सह करेणुभिः ॥ ३६

तत्सरस्समतिक्रम्य नष्टचन्द्रदिवाकरम् ।
अनक्षत्रगणं व्योम निष्पयोदमनादिमत् ॥ ३७

गभस्तिभिरिवार्कस्य स तु देशः प्रकाशते ।
विश्राम्यद्भिस्तपस्सिद्धैर्देवकल्पैस्स्वयंप्रभैः ॥ ३८

तं तु देशमतिक्रम्य शैलोदा नाम निम्नगा ।
उभयोस्तीरयोस्तस्याः कीचका नाम वेणवः ॥ ३९

ते नयन्ति परं तीरं सिद्धान्प्रत्यानयन्ति च ।
उत्तराः कुरवस्तत्र कृतपुण्यप्रतिश्रयाः ॥ ४०

ततः काञ्चनपद्माभिः पद्मिनीभिः कृतोदकाः ।
नीलवैडूर्यपत्राभिर्नद्यस्तत्र सहस्रशः ॥ ४१

रक्तोत्पलवनैश्चात्र मण्डिताश्च हिरण्मयैः ।
तरुणादित्यसदृशैर्भान्ति तत्र जलाशयाः ॥ ४२

महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलोत्पलवनैश्चित्रैस्स देशस्सर्वतो वृतः ॥ ४३

निस्तुलाभिश्च मुक्ताभिर्मणिभिश्च महाधनैः ।
उद्भूतपुलिनास्तत्र जातरूपैश्च निम्नगाः ॥ ४४

सर्वरत्नमयैश्चित्रैरवगाढा नगोत्तमैः ।
जातरूपमयैश्चापि हुताशनसमप्रभैः ॥ ४५

नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसस्पर्शास्सर्वान्कामांस्स्रवन्ति च ॥ ४६

नानाकाराणि वासांसि फलन्त्यन्ये नगोत्तमाः ।
मुक्तावैडूर्यचित्राणि भूषणानि तथैव च ॥ ४७

स्त्रीणां चाप्यनुरूपाणि पुरुषाणां तथैव च ।
सर्वर्तुसुखसेव्यानि फलन्त्यन्ये नगोत्तमाः ॥ ४८

महार्हाणि विचित्राणि हैमान्यन्ये नगोत्तमाः ।
शयनानि प्रसूयन्ते चित्रास्तरणवन्ति च ॥ ४९

मनःकान्तानि माल्यानि फलन्त्यत्रापरे द्रुमाः ।
पानानि च महार्हाणि भक्ष्याणि विविधानि च ॥ ५०

स्त्रियश्च गुणसंपन्ना रूपयौवनलक्षिताः ।
गन्धर्वाः किन्नरास्सिद्धा नागा विद्याधरास्तथा ॥ ५१

रमन्ते सहितास्तत्र नारीभिर्भास्करप्रभाः ।
सर्वे सुकृतकर्माणस्सर्वे रतिपरायणाः ॥ ५२

सर्वे कामार्थसहिता वसन्ति सहयोषितः ।
गीतवादित्रनिर्घोषस्सोत्कृष्टहसितस्वनः ॥ ५३

श्रूयते सततं तत्र सर्वभूतमनोहरः ।
तत्र नामुदितः कश्चिन्नास्ति कश्चिदसत्प्रियः ॥ ५४

अहन्यहनि वर्धन्ते गुणास्तत्र मनोरमाः ।
समतिक्रम्य तं देशमुत्तरः पयसां निधिः ॥ ५५

तत्र सोमगिरिर्नाम मध्ये हेममयो महान् ।
इन्द्रलोकगता ये च ब्रह्मलोकगताश्च ये ॥ ५६

देवास्तं समवेक्षन्ते गिरिराजं दिवं गताः ।
स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते ॥ ५७

सूर्यलक्ष्म्याऽभिविज्ञेयस्तपतेव विवस्वता ।
भगवानपि विश्वात्मा शम्भुरेकादशात्मकः ॥ ५८

ब्रह्मा वसति देवेशो ब्रह्मर्षिपरिवारितः ।
न कथंचन गन्तव्यं कुरूणामुत्तरेण वः ॥ ५९

अन्येषामपि भूतानां नातिक्रामति वै गतिः ।
स हि सोमगिरिर्नाम देवानामपि दुर्गमः ॥ ६०

तमालोक्य ततः क्षिप्रमुपावर्तितुमर्हथ ।
एतावद्वानरैश्शक्यं गन्तुं वानरपुङ्गवाः ! ॥ ६१

अभास्करममर्यादं न जानीमस्ततः परम् ।
सर्वमेतद्विचेतव्यं यन्मया परिकीर्तितम् ॥ ६२

यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ।
ततः कृतं दाशरथेर्महत्प्रियं महत्तरं चापि ततो मम प्रियम् ।
कृतं भविष्यत्यनिलानलोपमा विदेहजादर्शनजेन कर्मणा ॥ ६३
ततः कृतार्थास्सहितास्सबान्धवा मयाऽर्चितास्सर्वगुणैर्मनोरमैः ।
चरिष्यथोर्वीं प्रति शान्तशत्रवस्सहप्रिया भूतधराः प्लवङ्गमाः ! ॥

इति श्रीमत्किष्किन्धाकाण्डे त्रिचत्वारिंशस्सर्गः ॥

---

## ॥ चतुश्चत्वारिंशस्सर्गः ॥

विशेषेण तु सुग्रीवो हनूमत्यर्थमुक्तवान् ।
स हि तस्मिन्हरिश्रेष्ठे निश्चितार्थोऽर्थसाधने ॥ १

अब्रवीच्च हनूमन्तं विक्रान्तमनिलात्मजम् ।
सुग्रीवः परमप्रीतः प्रभुस्सर्ववनौकसाम् ॥ २

"न भूमौ नान्तरिक्षे वा नाम्बरे नामरालये ।
नाप्सु वा गतिसङ्गं ते पश्यामि हरिपुङ्गव ! ॥ ३

सासुरास्सहगन्धर्वास्सनागनरदेवताः ।
विदितास्सर्वलोकास्ते ससागरधराधराः ॥ ४

गतिर्वेगश्च तेजश्च लाघवं च महाकपे ! ।
पितुस्ते सदृशं वीर ! मारुतस्य महौजसः ॥ ५

तेजसा वापि ते भूतं समं भुवि न विद्यते ।
तद्यथा लभ्यते सीता तत्त्वमेवोपपादय ॥ ६

त्वय्येव हनुम ! अस्ति बलं बुद्धिः पराक्रमः ।
देशकालानुवृत्तिश्च नयश्च नयपण्डित !" ॥ ७

ततः कार्यसमासङ्गमवगम्य हनूमति ।
विदित्वा हनुमन्तं च चिन्तयामास राघवः ॥ ८

सर्वथा निश्चितार्थोऽयं हनूमति हरीश्वरः ।
निश्चितार्थकरश्चापि हनूमान्कार्यसाधने ॥ ९

तदेवं प्रस्थितस्यास्य परिज्ञातस्य कर्मभिः ।
भर्त्रा परिगृहीतस्य ध्रुवः कार्यफलोदयः ॥ १०

तं समीक्ष्य महातेजा व्यवसायोत्तरं हरिम् ।
कृतार्थ इव संवृत्तः प्रहृष्टेन्द्रियमानसः ॥ ११

ददौ तस्य ततः प्रीतस्स्वनामाङ्कोपशोभितम् ।
अङ्गुलीयमभिज्ञानं राजपुत्र्याः परन्तपः ॥ १२

"अनेन त्वां हरिश्रेष्ठ ! चिह्नेन जनकात्मजा ।
मत्सकाशादनुप्राप्तमनुद्विग्नाऽनुपश्यति ॥ १३

व्यवसायश्च ते वीर ! सत्त्वयुक्तश्च विक्रमः ।
सुग्रीवस्य च संदेशस्सिद्धिं कथयतीव मे ॥" १४

स तं गृह्य हरिश्रेष्ठः स्थाप्य मूर्ध्नि कृताञ्जलिः ।
वन्दित्वा चरणौ चैव प्रस्थितः प्लवगोत्तमः ॥ १५

स तत्प्रकर्षन् हरिणां महद्बलं बभूव वीरः पवनात्मजः कपिः ।
गताम्बुदे व्योम्नि विशुद्धमण्डलश्शशीव नक्षत्रगणोपशोभितः ॥ १६

“ अतिबल ! बलमाश्रितस्तवाहं हरिवरविक्रम विक्रमैरनल्पैः ।
पवनसुत ! यथाऽभिगम्यते सा जनकसुता हनुमं ! स्तथा कुरुष्व ॥

इति श्रीमत्किष्किन्धाकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

---

## ॥ पञ्चचत्वारिंशस्सर्गः ॥

सर्वांश्चाहूय सुग्रीवः प्लवगान् प्लवगर्षभः ।
समस्तानब्रवीद्भूयो रामकार्यार्थसिद्धये ॥ १
“ एवमेतद्विचेतव्यं यन्मया परिकीर्तितम् ।
तदुग्रशासनं भर्तुर्विज्ञाय हरिपुङ्गवाः ॥ ” २
शलभा इव संछाद्य मेदिनीं संप्रतस्थिरे ।
रामः प्रस्रवणे तस्मिन्न्यवसत्सहलक्ष्मणः ॥ ३
प्रतीक्षमाणस्तं मासं यस्सीताधिगमे कृतः ।
उत्तरां तु दिशं रम्यां गिरिराजसमावृताम् ॥ ४
प्रतस्थे सहसा वीरो हरिश्शतवलिस्तदा ।
पूर्वां दिशं प्रतिययौ विनतो हरियूथपः ॥ ५
ताराङ्गदादिसहितः प्लवगो मारुतात्मजः ।
अगस्त्यचरितामाशां दक्षिणां हरियूथपः ॥ ६
पश्चिमां तु भृशं घोरां सुषेणः प्लवगेश्वरः ।
प्रतस्थे हरिशार्दूलो दिशं वरुणपालिताम् ॥ ७
ततस्सर्वा दिशो राजा चोदयित्वा यथा तथम् ।
कपिसेनापतीन्मुख्यान्मुमोद सुखितस्सुखम् ॥ ८

एवं संबोधितास्सर्वे राज्ञा वानरयूथपाः ।
स्वां स्वां दिशमभिप्रेत्य त्वरितास्संप्रतस्थिरे ॥ ९
आनयिष्यामहे सीतां हनिष्यामश्च रावणम् ।
नदन्तश्चोन्नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ १०
क्ष्वेळन्तो धावमानाश्च विनदन्तो महाबलाः ।
'अहमेको हनिष्यामि रावणं प्राप्तमाहवे ॥ ११
ततश्चोन्मथ्य सहसा हरिष्ये जनकात्मजाम् ।
वेपमानां श्रमेणाद्य भवद्भिः स्थीयतामिह ॥' १२
'एक एवाहरिष्यामि पाताळादपि जानकीम् ।
विमथिष्याम्यहं वृक्षान् पातयिष्याम्यहं गिरीन् ॥ १३
धरणीं दारयिष्यामि क्षोभयिष्यामि सागरान् ।
अहं योजनसंख्यायाः प्लविता नात्र संशयः ॥ १४
शतं योजनसंख्यायाश्शतं समधिकं ह्यहम् ।
भूतले सागरे वापि शैलेषु च वनेषु च ॥ १५
पाताळस्यापि वा मध्ये न ममाऽऽच्छिद्यते गतिः ।
इत्येकैकं तदा तत्र वानरा बलदर्पिताः ॥ १६
ऊचुश्च वचनं तत्र हरिराजस्य सन्निधौ ।

इति श्रीमत्किष्किन्धाकाण्डे पञ्चचत्वारिंशस्सर्गः ॥

---

## ॥ षट्चत्वारिंशस्सर्गः ॥

गतेषु वानरेन्द्रेषु रामस्सुग्रीवमब्रवीत् ।
"कथं भवान्विजानीते सर्वं वै मण्डलं भुवः ॥" १

सुग्रीवस्तु ततो राममुवाच प्रणतात्मवान् ।
"श्रूयतां सर्वमाख्यास्ये विस्तरेण नरर्षभ ! ॥ २

यदा तु दुन्दुभिं नाम दानवं महिषाकृतिम् ।
परिकालयते वाली मलयं प्रति पर्वतम् ॥ ३

तदा विवेश महिषो मलयस्य गुहां प्रति ।
विवेश वाली तत्रापि मलयं तज्जिघांसया ॥ ४

ततोऽहं तत्र निक्षिप्तो गुहाद्वारि विनीतवत् ।
न च निष्क्रमते वाली तदा संवत्सरे गते ॥ ५

ततः क्षतजवेगेन आपुपूरे तदा बिलम् ।
तदहं विस्मितो दृष्ट्वा भ्रातृशोकविषार्दितः ॥ ६

अथाहं कृतबुद्धिस्तु सुव्यक्तं निहतो गुरुः ।
इति विभ्रान्तचित्तेन कार्याकार्यमजानता ॥ ७

शिला पर्वतसंकाशा बिलद्वारि मया वृता ।
अशक्नुवन्निष्क्रमितुं महिषो विनशेदिति ॥ ८

ततोऽहमागां किष्किन्धां निराशस्तस्य जीविते ।
राज्यं च सुमहत्प्राप्तं तारया रुमया सह ॥ ९

मित्रैश्च सहितस्तत्र वसामि विगतज्वरः ।
आजगाम ततो वाली हत्वा तं वानरर्षभम् ॥ १०

ततोऽहमददां राज्यं गौरवाद्भययन्त्रितः ।
स मां जिघांसुर्दुष्टात्मा वाली प्रव्यथितेन्द्रियः ॥ ११

परिकालयते क्रोधाद्धावन्तं सचिवैस्सह ।
ततोऽहं वालिना तेन सानुबन्धः प्रधावितः ॥ १२

नदीश्च विविधाः पश्यन्वनानि नगराणि च ।
आदर्शतलसंकाशा ततो वै पृथिवी मया ॥ १३

अलातचक्रप्रतिमा दृष्टा गोष्पदवत्तदा ।
पूर्वां दिशं ततो गत्वा पश्यामि विविधान् द्रुमान् ॥ १४

पर्वतांश्च नदी रम्यास्सरांसि विविधानि च ।
उदयं तत्र पश्यामि पर्वतं धातुमण्डितम् ॥ १५

क्षीरोदं सागरं चैव नित्यमप्सरसालयम् ।
परिकालयमानस्तु वालिनाऽभिद्रुवस्तदा ॥ १६

पुनरावृत्य सहसा प्रस्थितोऽहं तदा विभो ! ।
पुनरावर्तमानस्तु वालिनाऽभिद्रुतो द्रुतम् ॥ १७

दिशस्तस्यास्ततो भूयः प्रस्थितो दक्षिणां दिशम् ।
विन्ध्यपादपसंकीर्णां चन्दनद्रुमशोभिताम् ॥ १८

द्रुमशैलांस्ततः पश्यन्भूयो दक्षिणतोऽपरान् ।
पश्चिमां च दिशं प्राप्तो वालिना समभिद्रुतः ॥ १९

संपश्यन्विविधान्देशानस्तं च गिरिसत्तमम् ।
प्राप्य चास्तं गिरिश्रेष्ठमुत्तरां संप्रधावितः ॥ २०

हिमवन्तं च मेरुं च समुद्रं च तथोत्तरम् ।
यदा न विन्दं शरणं वालिना समभिद्रुतः ॥ २१

तदा मां बुद्धिसंपन्नो हनूमान्वाक्यमब्रवीत् ।
इदानीं मे स्मृतं राज ! न्यथा वाली हरीश्वरः ॥ २२

मतङ्गेन तदा शप्तो ह्यस्मिन्नाश्रममण्डले ।
प्रविशेद्यदि वै वाली मूर्धास्य शतधा भवेत् ॥ २३

तत्र वासस्सुखोऽस्माकं निरुद्विग्नो भविष्यति ।
ततः पर्वतमासाद्य ऋश्यमूकं नृपात्मज ! ॥ २४

न विवेश तदा वाली मतङ्गस्य भयात्तदा ।
एवं मया तदा राज ! न्प्रत्यक्षमुपलक्षितम् ॥ २५
पृथिवीमण्डलं कृत्स्नं गुहामस्यागतस्ततः ॥

इति श्रीमत्किष्किन्धाकाण्डे षट्चत्वारिंशस्सर्गः॥

---

## ॥ सप्तचत्वारिंशस्सर्गः ॥

दर्शनार्थं तु वैदेह्यास्सर्वतः कपियूथपाः ।
व्यादिष्टाः कपिराजेन यथोक्तं जग्मुरञ्जसा ॥ १

सरांसि सरितः कक्षा नाकाशं नगराणि च ।
नदी दुर्गास्तथा शैलान्विचिन्वन्ति समन्ततः ॥ २

सुग्रीवेण समाख्यातास्सर्वे वानरयूथपाः ।
प्रदेशान्प्रविचिन्वन्ति सशैलवनकाननान् ॥ ३

विचित्य दिवसं सर्वे सीताधिगमने धृताः ।
समायान्ति स्म मेदिन्यां निशाकालेषु वानराः ॥ ४

सर्वर्तुकामान् देशेषु वानरास्सफलान् द्रुमान् ।
आसाद्य रजनीं शय्यां चक्रुस्सर्वेष्वहस्सु ते ॥ ५

तदहः प्रथमं कृत्वा मासे प्रस्रवणं गताः ।
कपिराजेन संगम्य निराशाः कपियूथपाः ॥ ६

विचित्य तु दिशं पूर्वां यथोक्तां सचिवैस्सह ।
अदृष्ट्वा विनतस्सीतामाजगाम महाबलः ॥ ७

उत्तरां च दिशं सर्वां विचित्य स महाकपिः ।
आगतस्सह सैन्येन वीरश्शतवलिस्तदा ॥ ८

सुषेणः पश्चिमामाशां विचित्य सह वानरैः ।
समेत्य मासे संपूर्णे सुग्रीवमुपचक्रमे ॥ ९

तं प्रस्रवणपृष्ठस्थं समासाद्याभिवाद्य च ।
आसीनं सह रामेण सुग्रीवमिदमब्रवीत् ॥ १०

"विचिताः पर्वतास्सर्वे वनानि गहनानि च ।
निम्नगास्सागरान्ताश्च सर्वे जनपदाश्च ये ॥ ११

गुहाश्च विचितास्सर्वास्त्वया याः परिकीर्तिताः ।
विचिताश्च महागुल्मा लताविततसंतताः ॥ १२

गहनेषु च देशेषु दुर्गेषु विषमेषु च ।
सत्त्वान्यतिप्रमाणानि विचितानि हतानि च ॥ १३

[ये चैव गहना देशा विचितास्ते पुनः पुनः ॥]
उदारसत्त्वाभिजनो महात्मा स मैथिलीं द्रक्ष्यति वानरेन्द्रः ।
दिशं तु यामेव गता तु सीता तामास्थितो वायुसुतो हनूमान् ॥"

इति श्रीमत्किष्किन्धाकाण्डे सप्तचत्वारिंशस्सर्गः ॥

---

## ॥ अष्टचत्वारिंशस्सर्गः ॥

सह ताराङ्गदाभ्यां तु गत्वा स हनुमान्कपिः ।
सुग्रीवेण यथोद्दिष्टं तं देशमुपचक्रमे ॥ १

स तु दूरमुपागम्य सर्वैस्तैः कपिसत्तमैः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ २

पर्वताग्रान्नदीदुर्गांत्सरांसि विपुलान्द्रुमान् ।
वृक्षषण्डांश्च विविधान्पर्वतान्घनपादपान् ॥ ३

अन्वेषमाणास्ते सर्वे वानरास्सर्वतोदिशम् ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥ ४

ते भक्षयन्तो मूलानि फलानि विविधानि च ।
अन्वेषमाणा दुर्धर्षा न्यवसंस्तत्र तत्र ह ॥ ५

स तु देशो दुरन्वेषो गुहागहनवान्महान् ।
निर्जल निर्जनं शून्यं गहनं रोमहर्षणम् ॥ ६

त्यक्त्वा तु तं तदा देशं सर्वे वै हरियूथपाः ।
तादृशान्यप्यरण्यानि विचित्य भृशपीडिताः ॥ ७

देशमन्यं दुराधर्षं विविशुश्चाकुतोभयाः ।
यत्र वन्ध्यफला वृक्षा विपुष्पाः पर्णवर्जिताः ॥ ८

निस्तोयास्सरितो यत्र मूलं यत्र सुदुर्लभम् ।
न सन्ति महिषा यत्र न मृगा न च हस्तिनः ॥ ९

शार्दूलाः पक्षिणो वापि ये चान्ये वनगोचराः ।
न यत्र वृक्षा नौषध्यो न लता नापि वीरुधः ॥ १०

स्निग्धपत्रास्स्थले यत्र पद्मिन्यः फुल्लपङ्कजाः ।
प्रेक्षणीयास्सुगन्धाश्च भ्रमरैश्चापि वर्जिताः ॥ ११

कण्डुर्नाम महाभागस्सत्यवादी तपोधनः ।
महर्षिः परमामर्षी नियमैर्दुष्प्रधर्षणः ॥ १२

तस्य तस्मिन्वने पुत्रो बालष्षोडशवार्षिकः ।
प्रणष्टो जीवितान्ताय क्रुद्धस्तत्र महामुनिः ॥ १३

तेन धर्मात्मना शप्तं कृत्स्नं तत्र महद्वनम् ।
अशरण्यं दुराधर्षं मृगपक्षिविवर्जितम् ॥ १४
तस्य ते काननान्तांश्च गिरीणां कन्दराणि च ।
प्रभवानि नदीनां च विचिन्वन्ति समाहिताः ॥ १५
तत्र चापि महात्मानो नापश्यञ्जनकात्मजाम् ।
हर्तारं रावणं वापि सुग्रीवप्रियकारिणः ॥ १६
ते प्रविश्याऽऽशु तं भीमं लतागुल्मसमावृतम् ।
ददृशुः क्रूरकर्माणमसुरं सुरनिर्भयम् ॥ १७
तं दृष्ट्वा वानरा घोरं स्थितं शैलमिवापरम् ।
गाढं परिहितास्सर्वे दृष्ट्वा तान्पर्वतोपमान् ॥ १८
सोऽपि तान्वानरान्सर्वान् 'नष्टास्स्थे'त्यब्रवीद्बली ।
अभ्यधावत संक्रुद्धो मुष्टिमुद्यम्य संहितम् ॥ १९
तमापतन्तं सहसा वालिपुत्रोऽङ्गदस्तदा ।
रावणोऽयमिति ज्ञात्वा तलेनाभिजगाम ह ॥ २०
स वालिपुत्राभिहतो वक्त्राच्छोणितमुद्वमन् ।
असुरोऽभ्यपतद्भूमौ पर्यस्त इव पर्वतः ॥ २१
तेऽपि तस्मिन्निरुच्छ्वासे वानरा जितकाशिनः ।
व्यचिन्वन्प्रायशस्तत्र सर्वं तद्गिरिगह्वरम् ॥ २२
विचितं तु ततः कृत्वा सर्वे ते काननं पुनः ।
अन्यदेवापरं घोरं विविशुर्गिरिगह्वरम् ॥ २३
ते विचित्य पुनः खिन्ना विनिष्पत्य समागताः ।
एकान्ते वृक्षमूले तु निषेदुर्दीनमानसाः ॥ २४

इति श्रीमत्किष्किन्धाकाण्डे अष्टचत्वारिंशस्सर्गः ॥

---

## ॥ एकोनपञ्चाशस्सर्गः ॥

अथाङ्गदस्तदा सर्वान्वानरानिदमब्रवीत् ।
परिश्रान्तो महाप्राज्ञस्समाश्वास्य शनैर्वचः ॥ १
वनानि गिरयो नद्यो दुर्गाणि गहनानि च ।
दर्यो गिरिगुहाश्चैव विचितानि समन्ततः ॥ २
तत्र तत्र सहास्माभिर्जानकी न च दृश्यते ।
तद्वा रक्षो हृता येन सीता सुरसुतोपमा ॥ ३
कालश्च नो महान्यातस्सुग्रीवश्चोग्रशासनः ।
तस्माद्भवन्तस्सहिता विचिन्वन्तु समन्ततः ॥ ४
विहाय तन्द्रीं शोकं च निद्रां चैव समुत्थिताम् ।
विचिनुध्वं यथा सीतां पश्यामो जनकात्मजाम् ॥ ५
अनिर्वेदं च दाक्ष्यं च मनसश्चापराजयः ।
कार्यसिद्धिकराण्याहुस्तस्मादेतद्ब्रवीम्यहम् ॥ ६
अद्यापि तद्वनं दुर्गं विचिन्वन्तु वनौकसः ! ।
खेदं त्यक्त्वा पुनस्सर्वैर्वनमेतद्विचीयताम् ॥ ७
अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् ।
अलं निर्वेदमागम्य न हि नो मीलनं क्षमम् ॥ ८
सुग्रीवः कोपनो राजा तीक्ष्णदण्डश्च वानरः ।
भेतव्यं तस्य सततं रामस्य च महात्मनः ॥ ९
हितार्थमेतदुक्तं वः क्रियतां यदि रोचते ।
उच्यतां वा क्षमं यन्नस्सर्वेषामेव वानराः !” १०

अङ्गदस्य वचश्श्रुत्वा वचनं गन्धमादनः ।
उवाचाव्यक्तया वाचा पिपासाश्रमखिन्नया ॥ ११

" सदृशं खलु वो वाक्यमङ्गदो यदुवाच ह ।
हितं चैवानुकूलं च क्रियतामस्य भाषितम् ॥ १२

पुनर्मार्गामहे शैलान्कन्दरांश्च नदीस्तथा ।
काननानि च शून्यानि गिरिप्रस्रवणानि च ॥ १३

यथोद्दिष्टानि सर्वाणि सुग्रीवेण महात्मना ।
विचिन्वन्तु वनं सर्वे गिरिदुर्गाणि सर्वशः ॥ " १४

ततस्समुत्थाय पुनर्वानरास्ते महाबलाः ।
विन्ध्यकाननसंकीर्णां विचेरुर्दक्षिणां दिशम् ॥ १५

ते शारदाभ्रप्रतिमं श्रीमद्रजतपर्वतम् ।
शृङ्गवन्तं दरीमन्तमधिरुह्य च वानराः ॥ १६

तत्र कोद्रवनं रम्यं सप्तपर्णवनानि च ।
व्यचिन्वंस्ते हरिवरास्सीतादर्शनकाङ्क्षिणः ॥ १७

तस्याग्रमधिरूढास्ते श्रान्ता विपुलविक्रमाः ।
न पश्यन्ति स्म वैदेहीं रामस्य महिषीं प्रियाम् ॥ १८

ते तु दृष्टिगतं कृत्वा तं शैलं बहुकन्दरम् ।
अवारोहन्त हरयो वीक्षमाणास्समन्ततः ॥ १९

अवरुह्य ततो भूमिं श्रान्ता विगतचेतसः ।
स्थित्वा मुहूर्तं तत्राथ वृक्षमूलमुपाश्रिताः ॥ २०

ते मुहूर्तं समाश्वस्ताः किंचिद्भग्नपरिश्रमाः ।
पुनरेवोद्यताः कृत्स्नां मार्गितुं दक्षिणां दिशम् ॥ २१

हनूमत्प्रमुखास्ते तु प्रस्थिताः प्लवगर्षभाः ।
विन्ध्यमेवादितस्तावद्विचेरुस्ते समन्ततः ॥ २१

इति श्रीमत्किष्किन्धाकाण्डे एकोनपञ्चाशस्सर्गः ॥

## ॥ पञ्चाशस्सर्गः ॥

सह ताराङ्गदाभ्यां तु संगम्य हनुमान्कपिः ।
विचिनोति स्म विन्ध्यस्य गुहाश्च गहनानि च ॥ १
सिंहशार्दूलजुष्टेषु शिलाश्च सरितस्तथा ।
विषमेषु नगेन्द्रस्य महाप्रस्रवणेषु च ॥ २
आसेदुस्तस्य शैलस्य कोटिं दक्षिणपश्चिमाम् ।
तेषां तत्रैव वसतां स कालो व्यत्यवर्तत ॥ ३
स हि देशो दुरन्वेषो गुहागहनवान्महान् ।
तत्र वायुसुतस्सर्वं विचिनोति स्म पर्वतम् ॥ ४
परस्परेण हनुमानन्योन्यस्याविदूरतः ॥
गजो गवाक्षो गवयश्शरभो गन्धमादनः ॥ ५
मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवान्नळः ।
अङ्गदो युवराजश्च तारश्च वनगोचरः ॥ ६
गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् ।
विचिन्वन्तस्ततस्तत्र ददृशुर्विवृतं बिलम् ॥ ७
दुर्गमृक्षबिलं नाम दानवेनाभिरक्षितम् ।
क्षुत्पिपासापरीताश्च श्रान्ताश्च सलिलार्थिनः ॥ ८

अवकीर्णं लतावृक्षैर्ददृशुस्ते महाबिलम् ।
ततः क्रौञ्चाश्च हंसाश्च सारसाश्च विनिष्क्रमन् ॥ ९
जलार्द्राश्चक्रवाकाश्च रक्ताङ्गाः पद्मरेणुभिः ।
ततस्तद्बिलमासाद्य सुगन्धि दुरतिक्रमम् ॥ १०
विस्मयव्यग्रमनसो बभूवुर्वानरर्षभाः ।
संजातपरिशङ्कास्ते तद्बिलं प्लवगोत्तमाः ॥ ११
अभ्यपद्यन्नसंहृष्टास्तेजोवन्तो महाबलाः ।
नानासत्त्वसमाकीर्णं दैत्येन्द्रनिलयोपमम् ॥ १२
दुर्दर्शमतिघोरं च दुर्विगाहं च सर्वशः ।
ततः पर्वतकूटाभो हनुमान्पवनात्मजः ॥ १३
अब्रवीद्वानरांत्सर्वान्कान्तारवनकोविदः ।
गिरिजालावृतान्देशान्मार्गित्वा दक्षिणां दिशम् ॥ १४
वयं सर्वे परिश्रान्ता न च पश्याम मैथिलीम् ।
अस्माच्चापि बिलाद्धंसाः क्रौञ्चाश्च सह सारसैः ॥ १५
जलार्द्राश्चक्रवाकाश्च निष्पतन्ति स्म सर्वतः ।
नूनं सलिलवानत्र कूपो वा यदि वा ह्रदः ॥ १६
तथा चेमे बिलद्वारि स्निग्धास्तिष्ठन्ति पादपाः ।
इत्युक्त्वा तद्बिलं सर्वे विविशुस्तिमिरावृतम् ॥ १७
अचन्द्रसूर्यं हरयो ददृशू रोमहर्षणम् ।
निशाम्य तस्मात्सिंहांश्च त्रस्तांश्च मृगपक्षिणः ॥ १८
प्रविष्टा हरिशार्दूला बिलं तिमिरसंवृतम् ।
न तेषां सज्जते चक्षुर्न तेजो न पराक्रमः ॥ १९

वायोरिव गतिस्तेषां दृष्टिस्तमसि वर्तते ।
ते प्रविष्टास्तु वेगेन तद्बिलं कपिकुञ्जराः ॥ २०

प्रकाशमभिरामं च ददृशुर्देशमुत्तमम् ।
ततस्तस्मिन्बिले दुर्गे नानापादपसङ्कुले ॥ २१

अन्योन्यं संपरिष्वज्य जग्मुर्योजनमन्तरम् ।
ते नष्टसंज्ञास्तृषितास्संभ्रान्तास्सलिलार्थिनः ॥ २२

परिपेतुर्बिले तस्मिन्कंचित्कालमतन्द्रिताः ।
ते कृशा दीनवदनाः परिश्रान्ताः प्लवङ्गमाः ॥ २३

आलोकं ददृशुर्वीरा निराशा जीविते तदा ।
ततस्तं देशमागम्य सौम्यं वितिमिरं वनम् ॥ २४

ददृशुः काञ्चनान्वृक्षान्दीप्तवैश्वानरप्रभान् ।
सालांस्तालांश्च पुन्नागान्ककुभान्वंजुळान्धवान् ॥ २५

चम्पकान्नागवृक्षांश्च कर्णिकारांश्च पुष्पितान् ।
स्तबकैः काञ्चनैश्चित्रैः रक्तैः किसलयैस्तथा ॥ २६

आपीडैश्च लताभिश्च हेमाभरणभूषितान् ।
तरुणादित्यसंकाशान्वैडूर्यकृतवेदिकान् ॥ २७

विभ्राजमानान्वपुषा पादपांश्च हिरण्मयान् ।
नीलवैडूर्यवर्णाश्च पद्मिनीः पतगावृताः ॥ २८

महद्भिः काञ्चनैः पद्मैर्वृता बालार्कसन्निभैः ।
जातरूपमयैर्मत्स्यैर्महद्भिश्च सकच्छपैः ॥ २९

नळिनीस्तत्र ददृशुः प्रसन्नसलिलावृताः ।
काञ्चनानि विमानानि राजतानि तथैव च ॥ ३०

तपनीयगवाक्षाणि मुक्ताजालावृतानि च।
हैमराजतभौमानि वैडूर्यमणिमन्ति च ॥ ३१
ददृशुस्तत्र हरयो गृहमुख्यानि सर्वशः।
पुष्पितान्फलिनो वृक्षान्प्रवाळमणिसन्निभान् ॥ ३२
काञ्चनभ्रमरांश्चैव मधूनि च समन्ततः।
मणिकाञ्चनचित्राणि शयनान्यासनानि च ॥ ३३
महार्हाणि च यानानि ददृशुस्ते समन्ततः।
हैमराजतकांस्यानां भाजनानां च संचयान् ॥ ३४
अगरूणां च दिव्यानां चन्दनानां च संचयान्।
शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ॥ ३५
महार्हाणि च पानानि मधूनि रसवन्ति च।
दिव्यानामम्बराणां च महार्हाणां च संचयान् ॥ ३६
कम्बळानां च चित्राणामजिनानां च संचयान्।
तत्र तत्र च विन्यस्तान्दीप्तान्वैश्वानरप्रभान् ॥ ३७
ददृशुर्वानराश्शुभ्रान्जातरूपस्य संचयान्।
तत्र तत्र विचिन्वन्तो बिले तस्मिन्महाबलाः ॥ ३८
ददृशुर्वानराश्शूराः स्त्रियं कांचिददूरतः।
तां दृष्ट्वा भृशसन्त्रस्ताश्चीरकृष्णाजिनाम्बराम् ॥ ३९
तापसीं नियताहारां ज्वलन्तीमिव तेजसा।
विस्मिता हरयस्तत्र व्यवातिष्ठन्त सर्वशः ॥ ४०
पप्रच्छ हनुमांस्तत्र काऽसि त्वं कस्य वा बिलम्।'

ततो हनूमान्गिरिसन्निकाशः कृताञ्जलिस्तामभिवाद्य वृद्धाम् ।
पप्रच्छ ' का त्वं भवनं बिलं च रत्नानि हेमानि वदस्व कस्य ॥ ४१

इति श्रीमत्किष्किन्धाकाण्डे पञ्चाशस्सर्गः ॥

---

## ॥ एकपञ्चाशस्सर्गः ॥

इत्युक्त्वा हनुमांस्तत्र पुनः कृष्णाजिनाम्बराम् ।
अब्रवीत्तां महाभागां तापसीं धर्मचारिणीम् ॥ १

" इदं प्रविष्टास्सहसा बिलं तिमिरसंवृतम् ।
क्षुत्पिपासापरिश्रान्ताः परिखिन्नाश्च सर्वशः ॥ २

महद्धरण्या विवरं प्रविष्टाः स्म पिपासिताः ।
इमांस्त्वेवं विधान्भावान्विविधानद्भुतोपमान् ॥ ३

दृष्ट्वा वयं प्रव्यथितास्संभ्रान्ता नष्टचेतसः ।
कस्यैते काञ्चना वृक्षास्तरुणादित्यसन्निभाः ॥ ४

शुचीन्यभ्यवहार्याणि मूलानि च फलानि च ।
काञ्चनानि विमानानि राजतानि गृहाणि च ॥ ५

तपनीयगवाक्षाणि मणिजालावृतानि च ।
पुष्पिताः फलवन्तश्च पुण्यास्सुरभिगन्धिनः ॥ ६

इमे जाम्बूनदमयाः पादपाः कस्य तेजसा ।
काञ्चनानि च पद्मानि जातानि विमले जले ॥ ७

कथं मत्स्याश्च सौवर्णाश्चरन्ति सह कच्छपैः ।
आत्मानमनुभावं च कस्य चैतत्तपोबलम् ॥ ८

अजानतां नस्सर्वेषां सर्वमाख्यातुमर्हसि ।"
एवमुक्ता हनुमता तापसी धर्मचारिणी ॥ ९

प्रत्युवाच हनूमन्तं सर्वभूतहिते रता ।
"मयो नाम महातेजा मायावी दानवर्षभः ॥ १०

तेनेदं निर्मितं सर्वं मायया काञ्चनं वनम् ।
पुरा दानवमुख्यानां विश्वकर्मा बभूव ह ॥ ११

येनेदं काञ्चनं दिव्यं निर्मितं भवनोत्तमम् ।
स तु वर्षसहस्राणि तपस्तप्त्वा महावने ॥ १२

पितामहाद्वरं लेभे सर्वमौशनसं धनम् ।
वनं विधाय बलवांत्सर्वकामेश्वरस्तदा ॥ १३

उवास सुखितः कालं कंचिदस्मिन्महावने ।
तमप्सरसि हेमायां सक्तं दानवपुङ्गवम् ॥ १४

विक्रम्यैवाशनिं गृह्य जघानेशः पुरन्दरः ।
इदं च ब्रह्मणा दत्तं हेमायै वनमुत्तमम् ॥ १५

शाश्वताः कामभोगाश्च गृहं चेदं हिरण्मयम् ।
दुहिता मेरुसावर्णेरहं तस्यास्स्वयं प्रभा ॥ १६

इदं रक्षामि भवनं हेमाया वानरोत्तम ।
मम प्रियसखी हेमा नृत्तगीतविशारदा ॥ १७

तया दत्तवरा चास्मि रक्षामि भवनोत्तमम् ।
किं कार्यं कस्य वा हेतोः कान्ताराणि प्रपद्यथ ॥ १८

कथं चेदं वनं दुर्गं युष्माभिरुपलक्षितम् ।
इमान्यभ्यवहार्याणि मूलानि च फलानि च ॥ १९

भुक्त्वा पीत्वा च पानीयं सर्वं मे वक्तुमर्हथ ।"
[एवमुक्ते शुभे वाक्ये तापस्या धर्मसंहिते ॥ २०

हनूमान्हरिशार्दूलः प्रत्युवाच स्वयंप्रभाम् ।
अधीनाः स्मस्त्वदर्थं च स्मर धर्ममनुत्तमम् ॥ २१

म्रियमाणान्निराहारान्संजीवय तपोधने ।
तच्छ्रुत्वा वचनं तस्य तापसी धर्मचारिणी ॥ २२

आदाय फलमूलानि विधिनोपजहार सा ।
प्रतिगृह्य तु तत्तस्यास्तदा विन्ध्यवनेचराः ॥ २३
क्षुधार्ता भक्षयामासुः प्रशशंसुस्तपोधनाम् ।]

इति श्रीमत्किष्किन्धाकाण्डे एकपञ्चाशस्सर्गः ॥

---

## ॥ द्विपञ्चाशस्सर्गः ॥

अथ तानब्रवीत्सर्वान्विश्रान्तान्हरियूथपान् ।
इदं वचनमेकाग्रा तापसी धर्मचारिणी ॥ १

"वानराः यदि वः खेदः प्रणष्टः फलभक्षणात् ।
यदि चैतन्मया श्राव्यं श्रोतुमिच्छामि कथ्यताम् ॥" २

तस्यास्तद्वचनं श्रुत्वा हनूमान्मारुतात्मजः ।
आर्जवेन यथा तत्त्वमाख्यातुमुपचक्रमे ॥ ३

राजा सर्वस्य लोकस्य महेन्द्रवरुणोपमः ।
रामो दाशरथिश्श्रीमान्प्रविष्टो दण्डकावनम् ॥ ४

लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ।
तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ॥ ५

वीरस्तस्य सखा राज्ञस्सुग्रीवो नाम वानरः ।
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ॥ ६

अगस्त्यचरितामाशां दक्षिणां यमरक्षिताम् ।
सहैभिर्वानरैर्घोरैरङ्गदप्रमुखैर्वयम् ॥ ७

रावणं सहितास्सर्वे राक्षसं कामरूपिणम् ।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः ॥ ८

विचित्य तु वयं सर्वे समग्रां दक्षिणां दिशम् ।
बुभुक्षिताः परिश्रान्ता वृक्षमूलमुपाश्रिताः ॥ ९

विवर्णवदनास्सर्वे सर्वे ध्यानपरायणाः ।
नाधिगच्छामहे पारं मग्नाश्चिन्तामहार्णवे ॥ १०

चारयन्तस्ततः चक्षुर्दृष्टवन्तो वयं बिलम् ।
लतापादपसंछन्नं तिमिरेण समावृतम् ॥ ११

अस्माद्धंसा जलक्लिन्नाः पक्षैस्सलिलविस्रवैः ।
कुररास्सारसाश्चैव निष्पतन्ति पतत्रिणः ॥ १२

साध्वत्र प्रविशामेति मया तूक्ताः प्लवङ्गमाः ।
तेषामपि हि सर्वेषामनुमानमुपागतम् ॥ १३

'गच्छाम प्रविशा' मेति भर्तृकार्यत्वरान्विताः ।
ततो गाढं निपतिता गृह्य हस्तौ परस्परम् ॥ १४

इदं प्रविष्टास्सहसा बिलं तिमिरसंवृतम् ।
एतन्नः कार्यमेतेन कृत्येन वयमागताः ॥ १५

त्वां चैवोपगतास्सर्वे परिद्यूना बुभुक्षिताः ।
आतिथ्यधर्मदत्तानि मूलानि च फलानि च ॥ १६

अस्माभिरुपभुक्तानि बुभुक्षापरिपीडितैः ।
यत्त्वया रक्षितास्सर्वे म्रियमाणा बुभुक्षया ॥ १७.

ब्रूहि प्रत्युपकारार्थं किं ते कुर्वन्तु वानराः ।"
एवमुक्ता तु धर्मज्ञैर्वानरैस्तैस्स्वयंप्रभा ॥ १८

प्रत्युवाच ततस्सर्वानिदं वानरपुङ्गवान् ।
"सर्वेषां परितुष्टाऽस्मि वानराणां तरस्विनाम् ॥ १९.

चरन्त्या मम धर्मेण न कार्यमिह केनचित् ।"

इति श्रीमत्किष्किन्धाकाण्डे द्विपञ्चाशस्सर्गः ॥

---

## ॥ त्रिपञ्चाशस्सर्गः ॥

एवमुक्तश्शुभं वाक्यं तापस्या धर्मसंहितम् ।
उवाच हनुमान्वाक्यं तामनिन्दितचेष्टिताम् ॥ १.

"शरणं त्वां प्रपन्नास्स्मस्सर्वे वै धर्मचारिणि! ।
यः कृतस्समयोऽस्माकं सुग्रीवेण महात्मना ॥ २

स च कालो ह्यतिक्रान्तो बिले च परिवर्तताम् ।
सा त्वमस्माद्बिलाद्घोरादुत्तारयितुमर्हसि ॥ ३.

तस्मात्सुग्रीववचनादतिक्रान्तान्गतायुषः ।
त्रातुमर्हसि नस्सर्वान्सुग्रीवभयकर्शितान् ॥ ४.

महच्च कार्यमस्माभिः कर्तव्यं धर्मचारिणि ।
तच्चापि न कृतं कार्यमस्माभिरिह वासिभिः ॥" ५.

एवमुक्ता हनुमता तापसी वाक्यमब्रवीत् ।
"जीवता दुष्करं मन्ये प्रविष्टेन निवर्तितुम् ॥ ६.

तपसस्तु प्रभावेन नियमोपार्जितेन च ।
सर्वानेव बिलादस्मादुद्धरिष्यामि वानरान् ॥ ७

निमीलयत चक्षूंषि सर्वे वानरपुङ्गवाः ! ।
न हि निष्क्रमितुं शक्यमनिमीलितलोचनैः ॥" ८

ततस्संमीलितास्सर्वे सुकुमाराङ्गुलैः करैः ।
सहसा पिदधुर्दृष्टिं हृष्टा गमनकाङ्क्षया ॥ ९

वानरास्तु महात्मानो हस्तरुद्धमुखास्तदा ।
निमेषान्तरमात्रेण बिलादुत्तारितास्तया ॥ १०

ततस्तान्वानरांत्सर्वांस्तापसी धर्मचारिणी ।
निस्सृतान्विषमात्तस्मात्समाश्वास्येदमब्रवीत् ॥ ११

"एष विन्ध्यो गिरिश्श्रीमान्नानाद्रुमलताकुलः ।
एष प्रस्रवणश्शैलस्सागरोऽयं महोदधिः ॥ १२

स्वस्ति वोऽस्तु गमिष्यामि भवनं वानरर्षभाः ।"
इत्युक्त्वा तद्बिलं श्रीमत्प्रविवेश स्वयंप्रभा ॥ १३

ततस्ते ददृशुर्घोरं सागरं वरुणालयम् ।
अपारमभिगर्जन्तं घोरैरूर्मिभिरावृतम् ॥ १४

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम् ।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः ॥ १५

विन्ध्यस्य तु गिरेः पादे संप्रपुष्पितपादपे ।
उपविश्य महाभागाश्चिन्तामापेदिरे तदा ॥ १६

ततः पुष्पातिभाराग्रान् लताशतसमावृतान् ।
द्रुमान्वासन्तिकान्दृष्ट्वा बभूवुर्भयशङ्किताः ॥ १७

ते वसन्तमनुप्राप्तं प्रतिबुद्ध्वा परस्परम् ।
नष्टसंदेशकालार्था निपेतुर्धरणीतले ॥ १८

ततस्तान्कपिवृद्धांस्तु शिष्टांश्चैव वनौकसः ।
वाचा मधुरयाऽऽभाष्य यथावदनुमान्य च ॥ १९

स तु सिंहवृषस्कन्धः पीनायतभुजः कपिः ।
युवराजो महाप्राज्ञः अङ्गदो वाक्यमब्रवीत् ॥ २०

“ शासनात्कपिराजस्य वयं सर्वे विनिर्गताः ।
मासः पूर्णो बिलस्थानां हरयः किं न बुध्यते ॥ २१

वयमाश्वयुजे मासि कालसंख्यां व्यवस्थिताः ।
प्रस्थितास्सोऽपि चातीतः किमतः कार्यमुत्तरम् ॥ २२

भवन्तः प्रत्ययं प्राप्ता नीतिमार्गविशारदाः ।
हितेष्वभिरता भर्तुर्निसृष्टास्सर्वकर्मसु ॥ २३

कर्मस्वप्रतिमास्सर्वे दिक्षु विश्रुतपौरुषाः ।
मां पुरस्कृत्य निर्याता पिङ्गाक्षप्रतिचोदिताः ॥ २४

इदानीमकृतार्थानां मर्तव्यं नात्र संशयः ।
हरिराजस्य संदेशमकृत्वा कस्सुखी भवेत् ॥ २५

तस्मिन्नतीते काले तु सुग्रीवेण कृते स्वयम् ।
प्रायोपवेशनं युक्तं सर्वेषां च वनौकसाम् ॥ २६

तीक्ष्णः प्रकृत्या सुग्रीवस्स्वामिभावे व्यवस्थितः ।
न क्षमिष्यति नस्सर्वानपराधकृतो गतान् ॥ २७

अप्रवृत्तौ च सीतायाः पापमेव करिष्यति ।
तस्मात्क्षममिहाद्यैव प्रायोपविशनं हि नः ॥ २८

त्यक्त्वा पुत्रांश्च दारांश्च धनानि च गृहाणि च।
ध्रुवं नो हिंसिता राजा सर्वान्प्रतिगतानितः ॥ २९

वधेनाप्रतिरूपेण श्रेयान्मृत्युरिहैव नः।
न चाहं यौवराज्येन सुग्रीवेणाभिषेचितः ॥ ३०

नरेन्द्रेणाभिषिक्तोऽस्मि रामेणाक्लिष्टकर्मणा।
स पूर्वं बद्धवैरो मां राजा दृष्ट्वा व्यतिक्रमम् ॥ ३१

घातयिष्यति दण्डेन तीक्ष्णेन कृतनिश्चयः।
किं मे सुहृद्भिर्व्यसनं पश्यद्भिर्जीवितान्तरे ॥ ३२

इहैव प्रायमासिष्ये पुण्ये सागररोधसि।"
एतच्छ्रुत्वा कुमारेण युवराजेन भाषितम् ॥ ३३

सर्वे ते वानरश्रेष्ठाः करुणं वाक्यमब्रुवन्।
"तीक्ष्णः प्रकृत्या सुग्रीवः प्रियासक्तश्च राघवः ॥ ३४

[समीक्ष्याकृतकार्यांस्तु तस्मिंस्तु समये गते।
अदृष्टायां तु वैदेह्यां दृष्ट्वाऽस्मांश्च समागतान् ॥ ३५

राघवप्रियकामार्थं घातयिष्यत्यसंशयम्।
न क्षमं चापराद्धानां गमनं स्वामिपार्श्वतः ॥ ३६

इहैव सीतामन्विष्य प्रवृत्तिमुपलभ्य वा।
नोचेद्गच्छाम तं वीरं गमिष्यामो यमक्षयम् ॥ ३७

प्लवङ्गमानां तु भयार्दितानां श्रुत्वा वचस्तार इदं बभाषे।
"अलं विषादेन बिलं प्रविश्य वसाम सर्वे यदि रोचते वः ॥ ३८

इदं हि मायाविहितं सुदुर्गमं प्रभूतवृक्षोदकभोज्यपेयकम्।
इहास्ति नो नैव भयं पुरन्दरान्न राघवाद्वानरराजतोऽपि वा ॥"३९

श्रुत्वाङ्गदस्यापि वचोऽनुकूलमूचुश्च सर्वे हरयः प्रतीताः ।
"यथा न हिंस्येम तथाविधानमसक्तमद्यैव विधीयतां नः ॥ ४०

इति श्रीमत्किष्किन्धाकाण्डे त्रिपञ्चाशस्सर्गः ॥

---

## ॥ चतुःपञ्चाशस्सर्गः ॥

तथा ब्रुवति तारे तु ताराधिपतिवर्चसि ।
अथ मेने हृतं राज्यं हनुमानङ्गदेन तत् ॥ १

बुध्या ह्यष्टाङ्गया युक्तं चतुर्बलसमन्वितम् ।
चतुर्दशगुणं मेने हनुमान्वालिनस्सुतम् ॥ २

आपूर्यमाणं शश्वच्च तेजोबलपराक्रमैः ।
शशिनं शुक्लपक्षादौ वर्धमानमिव श्रिया ॥ ३

बृहस्पतिसमं बुद्ध्या विक्रमे सदृशं पितुः ।
शुश्रूषमाणं तारस्य शक्रस्येव पुरन्दरम् ॥ ४

भर्तुरर्थे परिश्रान्तं सर्वशास्त्रविदां वरम् ।
अभिसंधातुमारेभे हनूमानङ्गदं ततः ॥ ५

स चतुर्णामुपायानां तृतीयमुपवर्णयन् ।
भेदयामास तांत्सर्वान्वानरान्वाक्यसंपदा ॥ ६

तेषु सर्वेषु भिन्नेषु ततोऽभीषयदङ्गदम् ।
भीषणैर्बहुभिर्वाक्यैः कोपोपायसमन्वितैः ॥ ७

त्वं समर्थतरः पित्रा युद्धे तारेय ! वै धुरम् ।
दृढं धारयितुं शक्तः कपिराज्यं यथा पिता ॥ ८

नित्यमस्थिरचित्ता हि कपयो हरिपुङ्गव ।
नाज्ञाप्यं विषहिष्यन्ति पुत्रदारान्विना त्वया ॥ ९

त्वां नैते ह्यनुयुञ्जीयुः प्रत्यक्षं प्रवदामि ते ।
यथाऽयं जाम्बवान्नीलस्सुहोत्रश्च महाकपिः ॥ १०

न ह्यहं त इमे सर्वे सामदानादिभिर्गुणैः ।
दण्डेन वा त्वया शक्यास्सुग्रीवादपकर्षितुम् ॥ ११

विगृह्यासनमप्याहुर्दुर्बलेन बलीयसः ।
आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः ॥ १२

यां चेमां मन्यसे धात्रीमेतद्बिलमिति श्रुतम् ।
एतल्लक्ष्मणबाणानामीषत्कार्यं विदारणे ॥ १३

स्वल्पं हि कृतमिन्द्रेण क्षिपता ह्यशनिं पुरा ।
लक्ष्मणो निशितैर्बाणैर्भिन्द्यात्पत्रपुटं यथा ॥ १४

लक्ष्मणस्य तु नाराचा बहवस्सन्ति तद्विधाः ।
वज्राशनिसमस्पर्शा गिरीणामपि दारणाः ॥ १५

अवस्थाने यदैव त्वमासिष्यसि परन्तप ।
तदैव हरयस्सर्वे त्यक्ष्यन्ति कृतनिश्चयाः ॥ १६

स्मरन्तः पुत्रदाराणां नित्योद्विग्ना बुभुक्षिताः ।
खेदिता दुःखशय्याभिस्त्वां करिष्यन्ति पृष्ठतः ॥ १७

स त्वं हीनस्सुहृद्भिश्च हितकामैश्च बन्धुभिः ।
तृणादपि भृशोद्विग्नस्स्पन्दमानाद्भविष्यसि ॥ १८

न च जातु न हिंस्युस्त्वां घोरा लक्ष्मणसायकाः ।
अपवृत्तं जिघांसन्तो महावेगा दुरासदाः ॥ १९

असाभिस्तु गतं सार्धं विनीतवदुपस्थितम् ।
आनुपूर्व्यात्तु सुग्रीवो राज्ये त्वां स्थापयिष्यति ॥ २०
धर्मकामः पितृव्यस्ते प्रीतिकामो दृढव्रतः ।
शुचिस्सत्यप्रतिज्ञश्च न त्वां जातु जिघांसति ॥ २१
प्रियकामश्च ते मातुस्तदर्थं चास्य जीवितम् ।
तस्यापत्यं च नास्त्यन्यस्तस्मादङ्गद! गम्यताम् ॥" २२

इति श्रीमत्किष्किन्धाकाण्डे चतुःपञ्चाशस्सर्गः ॥

---

## ॥ पञ्चपञ्चाशस्सर्गः ॥

श्रुत्वा हनुमतो वाक्यं प्रश्रितं धर्मसंहितम् ।
स्वामिसत्कारसंयुक्तमङ्गदो वाक्यमब्रवीत् ॥ १
"स्थैर्यमात्ममनश्शौचमानृशंस्यमथाऽऽर्जवम् ।
विक्रमश्चैव धैर्यं च सुग्रीवे नोपपद्यते ॥ २
भ्रातुर्ज्येष्ठस्य यो भार्यां जीवतो महिषीं प्रियाम् ।
धर्मेण मातरं यस्तु स्वीकरोति जुगुप्सितः ॥ ३
कथं स धर्मं जानीते येन भ्रात्रा महात्मना ।
युद्धायाभिनियुक्तेन बिलस्य पिहितं मुखम् ॥ ४
सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः ।
विस्मृतो राघवो येन स कस्य तु कृतं स्मरेत् ॥ ५
लक्ष्मणस्य भयाद्येन नाधर्मभयभीरुणा ।
आदिष्टा मार्गितुं सीतां धर्ममस्मिन्कथं भवेत् ॥ ६

तस्मिन्पापे कृतघ्ने तु स्मृतिहीने चलात्मनि ।
आर्यः को विश्वसेज्जातु तत्कुलीनो जिजीविषुः ॥ ७

राज्ये पुत्रः प्रतिष्ठाप्यस्सगुणो निर्गुणोऽपि वा ।
कथं शत्रुकुलीनं मां सुग्रीवो जीवयिष्यति ॥ ८

भिन्नमन्त्रोऽपराद्धश्च हीनशक्तिः कथं ह्यहम् ।
किष्किन्धां प्राप्य जीवेयमनाथ इव दुर्बलः ॥ ९

उपांशुदण्डेन हि मां बन्धनेनोपपादयेत् ।
शठः क्रूरो नृशंसश्च सुग्रीवो राज्यकारणात् ॥ १०

बन्धनाद्वाऽवसादान्मे श्रेयः प्रायोपवेशनम् ।
अनुजानीत मां सर्वे गृहं गच्छन्तु वानराः ॥ ११

अहं वः प्रतिजानामि नागमिष्याम्यहं पुरीम् ।
इहैव प्रायमाशिष्ये श्रेयो मरणमेव मे ॥ १२

अभिवादनपूर्वं हि राघवौ बलशालिनौ !
[वाच्यौ मद्वचनाद्वीराः कुशलं रघुपुङ्गवौ ॥] १३

अभिवादनपूर्वं तु राजा कुशलमेव च ।
वाच्यस्तातो यवीयान्मे सुग्रीवो वानरेश्वरः ॥ १४

आरोग्यपूर्वं कुशलं वाच्या माता रुमा च मे ।
मातरं चैव मे तारामाश्वासयितुमर्हथ ॥ १५

प्रकृत्या प्रियपुत्रा सा सानुक्रोशा तपस्विनी ।
विनष्टमिह मां श्रुत्वा व्यक्तं हास्यति जीवितम् ॥ १६

एतावदुक्त्वा वचनं वृद्धांस्तानभिवाद्य च ।
विवेश चाङ्गदो भूमौ रुदन्दर्भेषु दुर्मनाः ॥ १७

तस्य संविशतस्तत्र रुदन्तो वानरर्षभाः ।
नयनेभ्यः प्रमुमुचुरुष्णं वै वारि दुःखिताः ॥ १८
सुग्रीवं चैव निन्दन्तः प्रशंसन्तश्च वालिनम् ।
परिवार्याङ्गदं सर्वे व्यवसन्प्रायमासितुम् ॥ १९
मतं तद्वालिपुत्रस्य विज्ञाय प्लवगर्षभाः ।
उपस्पृश्योदकं तत्र प्राङ्मुखास्समुपाविशन् ॥ २०
दक्षिणाग्रेषु दर्भेषु उदक्तीरं समाश्रिताः ।
मुमूर्षवो हरिश्रेष्ठा एतत्क्षममिति स्म ह ॥ २१
रामस्य वनवासं च क्षयं दशरथस्य च ।
जनस्थानवधं चैव वधं चैव जटायुषः ॥ २२
हरणं चैव वैदेह्या वालिनश्च वधं रणे ।
रामकोपं च वदतां हरीणां भयमागतम् ॥ २३
स संविशद्भिर्बहुभिर्महीधरो महाद्रिकूटप्रतिमैः प्लवङ्गमैः ।
बभूव सन्नादितनिर्दरान्तरो भृशं नदद्भिर्जलदैरिवोल्बणैः ॥ २४

इति श्रीमत्किष्किन्धाकाण्डे पञ्चपञ्चाशस्सर्गः ॥

---

## ॥ षट्पञ्चाशस्सर्गः ॥

उपविष्टास्तु ते सर्वे यस्मिन्प्रायं गिरिस्थले ।
हरयो गृध्रराजश्च तं देशमुपचक्रमे ॥ १
संपातिर्नाम नाम्ना तु चिरंजीवी विहङ्गमः ।
भ्राता जटायुषः श्रीमान्प्रख्यातबलपौरुषः ॥ २

कन्दरादभिनिष्क्रम्य स विन्ध्यस्य महागिरेः ।
उपविष्टान्हरीन्दृष्ट्वा हृष्टात्मा गिरमब्रवीत् ॥ ३

" विधिः किल नरं लोके विधानेनानुवर्तते ।
यथाऽयं विहितो भक्ष्यश्चिरान्मह्यमुपागतः ॥ ४

परम्पराणां भक्षिष्ये वानराणां मृतं मृतम् । "
उवाचेदं वचः पक्षी तान्निरीक्ष्य प्लवङ्गमान् ॥ ५

तस्य तद्वचनं श्रुत्वा भक्ष्यलुब्धस्य पक्षिणः ।
अङ्गदः परमायस्तो हनूमन्तमथाब्रवीत् ॥ ६

पश्य सीतापदेशेन साक्षाद्वैवस्वतो यमः ।
इमं देशमनुप्राप्तो वानराणां विपत्तये ॥ ७

रामस्य न कृतं कार्यं राज्ञो न च वचः कृतम् ।
हरीणामियमज्ञाता विपत्तिस्सहसाऽऽगता ॥ ८

वैदेह्याः प्रियकामेन कृतं कर्म जटायुषा ।
गृध्रराजेन यत्तत्र श्रुतं वस्तदशेषतः ॥ ९

तथा सर्वाणि भूतानि तिर्यग्योनिगतान्यपि ।
प्रियं कुर्वन्ति रामस्य त्यक्त्वा प्राणान्यथा वयम् ॥ १०

अन्योन्यमुपकुर्वन्ति स्नेहकारुण्ययन्त्रिताः ।
तेन तस्योपकारार्थं त्यजताऽऽत्मानमात्मना ॥ ११

प्रियं कृतं हि रामस्य धर्मज्ञेन जटायुषा ।
राघवार्थे परिश्रान्ता वयं संत्यक्तजीविताः ॥ १२

कान्ताराणि प्रपन्नाः स्म न च पश्याम मैथिलीम् ।
स सुखी गृध्रराजस्तु रावणेन हतो रणे ॥ १३

मुक्तश्च सुग्रीवभयाद्गतश्च परमां गतिम् ।
जटायुषो विनाशेन राज्ञो दशरथस्य च ॥ १४
हरणेन च वैदेह्यास्संशयं हरयो गताः ।
रामलक्ष्मणयोर्वासः अरण्ये सह सीतया ॥ १५
राघवस्य च बाणेन वालिनश्च तथा वधः ।
रामकोपादशेषाणां राक्षसानां तथा वधः ॥ १६
कैकेय्या वरदानेन इदं हि विकृतं कृतम् ।
तदसुखमनुकीर्तितं वचो भुवि पतितांश्च समीक्ष्य वानरान् ।
भृशचलितमतिर्महामतिः कृपणमुदाहृतवान्स गृध्रराट् ॥ १७
तत्तु श्रुत्वा तदा वाक्यमङ्गदस्य मुखोद्गतम् ।
अब्रवीद्वचनं गृध्रस्तीक्ष्णतुण्डो महास्वनः ॥ १८
"कोऽयं गिरा घोषयति प्राणैः प्रियतमस्य मे ।
जटायुषो वधं भ्रातुः कम्पयन्निव मे मनः ॥ १९
कथमासीज्जनस्थाने युद्धं राक्षसगृध्रयोः ।
नामधेयमिदं भ्रातुश्चिरस्याद्य मया श्रुतम् ॥ २०
इच्छेयं गिरिदुर्गाच्च भवद्भिरवतारितुम् ।
यवीयसो गुणज्ञस्य श्लाघनीयस्य विक्रमैः ॥ २१
अतिदीर्घस्य कालस्य तुष्टोऽस्मि परिकीर्तनात् ।
तदिच्छेयमहं श्रोतुं विनाशं वानरर्षभाः ! ॥ २२
भ्रातुर्जटायुषस्तस्य जनस्थाननिवासिनः ।
तस्यैव च मम भ्रातुस्सखा दशरथः कथम् ॥ २३

यस्य रामः प्रियः पुत्रो ज्येष्ठो गुरुजनप्रियः ।
सूर्यांशुदग्धपक्षत्वान्न शक्नोम्युपसर्पितुम् ॥ २४
इच्छेयं पर्वतादस्मादवतर्तुमरिन्दमाः ।"

इति श्रीमत्किष्किन्धाकाण्डे षट्पञ्चाशस्सर्गः ॥

---

## ॥ सप्तपञ्चाशस्सर्गः ॥

शोकाद्भ्रष्टस्वरमपि श्रुत्वा ते हरियूथपाः ।
श्रद्दधुर्नैव तद्वाक्यं कर्मणा तस्य शङ्किताः ॥ १

ते प्रायमुपविष्टास्तु दृष्ट्वा गृध्रं प्लवङ्गमाः ।
चक्रुर्बुद्धिं तदा रौद्रां "सर्वान्नो भक्षयिष्यति ॥ २

सर्वथा प्रायमासीनान्यदि नो भक्षयिष्यति ।
कृतकृत्या भविष्यामः क्षिप्रं सिद्धिमितो गताः ॥" ३

एतां बुद्धिं ततश्चक्रुस्सर्वे ते वानरर्षभाः ।
अवतार्य गिरेश्शृङ्गाद्गृध्रमाहाङ्गदस्तदा ॥ ४

"बभूवर्क्षरजा नाम वानरेन्द्रः प्रतापवान् ।
ममार्यः पार्थिवः पक्षिन् ! धार्मिकस्तस्य चात्मजौ ॥ ५

सुग्रीवश्चैव वाली च पुत्रावोघबलावुभौ ।
लोके विश्रुतकर्माऽभूद्राजा वाली पिता मम ॥ ६

राजा कृत्स्नस्य जगत इक्ष्वाकूणां महारथः ।
रामो दाशरथिश्श्रीमान्प्रविष्टो दण्डकावनम् ॥ ७

लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ।
पितुर्निदेशनिरतो धर्म्यं पन्थानमाश्रितः ॥ ८

तस्य भार्या जनस्थानाद्रावणेन हृता बलात् ।
रामस्य तु पितुर्मित्रं जटायुर्नाम गृध्रराट् ॥ ९
ददर्श सीतां वैदेहीं ह्रियमाणां विहायसा ।
रावणं विरथं कृत्वा स्थापयित्वा च मैथिलीम् ॥ १०
परिश्रान्तश्च वृद्धश्च रावणेन हतो रणे ।
एवं गृध्रो हतस्तेन रावणेन बलीयसा ॥ ११
संस्कृतश्चापि रामेण गतश्च गतिमुत्तमाम् ।
ततो मम पितृव्येण सुग्रीवेण महात्मना ॥ १२
चकार राघवस्सख्यं सोऽवधीत्पितरं मम ।
मम पित्रा विरुद्धो हि सुग्रीवस्सचिवैस्सह ॥ १३
निहत्य वालिनं रामस्ततस्तमभिषेचयत् ।
स राज्ये स्थापितस्तेन सुग्रीवो वानराधिपः ॥ १४
राजा वानरमुख्यानां येन प्रस्थापिता वयम् ।
एवं रामप्रयुक्तास्तु मार्गमाणास्ततस्ततः ॥ १५
वैदेहीं नाधिगच्छामो रात्रौ सूर्यप्रभामिव ।
ते वयं दण्डकारण्यं विचित्य सुसमाहिताः ॥ १६
अज्ञानात्तु प्रविष्टाः स्म धर्मिण्या विवृतं बिलम् ।
मयस्य मायाविहितं तद्बिलं च विचिन्वताम् ॥ १७
व्यतीतस्तत्र नो मासो यो राज्ञा समयः कृतः ।
ते वयं कपिराजस्य सर्वे वचनकारिणः ॥ १८
कृतां संस्थामतिक्रान्ता भयात्प्रायमुपास्महे ।

क्रुद्धे तस्मिंस्तु काकुत्स्थे सुग्रीवे च सलक्ष्मणे ।
गतानामपि सर्वेषां तत्र नो नास्ति जीवितम् ॥ १९

इति श्रीमत्किष्किन्धाकाण्डे सप्तपञ्चाशस्सर्गः ॥

---

## ॥ अष्टपञ्चाशस्सर्गः ॥

इत्युक्तः करुणं वाक्यं वानरैस्त्यक्तजीवितैः ।
सबाष्पो वानरान्गृध्रः प्रत्युवाच महास्वनः ॥ १

"यवीयान्मम स भ्राता जटायुर्नाम वानराः! ।
यमाख्यात हतं युद्धे रावणेन बलीयसा ॥ २

वृद्धभावादपक्षत्वाच्छृण्वंस्तदपि मर्षये ।
न हि मे शक्तिरस्त्यद्य भ्रातुर्वैरविमोक्षणे ॥ ३

पुरा वृत्रवधे वृत्ते परस्परजयैषिणौ ।
आदित्यमुपयातौ स्वो ज्वलन्तं रश्मिमालिनम् ॥ ४

आवृत्याऽऽकाशमार्गे तु जवेन स्म गतौ भृशम् ।
मध्यं प्राप्ते दिनकरे जटायुरवसीदति ॥ ५

तमहं भ्रातरं दृष्ट्वा सूर्यरश्मिभिरर्दितम् ।
पक्षाभ्यां छादयामास स्नेहात्परमविह्वलः ॥ ६

निर्दग्धपक्षः पतितो विन्ध्येऽहं वानरर्षभाः! ।
अहमस्मिन्वसन्भ्रातुः प्रवृत्तिं नोपलक्षये ॥" ७

जटायुषस्त्वेवमुक्तो भ्रात्रा संपातिना तदा ।
युवराजो महाप्राज्ञः प्रत्युवाचाङ्गदस्ततः ॥ ८

"जटायुषो यदि भ्राता श्रुतं ते गदितं मया ।
आख्याहि यदि जानासि निलयं तस्य रक्षसः ॥ ९

अदीर्घदर्शिनं तं वै रावणं राक्षसाधिपम् ।
अन्तिके यदि वा दूरे यदि जानासि शंस नः ॥" १०

ततोऽब्रवीन्महातेजा ज्येष्ठो भ्राता जटायुषः ।
आत्मानुरूपं वचनं वानरांत्संप्रहर्षयन् ॥ ११

"निर्दग्धपक्षो गृध्रोऽहं हीनवीर्यः प्लवङ्गमाः! ।
वाङ्मात्रेण तु रामस्य करिष्ये साह्यमुत्तमम् ॥ १२

जानामि वारुणान्लोकान्विष्णोस्त्रैविक्रमानपि ।
महासुरविमर्दान्वा ह्यमृतस्य च मन्थनम् ॥ १३

रामस्य यदिदं कार्यं कर्तव्यं प्रथमं मया ।
जरया च हृतं तेजः प्राणाश्च शिथिला मम ॥ १४

तरुणी रूपसंपन्ना सर्वाभरणभूषिता ।
ह्रीयमाणा मया दृष्टा रावणेन दुरात्मना ॥ १५

क्रोशन्ती 'रामराम'ेति 'लक्ष्मणे'ति च भामिनी ।
भूषणान्यपविध्यन्ती गात्राणि च विधून्वती ॥ १६

सूर्यप्रभेव शैलाग्रे तस्याः कौशेयमुत्तमम् ।
असिते राक्षसे भाति यथा वा तटिदम्बुदे ॥ १७

तां तु सीतामहं मन्ये रामस्य परिकीर्तनात् ।
श्रूयतां मे कथयतो निलयं तस्य रक्षसः ॥ १८

पुत्रो विश्रवसस्साक्षाद्भ्राता वैश्रवणस्य च ।
अध्यास्ते नगरीं लङ्कां रावणो नाम राक्षसः ॥ १९

इतो द्वीपस्समुद्रस्य संपूर्णे शतयोजने ।
तस्मिन् लङ्का पुरी रम्या निर्मिता विश्वकर्मणा ॥ २०

जाम्बूनदमयैर्द्वारैश्चित्रैः काञ्चनवेदिकैः ।
प्राकारेणार्कवर्णेन महता सुसमावृता ॥ २१

तस्यां वसति वैदेही दीना कौशेयवासिनी ।
रावणान्तःपुरे रुद्धा राक्षसीभिस्सुरक्षिता ॥ २२

जनकस्यात्मजां राज्ञस्तत्र द्रक्ष्यथ मैथिलीम् ।
लङ्कायामथ गुप्तायां सागरेण समन्ततः ॥ २३

संप्राप्य सागरस्यान्तं संपूर्णं शतयोजनम् ।
आसाद्य दक्षिणं तीरं ततो द्रक्ष्यथ रावणम् ॥ २४

तत्रैव त्वरिताः क्षिप्रं विक्रमध्वं प्लवङ्गमाः ! ।
ज्ञानेन खलु पश्यामि दृष्ट्वा प्रत्यागमिष्यथ ॥ २५

आद्यः पन्थाः कुलिङ्गानां ये चान्ये धान्यजीविनः ।
द्वितीयो बलिभोजानां ये च वृक्षफलाशिनः ॥ २६

भासास्तृतीयं गच्छन्ति क्रौञ्चाश्च कुररैस्सह ।
श्येनाश्चतुर्थं गच्छन्ति गृध्रा गच्छन्ति पञ्चमम् ॥ २७

बलवीर्योपपन्नानां रूपयौवनशालिनाम् ।
षष्ठस्तु पन्था हंसानां वैनतेयगतिः परा ॥ २८

वैनतेयाच्च नो जन्म सर्वेषां वानरर्षभाः ।
इहस्थोऽहं प्रपश्यामि रावणं जानकीं तथा ॥ २९

अस्माकमपि सौवर्णं दिव्यं चक्षुर्बलं तथा ।
तस्मादाहारवीर्येण निसर्गेण च वानराः ॥ ३०

आयोजनशतात्साग्राद्वयं पश्याम नित्यशः ।
अस्माकं विहिता वृत्तिर्निसर्गेण च दूरतः ॥ ३१

विहिता पादमूले तु वृत्तिश्चरणयोधिनाम् ।
गर्हितं तु कृतं कर्म येन स्म पिशिताशिना ॥ ३२

प्रतिकार्यं च मे तस्य वैरं भ्रातुः कृतं भवेत् ।
उपायो दृश्यतां कश्चिल्लङ्घने लवणाम्भसः ॥ ३३

[द्वीपे द्वीपे समुद्रस्य विविधानि हि सन्ति वै ।
यावन्न गच्छेत्स तया साध्व्या सार्धं प्लवङ्गमाः !] ॥ ३४

अभिगम्य तु वैदेहीं समृद्धार्था गमिष्यथ ।
समुद्रं नेतुमिच्छामि भवद्भिर्वरुणालयम् ॥ ३५

प्रदास्याम्युदकं भ्रातुस्स्वर्गतस्य महात्मनः ।”
ततो नीत्वा तु तं देशं तीरं नदनदीपतेः ॥ ३६

निर्दग्धपक्षं संपातिं वानरास्सुमहौजसः ।
पुनः प्रत्यानयित्वा च तं देशं पतगेश्वरम् ॥ ३७

बभूवुर्वानरा हृष्टाः प्रवृत्तिमुपलभ्य ते ।

इति श्रीमत्किष्किन्धाकाण्डे अष्टपञ्चाशस्सर्गः ॥

---

## ॥ एकोनषष्टितमस्सर्गः ॥

ततस्तममृतास्वादं गृध्रराजेन भाषितम् ।
निशम्य मुदिता हृष्टास्ते वचः प्लवगर्षभाः ! ॥ १

जाम्बवान्वानरश्रेष्ठस्सह सर्वैः प्लवङ्गमैः ॥
भूतलात्सहसोत्थाय गृध्रराजमथाब्रवीत् ॥ २

"क्व सीता केन वा दृष्टा को वा हरति मैथिलीम् ।
तदाख्यातु भवांत्सर्वं गतिर्भव वनौकसाम् ॥ ३

को दाशरथिबाणानां वज्रवेगनिपातिनाम् ।
स्वयं लक्ष्मणमुक्तानां न चिन्तयति विक्रमम् ॥" ४

स हरीन्प्रीतिसंयुक्तांत्सीताश्रुतिसमाहितान् ।
पुनराश्वासयन्प्रीत इदं वचनमब्रवीत् ॥ ५

"श्रूयतामिह वैदेह्या यथा मे हरणं श्रुतम् ।
येन चापि ममाऽऽख्यातं यत्र वाऽऽयतलोचना ॥ ६

अहमस्मिन्गिरौ दुर्गे बहुयोजनमायते ।
चिरान्निपतितो वृद्धः क्षीणप्राणपराक्रमः ॥ ७

तं मामेवं गतं पुत्रस्सुपार्श्वो नाम नामतः ।
आहारेण यथा कालं बिभर्ति पततां वरः ॥ ८

तीक्ष्णकामास्तु गन्धर्वास्तीक्ष्णकोपा भुजङ्गमाः ।
मृगाणां तु भयं तीक्ष्णं ततस्तीक्ष्णक्षुधा वयम् ॥ ९

स कदाचित्क्षुधार्तस्य ममाहाराभिकाङ्क्षिणः ।
गतसूर्येऽहनि प्राप्तो मम पुत्रो ह्यनामिषः ॥ १०

स मया वृद्धभावाच्च कोपाच्च परिभर्त्सितः ।
क्षुत्पिपासापरीतेन कुमारः पततां वरः ॥ ११

स मामाहारसंरोधात्पीडितं प्रीतिवर्धनः ।
अनुमान्य यथातत्त्वमिदं वचनमब्रवीत् ॥ १२

"अहं तात ! यथाकालमामिषार्थी खमाप्लुतः ।
महेन्द्रस्य गिरेर्द्वारमावृत्य च समास्थितः ॥ १३

ततस्सत्त्वसहस्राणां सागरान्तरचारिणाम् ।
पन्थानमेकोऽध्यवसं सन्निरोद्धुमवाङ्मुखः ॥ १४

तत्र कश्चिन्मया दृष्टस्सूर्योदयसमप्रभाम् ।
स्त्रियमादाय गच्छन्वै भिन्नाञ्जनचयप्रभः ॥ १५

सोऽहमभ्यवहारार्थी तौ दृष्ट्वा कृतनिश्चयः ।
तेन साम्ना विनीतेन पन्थानमभियाचितः ॥ १६

न हि सामोपपन्नानां प्रहर्ता विद्यते क्वचित् ।
नीचेष्वपि जनः कश्चित्किमङ्ग बत मद्विधः ॥ १७

स यातस्तेजसा व्योम संक्षिपन्निव वेगतः ।
अथाहं खेचरैर्भूतैरभिगम्य सभाजितः ॥ १८

'दिष्ट्या जीवसि ता'तेति ह्यब्रुवन्मां महर्षयः ।
'कथंचित्सकलत्रोऽसौ गतस्ते स्वस्त्यसंशयम् ॥' १९

एवमुक्तस्ततोऽहं तैस्सिद्धैः परमशोभनैः ।
स च मे रावणो राजा रक्षसां प्रतिवेदितः ॥ २०

हरन्दाशरथेर्भार्यां रामस्य जनकात्मजाम् ।
भ्रष्टाभरणकौशेयां शोकवेगपराजिताम् ॥ २१

रामलक्ष्मणयोर्नाम क्रोशन्तीं मुक्तमूर्धजाम् ।
एष कालात्ययस्ताव'दिति कालविदां वरः ॥ २२

एतमर्थं समग्रं मे सुपार्श्वः प्रत्यवेदयत् ।
तच्छ्रुत्वाऽपि हि मे बुद्धिर्नासीत्काचित्पराक्रमे ॥ २३

अपक्षो हि कथं पक्षी कर्म किंचिदुपक्रमे ।
यत्तु शक्यं मया कर्तुं वाग्बुद्धिगुणवर्तिना ॥ २४

श्रूयतां तत्प्रवक्ष्यामि भवतां पौरुषाश्रयम् ।
वाञ्छितेभ्यां तु सर्वेषां करिष्यामि प्रियं हि वः ॥ २५

यद्धि दाशरथेः कार्यं मम तन्नात्र संशयः ।
ते भवन्तो मतिश्रेष्ठा बलवन्तो मनस्विनः ॥ २६

प्रेषिताः कपिराजेन दैवैरपि दुरासदाः ।
रामलक्ष्मणबाणाश्च निशिताः कङ्कपत्रिणः ॥ २७

त्रयाणामपि लोकानां पर्याप्तास्त्राणनिग्रहे ।
कामं खलु दशग्रीवस्तेजोबलसमन्वितः ॥ २८

भवतां तु समर्थानां न किंचिदपि दुष्करम् ।
तदलं कालसङ्गेन क्रियतां बुद्धिनिश्चयः ॥ २९
न हि कर्मसु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।"

इति श्रीमत्किष्किन्धाकाण्डे एकोनषष्टितमस्सर्गः ॥

---

## ॥ षष्टितमस्सर्गः ॥

ततः कृतोदकं स्नातं तं गृध्रं हरियूथपाः ।
उपविष्टा गिरौ दुर्गे परिवार्य समन्ततः ॥ १

तमङ्गदमुपासीनं तैस्सर्वैर्हरिभिर्वृतम् ।
जनितप्रत्ययो हर्षात्संपातिः पुनरब्रवीत् ॥ २

"कृत्वा निश्शब्दमेकाग्राश्शृण्वन्तु हरयो ! मम ।
तत्त्वं संकीर्तयिष्यामि यथा जानामि मैथिलीम् ॥ ३

अस्य विन्ध्यस्य शिखरे पतितोऽस्मि पुरा वने ।
सूर्यातपपरीताङ्गो निर्दग्धस्सूर्यरश्मिभिः ॥ ४

लब्धसंज्ञस्तु षड्रात्राद्विवशो विह्वलन्निव ।
वीक्षमाणो दिशस्सर्वा नाभिजानामि किंचन ॥ ५

ततस्तु सागरान् शैलान्नदीस्सर्वास्सरांसि च ।
वनान्युदधिवेलां च समीक्ष्य मतिरागमत् ॥ ६

हृष्टपक्षिगणाकीर्णः कन्दरान्तरकूटवान् ।
दक्षिणस्योदधेस्तीरे विन्ध्योऽयमिति निश्चितः ॥ ७

आसीचात्राऽऽश्रमं पुण्यं सुरैरपि सुपूजितम् ।
ऋषिर्निशाकरो नाम यस्मिन्नुग्रतपाभवत् ॥ ८

अष्टौ वर्षसहस्राणि तेनास्मिन्नृषिणा विना ।
वसतो मम धर्मज्ञा ! स्वर्गते तु निशाकरे ॥ ९

अवतीर्य तु विन्ध्याग्रात्कृच्छ्रेण विषमाच्छनैः ।
तीक्ष्णदर्भां वसुमतीं दुःखेन पुनरागतः ॥ १०

तमृषिं द्रष्टुकामोऽस्मि दुःखेनाभ्यागतो भृशम् ।
जटायुषा मया चैव बहुशोऽभिगतो हि सः ॥ ११

तस्याऽऽश्रमपदाभ्याशे ववुर्वातास्सुगन्धिनः ।
वृक्षो नापुष्पितः कश्चिदफलो वा न विद्यते ॥ १२

उपेत्य चाश्रमं पुण्यं वृक्षमूलमुपाश्रितः ।
द्रष्टुकामः प्रतीक्षेऽहं भगवन्तं निशाकरम् ॥ १३

अथापश्यमदूरस्थमृषिं ज्वलिततेजसम् ।
कृताभिषेकं दुर्धर्षमुपावृत्तमुदङ्मुखम् ॥ १४

तमृक्षास्सृमरा व्याघ्रास्सिंहा नागास्सरीसृपाः ।
परिवार्योपगच्छन्ति धातारं प्राणिनो तथा ॥ १५

ततः प्राप्तमृषिं ज्ञात्वा तानि सत्त्वानि वै ययुः ।
प्रविष्टे राजानि यथा सर्वं सामात्यकं बलम् ॥ १६

ऋषिस्तु दृष्ट्वा मां प्रीतः प्रविष्टश्चाश्रमं पुनः ।
मुहूर्तमात्रान्निष्क्रम्य ततः कार्यमपृच्छत ॥ १७

" सौम्य ! वैकल्यतां दृष्ट्वा रोम्णां ते नावगम्यते ।
अग्निदग्धाविमौ पक्षौ त्वक्चैव व्रणिता तव ॥ १८

गृध्रौ द्वौ दृष्टपूर्वौ मे मातरिश्वसमौ जवे ।
गृध्राणां चैव राजानौ भ्रातरौ कामरूपिणौ ॥ १९

ज्येष्ठो हि त्वं तु संपाते ! जटायुरनुजस्तव ।
मानुषं रूपमास्थाय गृह्णीतां चरणौ मम ॥ २०

किं ते व्याधिसमुत्थानं पक्षयोः पतनं कथम् ।
दण्डो वायं कृतः केन सर्वमाख्याहि पृच्छतः ॥" २१

इति श्रीमत्किष्किन्धाकाण्डे षष्टितमस्सर्गः ॥

---

## ॥ एकषष्टितमस्सर्गः ॥

ततस्तद्दारुणं कर्म दुष्करं साहसात्कृतम् ।
आचचक्षे मुनेस्सर्वं सूर्यानुगमनं तदा ॥ १

भगव ! न्व्रणयुक्तत्वाल्लज्जया व्याकुलेन्द्रियः ।
परिश्रान्तो न शक्नोमि वचनं प्रतिभाषितुम् ॥ २

अहं चैव जटायुश्च संघर्षाद्दर्पमोहितौ ।
आकाशं पतितौ वीरौ जिज्ञासन्तौ पराक्रमम् ॥ ३

कैलासशिखरे बद्ध्वा मुनीनामग्रतः पणम् ।
रविस्स्यादनुयातव्यो यावदस्तं महागिरिम् ॥ ४

तथाऽऽवां युगपत्प्राप्तावपश्याव महीतले ।
रथचक्रप्रमाणानि नगराणि पृथक्पृथक् ॥ ५

क्वचिद्वादित्रघोषांश्च ब्रह्मघोषांश्च शुश्रुवे ।
गायन्तीश्चाङ्गना बह्वीः पश्यावो रक्तवाससः ॥ ६

तूर्णमुत्पत्य चाकाशमादित्यपथमाश्रितौ ।
आवामालोकयावस्तु वनं शाद्वलसन्निभम् ॥ ७

उपलैरिव संछन्ना दृश्यते भूश्शिलोच्चयैः ।
आपगाभिश्च संवीता सूत्रैरिव वसुन्धरा ॥ ८

हिमवांश्चैव विन्ध्यश्च मेरुश्च सुमहान्नगः ।
भूतले संप्रकाशन्ते नागा इव जलाशये ॥ ९

तीव्रस्स्वेदश्च खेदश्च भयं चासीत्तदाऽऽवयोः ।
समाविशति मोहश्च तमो मूर्छा च दारुणा ॥ १०

न दिग्विज्ञायते याम्या नाग्नेयी न च वारुणी ।
युगान्ते नियतो लोको हतो दग्ध इवाग्निना ॥ ११

मनश्च मे हतं भूयस्सन्निवर्त्य तु संश्रयम् ।
यत्नेन महता ह्यस्मिन्पुनस्संधाय चक्षुषी ॥ १२

यत्नेन महता भूयो रविस्समवलोकितः ।
तुल्यः पृथ्वीप्रमाणेन भास्करः प्रतिभाति नौ ॥ १३

जटायुर्मामनापृच्छ्य निपपात महीं ततः ।
तं दृष्ट्वा तूर्णमाकाशादात्मानं मुक्तवानहम् ॥ १४

पक्षाभ्यां च मया गुप्तो जटायुर्न प्रदह्यते ।
प्रमादात्तत्र निर्दग्धः पतन्वायुपथादहम् ॥ १५
आशङ्के तं निपतितं जनस्थाने जटायुषम् ।
अहं तु पतितो विन्ध्ये दग्धपक्षो जडीकृतः ॥ १६
राज्येन हीनो भ्रात्रा च पक्षाभ्यां विक्रमेण च ।
सर्वथा मर्तुमेवेच्छन्पतिष्ये शिखराद्गिरेः ॥" १७

इति श्रीमत्किष्किन्धाकाण्डे एकषष्टितमस्सर्गः ॥

---

## ॥ द्विषष्टितमस्सर्गः ॥

एवमुक्त्वा मुनिश्रेष्ठमरुदं दुःखितो भृशम् ।
अथ ध्यात्वा मुहूर्तं तु भगवानिदमब्रवीत् । १
"पक्षौ तु ते प्रपक्षौ च पुनरन्यौ भविष्यतः ।
प्राणाश्च चक्षुषी चैव विक्रमश्च बलं च ते ॥ २
पुराणे सुमहत्कार्यं भविष्यति मया श्रुतम् ।
दृष्टं मे तपसा चैव श्रुत्वा च विदितं मम ॥ ३
राजा दशरथो नाम कश्चिदिक्ष्वाकुनन्दनः ।
तस्य पुत्रो महातेजा रामो नाम भविष्यति ॥ ४
अरण्यं च सह भ्रात्रा लक्ष्मणेन गमिष्यति ।
अस्मिन्नर्थे नियुक्तस्सन्पित्रा सत्यपराक्रमः ॥ ५
नैर्ऋतो रावणो नाम तस्य भार्यां हरिष्यति ।
राक्षसेन्द्रो जनस्थानादवध्यस्सुरदानवैः ॥ ६

सा च कामैः प्रलोभयन्ती भक्ष्यैर्भोज्यैश्च मैथिली ।
न भोक्ष्यति महाभागा दुःखे मग्ना यशस्विनी ॥ ७
परमान्नं तु वैदेह्या ज्ञात्वा दास्यति वासवः ।
यदन्नममृतप्रख्यं सुराणामपि दुर्लभम् ॥ ८
तदन्नं मैथिली प्राप्य विज्ञायेन्द्रादिदंत्विति ।
अग्रमुद्धृत्य रामाय भूतले निर्वपिष्यति ॥ ९
'यदि जीवति मे भर्ता लक्ष्मणेन सह प्रभुः ।
देवत्वं गच्छतोर्वापि तयोरन्नमिदं' त्विति ॥ १०
एष्यन्त्यन्वेषकास्तस्या रामदूताः प्लवङ्गमाः ! ।
आख्येया राममहिषी त्वया तेभ्यो विहङ्गम ! ॥ ११
सर्वथा हि न गन्तव्यमीदृशः क्व गमिष्यसि ।
देशकालौ प्रतीक्षस्व पक्षौ त्वं प्रतिपत्स्यसे ॥ १२
नोत्सहेयमहं कर्तुमद्यैव त्वां सपक्षकम् ।
इहस्थस्त्वं तु लोकानां हितं कार्यं करिष्यसि ॥ १३
त्वयापि खलु तत्कार्यं तयोश्च नृपपुत्रयोः ।
ब्राह्मणानां सुराणां च मुनीनां वासवस्य च ॥ १४
इच्छाम्यहमपि द्रष्टुं भ्रातरौ रामलक्ष्मणौ ।
नेच्छे चिरं धारयितुं प्राणांस्त्यक्ष्ये कळेबरम् ॥ १५
महर्षिस्त्वब्रवीदेवं दृष्टतत्त्वार्थदर्शनः ।"

इति श्रीमत्किष्किन्धाकाण्डे द्विषष्टितमस्सर्गः ॥

---

## ॥ त्रिषष्टितमस्सर्गः ॥

"एतैरन्यैश्च बहुभिर्वाक्यैर्वाक्यविशारदः ।
मां प्रशस्याभ्यनुज्ञाप्य प्रविष्टस्स स्वमाश्रमम् ॥ १
कन्दरात्तु विसर्पित्वा पर्वतस्य शनैश्शनैः ।
अहं विन्ध्यं समारुह्य भवतः प्रतिपालये ॥ २
अद्य त्वेतस्य कालस्य साग्रं वर्षशतं गतम् ।
देशकालप्रतीक्षोऽस्मि हृदि कृत्वा मुनेर्वचः ॥ ३
महाप्रस्थानमासाद्य स्वर्गते तु निशाकरे ।
मां निर्दहति संतापो वितर्कैर्बहुभिर्वृतम् ॥ ४
उत्थितां मरणे बुद्धिं मुनिवाक्यैर्निवर्तये ।
बुद्धिर्या तेन मे दत्ता प्राणानां रक्षणाय तु ॥ ५
सा मेऽपनयते दुःखं दीप्तेवाग्निशिखा तमः ।
बुध्यता च मया वीर्यं रावणस्य दुरात्मनः ॥ ६
पुत्रस्संतर्जितो वाग्भिर्न त्राता मैथिली कथम् ।
तस्या विलपितं श्रुत्वा तौ च सीताविनाकृतौ ॥ ७
न मे दशरथस्नेहात्पुत्रेणोत्पादितं प्रियम् ।"
तस्य त्वेवं ब्रुवाणस्य संपातेर्वानरैस्सह ॥ ८
उत्पेततुस्तदा पक्षौ समक्षं वनचारिणाम् ।
स दृष्ट्वा स्वां तनुं पक्षैरुद्गतैररुणच्छदैः ॥ ९
प्रहर्षमतुलं लेभे वानरांश्चेदमब्रवीत् ।
"ऋषेर्निशाकरस्यैव प्रभावादमितात्मनः ॥ १०

आदित्यरश्मिनिर्दग्धौ पक्षौ मे पुनरुत्थितौ ।
यौवने वर्तमानस्य ममाऽऽसीद्यः पराक्रमः ॥ ११

तमेवाद्यानुगच्छामि बलं पौरुषमेव च ।
सर्वथा क्रियतां यत्नस्सीतामधिगमिष्यथ ॥ १२

पक्षलाभो ममायं वस्सिद्धिप्रत्ययकारकः ।
इत्युक्त्वा स हरींस्सर्वान्संपातिः पतगोत्तमः ॥ १३

उत्पपात गिरेश्शृङ्गाज्जिज्ञासुः खगमां गतिम् ।"
तस्य तद्वचनं श्रुत्वा प्रीतिसंहृष्टमानसाः ॥ १४

बभूवुर्हरिशार्दूला विक्रमाभ्युदयोन्मुखाः ।
अथ पवनसमानविक्रमाः प्लवगवराः प्रतिलब्धपौरुषाः ।
अभिजिदभिमुखा दिशं ययुर्जनकसुतापरिमार्गणोन्मुखाः ॥ १५

इति श्रीमत्किष्किन्धाकाण्डे त्रिषष्टितमस्सर्गः ॥

---

## ॥ चतुष्षष्टितमस्सर्गः ॥

आख्याता गृध्रराजेन समुत्पत्य प्लवङ्गमाः ।
संगताः प्रीतिसंयुक्ता विनेदुर्भीमविक्रमाः ॥ १

संपातेर्वचनं श्रुत्वा हरयो रावणक्षयम् ।
हृष्टास्सागरमाजग्मुस्सीतादर्शनकाङ्क्षिणः ॥ २

अभिक्रम्य तु तं देशं ददृशुर्भीमविक्रमाः ।
कृत्स्नं लोकस्य महतः प्रतिबिम्बमिव स्थितम् ॥ ३

दक्षिणस्य समुद्रस्य समासाद्योत्तरां दिशम् ।
सन्निवेशं ततश्चक्रुर्हरिवीरा महाबलाः ॥ ४

सत्त्वैर्महद्भिर्विकृतैः क्रीडद्भिर्विविधैर्जले ।
व्यात्तास्यैस्सुमहाकायैरूर्मिभिश्च समाकुलम् ॥ ५

प्रसुप्तमिव चान्यत्र क्रीडन्तमिव चान्यतः ।
क्वचित्पर्वतमात्रैश्च जलराशिभिरावृतम् ॥ ६

संकुलं दानवेन्द्रैश्च पातालतलवासिभिः ।
रोमहर्षकरं दृष्ट्वा विषेदुः कपिकुञ्जराः ॥ ७

आकाशमिव दुष्पारं सागरं प्रेक्ष्य वानराः ।
विषेदुस्सहसा सर्वे 'कथं कार्य' मिति ब्रुवन् ॥ ८

विषण्णां वाहिनीं दृष्ट्वा सागरस्य निरीक्षणात् ।
आश्वासयामास हरीन्भयार्तान्हरिसत्तमः ॥ ९

तान्विषादेन महता विषण्णान्वानरर्षभान् ।
उवाच मतिमान्काले वालिसूनुर्महाबलः ॥ १०

"न विषादे मनः कार्यं विषादो दोषवत्तमः ।
विषादो हन्ति पुरुषं बालं क्रुद्ध इवोरगः ॥ ११

विषादोऽयं प्रसहते विक्रमे पर्युपस्थिते ।
तेजसा तस्य हीनस्य पुरुषार्थो न सिद्ध्यति ॥" १२

तस्यां रात्र्यां व्यतीयायामङ्गदो वानरैस्सह ।
हरिवृद्धैस्समागम्य पुनर्मन्त्रममन्त्रयत् ॥ १३

सा वानराणां ध्वजिनी परिवार्याङ्गदं बभौ ।
वासवं परिवार्येव मरुतां वाहिनी स्थिता ॥ १४

कोऽन्यस्तां वानरीं सेनां शक्तः स्तम्भयितुं भवेत् ।
अन्यत्र वालितनयादन्यत्र च हनूमतः ॥ १५

ततस्तान्हरिवृद्धांश्च तच्च सैन्यमरिन्दमः ।
अनुमान्याङ्गदश्श्रीमान्वाक्यमर्थवदब्रवीत् ॥ १६

"क इदानीं महातेजा लङ्घयिष्यति सागरम् ।
कः करिष्यति सुग्रीवं सत्यसन्धमरिन्दमम् ॥ १७

को वीरो योजनशतं लङ्घयेत प्लवङ्गमाः ।
इमांश्च यूथपांत्सर्वान्मोक्षयेत्को महाभयात् ॥ १८

कस्य प्रभावाद्दारांश्च पुत्रांश्चैव गृहाणि च ।
इतो निवृत्ताः पश्येम सिद्धार्थास्सुखिनो वयम् ॥ १९

कस्य प्रसादाद्रामं च लक्ष्मणं च महाबलम् ।
अभिगच्छेम संहृष्टास्सुग्रीवं च महाबलम् ॥ २०

यदि कश्चित्समर्थो वस्सागरप्लवने हरिः ।
स ददात्विह नश्शीघ्रं पुण्यामभयदक्षिणाम् ॥" २१

अङ्गदस्य वचश्श्रुत्वा न कश्चित्किञ्चिदब्रवीत् ।
स्तिमितेवाभवत्तत्र सर्वा सा हरिवाहिनी ॥ २२

पुनरेवाङ्गदः प्राह तान्हरीन्हरिसत्तमः ।
"सर्वे बलवतां श्रेष्ठा भवन्तो दृढविक्रमाः ॥ २३

व्यपदेश्यकुले जाताः पूजिताश्चाप्यभीक्ष्णशः ।
न हि वो गमने सङ्गः कदाचित्कस्यचित्क्वचित् ॥ २४

ब्रुवध्वं यस्य या शक्तिर्गमने प्लवगर्षभाः ॥"

इति श्रीमत्किष्किन्धाकाण्डे चतुष्षष्टितमस्सर्गः ॥

---

## ॥ पञ्चषष्टितमस्सर्गः ॥

ततोऽङ्गदवचश्श्रुत्वा सर्वे ते वानरोत्तमाः ।
स्वं स्वं गतौ समुत्साहमाहुस्तत्र यथाक्रमम् ॥ १
गजो गवाक्षो गवयश्शरभो गन्धमादनः ।
मैन्दश्च द्विविदश्चैव सुषेणो जाम्बवांस्तथा ॥ २
आबभाषे गजस्तत्र 'प्लवेयं दशयोजनम् ।'
गवाक्षो योजनान्याह गमिष्यामीति विंशतिम् ॥ ३
गवयो वानरस्तत्र वानरांस्तानुवाच ह ।
'त्रिंशतं तु गमिष्यामि योजनानां प्लवङ्गमाः ॥' ४
शरभस्तानुवाचाथ वानरान् वानरर्षभः ।
'चत्वारिंशद्गमिष्यामि योजनानां प्लवङ्गमाः ॥ ५
वानरस्तु महातेजा अब्रवीद्गन्धमादनः ।
योजनानां गमिष्यामि पञ्चाशत्तु न संशयः ॥' ६
मैन्दस्तु वानरस्तत्र वानरांस्तानुवाच ह ।
'योजनानां परं षष्टिमहं प्लवितुमुत्सहे' ॥ ७
ततस्तत्र महातेजा द्विविदः प्रत्यभाषत ।
'गमिष्यामि न संदेहस्सप्ततिं योजनान्यहम् ॥' ८
सुषेणस्तु महातेजाः प्रोक्तवान्हरिसत्तमान् ।
'अशीतिं योजनानां तु प्लवेयं प्लवगेश्वराः! ॥ ९
तेषां कथयतां तत्र सर्वांस्ताननुमान्य च ।
ततो वृद्धतमस्तेषां जाम्बवान्प्रत्यभाषत ॥ १०

" पूर्वमस्माकमप्यासीत्कश्चिद्गतिपराक्रमः ।
ते वयं वयसः पारमनुप्राप्ताः स्म सांप्रतम् ॥ ११

किं तु नैवं गते शक्यमिदं कार्यमुपेक्षितुम् ।
यदर्थं कपिराजश्च रामश्च कृतनिश्चयौ ॥ १२

सांप्रतं कालभेदेन या गतिस्तां निबोधत ।
नवतिं योजनानां तु गमिष्यामि न संशयः ॥ " १३

तांश्च सर्वान्हरिश्रेष्ठान्जांबवान्पुनरब्रवीत् ।
" न खल्वेतावदेवासीद्गमने मे पराक्रमः ॥ १४

मया महाबलेश्चैव यज्ञे विष्णुस्सनातनः ।
प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम् ॥ १५

स इदानीमहं वृद्धः प्लवने मन्दविक्रमः ।
यौवने च तदाऽऽसीन्मे बलमप्रतिमं परैः ॥ १६

संप्रत्येतावतीं शक्तिं गमने तर्कयाम्यहम् ।
नैतावता हि संसिद्धिः कार्यस्यास्य भविष्यति ॥ " १७

अथोत्तरमुदारार्थमब्रवीदङ्गदस्तदा ।
अनुमान्य महाप्राज्ञं जाम्बवन्तं महाकपिः ॥ १८

" अहमेतद्गमिष्यामि योजनानां शतं महत् ।
निवर्तने तु मे शक्तिस्स्यान्नवेति न निश्चिता ॥ " १९

तमुवाच हरिश्रेष्ठं जाम्बवान्वाक्यकोविदः ।
" ज्ञायते गमने शक्तिस्तव हर्यृक्षसत्तम ॥ २०

कामं शतं सहस्रं वा न ह्येष विधिरुच्यते ।
योजनानां भवान् शक्तो गन्तुं प्रतिनिवर्तितुम् ॥ २१

न हि प्रेषयिता तात ! स्वामी प्रेष्यः कथंचन ।
भवताऽयं जनस्सर्वः प्रेष्यः प्लवगसत्तम ! ॥ २२

भवान्कलत्रमस्माकं स्वामिभावे व्यवस्थितः ।
स्वामी कलत्रं सैन्यस्य गतिरेषा परन्तप ! ॥ २३

तस्मात्कलत्रवत्तात ! प्रतिपाल्यस्सदा भवान् ।
अपि चैतस्य कार्यस्य भवान्मूलमरिन्दम ! ॥ २४

मूलमर्थस्य संरक्ष्यमेष कार्यविदां नयः ।
मूले सति हि सिध्यन्ति गुणाः पुष्पफलादयः ॥ २५

तद्भवानस्य कार्यस्य साधने सत्यविक्रम ! ।
बुद्धिविक्रमसंपन्नो हेतुरत्र परन्तप ! ॥ २६

गुरुश्च गुरुपुत्रश्च त्वं हि नः कपिसत्तम ! ।
भवन्तमाश्रित्य वयं समर्था ह्यर्थसाधने" ॥ २७

उक्तवाक्यं महाप्राज्ञं जाम्बवन्तं महाकपिः ।
प्रत्युवाचोत्तरं वाक्यं वालिसूनुरथाङ्गदः ॥ २८

"यदि नाहं गमिष्यामि नान्यो वानरपुङ्गवः ।
पुनः खल्विदमस्माभिः कार्यं प्रायोपवेशनम् ॥ २९

नह्यकृत्वा हरिपतेस्संदेशं तस्य धीमतः ।
तत्रापि गत्वा प्राणानां पश्यामि परिरक्षणम् ॥ ३०

स हि प्रसादे चात्यर्थं कोपे च हरिरीश्वरः ।
अतीत्य तस्य संदेशं विनाशो गमने भवेत् ॥ ३१

तद्यथा ह्यस्य कार्यस्य न भवत्यन्यथा गतिः ।
तद्भवानेव दृष्टार्थस्संचिन्तयितुमर्हति ॥" ३२

सोऽङ्गदेन तथा वीरः प्रत्युक्तः प्लवगर्षभः ।
जाम्बवानुत्तरं वाक्यं प्रोवाचेदं ततोऽङ्गदम् ॥ ३३
"अस्य ते वीर ! कार्यस्य न किंचित्परिहीयते ।
एष संचोदयाम्येनं यः कार्यं साधयिष्यति ॥" ३४
ततः प्रतीतं प्लवतां वरिष्ठमेकान्तमाश्रित्य सुखोपविष्टम् ।
संचोदयामास हरिप्रवीरो हरिप्रवीरं हनुमन्तमेव ॥ ३५

इति श्रीमत्किष्किन्धाकाण्डे पञ्चषष्टितमस्सर्गः ॥

---

## ॥ षट्षष्टितमस्सर्गः ॥

अनेकशतसाहस्रीं विषण्णां हरिवाहिनीम् ।
जाम्बवांत्समुदीर्यैव हनूमन्तमथाब्रवीत् ॥ १
"वीर ! वानरलोकस्य सर्वशास्त्रविदां वर ।
तूष्णीमेकान्तमाश्रित्य हनूमन्किं न जल्पसि ॥ २
हनूमन्हरिराजस्य सुग्रीवस्य समो ह्यसि ।
रामलक्ष्मणयोश्चापि तेजसा च बलेन च ॥ ३
अरिष्टनेमिनः पुत्रो वैनतेयो महाबलः ।
गरुत्मानिति विख्यात उत्तमस्सर्वपक्षिणाम् ॥ ४
बहुशो हि मया दृष्टस्सागरे स महाबलः ।
भुजगानुद्धरन्पक्षी महावेगो महायशाः ॥ ५
पक्षयोर्यद्बलं तस्य तावद्भुजबलं तव ।
विक्रमश्चापि वेगश्च न ते तेनावहीयते ॥ ६

बलं बुद्धिश्च तेजश्च सत्त्वं च हरिसत्तम ।
विशिष्टं सर्वभूतेषु किमात्मानं न बुद्ध्यसे ॥ ७

अप्सराप्सरसां श्रेष्ठा विख्याता पुञ्जिकस्थला ।
अञ्जनेति परिख्याता पत्नी केसरिणो हरेः ॥ ८

विख्याता त्रिषु लोकेषु रूपेणाप्रतिमा भुवि ।
अभिशापादभूत्तात वानरी कामरूपिणी ॥ ९

दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः ।
कपित्वे चारुसर्वाङ्गी कदाचित्कामरूपिणी ॥ १०

मानुषं विग्रहं कृत्वा रूपयौवनशालिनी ।
विचित्रमाल्याभरणा महार्हक्षौमवासिनी ॥ ११

अचरत्पर्वतस्याग्रे प्रावृडम्बुदसन्निभे ।
तस्या वस्त्रं विशालाक्ष्या पीतं रक्तदशं शुभम् ॥ १२

स्थितायाः पर्वतस्याग्रे मारुतोऽपाहरच्छनैः ।
स ददर्श ततस्तस्या वृत्तावूरू सुसंहतौ ॥ १३

स्तनौ च पीनौ सहितौ सुजातं चारु चाननम् ।
तां विशालायतश्रोणीं तनुमध्यां यशस्विनीम् ॥ १४

दृष्ट्वैव शुभसर्वाङ्गीं पवनः काममोहितः ।
स तां भुजाभ्यां दीर्घाभ्यां पर्यष्वजत मारुतः ॥ १५

मन्मथाविष्टसर्वाङ्गो गतात्मा तामनिन्दिताम् ।
सा तु तत्रैव संभ्रान्ता सुवृत्ता वाक्यमब्रवीत् ॥ १६

एकपत्नीव्रतमिदं को नाशयितुमिच्छति ।
अञ्जनाया वचश्श्रुत्वा मारुतः प्रत्यभाषत ॥ १७

'न त्वां हिंसामि सुश्रोणि माभूत्ते सुभगे! भयम्।
मनसास्मि गतो यत्त्वां परिष्वज्य यशस्विनीम् ॥ १८

वीर्यवान्बुद्धिसंपन्नः पुत्रस्तव भविष्यति।
महासत्त्वो महातेजा महाबलपराक्रमः ॥ १९

लङ्घने प्लवने चैव भविष्यति हि मत्समः।
एवमुक्त्वा ततस्तुष्टा जननी ते महाकपे ॥ २०

गुहायां त्वां महाबाहो प्रजज्ञे प्लवगर्षभम्।
अभ्युत्थितं ततस्सूर्यं बालो दृष्ट्वा महावने ॥ २१

फलं चेति जिघृक्षुस्त्वमुत्प्लुत्याभ्युद्गतो दिवम्।
शतानि त्रीणि गत्वाऽथ योजनानां महाकपे! ॥ २२

तेजसा तस्य निर्धूतो न विषादं ततो गतः।
तावदापततस्तूर्णमन्तरिक्षं महाकपे! ॥ २३

क्षिप्तमिन्द्रेण ते वज्रं क्रोधाविष्टेन धीमता।
तदा शैलाग्रशिखरे वामो हनुरभज्यत ॥ २४

ततो हि नामधेयं ते हनूमानिति कीर्त्यते।
ततस्त्वां निहतं दृष्ट्वा वायुर्गन्धवहस्स्वयम् ॥ २५

त्रैलोक्ये भृशसंक्रुद्धो न ववौ वै प्रभञ्जनः।
संभ्रान्ताश्च सुरास्सर्वे त्रैलोक्ये क्षोभिते सति ॥ २६

प्रसादयन्ति संक्रुद्धं मारुतं भुवनेश्वराः।
प्रसादिते च पवने ब्रह्मा तुभ्यं वरं ददौ ॥ २७

अशस्त्रवध्यतां तात! समरे सत्यविक्रम!।
वज्रस्य च निपातेन विरुजं त्वां समीक्ष्य च ॥ २८

सहस्रनेत्रः प्रीतात्मा ददौ ते वरमुत्तमम् ।
स्वच्छन्दतश्च मरणं ते भूयादिति वै प्रभो ॥ २९
[आयुश्श्रीकीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ।
भवन्त्येव हि तत्काले यथानिच्छाविपर्ययः] ॥ ३०
स त्वं केसरिणः पुत्रः क्षेत्रजो भीमविक्रमः ।
मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः ॥ ३१
त्वं हि वायुसुतो वत्स प्लवने चापि तत्समः ।
वयमद्य गतप्राणा भवान्नस्त्रातु साम्प्रतम् ॥ ३२
दाक्ष्यविक्रमसम्पन्नः पक्षिराज इवापरः ।
त्रिविक्रमे मया तात सशैलवनकानना ॥ ३३
त्रिस्सप्तकृत्वः पृथिवी परिक्रान्ता प्रदक्षिणम् ।
तथा चौषधयोऽस्माभिस्संचिता देवशासनात् ॥ ३४
निष्पन्नममृतं याभिस्तदाऽऽसीन्नो महद्बलम् ।
स इदानीमहं वृद्धः परिहीनपराक्रमः ॥ ३५
साम्प्रतं कालमस्माकं भवान् सर्वगुणान्वितः ।
तद्विजृम्भस्व विक्रान्तः प्लवतामुत्तमो ह्यसि ॥ ३६
त्वद्वीर्यं द्रष्टुकामेयं सर्वा वानरवाहिनी ।
उत्तिष्ठ हरिशार्दूल ! लङ्घयस्व महार्णवम् ॥ ३७
परा हि सर्वभूतानां हनूमन् ! या गतिस्तव ।
विषण्णा हरयस्सर्वे हनूमन्किमुपेक्षसे ॥ ३८
विक्रमस्व महावेगो विष्णुस्त्रीन्विक्रमानिव ।"

ततस्तु वै जाम्बवता प्रचोदितः प्रतीतवेगः पवनात्मजः कपिः ।
प्रहर्षयंस्तां हरिवीरवाहिनीं चकार रूपं महदात्मनस्तदा ॥ ३९

इति श्रीमत्किष्किन्धाकाण्डे षट्षष्टितमस्सर्गः ॥

---

## ॥ सप्तषष्टितमस्सर्गः ॥

तं दृष्ट्वा जृंभमाणं ते क्रमितुं शतयोजनम् ।
वीर्येणापूर्यमाणं च सहसा वानरोत्तमम् ॥ १

सहसा शोकमुत्सृज्य प्रहर्षेण समन्विताः ।
विनेदुस्तुष्टुवुश्चापि हनुमन्तं महाबलम् ॥ २

प्रहृष्टा विस्मिताश्चैव वीक्षन्ते स्म समन्ततः ।
त्रिविक्रमकृतोत्साहं नारायणमिव प्रजाः ॥ ३

संस्तूयमानो हनुमान्व्यवर्धत महाबलः ।
समाविध्य च लाङ्गूलं हर्षाच्च बलमेयिवान् ॥ ४

तस्य संस्तूयमानस्य सर्वैर्वानरपुङ्गवैः ।
तेजसा पूर्यमाणस्य रूपमासीदनुत्तमम् ॥ ५

यथा विजृम्भते सिंहो विवृद्धो गिरिगह्वरे ।
मारुतस्यौरसः पुत्रस्तथा सम्प्रति जृम्भते ॥ ६

अशोभत मुखं तस्य जृम्भमाणस्य धीमतः ।
अम्बरीषमिवाऽऽदीप्तं विधूम इव पावकः ॥ ७

हरीणामुत्थितो मध्यात्सम्प्रहृष्टतनूरुहः ।
अभिवाद्य हरीन्वृद्धान्हनूमानिदमब्रवीत् ॥ ८

" अरुजन्पर्वताग्राणि हुताशनसखोऽनिलः ।
बलवानप्रमेयश्च वायुराकाशगोचरः ॥ ९

तस्याहं शीघ्रवेगस्य शीघ्रगस्य महात्मनः ।
मारुतस्यौरसः पुत्रः प्लवने नास्ति मत्समः ॥ १०

उत्सहेयं हि विस्तीर्णमालिखन्तमिवाम्बरम् ।
मेरुं गिरिमसङ्गेन परिगन्तुं सहस्रशः ॥ ११

बाहुवेगप्रणुन्नेन सागरेणाहमुत्सहे ।
समाप्लावयितुं लोकं सपर्वतनदीह्रदम् ॥ १२

ममोरुजङ्घवेगेन भविष्यति समुत्थितः ।
सम्मूर्छितमहाग्राहस्समुद्रो वरुणालयः ॥ १३

पन्नगाशनमाकाशे पतन्तं पक्षिसेविते ।
वैनतेयमहं शक्तः परिगन्तुं सहस्रशः ॥ १४

उदयात्प्रस्थितुं वापि ज्वलन्तं रश्मिमालिनम् ।
अनस्तमितमादित्यमभिगन्तुं समुत्सहे ॥ १५

[ पृथिव्या दक्षिणं तावदुत्तरं गन्तुमुत्सहे ]।
ततो भूमिमसंस्पृश्य पुनरागन्तुमुत्सहे ॥ १६

प्रवेगेनैव महता भीमेन प्लवगर्षभाः ।
उत्सहेयमतिक्रान्तुं सर्वानाकाशगोचरान् ॥ १७

सागरं क्षोभयिष्यामि दारयिष्यामि मेदिनीम् ।
पर्वतांश्चूर्णयिष्यामि प्लवमानः प्लवङ्गमाः ॥ १८

हरिष्याम्यूरुवेगेन प्लवमानो महार्णवम् ।
लतानां विविधं पुष्पं पादपानां च सर्वशः ॥ १९

अनुयास्यन्ति मामद्य प्लवमानं विहायसा ।
भविष्यति हि मे पन्थास्स्वातेः पन्था इवाम्बरे ॥ २०

चरन्तं घोरमाकाशमुत्पतिष्यन्तमेव वा ।
द्रक्ष्यन्ति निपतिष्यन्तं सर्वभूतानि वानराः ॥ २१

महामेघप्रतीकाशं मां च द्रक्ष्यथ वानराः ।
दिवमावृत्य गच्छन्तं ग्रसमानमिवाम्बरम् ॥ २२

विधमिष्यामि जीमूतान्कम्पयिष्यामि पर्वतान् ।
सागरं क्षोभयिष्यामि प्लवमानस्समाहितः ॥ २३

वैनतेयस्य वा शक्तिर्मम वा मारुतस्य वा ।
ऋते सुपर्णराजानं मारुतं वा महाजवम् ॥ २४

न तद्भूतं प्रपश्यामि यन्मां प्लुतमनुव्रजेत् ।
निमेषान्तरमात्रेण निरालम्बनमम्बरम् ॥ २५

सहसा निपतिष्यामि घनाद्विद्युदिवोत्थिता ।
भविष्यति हि मे रूपं प्लवमानस्य सागरे ॥ २६

विष्णोर्विक्रममाणस्य पुरा त्रीन्विक्रमानिव ।
बुद्ध्या चाहं प्रपश्यामि मनश्चेष्टा च मे तथा ॥ २७

अहं द्रक्ष्यामि वैदेहीं प्रमोदध्वं प्लवङ्गमाः ! ।
मारुतस्य समो वेगे गरुडस्य समो जवे ॥ २८

अयुतं योजनानां तु गमिष्यामीति मे मतिः ।
वासवस्य सवज्रस्य ब्रह्मणो वा स्वयम्भुवः ॥ २९

विक्रम्य सहसा हस्तादमृतं तदिहानये ।
लङ्कां वापि समुत्क्षिप्य गच्छेयमिति मे मतिः ॥" ३०

महासंहननावेतौ महान्तौ पुरुषर्षभौ ।
ऋश्यमूकात्तरशैलाद्वहेयं रामलक्ष्मणौ ॥ ३१

नूनमेष्यामि वैदेहीं रामस्य महिषीं प्रियाम् ।
तमेवं वानरश्रेष्ठं गर्जन्तममितौजसम् ॥ ३२

प्रहृष्टा हरयस्तत्र समुदैक्षन्त विस्मिताः ।
तस्य तद्वचनं श्रुत्वा ज्ञातीनां शोकनाशनम् ॥ ३३

उवाच परिसंहृष्टो जाम्बवान्हरिसत्तमम् ।
"वीर! केसरिणः पुत्र! हनूमन्मारुतात्मज! ॥ ३४

ज्ञातीनां विपुलश्शोकस्त्वया तात! प्रणाशितः ।
तव कल्याणरुचयः कपिमुख्यास्समागताः ॥ ३५

मङ्गळं कार्यसिद्ध्यर्थं करिष्यन्ति समाहिताः ।
ऋषीणां च प्रसादेन कपिवृद्धमतेन च ॥ ३६

गुरूणां च प्रसादेन प्लवस्व त्वं महार्णवम् ।
स्थास्यामश्चैकपादेन यावदागमनं तव ॥ ३७

त्वद्गतानि च सर्वेषां जीवितानि वनौकसाम् ।"
ततस्तु हरिशार्दूलस्तानुवाच वनौकसः ॥ ३८

"नेयं मम मही वेगं लङ्घने धारयिष्यति ।
एतानीह नगस्यास्य शिलासंकटशालिनः ॥ ३९

शिखराणि महेन्द्रस्य स्थिराणि सुमहान्ति च ।
एषु वेगं करिष्यामि महेन्द्रशिखरेष्वहम् । ४०

नानाद्रुमविकीर्णेषु धातुनिष्यन्दशोभिषु ।
एतानि मम निष्पेषं पादयोः प्लवतां वराः! ॥ ४१

प्लवतो धारयिष्यन्ति योजनानामितश्शतम् ।”
ततस्तं मारुतप्रख्यस्स हरिर्मारुतात्मजः ॥ ४२
आरुरोह नगश्रेष्ठं महेन्द्रमरिमर्दनः ।
वृतं नानाविधैर्वृक्षैर्मृगसेवितशाद्वलम् ॥ ४३
लताकुसुमसम्बाधं नित्यपुष्पफलद्रुमम् ।
सिंहशार्दूलचरितं मत्तमातङ्गसेवितम् ॥ ४४
मत्तद्विजगणोद्घुष्टं सलिलोत्पीडसंकुलम् ।
महद्भिरुच्छ्रितं शृङ्गैर्महेन्द्रं स महाबलः ॥ ४५
विचचार हरिश्रेष्ठो महेन्द्रसमविक्रमः ।
पादाभ्यां पीडितस्तेन महाशैलो महात्मना ॥ ४६
ररास सिंहाभिहतो महान्मत्त इव द्विपः ।
मुमोच सलिलोत्पीडान्विप्रकीर्णशिलोच्चयः ॥ ४७
वित्रस्तमृगमातङ्गः प्रकम्पितमहाद्रुमः ।
नागगन्धर्वमिथुनैः पानसंसर्गकर्कशैः ॥ ४८
उत्पतद्भिश्च विहगैर्विद्याधरगणैरपि ।
त्यज्यमानमहासानुस्संनिलीनमहोरगः ॥ ४९
चलशृङ्गचलोद्घातस्तदाऽभूत्स महागिरिः ।
निःश्वसद्भिस्तदाऽऽर्तैस्तु भुजङ्गैरर्धनिस्सृतैः ॥ ५०
सपताक इवाभाति स तदा धरणीधरः ।
ऋषिभिस्त्राससम्भ्रान्तैस्त्यज्यमानशिलोच्चयः ॥ ५१
सीदन्महति कान्तारे सार्थहीन इवाध्वगः ।

स वेगवान्वेगसमाहितात्मा हरिप्रवीरः परवीरहन्ता ॥ ५२
मनस्समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ।

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायां
किष्किन्धाकाण्डे सप्तषष्टितमस्सर्गः ॥

श्रीमत्किष्किन्धाकाण्डस्समाप्तः ॥

---

Printed by V. Ramaswamy Sastrulu & Sons
at the 'Vavilla' Press, Madras.

॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# सुन्दरकाण्डः



चेन्नपुर्याम्

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्,

इत्येतैः प्रकटितः

१९५१

॥ श्रीरस्तु ॥

## ॥ श्रीमत्सुन्दरकाण्डपठनश्रवणादिफलम् ॥



ब्रह्माण्डे—ततो रावणनीतायास्सीतायाश्शत्रुकर्शनः ।
इति श्लोकं समाकर्ण्य कार्यसिद्धिं लभेन्नरः ॥

सुन्दरादिमसर्गस्थहनूमद्विक्रमादिकम् ।
श्रुत्वाऽपस्मारकुष्ठादिभूतभेताळनाशनम् ॥

स निर्जित्य पुरीं श्रेष्ठामिति श्लोकादिमाक्षरम् ।
श्रुत्वा बन्धाद्विमुक्तस्सन्ब्रह्मभूयाय कल्पते ॥

सीतासन्दर्शनं श्रुत्वा वीतशोको भविष्यति ।
श्रुत्वा तु त्रिजटास्वप्नं दुस्स्वप्नो नश्यति ध्रुवम् ॥

श्रीराममुद्रिकादानं ये शृण्वंत्यादरेण तु ।
निर्जित्य शत्रून् सङ्ग्रामे स्थिरं राज्यं व्रजन्ति ते ॥

धन्या देवास्सगन्धर्वास्सिद्धा इत्यत्र चादिमम् ।
श्रुत्वा चतुर्दशं वर्णमसङ्गो वायुवच्चरेत् ॥

हनूमद्ग्रहणं श्रुत्वा बन्धान्मुच्येत मानवः ।
लङ्कादाहाद्यनुश्रुत्वा तापत्रयहतिर्भवेत् ॥

मङ्गळाभिमुखीत्यस्मिन् श्लोके यत्प्रथमाक्षरम् ।
तद्गायत्र्याः पञ्चदशं श्रुत्वा मद्रूपभाग्भवेत् ॥

श्रुत्वा तु पञ्चमं काण्डं हनूमद्विजयाङ्कितम् ।
आञ्जनेयप्रसादेन ब्रह्मलोकं स गच्छति ॥

काण्डस्य सुन्दराख्यस्य श्रवणात्पठनादपि ।
मां प्राप्नुयाज्जगद्धेतुं नात्र सन्देह इष्यते ॥



॥ श्रीरस्तु ॥

## स्मार्तादीनां सर्वेषां

## श्रीरामायणपारायणादौ कर्तव्यपूजाविधानम् ॥

आचम्य। प्राणानायम्य। ममोपात्त...शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रदेवताप्रीत्यर्थं यावच्छक्तिध्यानावाहनादिषोडशोपचारपूजां करिष्ये ॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये तदङ्गत्वेन कलशपूजां करिष्ये (कलशपूजां गणपतिपूजां च कृत्वा)

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

ततश्श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यान्तपूजा विधेया। श्रीसीतारामचन्द्रदेवताभ्यां नमः (ध्यानावाहनादिषोडशोपचारपूजां च कृत्वा)

---

## ॥ श्रीमत्सुन्दरकाण्डमहामन्त्रानुष्ठानक्रमः ॥

---

अस्य श्रीसुन्दरकाण्डमहामन्त्रस्य। वाल्मीकिऋषिः आञ्जनेयो देवता। रामदूताय कपय इति बीजं। नमो वातात्मजाय इति

शक्तिः। समुद्रतारकाय इति कीलकं। सर्वानिष्टनिवारणार्थे सर्वाभीष्ट-सिद्ध्यर्थे सुन्दरकाण्डपारायणे जपे विनियोगः। उदधिक्रमिणे तुभ्यं नमो राक्षसमर्दिने। अङ्गुष्ठाभ्यां नमः॥ छायाग्रहविनाशाय सुरसा-मारकाय च। तर्जनीभ्यां नमः॥ मैनाकदर्शिने तुभ्यं मैनाकगिरि-मानिने। मध्यमाभ्यां नमः॥ आकाशगामिने देवमानिने सर्वदायिने। अनामिकाभ्यां नमः॥ वायुपुत्राय धीराय लङ्कादर्पापहारिणे। कनि-ष्ठिकाभ्यां नमः॥ अक्षहन्त्रे नमस्तुभ्यं पुच्छवह्निप्रदीपिने। करतल-करपृष्ठाभ्यां नमः॥ उदधि···मर्दिने। हृदयाय नमः॥ छाया···काय च। शिरसे स्वाहा॥ मैनका···मानिने। शिखायै वौषट्॥ आकाश···यिने। कवचाय हुं॥ वायुपुत्राय···हारिणे। नेत्रत्रयाय वौषट्॥ अक्षहन्त्रे···पिने। अस्त्राय फट्॥ अष्टमंत्रिसुतानां च गर्वभङ्गकृते नमः॥ भूर्भुवस्सुवरोमिति दिग्बन्धः॥

ध्यानम्—सर्वानिष्टनिवारकं शुभकरं पिङ्गाक्षमक्षापहं
सीतान्वेषणतत्परं कपिवरं कोटीन्दुसूर्यप्रभम्।
लङ्काद्वीपभयङ्करं सकलदं सुग्रीवसम्मानिनं
देवेन्द्रादिसमस्तदेवविनुतं काकुत्स्थदूतं भजे॥

बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता।
अजाड्यं वाक्पटुत्वं च हनूमत्स्मरणाद्भवेत्॥

---

श्रीवैष्णवानां

## ॥ श्रीमद्रामायणपठनोपक्रमानुसन्धेयक्रमः ॥



प्रथमतः 'रामानुज श्रीशैलेशे' त्यादि स्वस्वसम्प्रदायनिर्वाहकाचार्यानुसन्धानं ततः 'लक्ष्मीनाथे'त्यारभ्य 'प्रणतोऽस्मि नित्यमित्यन्तं'। अनन्तरं श्रीशैलपूर्णविषयं 'पितामहस्ये'ति श्लोकमारभ्य श्रीभाष्यकारप्रभृति स्वाचार्यपर्यन्तविषयास्साम्प्रदायिकाः श्लोकाः अनुसन्धेयाः। यद्वा श्रीधरादिस्वाचार्यपर्यन्ताः प्रतिव्यक्तिश्लोका अनुसन्धेयाः । ततः—

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

उल्लंघ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहुमरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ।

---

## ॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥

कावेरी वर्धतां कालेऽकाले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥

पितृभक्ताय सततं भ्रातृभिस्सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गळम् ॥

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम् ॥

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम् ॥

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् ॥

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गळम् ॥

ततः पितामहस्येत्यारभ्य स्वाचार्यान्ताश्श्लोका अनुसन्धेयाः ॥

---

॥ श्रीस्मार्तमध्वादीनां श्रीमद्रामायणपठनोपक्रमानुसन्धेयक्रमः ॥

---

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

वागीशाद्यास्सुमनसस्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तन्नमामि गजाननम् ॥

ततः श्रीमच्छङ्कराचार्यादिगुरुपरम्पराऽनुसन्धेया ।

दोर्भिर्युक्ता चतुर्भिस्स्फटिकमणिमयीमक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपि च शुकं पुस्तकं चापरेण ।

भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

यः पिबन्सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥

गोष्पदीकृतवारार्शिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥

उल्लंघ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

यः कर्णाञ्जलिसम्पुटैरहरहस्सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगळितं रामायणाख्यं मधु ।

जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥

वाल्मीकिगिरिसम्भूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥

श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

वामे भूमिसुता पुरश्च हनुमान्पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरतश्च पार्श्वदळयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥

ततः श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यांतपूजा विधेया ।
पारायणावसाने च पुनः पूजा कर्तव्या ॥

---

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥



स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यः शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥

अपुत्राः पुत्रिणस्सन्तु पुत्रिणस्सन्तु पौत्रिणः ।
अधनास्सधनास्सन्तु जीवंतु शरदां शतम् ॥

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥

शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा ।
स याति ब्रह्मणस्स्थानं ब्रह्मणा पूज्यते सदा ॥

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥

मङ्गळं कोसलेन्द्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥

अमृतोत्पादने दैत्यान्घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥

त्रीन्विक्रमान्प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥

ऋतवस्सागरा द्वीपा वेदा लोका दिशश्च ते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मना वा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

---

## ॥ गायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान्सर्वान्यज्ञघ्नान्रघुनन्दनः ।
ऋषिभिः पूजितस्सम्यग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्रस्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघवमब्रवीत् ॥ ३

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्य व्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानि च ।
भर्तारमनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मं च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ६

निरीक्ष्य स मुहूर्तं तु ददर्श भरतो गुरुम् ।
उटजे राममासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टुमगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघवं ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ ११

वंद्यास्ते तु तपस्सिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्याश्चापि सीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनुमान्मारुतात्मजः ॥ १३

धन्या देवास्सगन्धर्वा सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४

मङ्गळाभिमुखी तस्य सा तदासीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ १५

हितं महार्थं मृदुपूर्वसंहितं व्यतीतकालायति सम्प्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६

धर्मात्मा रक्षसां श्रेष्ठस्सम्प्राप्तोऽयं विभीषणः ।
लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ १७

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १८

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ॥ १९

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ २१

चलनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् ॥ २२

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वर ॥ २३

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायणं सम्पूर्णम् ॥



## ॥ देवताप्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥

## ॥ वाल्मीकिप्रार्थना ॥

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥

## ॥ आञ्जनेयप्रार्थना ॥

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥

## ॥ श्रीरामायणप्रशंसा ॥

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥

श्रीमद्ब्रह्म तदेव बीजममलं यस्याङ्कुरश्चिन्मयः
काण्डैस्सप्तभिरन्वितोऽतिविततो ऋव्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकैस्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥

यः कर्णाञ्जलिसम्पुटैरहरहस्सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥

वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसङ्गता ।
श्रीमद्रामायणी गङ्गा पुनातु भुवनत्रयम् ।
चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैकमक्षरं प्रोक्तं महापातकनाशनम् ॥

## ॥ श्रीरामावतारघट्टः ॥



निर्वृत्ते तु क्रतौ तस्मिन्हयमेधे महात्मनः ।
प्रतिगृह्य सुरा भागान्प्रतिजग्मुर्यथागतम् ॥ १

समाप्तदीक्षानियमः पत्नीगणसमन्वितः ।
प्रविवेश पुरीं राजा सभृत्यबलवाहनः ॥ २

यथार्हं पूजितास्तेन राज्ञा वै पृथिवीश्वराः ।
मुदिताः प्रययुर्देशान्प्रणम्य मुनिपुङ्गवम् ॥ ३

श्रीमतां गच्छतां तेषां स्वपुराणि पुरात्ततः ।
बलानि राज्ञां शुभ्राणि प्रहृष्टानि चकाशिरे ॥ ४

गतेषु पृथिवीशेषु राजा दशरथस्तदा ।
प्रविवेश पुरीं श्रीमान्पुरस्कृत्य द्विजोत्तमान् ॥ ५

शान्तया प्रययौ सार्धं ऋष्यशृङ्गस्सुपूजितः ।
अन्वीयमानो राज्ञाऽथ सानुयात्रेण धीमता ॥ ६

एवं विसृज्य तान्सर्वान्राजा सम्पूर्णमानसः ।
उवास सुखितस्तत्र पुत्रोत्पत्तिं विचिन्तयन् ॥ ७

ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः ।
ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥ ८

नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।
ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥ ९

प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् ।
कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ॥ १०

विष्णोरर्धं महाभागं पुत्रमैक्ष्वाकुवर्धनम् ।
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ॥ ११

यथा वरेण देवानामदितिर्वज्रपाणिना ।
भरतो नाम कैकेय्यां जज्ञे सत्यपराक्रमः ॥ १२

साक्षाद्विष्णोश्चतुर्भागस्सर्वैस्समुदितो गुणैः ।
अथ लक्ष्मणशत्रुघ्नौ सुमित्राऽजनयत्सुतौ ॥ १३

वीरौ सर्वास्त्रकुशलौ विष्णोरर्धसमन्वितौ ।
पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः ॥ १४

सार्पे जातौ तु सौमित्री कुळीरेऽभ्युदिते रवौ ।
राज्ञः पुत्रा महात्मानश्चत्वारो जज्ञिरे पृथक् ॥ १५

गुणवन्तोऽनुरूपाश्च रुच्या प्रोष्ठपदोपमाः ।
जगुः कलं च गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ १६

देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ।
उत्सवश्च महानासीदयोध्यायां जनाकुलः ॥ १७

रथ्याश्च जनसम्बाधा नटनर्तकसङ्कुलाः ।
गायकैश्च विराविण्यो वादनैश्च तथापरैः ॥ १८

प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥ १९

अतीत्यैकादशाहं तु नामकर्म तथाऽकरोत् ।
ज्येष्ठं रामं महात्मानं भरतं कैकयीसुतम् ॥ २०

सौमित्रिं लक्ष्मणमिति शत्रुघ्नमपरं तथा ।
वसिष्ठः परमप्रीतो नामानि कृतवांस्तदा ॥ २१

ब्राह्मणान्भोजयामास पौराञ्जानपदानपि ।
अददाद्ब्राह्मणानां तु रत्नौघममितं बहु ॥ २२

तेषां जन्मक्रियादीनि सर्वकर्माण्यकारयत् ।
तेषां केतुरिव ज्येष्ठो रामो रतिकरः पितुः ॥ २३

बभूव भूयो भूतानां स्वयम्भूरिव सम्मतः ।
सर्वे वेदविदश्शूरास्सर्वे लोकहिते रताः ॥ २४

सर्वे ज्ञानोपसम्पन्नास्सर्वे समुदिता गुणैः ।
तेषामपि महातेजा रामस्सत्यपराक्रमः ॥ २५

इष्टस्सर्वस्य लोकस्य शशाङ्क इव निर्मलः ।
गजस्कन्धेऽश्वपृष्ठे च रथचर्यासु सम्मतः ॥ २६

धनुर्वेदे च निरतः पितृशुश्रूषणे रतः ।
बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः ॥ २७

रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ।
सर्वप्रियकरस्तस्य रामस्यापि शरीरतः ॥ २८

लक्ष्मणो लक्ष्मिसम्पन्नो बहिःप्राण इवापरः ।
न च तेन विना निद्रां लभते पुरुषोत्तमः ॥ २९

मृष्टमन्नमुपानीतमश्नाति नहि तं विना ।
यदा हि हयमारुह्य मृगयां याति राघवः ॥ ३०
तदैनं पृष्ठतोऽन्वेति सधनुः परिपालयन् ।
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ॥ ३१
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ।
स चतुर्भिर्महाभागैः पुत्त्रैर्दशरथः प्रियैः ॥ ३२
बभूव परमप्रीतो देवैरिव पितामहः ।
ते यदा ज्ञानसम्पन्नास्सर्वैस्समुदिता गुणैः ॥ ३३
ह्रीमन्तः कीर्तिमन्तश्च सर्वज्ञा दीर्घदर्शिनः ।
तेषामेवं प्रभावानां सर्वेषां दीप्ततेजसाम् ॥ ३४
पिता दशरथो हृष्टो ब्रह्मा! लोकाधिपो यथा ।
ते चापि मनुजव्याघ्रा वैदिकाध्ययने रताः ॥ ३५
पितृशुश्रूषणरताः धनुर्वेदे च निष्ठिताः ।
अथ राजा दशरथस्तेषां दारक्रियां प्रति ॥ ३६
चिन्तयामास धर्मात्मा सोपाध्यायस्सबान्धवः ।
तस्य चिन्तयमानस्य मन्त्रिमध्ये महात्मनः ॥ ३७
अभ्यागच्छन्महातेजा विश्वामित्रो महामुनिः ।
स राज्ञो दर्शनाकांक्षी द्वाराध्यक्षानुवाच ह ॥ ३८
" शीघ्रमाख्यात मां प्राप्तं कौशिकं गाधिनस्सुतम् । "
तच्छ्रुत्वा वचनं त्रासाद्राज्ञो वेश्म प्रदुद्रुवुः ॥ ३९

सम्भ्रान्तमनसस्सर्वे तेन वाक्येन चोदिताः ।
ते गत्वा राजभवनं विश्वामित्रमृषिं तदा ॥ ४०

प्राप्तमावेदयामासुर्नृपायैक्ष्वाकवे तदा ।
तेषां तद्वचनं श्रुत्वा सपुरोधास्समाहितः ॥ ४१

प्रत्युज्जगाम तं हृष्टो ब्रह्माणमिव वासवः ।
तं दृष्ट्वा ज्वलितं दीप्त्या तापसं संशितव्रतम् ॥ ४२

प्रहृष्टवदनो राजा ततोऽर्घ्यमुपहारयत् ।
स राज्ञः प्रतिगृह्यार्घ्यं शास्त्रदृष्टेन कर्मणा ॥ ४३

कुशलं चाव्ययं चैव पर्यपृच्छन्नराधिपम् ।
पुरे कोशे जनपदे बान्धवेषु सुहृत्सु च ॥ ४४

कुशलं कौशिको राज्ञः पर्यपृच्छत्सुधार्मिकः ।
"अपि ते सन्नतास्सर्वे सामन्ता रिपवो जिताः ! ॥ ४५

दैवं च मानुषं चापि कर्म ते साध्वनुष्ठितम् ।"
वसिष्ठं च समागम्य कुशलं मुनिपुङ्गवः ॥ ४६

ऋषींश्चान्यान्यथान्यायं महाभागानुवाच ह ।
ते सर्वे हृष्टमनसस्तस्य राज्ञो निवेशनम् ॥ ४७

विविशुः पूजितास्तत्र निषेदुश्च यथार्हतः ।
अथ हृष्टमना राजा विश्वामित्रं महामुनिम् ॥ ४८

उवाच परमोदारो हृष्टस्तमभिपूजयन् ।
"यथाऽमृतस्य सम्प्राप्तिर्यथा वर्षमनूदके ॥ ४९

यथा सदृशदारेषु पुत्रजन्माऽप्रजस्य च ।
प्रणष्टस्य यथा लोभो यथा हर्षो महोदये ॥ ५०

तथैवागमनं मन्ये स्वागतं ते महामुने ! ।
कं च ते परमं कामं करोमि किमु हर्षितः ॥ ५१

पात्रभूतोऽसि मे ब्रह्म ! न्दिष्ट्या प्राप्तोऽसि कौशिक ! ।
अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ ५२

पूर्वं राजर्षिशब्देन तपसा द्योतितप्रभः ।
ब्रह्मर्षित्वमनुप्राप्तः पूज्योऽसि बहुधा मया ॥ ५३

तदद्भुतमिदं ब्रह्मन् ! पवित्रं परमं मम ।
शुभक्षेत्रगतश्चाहं तव सन्दर्शनात्प्रभो ! । ५४

ब्रूहि यत्प्रार्थितं तुभ्यं कार्यमागमनं प्रति ।
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ॥ ५५

कार्यस्य न विमर्शं च गंतुमर्हसि कौशिक ! ।
कर्ता चाहमशेषेण दैवतं हि भवान्मम ॥ ५६

मम चायमनुप्राप्तो महानभ्युदयो द्विज ! ।
तवागमनजः कृत्स्नो धर्मश्चानुत्तमो मम ॥" ५७

इति हृदयसुखं निशम्य वाक्यं श्रुतिसुखमात्मवता विनीतमुक्तम् ।
प्रथितगुणयशा गुणैर्विशिष्टः परमऋषिः परमं जगाम हर्षम् ॥ ५८

---

## ॥ श्रीसीतापाणिग्रहणम् ॥



जुहावाग्नौ महातेजा वसिष्ठो भगवानृषिः ।
ततस्सीतां समानीय सर्वाभरणभूषिताम् ॥ १

समक्षमग्नेस्संस्थाप्य राघवाभिमुखे तदा ।
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥ २

"इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥ ३

पतिव्रता महाभागा छायेवानुगता सदा ।"
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥ ४

"साधु साध्वि"ति देवानामृषीणां वदतां तदा ।
देवदुन्दुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥ ५

एवं दत्त्वा तदा सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः ॥ ६

"लक्ष्मणागच्छ भद्रं ते ऊर्मिळमुद्यतां मया ।
प्रतीच्छ पाणिं गृह्णीष्व माभूत्कालस्य पर्ययः ॥" ७

तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ।
"गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन !" ८

शत्रुघ्नं चापि धर्मात्मा अब्रवीज्जनकेश्वरः ।
"श्रुतकीर्त्या महाबाहो पाणिं गृह्णीष्व पाणिना । ९

सर्वे भवन्तस्सौम्याश्च सर्वे सुचरितव्रताः ।
पत्नीभिस्सन्तु काकुत्स्था ! माभूत्कालस्य पर्ययः ॥" १०

जनकस्य वचश्श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः ॥ ११

अग्निं प्रदक्षिणीकृत्य वेदिं राजानमेव च ।
ऋषींश्चैव महात्मानस्सभार्या रघुसत्तमाः ॥ १२

यथोक्तेन तदा चक्रुर्विवाहं विधिपूर्वकम् ।
[काकुत्स्थैस्तु गृहीतेषु ललितेषु च पाणिषु ॥] १३

पुष्पवृष्टिर्महत्यासीदन्तरिक्षात्सुभास्वरा ।
दिव्यदुन्दुभिनिर्घोषैर्गीतवादित्रनिस्वनैः ॥ १४

ननृतुश्चाप्सरस्सङ्घा गन्धर्वाश्च जगुः कलम् ।
विवाहे रघुमुख्यानां तदद्भुतमदृश्यत ॥ १५

ईदृशे वर्तमाने तु तूर्योद्घुष्टनिनादिते ।
त्रिरग्निं ते परिक्रम्य ऊहुर्भार्या महौजसः ॥ १६

अथोपकार्यां जग्मुस्ते सभार्या रघुनन्दनाः ।
राजाऽप्यनुययौ पश्यन् सर्षिसङ्घः सबान्धवः ॥ १७

---

॥ श्रीरस्तु ॥

# श्रीमद्रामायणे-सुन्दरकाण्डे

## ॥ प्रथमस्सर्गः ॥



ततो रावणनीतायास्सीतायाश्शत्रुकर्शनः ।
इयेष पदमन्वेष्टुं चारणाचरिते पथि ॥ १

दुष्करं निष्प्रतिद्वन्द्वं चिकीर्षन् कर्म वानरः ।
समुदग्रशिरोग्रीवो गवां पतिरिवाबभौ ॥ २

अथ वैडूर्यवर्णेषु शाद्वलेषु महाबलः ।
धीरस्सलिलकल्पेषु विचचार यथासुखम् ॥ ३

द्विजान्वित्रासयन् धीमानुरसा पादपान् हरन् ।
मृगांश्च सुबहून्निघ्नन् प्रवृद्ध इव केसरी ॥ ४

नीललोहितमाञ्जिष्ठपत्रवर्णैस्सितासितैः ।
स्वभावविहितैश्चित्रैर्धातुभिस्समलङ्कृतम् ॥ ५

कामरूपिभिराविष्टमभीक्ष्णं सपरिच्छदैः ।
यक्षकिन्नरगन्धर्वैर्देवकल्पैश्च पन्नगैः ॥ ६

स तस्य गिरिवर्यस्य तले नागवरायुते ।
तिष्ठन् कपिवरस्तत्र ह्रदे नाग इवाबभौ ॥ ७

स सूर्याय महेन्द्राय पवनाय स्वयम्भुवे ।
भूतेभ्यश्चाञ्जलिं कृत्वा चकार गमने मतिम् ॥ ८

अञ्जलिं प्राङ्मुखः कृत्वा पवनायात्मयोनये ।
ततो हि ववृधे गन्तुं दक्षिणो दक्षिणां दिशम् ॥ ९

प्लवङ्गप्रवरैर्दृष्टः प्लवने कृतनिश्चयः ।
ववृधे रामवृद्ध्यर्थं समुद्र इव पर्वसु ॥ १०

निष्प्रमाणशरीरस्सन् लिलङ्घयिषुरर्णवम् ।
बाहुभ्यां पीडयामास चरणाभ्यां च पर्वतम् ॥ ११

स चचालाचलश्चापि मुहूर्तं कपिपीडितः ।
तरूणां पुष्पिताग्राणां सर्वं पुष्पमशातयत् ॥ १२

तेन पादपमुक्तेन पुष्पौघेण सुगन्धिना ।
सर्वतस्संवृतश्शैलो बभौ पुष्पमयो यथा ॥ १३

तेन चोत्तमवीर्येण पीड्यमानस्स पर्वतः ।
सलिलं सम्प्रसुस्राव मदं मत्त इव द्विपः ॥ १४

पीड्यमानस्तु बलिना महेन्द्रस्तेन पर्वतः ।
रीतीर्निर्वर्तयामास काञ्चनाञ्जनराजतीः ॥ १५

मुमोच च शिलाश्शैलो विशालास्समनश्शिलाः ।
मध्यमेनार्चिषा जुष्टो धूमराजीरिवानलः ॥ १६

गिरिणा पीड्यमानेन पीड्यमानानि सर्वतः ।
गुहाविष्टानि भूतानि विनेदुर्विकृतैस्स्वरैः ॥ १७

स महान् सत्त्वसन्नादश्शैलपीडानिमित्तजः ।
पृथिवीं पूरयामास दिशश्चोपवनानि च ॥ १८

शिरोभिः पृथुभिस्सर्पा व्यक्तस्वस्तिकलक्षणैः ।
वमन्तः पावकं घोरं ददंशुर्दशनैश्शिलाः ॥ १९

तास्तदा सविषैर्दष्टाः कुपितैस्तैर्महाशिलाः ।
जज्वलुः पावकोद्दीप्ता बिभिदुश्च सहस्रधा ॥ २०

यानि चौषधजालानि तस्मिन् जातानि पर्वते ।
विषघ्नान्यपि नागानां न शेकुश्शमितुं विषम् ॥ २१

[अपरे तु महाकाया वमन्तोऽग्निं स्वतेजसा ।
कन्दरेभ्यो विनिष्पेतुः कपिपादनिपीडिताः ॥

गिरेराक्रम्यमाणस्य तरवस्तरुणाङ्कुराः ।
मुमुचुः पुष्पवर्षाणि रक्तोत्पलसुगन्धिनः ॥

गैरिकाञ्जनसञ्जुष्टा हरितालसमावृताः ।
व्यशीर्यन्त गिरेस्तस्य शिलास्तास्समनश्शिलाः ॥

स चन्दनारुणस्ताम्रश्चित्रः काननधातुभिः ।
क्षिप्तः शिखिनिभैर्दीप्तैर्दीप्तगैरिकधातुभिः ॥]

भिद्यतेऽयं गिरिर्भूतैरिति मत्वा तपस्विनः ।
त्रस्ता विद्याधरास्तस्मादुत्पेतुस्स्त्रीगणैस्सह ॥ २२

पानभूमिगतं हित्वा हैममासवभाजनम् ।
पात्राणि च महार्हाणि करकांश्च हिरण्मयान् ॥ २३

लेह्यानुच्चावचान्भक्ष्यान्मांसानि विविधानि च ।
आर्षभाणि च चर्माणि खड्गांश्च कनकत्सरून् ॥ २४

कृतकण्ठगुणाः क्षीबा रक्तमाल्यानुलेपनाः ।
रक्ताक्षाः पुष्कराक्षाश्च गगनं प्रतिपेदिरे ॥ २५

हारनूपुरकेयूरपारिहार्यधराः स्त्रियः ।
विस्मितास्सस्मितास्तस्थुराकाशे रमणैस्सह ॥ २६

दर्शयन्तो महाविद्यां विद्याधरमहर्षयः ।
सहितास्तस्थुराकाशे वीक्षांचक्रुश्च पर्वतम् ॥ २७

शुश्रुवुश्च तदा शब्दमृषीणां भावितात्मनाम् ।
चारणानां च सिद्धानां स्थितानां विमलेऽम्बरे ॥ २८

एष पर्वतसङ्काशो हनुमान्मारुतात्मजः ।
तितीर्षति महावेगस्समुद्रं मकरालयम् ॥ २९

रामार्थं वानरार्थं च चिकीर्षन् कर्म दुष्करम् ।
समुद्रस्य परं पारं दुष्प्रापं प्राप्तुमिच्छति ॥ ३०

इति विद्याधराश्श्रुत्वा वचस्तेषां महात्मनाम् ।
तमप्रमेयं ददृशुः पर्वते वानरर्षभम् ॥ ३१

दुधुवे च स रोमाणि चकम्पे चाचलोपमः ।
ननाद सुमहानादं सुमहानिव तोयदः ॥ ३२

आनुपूर्व्येण वृत्तं च लाङ्गूलं लोमभिश्चितम् ।
उत्पतिष्यन्विचिक्षेप पक्षिराज इवोरगम् ॥ ३३

तस्य लाङ्गूलमाविद्धमात्तवेगस्य पृष्ठतः ।
ददृशे गरुडेनेव ह्रियमाणो महोरगः ॥ ३४

बाहू संस्तम्भयामास महापरिघसन्निभौ ।
ससाद च कपिः कट्यां चरणौ सञ्चुकोच च ॥ ३५

संहृत्य च भुजौ श्रीमांस्तथैव च शिरोधराम् ।
तेजस्सत्त्वं तथा वीर्यमाविवेश स वीर्यवान् ॥ ३६

मार्गमालोकयन् दूरादूर्ध्वं प्रणिहितेक्षणः ।
रुरोध हृदये प्राणानाकाशमवलोकयन् ॥ ३७

पद्भ्यां दृढमवस्थानं कृत्वा स कपिकुञ्जरः ।
निकुञ्च्य कर्णौ हनुमानुत्पतिष्यन्महाबलः ॥ ३८

वानरान्वानरश्रेष्ठ इदं वचनमब्रवीत् ।
यथा राघवनिर्मुक्तश्शरश्श्वसनविक्रमः ॥ ३९

गच्छेत्तद्वद्गमिष्यामि लङ्कां रावणपालिताम् ।
न हि द्रक्ष्यामि यदि तां लङ्कायां जनकात्मजाम् ॥ ४०

अनेनैव हि वेगेन गमिष्यामि सुरालयम् ।
यदि वा त्रिदिवे सीतां न द्रक्ष्याम्यकृतश्रमः ॥ ४१

बद्ध्वा राक्षसराजानमानयिष्यामि रावणम् ।
सर्वथा कृतकार्योऽहमेष्यामि सह सीतया ॥ ४२

आनयिष्यामि वा लङ्कां समुत्पाट्य सरावणाम् ।
एवमुक्त्वा तु हनुमान्वानरान्वानरोत्तमः ॥ ४३

उत्पपाताथ वेगेन वेगवानविचारयन् ।
सुपर्णमिव चात्मानं मेने स कपिकुञ्जरः ॥ ४४

समुत्पतति तस्मिंस्तु वेगात्ते नगरोहिणः ।
संहृत्य विटपान् सर्वान् समुत्पेतुस्समन्ततः ॥ ४५

स मत्तकोयष्टिभकान् पादपान् पुष्पशालिनः ।
उद्वहन्नूरुवेगेन जगाम विमलेऽम्बरे ॥ ४६

ऊरुवेगोद्धता वृक्षा मुहूर्तं कपिमन्वयुः ।
प्रस्थितं दीर्घमध्वानं स्वबन्धुमिव बान्धवाः ॥ ४७

तमूरुवेगोन्मथितास्सालाश्चान्ये नगोत्तमाः ।
अनुजग्मुर्हनूमन्तं सैन्या इव महीपतिम् ॥ ४८

सुपुष्पिताग्रैर्बहुभिः पादपैरन्वितः कपिः ।
हनुमान्पर्वताकारो बभूवाद्भुतदर्शनः ॥ ४९

सारवन्तोऽथ ये वृक्षा न्यमज्जंल्लवणाम्भसि ।
भयादिव महेन्द्रस्य पर्वता वरुणालये ॥ ५०

स नानाकुसुमैः कीर्णः कपिस्साङ्कुरकोरकैः ।
शुशुभे मेघसङ्काशः खद्योतैरिव पर्वतः ॥ ५१

विमुक्तास्तस्य वेगेन मुक्त्वा पुष्पाणि ते द्रुमाः ।
अवशीर्यन्त सलिले निवृत्तास्सुहृदो यथा ॥ ५२

लघुत्वेनोपपन्नं तद्विचित्रं सागरेऽपतत् ।
द्रुमाणां विविधं पुष्पं कपिवायुसमीरितम् ॥ ५३

ताराचितमिवाकाशं प्रबभौ स महार्णवः ।
पुष्पौघेनानुबद्धेन नानावर्णेन वानरः ॥ ५४

बभौ मेघ इवाकाशे विद्युद्गणविभूषितः ।
तस्य वेगसमाधूतैः पुष्पैस्तोयमदृश्यत ॥ ५५

ताराभिरभिरामाभिरुदिताभिरिवाम्बरम् ।
तस्याम्बरगतौ बाहू ददृशाते प्रसारितौ ॥ ५६

पर्वताग्राद्विनिष्क्रान्तौ पञ्चास्याविव पन्नगौ ।
पिबन्निव बभौ चापि सोर्मिजालं महार्णवम् ॥ ५७

पिपासुरिव चाकाशं ददृशे स महाकपिः ।
तस्य विद्युत्प्रभाकारे वायुमार्गानुसारिणः ॥ ५८

नयने विप्रकाशेते पर्वतस्थाविवानलौ ।
पिङ्गे पिङ्गाक्षमुख्यस्य बृहती परिमण्डले ॥ ५९

चक्षुषी सम्प्रकाशेते चन्द्रसूर्याविवोदितौ ।
मुखं नासिकया तस्य ताम्रया ताम्रमाबभौ ॥ ६०

सन्ध्यया समभिस्पृष्टं यथा तत्सूर्यमण्डलम् ।
लाङ्गूलं च समाविद्धं प्लवमानस्य शोभते ॥ ६१

अम्बरे वायुपुत्रस्य शक्रध्वज इवोच्छ्रितम् ।
लाङ्गूलचक्रेण महान् शुक्लदंष्ट्रोऽनिलात्मजः ॥ ६२

व्यरोचत महाप्राज्ञः परिवेषीव भास्करः ।
स्फिग्देशेनाभिताम्रेण रराज स महाकपिः ॥ ६३

महता दारितेनेव गिरिर्गैरिकधातुना ।
तस्य वानरसिंहस्य प्लवमानस्य सागरम् ॥ ६४

कक्षान्तरगतो वायुर्जीमूत इव गर्जति ।
खे यथा निपतन्त्युल्का ह्युत्तरान्ताद्विनिस्सृता ॥ ६५

दृश्यते सानुबन्धा च तथा स कपिकुञ्जरः ।
पतत्पतङ्गसङ्काशो व्यायतश्शुशुभे कपिः ॥ ६६

प्रवृद्ध इव मातङ्गः कक्ष्यया बध्यमानया ।
उपरिष्टाच्छरीरेण छायया चावगाढया ॥ ६७

सागरे मारुताविष्टा नौरिवासीत्तदा कपिः ।
यं यं देशं समुद्रस्य जगाम स महाकपिः ॥ ६८

स स तस्योरुवेगेन सोन्माद इव लक्ष्यते ।
सागरस्योर्मिजालानामुरसा शैलवर्ष्मणाम् ॥ ६९

अभिघ्नंस्तु महावेगः पुप्लुवे स महाकपिः ।
कपिवातश्च बलवान् मेघवातश्च निस्सृतः ॥ ७०

सागरं भीमनिर्घोषं कम्पयामास तुर्भृशम् ।
विकर्षन्नूर्मिजालानि बृहन्ति लवणाम्भसि ॥ ७१
पुप्लुवे कपिशार्दूलो विकिरन्निव रोदसी ।
मेरुमन्दरसङ्काशानुद्धतान् स महार्णवे ॥ ७२
अतिक्रामन्महावेगस्तरङ्गान् गणयन्निव ।
तस्य वेगसमुद्धूतं जलं सजलदं तदा ॥ ७३
अम्बरस्थं विबभ्राज शारदाभ्रमिवाततम् ।
तिमिनक्रझषाः कूर्मा दृश्यन्ते विवृतास्तदा ॥ ७४
वस्त्रापकर्षणेनेव शरीराणि शरीरिणाम् ।
प्लवमानं समीक्ष्याथ भुजङ्गास्सागरालयाः ॥ ७५
व्योम्नि तं कपिशार्दूलं सुपर्ण इति मेनिरे ।
दशयोजनविस्तीर्णा त्रिंशद्योजनमायता ॥ ७६
छाया वानरसिंहस्य जले चारुतराऽभवत् ।
श्वेताभ्रघनराजीव वायुपुत्रानुगामिनी ॥ ७७
तस्य सा शुशुभे छाया वितता लवणाम्भसि ।
शुशुभे स महातेजा महाकायो महाकपिः ॥ ७८
वायुमार्गे निरालम्बे पक्षवानिव पर्वतः ।
येनासौ याति बलवान् वेगेन कपिकुञ्जरः ॥ ७९
तेन मार्गेण सहसा द्रोणीकृत इवार्णवः ।
आपाते पक्षिसङ्घानां पक्षिराज इव व्रजन् ॥ ८०
हनुमान्मेघजालानि प्रकर्षन् मारुतो यथा ।
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ॥ ८१

कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥ ८२

प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ।
प्लवमानं तु तं दृष्ट्वा प्लवङ्गं त्वरितं तदा ॥ ८३

ववर्षुः पुष्पवर्षाणि देवगन्धर्वदानवाः ।
तताप न हि तं सूर्यः प्लवन्तं वानरोत्तमम् ॥ ८४

सिषेवे च तदा वायू रामकार्यार्थसिद्धये ।
ऋषयस्तुष्टुवुश्चैनं प्लवमानं विहायसा ॥ ८५

जगुश्च देवगन्धर्वाः प्रशंसन्तो महौजसम् ।
नागाश्च तुष्टुवुर्यक्षा रक्षांसि विबुधाः खगाः ॥ ८६

प्रेक्ष्य सर्वे कपिवरं सहसा विगतक्लमम् ।
तस्मिन् प्लवगशार्दूले प्लवमाने हनूमति ॥ ८७

इक्ष्वाकुकुलमानार्थी चिन्तयामास सागरः ।
साहाय्यं वानरेन्द्रस्य यदि नाहं हनूमतः ॥ ८८

करिष्यामि भविष्यामि सर्ववाच्यो विवक्षताम् ।
अहमिक्ष्वाकुनाथेन सगरेण विवर्धितः ॥ ८९

इक्ष्वाकुसचिवश्चायं नावसीदितुमर्हति ।
तथा मया विधातव्यं विश्रमेत यथा कपिः ॥ ९०

शेषं च मयि विश्रान्तस्सुखेनातिपतिष्यति ।
इति कृत्वा मतिं साध्वीं समुद्रश्छन्नमम्भसि ॥ ९१

हिरण्यनाभं मैनाकमुवाच गिरिसत्तमम् ।
त्वमिहासुरसङ्घानां पातालतलवासिनाम् ॥ ९२

देवराज्ञा गिरिश्रेष्ठ परिघस्सन्निवेशितः ।
त्वमेषां जातवीर्याणां पुनरेवोत्पतिष्यताम् ॥ ९३

पाताळस्याप्रमेयस्य द्वारमावृत्य तिष्ठसि ।
तिर्यगूर्ध्वमधश्चैव शक्तिस्ते शैल वर्धितुम् ॥ ९४

तस्मात्सञ्चोदयामि त्वामुत्तिष्ठ गिरिसत्तम ।
स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ॥ ९५

हनूमान् रामकार्यार्थं भीमकर्मा खमाप्लुतः ।
अस्य साह्यं मया कार्यमिक्ष्वाकुकुलवर्तिनः ॥ ९६

मम हीक्ष्वाकवः पूज्याः परं पूज्यतमास्तव ।
कुरु साचिव्यमस्माकं न नः कार्यमतिक्रमेत् ॥ ९७

कर्तव्यमकृतं कार्यं सतां मन्युमुदीरयेत् ।
सलिलादूर्ध्वमुत्तिष्ठ तिष्ठत्वेष कपिस्त्वयि ॥ ९८

अस्माकमतिथिश्चैव पूज्यश्च प्लवतां वरः ।
चामीकरमहानाभ देवगन्धर्वसेवित ॥ ९९

हनुमांस्त्वयि विश्रान्तस्ततश्शेषं गमिष्यति ।
स एष कपिशार्दूलस्त्वामुपर्येति वीर्यवान् ॥ १००

काकुत्स्थस्यानृशंस्यं च मैथिल्याश्च विवासनम् ।
श्रमं च प्लवगेन्द्रस्य समीक्ष्योत्थातुमर्हसि ॥ १०१

हिरण्यनाभो मैनाको निशम्य लवणाम्भसः ।
उत्पपात जलात्तूर्णं महाद्रुमलतायुतः ॥ १०२

स सागरजलं भित्वा बभूवाभ्युत्थितस्तदा ।
यथा जलधरं भित्वा दीप्तरश्मिर्दिवाकरः ॥ १०३

स महात्मा मुहूर्तेन सर्वतस्सलिलावृतः ।
दर्शयामास शृङ्गाणि सागरेण नियोजितः ॥ १०४

शातकुम्भमयैश्शृङ्गैस्सकिन्नरमहोरगैः ।
आदित्योदयसङ्काशैरालिखद्भिरिवाम्बरम् ॥ १०५

तप्तजाम्बूनदैश्शृङ्गैः पर्वतस्य समुत्थितैः ।
आकाशं शस्त्रसङ्काशमभवत्काञ्चनप्रभम् ॥ १०६

जातरूपमयैश्शृङ्गैर्भ्राजमानैस्स्वयंप्रभैः ।
आदित्यशतसङ्काशस्सोऽभवद्गिरिसत्तमः ॥ १०७

तमुत्थितमसङ्गेन हनुमानग्रतस्स्थितम् ।
मध्ये लवणतोयस्य विघ्नोऽयमिति निश्चितः ॥ १०८

स तमुच्छ्रितमत्यर्थं महावेगो महाकपिः ।
उरसा पातयामास जीमूतमिव मारुतः ॥ १०९

स यथा पातितस्तेन कपिना पर्वतोत्तमः ।
बुद्ध्वा तस्य कपेर्वेगं जहर्ष च ननन्द च ॥ ११०

तमाकाशगतं वीरमाकाशे समुपस्थितः ।
प्रीतो हृष्टमना वाक्यमब्रवीत्पर्वतः कपिम् ॥ १११

मानुषं धारयन् रूपमात्मनश्शिखरे स्थितः ।
दुष्करं कृतवान्कर्म त्वमिदं वानरोत्तम ॥ ११२

निपत्य मम शृङ्गेषु विश्रमस्व यथासुखम् ।
राघवस्य कुले जातैरुदधिः परिवर्धितः ॥ ११३

स त्वां रामहिते युक्तं प्रत्यर्चयति सागरः ।
कृते च प्रतिकर्तव्यमेष धर्मस्सनातनः ॥ ११४

सोऽयं त्वत्प्रतिकारार्थी त्वत्तस्सम्मानमर्हति ।
त्वन्निमित्तमनेनाहं बहुमानात्प्रचोदितः ॥ ११५

तिष्ठ त्वं कपिशार्दूल मयि विश्रम्य गम्यताम् ।
योजनानां शतं चापि कपिरेष समाप्लुतः ॥ ११६

तव सानुषु विश्रान्तश्शेषं प्रक्रमतामिति ।
तदिदं गन्धवत्स्वादु कन्दमूलफलं बहु ॥ ११७

तदास्वाद्य हरिश्रेष्ठ विश्रान्तोऽनुगमिष्यसि ।
अस्माकमपि सम्बन्धः कपिमुख्य त्वयाऽस्ति वै ॥ ११८

प्रख्यातस्त्रिषु लोकेषु महागुणपरिग्रहः ।
वेगवन्तः प्लवन्तो ये प्लवगा मारुतात्मज ॥ ११९

तेषां मुख्यतमं मन्ये त्वामहं कपिकुञ्जर ।
अतिथिः किल पूजार्हः प्राकृतोऽपि विजानता ॥ १२०

धर्मं जिज्ञासमानेन किं पुनस्त्वादृशो महान् ।
त्वं हि देववरिष्ठस्य मारुतस्य महात्मनः ॥ १२१

पुत्रस्तस्यैव वेगेन सदृशः कपिकुञ्जर ।
पूजिते त्वयि धर्मज्ञ पूजां प्राप्नोति मारुतः ॥ १२२

तस्मात्त्वं पूजनीयो मे शृणु चाप्यत्र कारणम् ।
पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् ॥ १२३

ते हि जग्मुर्दिशस्सर्वा गरुडानिलवेगिनः ।
ततस्तेषु प्रयातेषु देवसङ्घास्सहर्षिभिः ॥ १२४

भूतानि च भयं जग्मुस्तेषां पतनशङ्कया ।
ततः क्रुद्धस्सहस्राक्षः पर्वतानां शतक्रतुः ॥ १२५

पक्षांश्चिच्छेद वज्रेण तत्र तत्र सहस्रशः ।
स मामुपगतः क्रुद्धो वज्रमुद्यम्य देवराट् ॥ १२६

ततोऽहं सहसा क्षिप्तः श्वसनेन महात्मना ।
अस्मिन्लवणतोये च प्रक्षिप्तः प्लवगोत्तम ॥ १२७

गुप्तपक्षसमग्रश्च तव पित्राऽभिरक्षितः ।
ततोऽहं मानयामि त्वां मान्यो हि मम मारुतः ॥ १२८

त्वया मे ह्येष सम्बन्धः कपिमुख्य महागुणः ।
अस्मिन्नेवं गते कार्ये सागरस्य ममैव च ॥ १२९

प्रीतिं प्रीतमनाः कर्तुं त्वमर्हसि महाकपे ।
श्रमं मोक्षय पूजां च गृहाण कपिसत्तम ॥ १३०

प्रीतिं च बहुमन्यस्व प्रीतोऽस्मि तव दर्शनात् ।
एवमुक्तः कपिश्रेष्ठस्तं नगोत्तममब्रवीत् ॥ १३१

प्रीतोऽस्मि कृतमातिथ्यं मन्युरेषोऽपनीयताम् ।
त्वरते कार्यकालो मे अहश्चाप्यतिवर्तते ॥ १३२

प्रतिज्ञा च मया दत्ता न स्थातव्यमिहान्तरे ।
इत्युक्त्वा पाणिना शैलमालभ्य हरिपुङ्गवः ॥ १३३

जगामाकाशमाविश्य वीर्यवान् प्रहसन्निव ।
स पर्वतसमुद्राभ्यां बहुमानादवेक्षितः ॥ १३४

पूजितश्चोपपन्नाभिराशीर्भिरनिलात्मजः ।
अथोर्ध्वं दूरमुत्प्लुत्य हित्वा शैलमहार्णवौ ॥ १३५

पितुः पन्थानमास्थाय जगाम विमलेऽम्बरे ।
भूयश्चोर्ध्वगतिं प्राप्य गिरिं तमवलोकयन् ॥ १३६

वायुसूनुर्निरालम्बे जगाम विमलेऽम्बरे ।
तद्द्वितीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ॥ १३७
प्रशशंसुस्सुरास्सर्वे सिद्धाश्च परमर्षयः ।
देवताश्चाभवन् हृष्टास्तत्रस्थास्तस्य कर्मणा ॥ १३८
काञ्चनस्य सुनाभस्य सहस्राक्षश्च वासवः ।
उवाच वचनं धीमान् परितोषात्सगद्गदम् ॥ १३९
सुनाभं पर्वतश्रेष्ठं स्वयमेव शचीपतिः ।
हिरण्यनाभ शैलेन्द्र परितुष्टोऽस्मि ते भृशम् ॥ १४०
अभयं ते प्रयच्छामि तिष्ठ सौम्य यथासुखम् ।
साह्यं कृतं ते सुमहद्विक्रान्तस्य हनूमतः ॥ १४१
क्रमतो योजनशतं निर्भयस्य भये सति ।
रामस्यैव हि दूत्येन याति दाशरथेर्हरिः ॥ १४२
सत्क्रियां कुर्वता तस्य तोषितोऽस्मि दृढं त्वया ।
ततः प्रहर्षमगमद्विपुलं पर्वतोत्तमः ॥ १४३
देवतानां पतिं दृष्ट्वा परितुष्टं शतक्रतुम् ।
स वै दत्तवरश्शैलो बभूवावस्थितस्तदा ॥ १४४
हनुमांश्च मुहूर्तेन व्यतिचक्राम सागरम् ।
ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ॥ १४५
[तं प्रयान्तं समुद्वीक्ष्य आकाशे मारुतात्मजम्]
अब्रुवन्सूर्यसङ्काशां सुरसां नागमातरम् ।
अयं वातात्मजश्श्रीमान्प्लवते सागरोपरि ॥ १४६

हनुमान्नाम तस्य त्वं मुहूर्तं विघ्नमाचर ।
राक्षसं रूपमास्थाय सुघोरं पर्वतोपमम् ॥ १४७

दंष्ट्राकरालं पिङ्गाक्षं वक्त्रं कृत्वा नभस्समम् ।
बलमिच्छामहे ज्ञातुं भूयश्चास्य पराक्रमम् ॥ १४८

त्वां विजेष्यत्युपायेन विषादं वा गमिष्यति ।
एवमुक्ता तु सा देवी दैवतैरभिसत्कृता ॥ १४९

समुद्रमध्ये सुरसा बिभ्रती राक्षसं वपुः ।
विकृतं च विरूपं च सर्वस्य च भयावहम् ॥ १५०

प्लवमानं हनूमन्तमावृत्येदमुवाच ह ।
मम भक्ष्यः प्रदिष्टस्त्वमीश्वरैर्वानरर्षभः ॥ १५१

अहं त्वां भक्षयिष्यामि प्रविशेदं ममाननम् ।
एवमुक्तस्सुरसया प्राञ्जलिर्वानरर्षभः ॥ १५२

प्रहृष्टवदनश्श्रीमानिदं वचनमब्रवीत् ।
रामो दाशरथिर्नाम प्रविष्टो दण्डकावनम् ॥ १५३

लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ।
अन्यकार्यविषक्तस्य बद्धवैरस्य राक्षसैः ॥ १५४

तस्य सीता हृता भार्या रावणेन यशस्विनी ।
तस्यास्सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ १५५

कर्तुमर्हसि रामस्य साह्यं विषयवासिनि ।
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ १५६

आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ।
एवमुक्ता हनुमता सुरसा कामरूपिणी ॥ १५७

अब्रवीन्नातिवर्तेन्मां कश्चिदेष वरो मम ।
[तं प्रयान्तं समुद्वीक्ष्य सुरसा वाक्यमब्रवीत् ।
बलं जिज्ञासमाना वै नागमाता हनूमतः ॥
प्रविश्य वदनं मेऽद्य गन्तव्यं वानरोत्तम ।
वर एष पुरा दत्तो मम धात्रेति सत्वरा ॥
व्यादाय विपुलं वक्त्रं स्थिता सा मारुतेः पुरः ।
एवमुक्तस्सुरसया क्रुद्धो वानरपुङ्गवः ॥
अब्रवीत्कुरु वै वक्त्रं येन मां विषहिष्यसे ।
इत्युक्त्वा सुरसा क्रुद्धा दशयोजनमायता ॥
दशयोजनविस्तारो बभूव हनुमांस्तदा ।
तं दृष्ट्वा मेघसङ्काशं दशयोजनमायतम् ॥
चकार सुरसा चास्यं विंशद्योजनमायतम् ।
हनुमांस्तु ततः क्रुद्धस्त्रिंशद्योजनमायतः ॥
चकार सुरसा वक्त्रं चत्वारिंशत्तदोच्छ्रितम् ।
बभूव हनुमान्वीरः पञ्चाशद्योजनोच्छ्रितः ॥
चकार सुरसा वक्त्रं षष्टियोजनमायतम् ।
तथैव हनुमान्वीरस्सप्ततीयोजनोच्छ्रितः ॥
चकार सुरसा वक्त्रमशीतीयोजनायतम् ।
हनुमानचलप्रख्यो नवतीयोजनोच्छ्रितः ॥
चकार सुरसा वक्त्रं शतयोजनमायतम् ।
तद्दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रस्सुबुद्धिमान् ॥ १५८

दीर्घजिह्वां सुरसया सुघोरं नरकोपमम् ।
सुसंक्षिप्यात्मनः कायं बभूवाङ्गुष्ठमात्रकः ॥ १५९

सोऽभिपत्याशु तद्वक्त्रं निष्पत्य च महाबलः ।
अन्तरिक्षे स्थितश्श्रीमानिदं वचनमब्रवीत् ॥ १६०

प्रविष्टोऽस्मि हि ते वक्त्रं दाक्षायाणि नमोऽस्तु ते ।
गमिष्ये यत्र वैदेही सत्यं चासीद्वरं तव ॥ १६१

तं दृष्ट्वा वदनान्मुक्तं चन्द्रं राहुमुखादिव ।
अब्रवीत्सुरसा देवी स्वेन रूपेण वानरम् ॥ १६२

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानयस्व वैदेहीं राघवेण महात्मना ॥ १६३

तत्तृतीयं हनुमतो दृष्ट्वा कर्म सुदुष्करम् ।
साधुसाध्विति भूतानि प्रशशंसुस्तदा हरिम् ॥ १६४

ससागरमनाधृष्यमभ्येत्य वरुणालयम् ।
जगामाकाशमाविश्य वेगेन गरुडोपमः ॥ १६५

सेविते वारिधाराभिः पतगैश्च निषेविते ।
चरिते कैशिकाचार्यैरैरावतनिषेविते ॥ १६६

सिंहकुञ्जरशार्दूलपतगोरगवाहनैः ।
विमानैस्सम्पतद्भिश्च विमलैस्समलङ्कृते ॥ १६७

वज्राशनिसमाघातैः पावकैरुपशोभिते ।
कृतपुण्यैर्महाभागैस्स्वर्गजिद्भिरलङ्कृते ॥ १६८

वहता हव्यमत्यर्थं सेविते चित्रभानुना ।
ग्रहनक्षत्रचन्द्रार्कतारागणविभूषिते ॥ १६९

महर्षिगणगन्धर्वनागयक्षसमाकुले ।
विविक्ते विमले विश्वे विश्वावसुनिषेविते ॥ १७०
देवराजगजाक्रान्ते चन्द्रसूर्यपथे शिवे ।
विताने जीवलोकस्य वितते ब्रह्मनिर्मिते ॥ १७१
बहुशस्सेविते वीरैर्विद्याधरगणैर्वरैः ।
जगाम वायुमार्गे तु गरुत्मानिव मारुतिः ॥ १७२
[हनुमान्मेघजालानि प्रकर्षन्मारुतो यथा ।
कालागरुसवर्णानि रक्तपीतसितानि च ॥
कपिना कृष्यमाणानि महाभ्राणि चकाशिरे ।
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ॥
प्रावृषीन्दुरिवाभाति निष्पतन्प्रविशंस्तदा ।]
प्रदृश्यमानस्सर्वत्र हनुमान्मारुतात्मजः ।
भेजेऽम्बरं निरालम्बं लम्बपक्ष इवाद्रिराट् ॥ १७३
प्लवमानं तु तं दृष्ट्वा सिंहिका नाम राक्षसी ।
मनसा चिन्तयामास प्रवृद्धा कामरूपिणी ॥ १७४
अद्य दीर्घस्य कालस्य भविष्याम्यहमाशिता ।
इदं हि मे महत्सत्वं चिरस्य वशमागतम् ॥ १७५
इति सञ्चिन्त्य मनसा छायामस्य समाक्षिपत् ।
छायायां गृह्यमाणायां चिन्तयामास वानरः ॥ १७६
समाक्षिप्तोऽस्मि सहसा पङ्गूकृतपराक्रमः ।
प्रतिलोमेन वातेन महानौरिव सागरे ॥ १७७

तिर्यगूर्ध्वमधश्चैव वीक्षमाणस्ततः कपिः ।
ददर्श स महत्सत्त्वमुत्थितं लवणाम्भसि ॥ १७८

तद्दृष्ट्वा चिन्तयामास मारुतिर्विकृताननम् ।
कपिराजेन कथितं सत्त्व (सत्य) मद्भुतदर्शनम् ॥ १७९

छायाग्राहि महावीर्यं तदिदं नात्र संशयः ।
स तां बुद्ध्वाऽर्थतत्त्वेन सिंहिकां मतिमान्कपिः ॥ १८०

व्यवर्धत महाकायः प्रावृषीव बलाहकः ।
तस्य सा कायमुद्वीक्ष्य वर्धमानं महाकपेः ॥ १८१

वक्त्रं प्रसारयामास पाताळान्तरसन्निभम् ।
घनराजीव गर्जन्ती वानरं समभिद्रवत् ॥ १८२

स ददर्श ततस्तस्या विवृतं सुमहन्मुखम् ।
कायमात्रं च मेधावी मर्माणि च महाकपिः ॥ १८३

स तस्या विवृते वक्त्रे वज्रसंहननः कपिः ।
सङ्क्षिप्य मुहुरात्मानं निष्पपात महाबलः ॥ १८४

आस्ये तस्या निमज्जन्तं ददृशुस्सिद्धचारणाः ।
ग्रस्यमानं यथा चन्द्रं पूर्णं पर्वणि राहुणा ॥ १८५

ततस्तस्या नखैस्तीक्ष्णैर्मर्माण्युत्कृत्य वानरः ।
उत्पपाताथ वेगेन मनस्सम्पातविक्रमः ॥ १८६

तां तु दृष्ट्या च धृत्या च दाक्षिण्येन निपात्य च ।
स कपिप्रवरो वेगाद्ववृधे पुनरात्मवान् ॥ १८७

हृतहृत्सा हनुमता पपात विधुराऽम्भसि ।
[स्वयम्भुवैव हनुमान् सृष्टस्तस्या निपातने ॥]

तां हतां वानरेणाशु पतितां वीक्ष्य सिंहिकाम् ॥ १८८

भूतान्याकाशचारीणि तमूचुः प्लवगोत्तमम् ।
भीममद्य कृतं कर्म महत्सत्त्वं त्वया हतम् ॥ १८९

साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ।
यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ॥ १९०

धृतिर्दृष्टिर्मतिर्दाक्ष्यं स्वकर्मसु न सीदति ।
स तैस्सम्भावितः पूज्यः प्रतिपन्नप्रयोजनः ॥ १९१

जगामाकाशमाविश्य पन्नगाशनवत्कपिः ।
प्राप्तभूयिष्ठपारस्तु सर्वतः प्रतिलोकयन् ॥ १९२

योजनानां शतस्यांते वनराजिं ददर्श सः ।
ददर्श च पतन्नेव विविधद्रुमभूषितम् ॥ १९३

द्वीपं शाखामृगश्रेष्ठो मलयोपवनानि च ।
सागरं सागरानूपं सागरानूपजान्द्रुमान् ॥ १९४

सागरस्य च पत्नीनां मुखान्यपि विलोकयन् ।
स महामेघसङ्काशं समीक्ष्यात्मानमात्मवान् ॥ १९५

निरुन्धन्तमिवाकाशं चकार मतिमान्मतिम् ।
कायवृद्धिं प्रवेगञ्च मम दृष्ट्वैव राक्षसाः ॥ १९६

मयि कौतूहलं कुर्युरिति मेने महाकपिः ।
ततश्शरीरं सङ्क्षिप्य तन्महीधरसन्निभम् ॥ १९७

पुनः प्रकृतिमापेदे वीतमोह इवात्मवान् ।
तद्रूपमतिसङ्क्षिप्य हनुमान्प्रकृतौ स्थितः ॥ १९८

त्रीन्क्रमानिव विक्रम्य बलिवीर्यहरो हरिः ।

स चारुनानाविधरूपधारी परं समासाद्य समुद्रतीरम् ।
परैरशक्यः प्रतिपन्नरूपस्समीक्षितात्मा समवेक्षितार्थः ॥ १९९

ततस्स लम्बस्य गिरेस्समृद्धे विचित्रकूटे निपपात कूटे ।
सकेतकोद्दालकनालिकेरे महाद्रिकूटप्रतिमो महात्मा ॥ २००

ततस्तु सम्प्राप्य समुद्रतीरं समीक्ष्य लङ्कां गिरिवर्यमूर्ध्नि ।
कपिस्तु तस्मिन्निपपात पर्वते विधूय रूपं व्यथयन्मृगद्विजान् ॥

स सागरं दानवपन्नगायुतं बलेन विक्रम्य महोर्मिमालिनम् ।
निपत्य तीरे च महोदधेस्तदा ददर्श लङ्काममरावतीमिव ॥ २०२

इति श्रीमत्सुन्दरकाण्डे प्रथमस्सर्गः ॥

---

## ॥ द्वितीयस्सर्गः ॥

स सागरमनाधृष्यमतिक्रम्य महाबलः ।
त्रिकूटशिखरे लङ्कां स्थितां स्वस्थो ददर्श ह ॥ १

ततः पादपमुक्तेन पुष्पवर्षेण वीर्यवान् ।
अभिवृष्टस्स्थितस्तत्र बभौ पुष्पमयो यथा ॥ २

योजनानां शतं श्रीमांस्तीर्त्वाप्युत्तमविक्रमः ।
अनिश्श्वसन् कपिस्तत्र न ग्लानिमधिगच्छति ॥ ३

शतान्यहं योजनानां क्रमेयं सुबहून्यपि ।
किम्पुनस्सागरस्यान्तं संख्यातं शतयोजनम् ॥ ४

स तु वीर्यवतां श्रेष्ठः प्लवतामपि चोत्तमः ।
जगाम वेगवान् लङ्कां लङ्घयित्वा महोदधिम् ॥ ५

शाद्वलानि च नीलानि गन्धवन्ति वनानि च ।
गण्डवन्ति च मध्येन जगाम नगवन्ति च ॥ ६

शैलांश्च तरुसञ्छन्नान् वनराजीश्च पुष्पिताः ।
अभिचक्राम तेजस्वी हनुमान् प्लवगर्षभः ॥ ७

स तस्मिन्नचले तिष्ठन् वनान्युपवनानि च ।
स नगाग्रे च तां लङ्कां ददर्श पवनात्मजः ॥ ८

सरलान्कर्णिकारांश्च खर्जूरांश्च सुपुष्पितान् ।
प्रियालान्मुचुलिन्दांश्च कुटजान्केतकानपि ॥ ९

प्रियङ्गून्गन्धपूर्णांश्च नीपान्सप्तच्छदांस्तथा ।
असनान्कोविदारांश्च करवीरांश्च पुष्पितान् ॥ १०

पुष्पभारनिबद्धांश्च तथा मुकुलितानपि ।
पादपान्विहगाकीर्णान्पवनाधूतमस्तकान् ॥ ११

हंसकारण्डवाकीर्णा वापीः पद्मोत्पलायुताः ।
आक्रीडान्विविधान्रम्यान्विविधांश्च जलाशयान् ॥ १२

सन्ततान्विविधैर्वृक्षैस्सर्वर्तुफलपुष्पितैः ।
उद्यानानि च रम्याणि ददर्श कपिकुञ्जरः ॥ १३

समासाद्य च लक्ष्मीवान्लङ्कां रावणपालिताम् ।
परिखाभिस्सपद्माभिस्सोत्पलाभिरलङ्कृताम् ॥ १४

सीतापहरणार्थेन रावणेन सुरक्षिताम् ।
समन्ताद्विचरद्भिश्च राक्षसैरुग्रधन्विभिः ॥ १५

काञ्चनेनावृतां रम्यां प्राकारेण महापुरीम् ।
गृहैश्च ग्रहसङ्काशैश्शारदाम्बुदसन्निभैः ॥ १६

पाण्डराभिः प्रतोलीभिरुच्छ्राभिरभिसंवृताम् ।
अट्टालकशताकीर्णां पताकाध्वजमालिनीम् ॥ १७

तोरणैः काञ्चनैर्दिव्यैर्लतापङ्क्तिविचित्रितैः ।
ददर्श हनुमान्लङ्कां दिवि देवपुरीं यथा ॥ १८

गिरिमूर्ध्नि स्थितां लङ्कां पाण्डरैर्भवनैश्शुभैः ।
ददर्श स कपिश्रेष्ठः पुरमाकाशगं यथा ॥ १९

पालितां राक्षसेन्द्रेण निर्मितां विश्वकर्मणा ।
प्लवमानामिवाकाशे ददर्श हनुमान्पुरीम् ॥ २०

वप्रप्राकारजघनां विपुलाम्बुनवाम्बराम् ।
शतघ्नीशूलकेशान्तामट्टालकवतंसकाम् ॥ २१

मनसेव कृतां लङ्कां निर्मितां विश्वकर्मणा ।
द्वारमुत्तरमासाद्य चिन्तयामास वानरः ॥ २२

कैलासशिखरप्रख्यामालिखन्तीमिवाम्बरम् ।
डीयमानामिवाकाशमुच्छ्रितैर्भवनोत्तमैः ॥ २३

सम्पूर्णां राक्षसैर्घोरैर्नागैर्भोगवतीमिव ।
अचिन्त्यां सुकृतां स्पष्टां कुबेराध्युषितां पुरा ॥ २४

दंष्ट्रिभिर्बहुभिश्शूरैश्शूलपट्टिशपाणिभिः ।
रक्षितां राक्षसैर्घोरैर्गुहामाशीविषैरिव ॥ २५

तस्याश्च महतीं गुप्तिं सागरं च निरीक्ष्य सः ।
रावणं च रिपुं घोरं चिन्तयामास वानरः ॥ २६

आगत्यापीह हरयो भविष्यन्ति निरर्थकाः ।
न हि युद्धेन वै लङ्का शक्या जेतुं सुरैरपि ॥ २७

इमां तु विषमां दुर्गां लङ्कां रावणपालिताम् ।
प्राप्यापि स महाबाहुः किं करिष्यति राघवः ॥ २८

अवकाशो न सान्त्वस्य राक्षसेष्वभिगम्यते ।
न दानस्य न भेदस्य नैव युद्धस्य दृश्यते ॥ २९

चतुर्णामेव हि गतिर्वानराणां महात्मनाम् ।
वालिपुत्रस्य नीलस्य मम राज्ञश्च धीमतः ॥ ३०

यावज्जानामि वैदेहीं यदि जीवति वा न वा ।
तत्रैव चिन्तयिष्यामि दृष्ट्वा तां जनकात्मजाम् ॥ ३१

ततस्स चिन्तयामास मुहूर्तं कपिकुञ्जरः ।
गिरिशृङ्गे स्थितस्तस्मिन् रामस्याभ्युदये रतः ॥ ३२

अनेन रूपेण मया न शक्या रक्षसां पुरी ।
प्रवेष्टुं राक्षसैर्गुप्ता क्रूरैर्बलसमन्वितैः ॥ ३३

उग्रौजसो महावीर्या बलवन्तश्च राक्षसाः ।
वञ्चनीया मया सर्वे जानकीं परिमार्गता ॥ ३४

लक्ष्यालक्ष्येण रूपेण रात्रौ लङ्कापुरी मया ।
प्रवेष्टुं प्राप्तकालं मे कृत्यं साधयितुं महत् ॥ ३५

तां पुरीं तादृशीं दृष्ट्वा दुराधर्षां सुरासुरैः ।
हनुमान् चिन्तयामास विनिश्चित्य मुहुर्मुहुः ॥ ३६

केनोपायेन पश्येयं मैथिलीं जनकात्मजाम् ।
अदृष्टो राक्षसेन्द्रेण रावणेन दुरात्मना ॥ ३७

न विनश्येत्कथं कार्यं रामस्य विदितात्मनः ।
एकामेकश्च पश्येयं रहिते जनकात्मजाम् ॥ ३८

भूताश्चार्था विपद्यन्ते देशकालविरोधिताः ।
विक्लबं दूतमासाद्य तमस्सूर्योदये यथा ॥ ३९

अर्थानर्थान्तरे बुद्धिर्निश्चिताऽपि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ ४०

न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ।
लङ्घनं च समुद्रस्य कथं नु न वृथा भवेत् ॥ ४१

मयि दृष्टे तु रक्षोभीरामस्य विदितात्मनः ।
भवेद्व्यर्थमिदं कार्यं रावणानर्थमिच्छतः ॥ ४२

न हि शक्यं कचित्स्थातुमविज्ञातेन राक्षसैः ।
अपि राक्षसरूपेण किमुतान्येन केनचित् ॥ ४३

वायुरप्यत्र न ज्ञातश्चरेदिति मतिर्मम ।
न ह्यस्त्यविदितं किञ्चिद्राक्षसानां बलीयसाम् ॥ ४४

इहाहं यदि तिष्ठामि स्वेन रूपेण संवृतः ।
विनाशमुपयास्यामि भर्तुरर्थश्च हीयते ॥ ४५

तदहं स्वेन रूपेण रजन्यां ह्रस्वतां गतः ।
लङ्कामभिपतिष्यामि राघवस्यार्थसिद्धये ॥ ४६

रावणस्य पुरीं रात्रौ प्रविश्य सुदुरासदाम् ।
विचिन्वन्भवनं सर्वं द्रक्ष्यामि जनकात्मजाम् ॥ ४७

इति सञ्चिन्त्य हनुमान् सूर्यस्यास्तमयं कपिः ।
आचकाङ्क्षे तदा वीरो वैदेह्या दर्शनोत्सुकः ॥ ४८

सूर्ये चास्तं गते रात्रौ देहं सङ्क्षिप्य मारुतिः ।
पृषदंशकमात्रस्सन् बभूवाद्भुतदर्शनः ॥ ४९

प्रदोषकाले हनुमांस्तूर्णमुत्प्लुत्य वीर्यवान् ।
प्रविवेश पुरीं रम्यां सुविभक्तमहापथाम् ॥ ५०

प्रासादमालाविततां स्तम्भैः काञ्चनराजतैः ।
शातकुम्भमयैर्जालैर्गन्धर्वनगरोपमाम् ॥ ५१

सप्तभौमाष्टभौमैश्च स ददर्श महापुरीम् ।
तलैस्स्फटिकसङ्कीर्णैः कार्तस्वरविभूषितैः ॥ ५२

वैडूर्यमणिचित्रैश्च मुक्ताजालविभूषितैः ।
तलैश्शुशुभिरे तानि भवनान्यत्र रक्षसाम् ॥ ५३

काञ्चनानि च चित्राणि तोरणानि च रक्षसाम् ।
लङ्कामुद्योतयामासुस्सर्वतस्समलङ्कृताम् ॥ ५४

अचिन्त्यामद्भुताकारां दृष्ट्वा लङ्कां महाकपिः ।
आसीद्विषण्णो हृष्टश्च वैदेह्या दर्शनोत्सुकः ॥ ५५

स पाण्डुरोद्विद्धविमानमालिनीं महार्हजाम्बूनदजालतोरणाम् ।
यशस्विनीं रावणबाहुपालितां क्षपाचरैर्भीमबलैस्समावृताम् ॥ ५६

चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोकमुत्तिष्ठते नैकसहस्ररश्मिः ॥ ५७

शङ्खप्रभं क्षीरमृणालवर्णमुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स हरिप्रवीरः पोप्लूयमानं सरसीव हंसम् ॥ ५८

इति श्रीमत्सुन्दरकाण्डे द्वितीयस्सर्गः ॥

---

## ॥ तृतीयस्सर्गः ॥

स लम्बशिखरे लम्बे लम्बतोयदसन्निभे ।
सत्त्वमास्थाय मेधावी हनूमान्मारुतात्मजः ॥ १

निशि लङ्कां महासत्वो विवेश कपिकुञ्जरः ।
रम्यकाननतोयाढ्यां पुरीं रावणपालिताम् ॥ २

शारदाम्बुधरप्रख्यैर्भवनैरुपशोभिताम् ।
सागरोपमनिर्घोषां सागरानिलसेविताम् ॥ ३

सुपुष्टबलसङ्गुष्टां यथैव विटपावतीम् ।
चारुतोरणनिर्यूहां पाण्डरद्वारतोरणाम् ॥ ४

भुजगाचरितां गुप्तां शुभां भोगवतीमिव ।
तां स विद्युद्घनाकीर्णां ज्योतिमार्गनिषेविताम् ॥ ५

मन्दमारुतसञ्चारां यथेन्द्रस्यामरावतीम् ।
शातकुम्भेन महता प्राकारेणाभिसंवृताम् ॥ ६

किङ्किणीजालघोषाभिः पताकाभिरलङ्कृताम् ।
आसाद्य सहसा हृष्टः प्राकारमभिपेदिवान् ॥ ७

विस्मयाविष्टहृदयः पुरीमालोक्य सर्वतः ।
जाम्बूनदमयैर्द्वारैर्वैडूर्यकृतवेदिकैः ॥ ८

वज्रस्फटिकमुक्ताभिर्मणिकुट्टिमभूषितैः ।
तप्तहाटकनिर्यूहै राजतामलपाण्डरैः ॥ ९

वैडूर्यकृतसोपानैस्स्फाटिकान्तरपांसुभिः ।
चारुसञ्जवनोपेतैः खमिवोत्पतितैश्शुभैः ॥ १०

क्रौञ्चबर्हिणसङ्घुष्टैराजहंसनिषेवितैः ।
तूर्याभरणनिर्घोषैस्सर्वतः प्रतिनादिताम् ॥ ११

वस्वोकसाराप्रतिमां तां वीक्ष्य नगरीं ततः ।
खमिवोत्पतितुं कामां जहर्ष हनुमान् कपिः ॥ १२

तां समीक्ष्य पुरीं रम्यां राक्षसाधिपतेश्शुभाम् ।
अनुत्तमामृद्धियुतां चिन्तयामास वीर्यवान् ॥ १३

नेयमन्येन नगरी शक्या धर्षयितुं बलात् ।
रक्षिता रावणबलैरुद्यतायुधधारिभिः ॥ १४

कुमुदाङ्गदयोर्वापि सुषेणस्य महाकपेः ।
प्रसिद्धेयं भवेद्भूमिर्मैन्दद्विविदयोरपि ॥ १५

विवस्वतस्तनूजस्य हरेश्च कुशपर्वणः ।
ऋक्षस्य केतुमालस्य मम चैव गतिर्भवेत् ॥ १६

समीक्ष्य तु महाबाहू राघवस्य पराक्रमम् ।
लक्ष्मणस्य च विक्रान्तमभवत्प्रीतिमान्कपिः ॥ १७

तां रत्नवसनोपेतां कोष्ठागारावतंसकाम् ।
यन्त्रागारस्तनीमृद्धां प्रमदामिव भूषिताम् ॥ १८

तां नष्टतिमिरां दीपैर्भास्वरैश्च महागृहैः ।
नगरीं राक्षसेन्द्रस्य स ददर्श महाकपिः ॥ १९

अथ सा हरिशार्दूलं प्रविशन्तं महाबलम् ।
नगरी स्वेन रूपेण ददर्श पवनात्मजम् ॥ २०

सा तं हरिवरं दृष्ट्वा लङ्का रावणपालिता ।
स्वयमेवोत्थिता तत्र विकृताननदर्शना ॥ २१

पुरस्तात्कपिवर्यस्य वायुसूनोरतिष्ठत ।
मुञ्चमाना महानादमब्रवीत्पवनात्मजम् ॥ २२

कस्त्वं केन च कार्येण इह प्राप्तो वनालय ।
कथयस्वेह यत्तत्त्वं यावत्प्राणा धरन्ति ते ॥ २३

न शक्यं खल्वियं लङ्कां प्रवेष्टुं वानर त्वया ।
रक्षिता रावणबलैरभिगुप्ता समन्ततः ॥ २४

अथ तामब्रवीद्वीरो हनुमानग्रतस्स्थिताम् ।
कथयिष्यामि ते तत्त्वं यन्मां त्वं परिपृच्छसि ॥ २५

का त्वं विरूपनयना पुरद्वारेऽवतिष्ठसि ।
किमर्थं चापि मां रुद्ध्वा निर्भर्त्सयसि दारुणा ? ॥ २६

हनुमद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
उवाच वचनं क्रुद्धा परुषं पवनात्मजम् ॥ २७

अहं राक्षसराजस्य रावणस्य महात्मनः ।
आज्ञाप्रतीक्षा दुर्धर्षा रक्षामि नगरीमिमाम् ॥ २८

न शक्या मामवज्ञाय प्रवेष्टुं नगरी त्वया ।
अद्य प्राणैः परित्यक्तः स्वप्स्यसे निहतो मया ॥ २९

अहं हि नगरी लङ्का स्वयमेव प्लवङ्गम ।
सर्वतः परिरक्षामि ह्येतत्ते कथितं मया ॥ ३०

लङ्काया वचनं श्रुत्वा हनुमान्मारुतात्मजः ।
यत्नवान् स हरिश्रेष्ठः स्थितश्शैल इवापरः ॥ ३१

स तां स्त्रीरूपविकृतां दृष्ट्वा वानरपुङ्गवः ।
आबभाषेऽथ मेधावी सत्त्ववान् प्लवगर्षभः ॥ ३२

द्रक्ष्यामि नगरीं लङ्कां साट्टप्राकारतोरणाम् ।
[ निर्विशङ्कमिमं लोकं पश्यन्त्यास्तव साम्प्रतम् । ]
इत्यर्थमिह सम्प्राप्तः परं कौतूहलं हि मे ॥ ३३
वनान्युपवनानीह लङ्कायाः काननानि च ।
सर्वतो गृहमुख्यानि द्रष्टुमागमनं हि मे ॥ ३४
तस्य तद्वचनं श्रुत्वा लङ्का सा कामरूपिणी ।
भूय एव पुनर्वाक्यं बभाषे परुषाक्षरम् ॥ ३५
मामनिर्जित्य दुर्बुद्धे राक्षसेश्वरपालिताम् ।
न शक्यमद्य ते द्रष्टुं पुरीयं वानराधम ॥ ३६
ततस्स कपिशार्दूलस्तामुवाच निशाचरीम् ।
दृष्ट्वा पुरीमिमां भद्रे पुनर्यास्ये यथागतम् ॥ ३७
ततः कृत्वा महानादं सा वै लङ्का भयावहम् ।
तलेन वानरश्रेष्ठं ताडयामास वेगिता ॥ ३८
ततस्स कपिशार्दूलो लङ्कया ताडितो भृशम् ।
ननाद सुमहानादं वीर्यवान्पवनात्मजः ॥ ३९
ततस्संवर्तयामास वामहस्तस्य सोऽङ्गुलीः ।
मुष्टिनाऽभिजघानैनां हनुमान्क्रोधमूर्छितः ॥ ४०
स्त्री चेति मन्यमानेन नातिक्रोधस्स्वयं कृतः ।
सा तु तेन प्रहारेण विह्वलाङ्गी निशाचरी ॥ ४१
पपात सहसा भूमौ विकृताननदर्शना ।
ततस्तु हनुमान्प्राज्ञस्तां दृष्ट्वा विनिपातिताम् ॥ ४२

कृपां चकार तेजस्वी मन्यमानः स्त्रियं तु ताम् ।
ततो वै भृशसंविग्ना लङ्का सा गद्गदाक्षरम् ॥ ४३
उवाचागर्वितं वाक्यं हनूमन्तं प्लवङ्गमम् ।
प्रसीद सुमहाबाहो त्रायस्व हरिसत्तम ॥ ४४
समये सौम्य तिष्ठन्ति सत्त्ववन्तो महाबलाः ।
अहं तु नगरी लङ्का स्वयमेव प्लवङ्गम ॥ ४५
निर्जिताहं त्वया वीर विक्रमेण महाबल ।
इदं तु तथ्यं शृणु वै ब्रुवन्त्या मे हरीश्वर ॥ ४६
स्वयम्भुवा पुरा दत्तं वरदानं यथा मम ।
यदा त्वां वानरः कश्चिद्विक्रमाद्वशमानयेत् ॥ ४७
तदा त्वया हि विज्ञेयं रक्षसां भयमागतम् ।
स हि मे समयस्सौम्य प्राप्तोऽद्य तव दर्शनात् ॥ ४८
स्वयम्भुविहितस्सत्यो न तस्यास्ति व्यतिक्रमः ।
सीतानिमित्तं राज्ञस्तु रावणस्य दुरात्मनः ॥ ४९
रक्षसां चैव सर्वेषां विनाशस्समुपागतः ।
तत्प्रविश्य हरिश्रेष्ठ पुरीं रावणपालिताम् ॥ ५०
विधत्स्व सर्वकार्याणि यानि यानीह वाञ्छसि ।
प्रविश्य शापोपहतां हरीश्वरः शुभां पुरीं राक्षसमुख्यपालिताम् ।
यदृच्छया त्वं जनकात्मजां सतीं विमार्ग सर्वत्र गतो यथासुखम् ॥

इति श्रीमत्सुन्दरकाण्डे तृतीयस्सर्गः ॥

## ॥ चतुर्थस्सर्गः ॥

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनुमान्कपिसत्तमः ॥ १

द्वारेण स महाबाहुः प्राकारमभिपुप्लुवे ।
[ निशि लङ्कां महासत्त्वो विवेश कपिकुञ्जरः ]
प्रविश्य नगरीं लङ्कां कपिराजहितङ्करः ॥ २

चक्रेऽथ पादं सव्यं च शत्रूणां स तु मूर्धनि ।
प्रविष्टस्सत्त्वसम्पन्नो निशायां मारुतात्मजः ॥ ३

स महापथमास्थाय मुक्तापुष्पविराजितम् ।
[ सेवितां राक्षसैर्भीमैर्बलिभिश्शस्त्रपाणिभिः ]
ततस्तु तां पुरीं लङ्कां रम्यामभिययौ कपिः ॥ ४

हसितोत्कृष्टनिनदैस्तूर्यघोषपुरस्सरैः ।
वज्राङ्कुशनिकाशैश्च वज्रजालविभूषितैः ॥ ५

गृहमेघैः पुरीं रम्या बभासे द्यौरिवाम्बुदैः ।
प्रजज्वाल तदा लङ्का रक्षोगणगृहैश्शुभैः ॥ ६

सिताभ्रसदृशैश्चित्रैः पद्मस्वस्तिकसंस्थितैः ।
वर्धमानगृहैश्चापि सर्वतस्सुविभूषिता ॥ ७

तां चित्रमाल्याभरणां कपिराजहितङ्करः ।
राघवार्थं चरन् श्रीमान् ददर्श च ननन्द च ॥ ८

भवनाद्भवनं गच्छन् ददर्श पवनात्मजः ।
विविधाकृतिरूपाणि भवनानि ततस्ततः ॥ ९

शुश्राव मधुरं गीतं त्रिस्थानस्वरभूषितम् ।
स्त्रीणां मदसमृद्धानां दिवि चाप्सरसामिव ॥ १०

शुश्राव काञ्चीनिनदं नूपुराणां च निस्स्वनम् ।
सोपाननिनदांश्चैव भवनेषु महात्मनाम् ॥ ११

आस्फोटितनिनादांश्च क्ष्वेळितांश्च ततस्ततः ।
शुश्राव जपतां तत्र मन्त्रान् रक्षोगृहेषु वै ॥ १२

स्वाध्यायनिरतांश्चैव यातुधानान् ददर्श सः ।
रावणस्तवसंयुक्तान् गर्जतो राक्षसानपि ॥ १३

राजमार्गं समावृत्य स्थितं रक्षोबलं महत् ।
ददर्श मध्यमे गुल्मे रावणस्य चरान्बहून् ॥ १४

दीक्षितान् जटिलान् मुण्डान् गोजिनाम्बरवाससः ।
दर्भमुष्टिप्रहरणानग्निकुण्डायुधांस्तथा ॥ १५

कूटमुद्गरपाणींश्च दण्डायुधधरानपि ।
एकाक्षानेककर्णांश्च लम्बोदरपयोधरान् ॥ १६

करालान्भुग्नवक्त्रांश्च विकटान्वामनांस्तथा ।
धन्विनः खड्गिनश्चैव शतघ्नीमुसलायुधान् ॥ १७

परिघोत्तमहस्तांश्च विचित्रकवचोज्ज्वलान् ।
नातिस्थूलान्नातिकृशान्नातिदीर्घातिह्रस्वकान् ॥ १८

नातिगौरान्नातिकृष्णान्नातिकुब्जान्न वामनान् ।
विरूपान्बहुरूपांश्च सुरूपांश्च सुवर्चसः ॥ १९

ध्वजीन्पताकिनश्चैव ददर्श विविधायुधान् ।
शक्तिवृक्षायुधांश्चैव पट्टसाशनिधारिणः ॥ २०

क्षेपणीपाशहस्तांश्च ददर्श स महाकपिः ।
स्रग्विणस्त्वनुलिप्तांश्च ददर्श स महाकपिः ॥ २१
नानावेषसमायुक्तान्यथा स्वैरगतान्बहून् ।
तीक्ष्णशूलधरांश्चैव वज्रिणश्च महाबलान् ॥ २२
शतसाहस्रमव्यग्रमारक्षं मध्यमं कपिः ।
रक्षोधिपतिनिर्दिष्टं ददर्शान्तःपुराग्रतः ॥ २३
स तदा तद्गृहं दृष्ट्वा महाहाटकतोरणम् ।
राक्षसेन्द्रस्य विख्यातमद्रिमूर्ध्नि प्रतिष्ठितम् ॥ २४
पुण्डरीकावतंसाभिः परिखाभिरलङ्कृतम् ।
प्राकारावृतमत्यन्तं ददर्श स महाकपिः ॥ २५
त्रिविष्टपनिभं दिव्यं दिव्यनादविनादितम् ।
वाजिहेषितसङ्घुष्टं नादितं भूषणैस्तथा ॥ २६
रथैर्यानैर्विमानैश्च तथा हयगजैश्शुभैः ।
वारणैश्च चतुर्दन्तैश्श्वेताभ्रनिचयोपमैः ॥ २७
भूषितं रुचिरद्वारं मत्तैश्च मृगपक्षिभिः ।
रक्षितं सुमहावीर्यैर्यातुधानैस्सहस्रशः ॥ २८
राक्षसाधिपतेर्गुप्तमाविवेश महाकपिः ।
सहेमजाम्बूनदचक्रवालं महार्हमुक्तामणिभूषितान्तम् ।
परार्ध्यकालागरुचन्दनाक्तं स रावणान्तःपुरमाविवेश ॥ २९

॥ इति श्रीमत्सुन्दरकाण्डे चतुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

ततस्स मध्यङ्गतमंशुमन्तं ज्योत्स्नावितानं महदुद्वमन्तम् ।
ददर्श धीमान् दिवि भानुमन्तं गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥ १
लोकस्य पापानि विनाशयन्तं महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं ददर्श शीतांशुमथाभियान्तम् ॥ २
या भाति लक्ष्मीर्भुवि मन्दरस्था तथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था रराज सा चारुनिशाकरस्था ॥ ३
हंसो यथा राजतपञ्जरस्थस्सिंहो यथा मन्दरकन्दरस्थः ।
वीरो यथा गर्वितकुञ्जरस्थश्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥ ४
स्थितः ककुद्मानिव तीक्ष्णशृङ्गो महाचलश्श्वेत इवोच्चशृङ्गः ।
हस्तीव जाम्बूनदबद्धशृङ्गो रराज चन्द्रः परिपूर्णशृङ्गः ॥ ५
विनष्टशीताम्बुतुषारपङ्को महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को रराज चन्द्रो भगवाञ्छशाङ्कः ॥ ६
शिलातलं प्राप्य यथा मृगेन्द्रो महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्रस्तथा प्रकाशो विरराज चन्द्रः ॥ ७
प्रकाशचन्द्रोदयनष्टदोषः प्रवृत्तरक्षः पिशिताशदोषः ।
रामाभिरामेरितचित्तदोषः स्वर्गप्रकाशो भगवान् प्रदोषः ॥ ८
तन्त्रीस्वनाः कर्णसुखाः प्रवृत्ताः स्वपन्ति नार्यः पतिभिस्सुवृत्ताः ॥
नक्तञ्चराश्चापि तथा प्रवृत्ताः विहर्तुमत्यद्भुतरौद्रवृत्ताः ॥ ९
मत्तप्रमत्तानि समाकुलानि रथाश्वभद्रासनसङ्कुलानि ।
वीरश्रिया चापि समाकुलानि ददर्श धीमान् स कपिः कुलानि ॥ १०

परस्परं चाधिकमाक्षिपन्ति भुजांश्च पीनानधिकं क्षिपन्ति ।
मत्तप्रलापानधिकं क्षिपन्ति मत्तानि चान्योन्यमधिक्षिपन्ति ॥ ११

रक्षांसि वक्षांसि च विक्षिपन्ति गात्राणि कान्तासु च विक्षिपन्ति ।
रूपाणि चित्राणि च विक्षिपन्ति दृढानि चापानि च विक्षिपन्ति ॥

ददर्श कान्ताश्च समालभन्त्यस्तथा परास्तत्र पुनस्स्वपन्त्यः ।
सुरूपवक्त्राश्च तथा हसन्त्यः क्रुद्धाःपराश्चापि विनिश्श्वसन्त्यः ॥ १३

महागजैश्चापि तथा नदद्भिस्सुपूजितैश्चापि तथा सुसद्भिः ।
रराज वीरैश्च विनिश्श्वसद्भिर्ह्रदो भुजङ्गैरिव निश्श्वसद्भिः ॥ १४

बुद्धिप्रधानान्रुचिराभिधानान्संश्रद्दधानाञ्जगतः प्रधानान् ।
नानाविधानान्रुचिराभिधानान्ददर्श तस्यां पुरि यातुधानान् ॥ १५

ननन्द दृष्ट्वा स च तान्सुरूपान्नानागुणानात्मगुणानुरूपान् ।
विद्योतमानान्स तदानुरूपान्ददर्श कांश्चिच्च पुनर्विरूपान् ॥ १६

ततो वरार्हास्सुविशुद्धभावास्तेषां स्त्रियस्तत्र महानुभावः ।
प्रियेषु पानेषु च सक्तभावा ददर्श तारा इव सुप्रभावाः ॥ १७

श्रिया ज्वलन्तीस्त्रपयोपगूढा निशीथकाले रमणोपगूढाः ।
ददर्श काश्चित्प्रमदोपगूढा यथा विहङ्गाः कुसुमोपगूढाः ॥ १८

अन्याः पुनर्हर्म्यतलोपविष्टास्तत्र प्रियाङ्केषु सुखोपविष्टाः ।
भर्तुः प्रिया धर्मपरा निविष्टा ददर्श धीमान्मदनाभिविष्टाः ॥ १९

अप्रावृताः काञ्चनराजिवर्णाः काश्चित्परार्ध्यास्तपनीयवर्णाः ।
पुनश्च काश्चिच्छशलक्ष्मवर्णाः कान्तप्रहीणा रुचिराङ्गवर्णाः ॥ २०

ततः प्रियान्प्राप्य मनोभिरामास्सुप्रीतियुक्ताः प्रसमीक्ष्य रामाः
गृहेषु हृष्टाः परमाभिरामा हरिप्रवीरस्स ददर्श रामाः ॥ २१

चन्द्रप्रकाशाश्च हि वक्त्रमाला वक्राक्षिपक्ष्माश्च सुनेत्रमालाः ।
विभूषणानां च ददर्श मालाश्शतह्रदानामिव चारुमालाः ॥ २२

न त्वेव सीतां परमाभिजातां पथि स्थिते राजकुले प्रजाताम् ।
लतां प्रफुल्लामिव साधुजातां ददर्श तन्वीं मनसाभिजाताम् ॥ २३

सनातने वर्त्मनि सन्निविष्टां रामेक्षणां तां मदनाभिविष्टाम् ।
भर्तुर्मनश्श्रीमदनुप्रविष्टां स्त्रीभ्यो वराभ्यश्च सदा विशिष्टाम् ॥ २४

उष्णार्दितां सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रनृत्तामिव नीलकण्ठीम् ॥ २५

अव्यक्तरेखामिव चन्द्ररेखां पांसुप्रदिग्धामिव हेमरेखाम् ।
क्षतप्ररूढामिव बाणरेखां वायुप्रभिन्नामिव मेघरेखाम् ॥ २६

सीतामपश्यन्मनुजेश्वरस्य रामस्य पत्नीं वदतां वरस्य ।
बभूव दुःखाभिहतश्चिरस्य प्लवङ्गमो मन्द इवाचिरस्य ॥ २७

॥ इति श्रीमत्सुन्दरकाण्डे पञ्चमस्सर्गः ॥

---

## ॥ षष्ठस्सर्गः ॥

स निकामं विमानेषु विषण्णः कामरूपधृत् ।
विचचार पुनर्लङ्कां लाघवेन समन्वितः ॥ १

आससादाथ लक्ष्मीवान् राक्षसेन्द्रनिवेशनम् ।
प्राकारेणार्कवर्णेन भास्वरेणाभिसंवृतम् ॥ २

रक्षितं राक्षसैर्घोरैस्सिंहैरिव महद्वनम् ।
समीक्षमाणो भवनं चकाशे कपिकुञ्जरः ॥ ३

रूप्यकोपहितैश्चित्रैस्तोरणैर्हेमभूषितैः ।
विचित्राभिश्च कक्ष्याभिर्द्वारैश्च रुचिरैर्वृतम् ॥ ४

गजास्थितैर्महामात्रैश्शूरैश्च विगतश्रमैः ।
उपस्थितमसंहार्यैर्हयैस्स्यन्दनयायिभिः ॥ ५

सिंहव्याघ्रतनुत्राणैर्दान्तकाञ्चनराजतैः ।
घोषवद्भिर्विचित्रैश्च सदा विचरितं रथैः ॥ ६

बहुरत्नसमाकीर्णं परार्ध्यासनभाजनम् ।
महारथसमावासं महारथमहास्वनम् ॥ ७

दृश्यैश्च परमोदारैस्तैस्तैश्च मृगपक्षिभिः ।
विविधैर्बहुसाहस्रैः परिपूर्णं समन्ततः ॥ ८

विनीतैरन्तपालैश्च रक्षोभिश्च सुरक्षितम् ।
मुख्याभिश्च वरस्त्रीभिः परिपूर्णं समन्ततः ॥ ९

मुदितप्रमदारत्नं राक्षसेन्द्रनिवेशनम् ।
वराभरणसंह्रादैस्समुद्रस्वननिस्वनम् ॥ १०

तद्राजगुणसम्पन्नं मुख्यैश्चागरुचन्दनैः ।
महाजनैस्समाकीर्णं सिंहैरिव महद्वनम् ॥ ११

भेरीमृदङ्गाभिरुतं शङ्खघोषविनादितम् ।
नित्यार्चितं पर्वहुतं पूजितं राक्षसैस्सदा ॥ १२

समुद्रमिव गम्भीरं समुद्रमिव निस्स्वनम् ।
महात्मनो महद्वेश्म महारत्नपरिच्छदम् ॥ १३

महारत्नसमाकीर्णं स ददर्श महाकपिः ।
विराजमानं वपुषा गजाश्वरथसङ्कुलम् ॥ १४

लङ्काभरणमित्येव सोऽमन्यत महाकपिः ।
चचार हनुमांस्तत्र रावणस्य समीपतः ॥ १५

[ संक्षिप्य चात्मनः कायं प्रविश्यानुपलक्षितः ।
चिन्तयामास मनसा मुहूर्तं ध्यानमास्थितः ॥
कपिप्रवीरो हनुमान्राघवप्रियकाम्यया ।
कीदृशी बन्धने बद्धा मुक्ता वा स्वैरचारिणी ॥
काश्च रक्षन्ति राक्षस्यः कथंरूपा च मैथिली ।
न दृष्टपूर्वा च मया वैदेही जनकात्मजा ॥
इङ्गितैश्चानुमानैश्च मया ज्ञेया भविष्यति ।
एतां बुद्धिं तदा कृत्वा हनुमान्मारुतात्मजः ॥
अन्विवेष तदा सीतां राघवप्रियकाम्यया ।
स निकामं विमानेषु निपतन्पादपेषु च ॥
विचचार कपिर्लङ्कां लघुप्रक्रमविक्रमः ]
गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसन्त्रस्तः प्रासादांश्च चचार सः ॥ १६

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ।
ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ॥ १७

अथ मेघप्रतीकाशं कुम्भकर्णनिवेशनम् ।
विभीषणस्य च तदा पुप्लुवे स महाकपिः ॥ १८

महोदरस्य च गृहं विरूपाक्षस्य चैव हि ।
विद्युज्जिह्वस्य भवनं विद्युन्मालेस्तथैव च ॥ १९

वज्रदंष्ट्रस्य च तथा पुप्लुवे स महाकपिः ।
शुकस्य च महातेजास्सारणस्य च धीमतः ॥ २०

तथा चेन्द्रजितो वेश्म जगाम हरियूथपः ।
जम्बुमालेस्सुमालेश्च जगाम हरिसत्तमः ॥ २१

रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ।
वज्रकायस्य च तथा पुप्लुवे स महाकपिः ॥ २२

धूम्राक्षस्य च सम्पातेर्भवनं मारुतात्मजः ।
विद्युद्रूपस्य भीमस्य घनस्य विघनस्य च ॥ २३

शुकनासस्य वक्रस्य शठस्य विकटस्य च ।
ब्रह्मकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ २४

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य नादिनः ।
विद्युज्जिह्वेन्द्रजिह्वानां तथा हस्तिमुखस्य च ॥ २५

करालस्य पिशाचस्य शोणिताक्षस्य चैव हि ।
क्रममाणः क्रमेणैव हनुमान्मारुतात्मजः ॥ २६

तेषु तेषु महार्हेषु भवनेषु महायशाः ।
तेषामृद्धिमतामृद्धिं ददर्श स महाकपिः ॥ २७

सर्वेषां समतिक्रम्य भवनानि समन्ततः ।
आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ २८

रावणस्योपशायिन्यो ददर्श हरिसत्तमः ।
विचरन्हरिशार्दूलो राक्षसीर्विकृतेक्षणाः ॥ २९

शूलमुद्गरहस्ताश्च शक्तितोमरधारिणीः ।
ददर्श विविधान्गुल्मांस्तस्य रक्षःपतेर्गृहे ॥ ३०

राक्षसांश्च महाकायान्नानाप्रहरणोद्यतान् ।
रक्तान्श्वेतान्सितांश्चैव हरींश्चापि महाजवान् ॥ ३१

कुलीनान्रूपसम्पन्नान्गजान्परगजारुजान् ।
निष्ठितान्गजशिक्षायामैरावतसमान्युधि ॥ ३२

निहंतृन्परसैन्यानां गृहे तस्मिन्ददर्श सः ।
क्षरतश्च यथा मेघान्स्रवतश्च यथा गिरीन् ॥ ३३

मेघस्तनितनिर्घोषान्दुर्धर्षान्समरे परैः ।
सहस्रं वाहिनीस्तत्र जाम्बूनदपरिष्कृताः ॥ ३४

हेमजालपरिच्छन्नास्तरुणादित्यसन्निभाः ।
ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ॥ ३५

शिबिका विविधाकारास्स कपिर्मारुतात्मजः ।
लतागृहाणि चित्राणि चित्रशालागृहाणि च ॥ ३६

क्रीडागृहाणि चान्यानि दारुपर्वतकानपि ।
कामस्य गृहकं रम्यं दिवागृहकमेव च ॥ ३७

ददर्श राक्षसेन्द्रस्य रावणस्य निवेशने ।
स मन्दरगिरिप्रख्यं मयूरस्थानसङ्कुलम् ॥ ३८

ध्वजयष्टिभिराकीर्णं ददर्श भवनोत्तमम् ।
अनेकरत्नसङ्कीर्णं निधिजालं समन्ततः ॥ ३९

धीरनिष्ठितकर्मान्तं गृहं भूतपतेरिव ।
अर्चिर्भिश्चापि रत्नानां तेजसा रावणस्य च ॥ ४०

विरराजाथ तद्वेश्म रश्मिमानिव रश्मिभिः ।
जाम्बूनदमयान्येव शयनान्यासनानि च ॥ ४१

भाजनानि च मुख्यानि ददर्श हरियूथपः ।
मध्वासवकृतक्लेदं मणिभाजनसङ्कुलम् ॥ ४२
मनोरममसम्बाधं कुबेरभवनं तथा ।
[चन्दनागरुधूपैश्च दिव्यधूपैस्सुधूपितम् ।
माल्यदामभिराकीर्णं पुष्पभक्तिविराजितम् ॥
दिव्यगन्धावसिक्ताभिर्दीपिकाभिर्विदीपितम् ।
लोकपालान् परित्यज्य तच्छ्रियेव समावृतम् ॥]
नूपुराणां च घोषेण काञ्चीनां निनदेन च ॥ ४३
मृदङ्गतलघोषैश्च घोषवद्भिर्विनादितम् ।
प्रासादसङ्घातयुतं स्त्रीरत्नशतसङ्कुलम् ॥ ४४
सुव्यूढकक्ष्यं हनुमान्प्रविवेश महागृहम् ।

इति श्रीमत्सुन्दरकाण्डे षष्ठस्सर्गः ॥

## ॥ सप्तमस्सर्गः ॥

स वेश्मजालं बलवान् ददर्श व्यासक्तवैडूर्यसुवर्णजालम् ।
यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम् ॥ १
निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः ।
मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः ॥ २
गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि ।
सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि ॥ ३
तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि ।
महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि ॥ ४

ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम् ।
रक्षोऽधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम् ॥ ५

महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम् ।
नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम् ॥ ६

नारीप्रवेकैरिव दीप्यमानं तटिद्भिरम्भोदवदर्च्यमानम् ।
हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतां विमानम् ॥ ७

यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम् ।
ददर्श युक्तीकृतमेघचित्रं विमानरत्नं बहुरत्नचित्रम् ॥ ८

मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः ।
वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्त्रपूर्णम् ॥ ९

कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पाण्यपि पुष्कराणि ।
पुनश्च पद्मानि सकेसराणि धन्यानि चित्राणि तथा वनानि ॥ १०

पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विवर्धमानम् ।
वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम् ॥ ११

कृताश्च वैडूर्यमया विहङ्गाः रूप्यप्रवाळैश्च तथा विहङ्गाः ।
चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाश्शुभाङ्गाः ॥ १२

प्रवाळजाम्बूनदपुष्पपक्षास्सलीलमावर्जितजिह्मपक्षाः ।
कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गास्सुमुखास्सुपक्षाः ॥

नियुज्यमानास्तु गजास्सुहस्तास्सकेसराश्चोत्पलपत्त्रहस्ताः ।
बभूव देवी च कृता सुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता ॥ १४

इतीव तद्गृहमभिगम्य शोभनं सविस्मयो नगमिव चारु शोभनम् ।
पुनश्च तत्परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम् ॥ १५

ततस्स तां कपिरभिपत्य पूजितां चरन्पुरीं दशमुखबाहुपालिताम् ।
अदृश्य तां जनकसुतां सुपूजितां सुदुःखितः पतिगुणवेगनिर्जिताम् ॥

ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः ।
अपश्यतोऽभवदतिदुःखितं मनस्सुचक्षुषः प्रविचरतो महात्मनः ॥१७

इति श्रीमत्सुन्दरकाण्डे सप्तमस्सर्गः ॥

---

## ॥ अष्टमस्सर्गः ॥

स तस्य मध्ये भवनस्य संस्थितं महद्विमानं मणिवज्रचित्रितम् ।
प्रतप्तजाम्बूनदजालकृत्रिमं ददर्श वीरः पवनात्मजः कपिः ॥ १

तदप्रमेयाप्रतिकारकृत्रिमं कृतं स्वयं साध्विति विश्वकर्मणा ।
दिवं गतं वायुपथप्रतिष्ठितं व्यराजताऽऽदित्यपथस्य लक्ष्मवत् ॥ २

न तत्र किञ्चिन्न कृतं प्रयत्नतो न तत्र किञ्चिन्न महार्हरत्नवत् ।
न ते विशेषा नियतास्सुरेष्वपि न तत्र किञ्चिन्न महाविशेषवत् ॥ ३

तपस्समाधानपराक्रमार्जितं मनस्समाधानविचारचारिणम् ।
अनेकसंस्थानविशेषनिर्मितं ततस्ततस्तुल्यविशेषदर्शनम् ॥ ४

मनस्समाधाय तु शीघ्रगामिनं दुरावरं मारुततुल्यगामिनम् ।
महात्मनां पुण्यकृतां महर्धिनां यशस्विनामग्र्यमुदामिवालयम् ॥ ५

विशेषमालम्ब्य विशेषसंस्थितं विचित्रकूटं बहुकूटमण्डितम् ।
मनोऽभिरामं शरदिन्दुनिर्मलं विचित्रकूटं शिखरं गिरेर्यथा ॥ ६

वहन्ति यं कुण्डलशोभितानना महाशना व्योमचरा निशाचराः ।
निवृत्तविध्वस्तविशाललोचना महाजवा भूतगणास्सहस्रशः ॥ ७

वसन्तपुष्पोत्करचारुदर्शनं वसन्तमासादपि कान्तदर्शनम् ।
स पुष्पकं तत्र विमानमुत्तमं ददर्श तद्वानरवीरसत्तमः ॥ ८

॥ इति श्रीमत्सुन्दरकाण्डे अष्टमस्सर्गः ॥

---

## ॥ नवमस्सर्गः ॥

तस्यालयवरिष्ठस्य मध्ये विपुलमायतम् ।
ददर्श भवनश्रेष्ठं हनूमान्मारुतात्मजः ॥ १
अर्धयोजनविस्तीर्णमायतं योजनं हि तत् ।
भवनं राक्षसेन्द्रस्य बहुप्रासादसङ्कुलम् ॥ २
मार्गमाणस्तु वैदेहीं सीतामायतलोचनाम् ।
सर्वतः परिचक्राम हनुमानरिसूदनः ॥ ३
उत्तमं राक्षसावासं हनुमानवलोकयन् ।
आससादाथ लक्ष्मीवान्राक्षसेन्द्रनिवेशनम् ॥ ४
चतुर्विषाणैर्द्विरदैस्त्रिविषाणैस्तथैव च ।
परिक्षिप्तमसम्बाधं रक्ष्यमाणमुदायुधैः ॥ ५
राक्षसीभिश्च पत्नीभीरावणस्य निवेशनम् ।
आहृताभिश्च विक्रम्य राजकन्याभिरावृतम् ॥ ६
तन्नक्रमकराकीर्णं तिमिङ्गिलझषाकुलम् ।
वायुवेगसमाधूतं पन्नगैरिव सागरम् ॥ ७
या हि वैश्रवणे लक्ष्मीर्या चेन्द्रे हरिवाहने ।
सा रावणगृहे सर्वा नित्यमेवानपायिनी ॥ ८

या च राज्ञः कुबेरस्य यमस्य वरुणस्य च ।
तादृशी तद्विशिष्टा वा ऋद्धी रक्षोगृहेष्विह ॥ ९

तस्य हर्म्यस्य मध्यस्थं वेश्म चान्यत्सुनिर्मितम् ।
बहुनिर्यूहसङ्कीर्णं ददर्श पवनात्मजः ॥ १०

ब्रह्मणोऽर्थे कृतं दिव्यं दिवि यद्विश्वकर्मणा ।
विमानं पुष्पकं नाम सर्वरत्नविभूषितम् ॥ ११

परेण तपसा लेभे यत्कुबेरः पितामहात् ।
कुबेरमोजसा जित्वा लेभे तद्राक्षसेश्वरः ॥ १२

ईहामृगसमायुक्तैः कार्तस्वरहिरण्मयैः ।
सुकृतैराचितं स्तम्भैः प्रदीप्तमिव च श्रिया ॥ १३

मेरुमन्दरसङ्काशैरुल्लिखद्भिरिवाम्बरम् ।
कूटागारैश्शुभागारैस्सर्वतस्समलङ्कृतम् ॥ १४

ज्वलनार्कप्रतीकाशं सुकृतं विश्वकर्मणा ।
हेमसोपानसंयुक्तं चारुप्रवरवेदिकम् ॥ १५

जालवातायनैर्युक्तं काञ्चनैस्स्फाटिकैरपि ।
इन्द्रनीलमहानीलमणिप्रवरवेदिकम् ॥ १६

विद्रुमेण विचित्रेण मणिभिश्च महाघनैः ।
निस्तुलाभिश्च मुक्ताभिस्तलेनाभिविराजितम् ॥ १७

चन्दनेन च रक्तेन तपनीयनिभेन च ।
सुपुण्यगन्धिना युक्तमादित्यतरुणोपमम् ॥ १८

कूटागारैर्वराकारैर्विविधैस्समलङ्कृतम् ।
विमानं पुष्पकं दिव्यमारुरोह महाकपिः ॥ १९

तत्रस्थस्स तदा गन्धं पानभक्ष्यान्नसम्भवम् ।
दिव्यं सम्मूर्च्छितं जिघ्रद्रूपवन्तमिवानिलम् ॥ २०

स गन्धस्तं महासत्त्वं बन्धुर्बन्धुमिवोत्तमम् ।
इत एहीत्युवाचेव तत्र यत्र स रावणः ॥ २१

ततस्तां प्रस्थितश्शालां ददर्श महतीं शुभाम् ।
रावणस्य मनः कान्तां कान्तामिव वरस्त्रियम् ॥ २२

मणिसोपानविकृतां हेमजालविभूषिताम् ।
स्फाटिकैरावृततलां दन्तान्तरितरूपिकाम् ॥ २३

मुक्ताभिश्च प्रवालैश्च रूप्यचामीकरैरपि ।
विभूषितां मणिस्तम्भैस्सुबहुस्तम्भभूषिताम् ॥ २४

समैरृजुभिरत्युच्चैस्समन्तात्सुविभूषितैः ।
स्तम्भैः पक्षैरिवात्युच्चैर्दिवं सम्प्रस्थितामिव ॥ २५

महत्या कुथयास्तीर्णां पृथिवीलक्षणाङ्कया ।
पृथिवीमिव विस्तीर्णां सराष्ट्रगृहमालिनीम् ॥ २६

नादितां मत्तविहगैर्दिव्यगन्धाधिवासिताम् ।
परार्ध्यास्तरणोपेतां रक्षोधिपनिषेविताम् ॥ २७

धूम्रामगरुधूपेन विमलां हंसपाण्डुराम् ।
चित्रां पुष्पोपहारेण कल्माषीमिव सुप्रभाम् ॥ २८

मनस्संह्लादजननीं वर्णस्यापि प्रसादिनीम् ।
तां शोकनाशिनीं दिव्यां श्रियस्सञ्जननीमिव ॥ २९

इन्द्रियाणीन्द्रियार्थैस्तु पञ्च पञ्चभिरुत्तमैः ।
तर्पयामास मातेव तदा रावणपालिता ॥ ३०

स्वर्गोऽयं देवलोकोऽयमिन्द्रस्येयं पुरी भवेत् ।
सिद्धिर्वेयं परा हि स्यादित्यमन्यत मारुतिः ॥ ३१

प्रध्यायत इवापश्यत्प्रदीप्तांस्तत्र काञ्चनान् ।
धूर्तानिव महाधूर्तैर्देवनेन पराजितान् ॥ ३२

दीपानां च प्रकाशेन तेजसा रावणस्य च ।
अर्चिर्भिर्भूषणानां च प्रदीप्तेत्यभ्यमन्यत ॥ ३३

ततोऽपश्यत्कुथाऽऽसीनं नानावर्णाम्बरस्रजम् ।
सहस्रं वरनारीणां नानावेषविभूषितम् ॥ ३४

परिवृत्तेऽर्धरात्रे तु पाननिद्रावशङ्गतम् ।
क्रीडित्वोपरतं रात्रौ सुष्वाप बलवत्तदा ॥ ३५

तत्प्रसुप्तं विरुरुचे निश्शब्दान्तरभूषणम् ।
निश्शब्दहंसभ्रमरं यथा पद्मवनं महत् ॥ ३६

तासां संवृतदन्तानि मीलिताक्षाणि मारुतिः ।
अपश्यत्पद्मगन्धीनि वदनानि सुयोषिताम् ॥ ३७

प्रबुद्धानीव पद्मानि तासां भूत्वा क्षपाक्षये ।
पुनस्संवृतपत्त्राणि रात्राविव बभुस्तदा ॥ ३८

इमानि मुखपद्मानि नियतं मत्तषट्पदाः ।
अम्बुजानीव फुल्लानि प्रार्थयन्ति पुनःपुनः ॥ ३९

इति चामन्यत श्रीमानुपपत्त्या महाकपिः ।
मेने हि गुणतस्तानि समानि सलिलोद्भवैः ॥ ४०

सा तस्य शुशुभे शाला ताभिस्स्त्रीभिर्विराजिता ।
शारदीव प्रसन्ना द्यौस्ताराभिरभिशोभिता ॥ ४१

स च ताभिः परिवृतश्शुशुभे राक्षसाधिपः ।
यथा ह्युडुपतिश्श्रीमांस्ताराभिरभिसंवृतः ॥ ४२

याश्च्यवन्तेऽम्बरात्ताराः पुण्यशेषसमावृताः ।
इमास्तास्सङ्गताः कृत्स्ना इति मेने हरिस्तदा ॥ ४३

ताराणामिव सुव्यक्तं महतीनां शुभार्चिषाम् ।
प्रभावर्णप्रसादाश्च विरेजुस्तत्र योषिताम् ॥ ४४

व्यावृत्तगुरुपीनस्रक्प्रकीर्णवरभूषणाः ।
पानव्यायामकालेषु निद्रापहृतचेतसः ॥ ४५

व्यावृत्ततिलकाः काश्चित्काश्चिदुद्भ्रान्तनूपुराः ।
पार्श्वे गलितहाराश्च काश्चित्परमयोषितः ॥ ४६

मुक्ताहाराऽऽवृताश्चान्याः काश्चिद्विस्रस्तवाससः ।
व्याविद्धरशनादामा किशोर्य इव वाहिताः ॥ ४७

सुकुण्डलधराश्चान्या विच्छिन्नमृदितस्रजः ।
गजेन्द्रमृदिताः फुल्ला लता इव महावने ॥ ४८

चन्द्रांशुकिरणाभाश्च हाराः कासाञ्चिदुत्कटाः ।
हंसा इव बभुस्सुप्तास्स्तनमध्येषु योषिताम् ॥ ४९

अपरासां च वैडूर्याः कादम्बा इव पक्षिणः ।
हेमसूत्राणि चान्यासां चक्रवाका इवाभवन् ॥ ५०

हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।
आपगा इव ता रेजुर्जघनैः पुलिनैरिव ॥ ५१

किङ्किणीजालसङ्कोशास्ता हैमविपुलाम्बुजाः ।
भावग्राहा यशस्तीरास्सुप्ता नद्य इवाऽऽबभुः ॥ ५२

मृदुष्वङ्गेषु कासाञ्चित्कुचाग्रेषु च संस्थिताः ।
बभूवुर्भूषणानीव शुभा भूषणराजयः ॥ ५३

अंशुकान्ताश्च कासाञ्चिन्मुखमारुतकम्पिताः ।
उपर्युपरि वक्त्राणां व्याधूयन्ते पुनः पुनः ॥ ५४

ताः पताका इवोद्धूताः पत्नीनां रुचिरप्रभाः ।
नानावर्णसुवर्णानां वक्त्रमूलेषु रेजिरे ॥ ५५

ववल्गुश्चात्र कासाञ्चित्कुण्डलानि शुभार्चिषाम् ।
मुखमारुतसंसर्गान्मन्दं मन्दं सुयोषिताम् ॥ ५६

शर्कराऽऽसवगन्धैश्च प्रकृत्या सुरभिस्सुखः ।
तासां वदननिश्श्वासस्सिषेवे रावणं तदा ॥ ५७

रावणाननशङ्काश्च काश्चिद्रावणयोषितः ।
मुखानि स्म सपत्नीनामुपाजिघ्रन्पुनः पुनः ॥ ५८

अत्यर्थं सक्तमनसो रावणे ता वरस्त्रियः ।
अस्वतन्त्रास्सपत्नीनां प्रियमेवाऽऽचरंस्तदा ॥ ५९

बाहूनुपनिधायान्याः पारिहार्यविभूषितान् ।
अंशुकानि च रम्याणि प्रमदास्तत्र शिश्यिरे ॥ ६०

अन्या वक्षसि चान्यस्यास्तस्याः काश्चित्पुनर्भुजम् ।
अपरा त्वङ्कमन्यस्यास्तस्याश्चाप्यपरा भुजौ ॥ ६१

ऊरुपार्श्वकटीपृष्ठमन्योन्यस्य समाश्रिताः ।
परस्परनिविष्टाङ्ग्यो मदस्नेहवशानुगाः ॥ ६२

अन्योन्यस्याङ्गसंस्पर्शात्प्रीयमाणास्सुमध्यमाः ।
एकीकृतभुजास्सर्वास्सुषुपुस्तत्र योषितः ॥ ६३

अन्योन्यभुजसूत्रेण स्त्रीमाला ग्रथिता हि सा ।
मालेव ग्रथिता सूत्रे शुशुभे मत्तषट्पदा ॥ ६४

लतानां माधवे मासि फुल्लानां वायुसेवनात् ।
अन्योन्यमालाग्रथितं संसक्तकुसुमोच्चयम् ॥ ६५

व्यतिवेष्टितसुस्कन्धमन्योन्यभ्रमराकुलम् ।
आसीद्वनमिवोद्धूतं स्त्रीवनं रावणस्य तत् ॥ ६६

उचितेष्वपि सुव्यक्तं न तासां योषितां तदा ।
विवेकश्शक्य आधातुं भूषणाङ्गाम्बरस्रजाम् ॥ ६७

रावणे सुखसंविष्टे तास्स्त्रियो विविधप्रभाः ।
ज्वलन्तः काञ्चना दीपाः प्रैक्षन्तानिमिषा इव ॥ ६८

राजर्षिपितृदैत्यानां गन्धर्वाणां च योषितः ।
राक्षसानां च याः कन्यास्तस्य कामवशं गताः ॥ ६९

युद्धकामेन तास्सर्वा रावणेन हृताः स्त्रियः ।
समदा मदनेनैव मोहिताः काश्चिदागताः ॥ ७०

न तत्र काचित्प्रमदा प्रसह्य वीर्योपपन्नेन गुणेन लब्धा ।
न चान्यकामाऽपि नचान्यपूर्वा विना वरार्हां जनकात्मजां ताम् ॥ ७१

न चाकुलीना न च हीनरूपा नादक्षिणा नानुपचारयुक्ता ।
भार्याभवत्तस्य न हीनसत्त्वा न चापि कान्तस्य न कामनीया ॥ ७२

बभूव बुद्धिस्तु हरीश्वरस्य यदीदृशी राघवधर्मपत्नी ।
इमा यथा राक्षसराजभार्यास्सुजातमस्येति हि साधुबुद्धेः ॥ ७३

पुनश्च सोऽचिन्तयदार्तरूपो ध्रुवं विशिष्टा गुणतो हि सीता ।
अथायमस्यां कृतवान्महात्मा लङ्केश्वरः कष्टमनार्यकर्म ॥ ७४

इति श्रीमत्सुन्दरकाण्डे नवमस्सर्गः ॥

## ॥ दशमस्सर्गः ॥

तत्र दिव्योपमं मुख्यं स्फाटिकं रत्नभूषितम् ।
अवेक्षमाणो हनुमान्ददर्श शयनासनम् ॥ १

दान्तकाञ्चनचित्राङ्गैर्वैडूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ २

तस्य चैकतमे देशे सोऽग्र्यमालाविभूषितम् ।
ददर्श पाण्डुरं छत्रं ताराधिपतिसन्निभम् ॥ ३

जातरूपपरिक्षिप्तं चित्रभानुसमप्रभम् ।
अशोकमालाविततं ददर्श परमासनम् ॥ ४

वालव्यजनहस्ताभिर्वीज्यमानं समन्ततः ।
गन्धैश्च विविधैर्जुष्टं वरधूपेन धूपितम् ॥ ५

परमास्तरणास्तीर्णमाविकाजिनसंवृतम् ।
दामभिर्वरमाल्यानां समन्तादुपशोभितम् ॥ ६

तस्मिञ्जीमूतसङ्काशं प्रदीप्तोत्तमकुण्डलम् ।
लोहिताक्षं महाबाहुं महारजतवाससम् ॥ ७

लोहितेनानुलिप्ताङ्गं चन्दनेन सुगन्धिना ।
सन्ध्यारक्तमिवाकाशे तोयदं सतटिद्गणम् ॥ ८

वृतमाभरणैर्दिव्यैस्सुरूपं कामरूपिणम् ।
सवृक्षवनगुल्माढ्यं प्रसुप्तमिव मन्दरम् ॥ ९

क्रीडित्वोपरतं रात्रौ वराभरणभूषितम् ।
प्रियं राक्षसकन्यानां राक्षसानां सुखावहम् ॥ १०

पीत्वाऽऽप्युपरतं चापि ददर्श स महाकपिः ।
भास्वरे शयने वीरं प्रसुप्तं राक्षसाधिपम् ॥ ११

निश्श्वसन्तं यथा नागं रावणं वानरर्षभः ।
आसाद्य परमोद्विग्नस्सोपासर्पत्सुभीतवत् ॥ १२

अथाऽऽरोहणमासाद्य वेदिकाऽन्तरमाश्रितः ।
सुप्तं राक्षसशार्दूलं प्रेक्षते स्म महाकपिः ॥ १३

शुशुभे राक्षसेन्द्रस्य स्वपतश्शयनोत्तमम् ।
गन्धहस्तिनि संविष्टे यथा प्रस्रवणं महत् ॥ १४

काञ्चनाङ्गदसन्नद्धौ ददर्श स महात्मनः ।
विक्षिप्तौ राक्षसेन्द्रस्य भुजाविन्द्रध्वजोपमौ ॥ १५

ऐरावतविषाणाग्रैरापीडनकृतव्रणौ ।
वज्रोल्लिखितपीनांसौ विष्णुचक्रपरिक्षतौ ॥ १६

पीनौ समसुजातांसौ सङ्गतौ बलसंयुतौ ।
सुलक्षणनखाङ्गुष्ठौ स्वङ्गुलीतललक्षितौ ॥ १७

संहतौ परिघाकारौ वृत्तौ करिकरोपमौ ।
विक्षिप्तौ शयने शुभ्रे पञ्चशीर्षाविवोरगौ ॥ १८

शशक्षतजकल्पेन सुशीतेन सुगन्धिना ।
चन्दनेन परार्ध्येन स्वनुलिप्तौ स्वलङ्कृतौ ॥ १९

उत्तमस्त्रीविमृदितौ गन्धोत्तमनिषेवितौ ।
यक्षपन्नगगन्धर्वदेवदानवराविणौ ॥ २०

ददर्श स कपिस्तस्य बाहू शयनसंस्थितौ ।
मन्दरस्यान्तरे सुप्तौ महाही रुषिताविव ॥ २१

ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ।
शुशुभेऽऽचलसङ्काशश्शृङ्गाभ्यामिव मन्दरः ॥ २२
चूतपुन्नागसुरभिर्वकुलोत्तमसंयुतः ।
मृष्टान्नरससंयुक्तः पानगन्धपुरस्सरः ॥ २३
तस्य राक्षससिंहस्य निश्चक्राम महान्मुखात् ।
शयानस्य विनिश्श्वासः पूरयन्निव तद्गृहम् ॥ २४
मुक्तामणिविचित्रेण काञ्चनेन विराजितम् ।
मकुटेनापवृत्तेन कुण्डलोज्ज्वलिताननम् ॥ २५
रक्तचन्दनदिग्धेन तथा हारेण शोभिना ।
पीनायतविशालेन वक्षसाऽभिविराजितम् ॥ २६
पाण्डरेणापविद्धेन क्षौमेण क्षतजेक्षणम् ।
महार्हेण सुसंवीतं पीतेनोत्तमवाससा ॥ २७
माषराशिप्रतीकाशं निश्श्वसन्तं भुजङ्गवत् ।
गाङ्गे महति तोयान्ते प्रसुप्तमिव कुञ्जरम् ॥ २८
चतुर्भिः काञ्चनैर्दीपैर्दीप्यमानचतुर्दिशम् ।
प्रकाशीकृतसर्वाङ्गं मेघं विद्युद्गणैरिव ॥ २९
पादमूलगताश्चापि ददर्श सुमहात्मनः ।
पत्नीस्स प्रियभार्यस्य तस्य रक्षः पतेर्गृहे ॥ ३०
शशिप्रकाशवदनाश्चारुकुण्डलभूषिताः ।
अम्लानमाल्याभरणा ददर्श हरियूथपः ॥ ३१
नृत्तवादित्रकुशला राक्षसेन्द्रभुजाङ्कगाः ।
वराभरणधारिण्यो निषण्णा ददृशे हरिः ॥ ३२

वज्रवैडूर्यगर्भाणि श्रवणान्तेषु योषिताम् ।
ददर्श तापनीयानि कुण्डलान्यङ्गदानि च ॥ ३३

तासां चन्द्रोपमैर्वक्त्रैश्शुभैर्ललितकुण्डलैः ।
विरराज विमानं तन्नभस्तारागणैरिव ॥ ३४

मदव्यायामखिन्नास्ता राक्षसेन्द्रस्य योषितः ।
तेषु तेष्ववकाशेषु प्रसुप्तास्तनुमध्यमाः ॥ ३५

अङ्गहारैस्तथैवान्या कोमलैर्नृत्तशालिनी ।
विन्यस्तशुभसर्वाङ्गी प्रसुप्ता वरवर्णिनी ॥ ३६

काचिद्वीणां परिष्वज्य प्रसुप्ता सम्प्रकाशते ।
महानदीप्रकीर्णेव नळिनी पोतमाश्रिता ॥ ३७

अन्या कक्षगतेनैव मड्डुकेनासितेक्षणा ।
प्रसुप्ता भामिनी भाति बालपुत्रेव वत्सला ॥ ३८

पटहं चारुसर्वाङ्गी पीड्य शेते शुभस्तनी ।
चिरस्य रमणं लब्ध्वा परिष्वज्येव भामिनी ॥ ३९

काचिद्वंशं परिष्वज्य सुप्ता कमललोचना ।
रहः प्रियतमं गृह्य सकामेव च कामिनी ॥ ४०

विपञ्चीं परिगृह्यान्या नियता नृत्तशालिनी ।
निद्रावशमनुप्राप्ता सहकान्तेव भामिनी ॥ ४१

अन्या कनकसङ्काशैर्मृदुपीनैर्मनोरमैः ।
मृदङ्गं परिपीड्याङ्गैः प्रसुप्ता मत्तलोचना ॥ ४२

भुजपार्श्वान्तरस्थेन कक्षगेन कृशोदरी ।
पणवेन सहानिन्द्या सुप्ता मदकृतश्रमा ॥ ४३

डिण्डिमं परिगृह्यान्या तथैवासक्तडिण्डिमा ।
प्रसुप्ता तरुणं वत्समुपगूह्येव भामिनी ॥ ४४

काचिदाडम्बरं नारी भुजसम्भोगपीडितम् ।
कृत्वा कमलपत्राक्षी प्रसुप्ता मदमोहिता ॥ ४५

कलशीमपविध्यान्या प्रसुप्ता भाति भामिनी ।
वसन्ते पुष्पशबला मालेव परिमार्जिता ॥ ४६

पाणिभ्यां च कुचौ काचित्सुवर्णकलशोपमौ ।
उपगूह्याबला सुप्ता निद्राबलपराजिता ॥ ४७

अन्या कमलपत्राक्षी पूर्णेन्दुसदृशानना ।
अन्यामालिङ्गय सुश्रोणीं प्रसुप्ता मदविह्वला ॥ ४८

आतोद्यानि विचित्राणि परिष्वज्य वरस्त्रियः ।
निपीड्य च कुचैस्सुप्ताः कामिन्यः कामुकानिव ॥ ४९

तासामेकान्तविन्यस्ते शयानां शयने शुभे ।
ददर्श रूपसम्पन्नामपरां स कपिस्स्त्रियम् ॥ ५०

मुक्तामणिसमायुक्तैर्भूषणैस्सुविभूषिताम् ।
विभूषयन्तीमिव तत्स्वश्रिया भवनोत्तमम् ॥ ५१

गौरीं कनकवर्णाभामिष्टामन्तःपुरेश्वरीम् ।
कपिर्मन्दोदरीं तत्र शयानां चारुरूपिणीम् ॥ ५२

स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः ।
तर्कयामास सीतेति रूपयौवनसम्पदा ॥ ५३

हर्षेण महता युक्तो ननन्द हरियूथपः ।
[दृष्ट्वा सीतेति हृष्टोऽभूद्दीनश्चारित्रदर्शनात् ॥]

आस्फोटयामास चुचुम्ब पुच्छं ननन्द चिक्रीड जगौ जगाम ।
स्तम्भानरोहन्निपपात भूमौ निदर्शयन् स्वां प्रकृतिं कपीनाम् ॥ ५४

इति श्रीमत्सुन्दरकाण्डे दशमस्सर्गः ॥

---

## ॥ एकादशस्सर्गः ॥

अवधूय च तां बुद्धिं बभूवावस्थितस्तदा ।
जगाम चापरां चिन्तां सीतां प्रति महाकपिः ॥ १
न रामेण वियुक्ता सा स्वप्तुमर्हति भामिनी ।
न भोक्तुं नाप्यलङ्कर्तुं न पानमुपसेवितुम् ॥ २
नान्यं नरमुपस्थातुं सुराणामपि चेश्वरम् ।
न हि रामसमः कश्चिद्विद्यते त्रिदशेष्वपि ॥ ३
अन्येयमिति निश्चित्य पानभूमौ चचार सः ।
क्रीडितेनापराः क्लान्ता गीतेन च तथाऽपराः ॥ ४
नृत्तेन चापराः क्लान्ताः पानविप्रहतास्तथा ।
मुरजेषु मृदङ्गेषु पीठिकासु च संस्थिताः ॥ ५
तथाऽऽस्तरणमुख्येषु संविष्टाश्चापरास्स्त्रियः ।
अङ्गनानां सहस्रेण भूषितेन विभूषणैः ॥ ६
रूपसल्लापशीलेन युक्तगीतार्थभाषिणा ।
देशकालाभियुक्तेन युक्तवाक्याभिधायिना ॥ ७
रताभिरतसंसुप्तं ददर्श हरियूथपः ।
तासां मध्ये महाबाहुश्शुशुभे राक्षसेश्वरः ॥ ८

गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ।
स राक्षसेन्द्रश्शुशुभे ताभिः परिवृतस्स्वयम् ॥ ९

करेणुभिर्यथाऽरण्ये परिकीर्णो महाद्विपः ।
सर्वकामैरुपेतां च पानभूमिं महात्मनः ॥ १०

ददर्श हरिशार्दूलस्तस्य रक्षःपतेर्गृहे ।
मृगाणां महिषाणां च वराहाणां च भागशः ॥ ११

तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ।
रौक्मेषु च विशालेषु भाजनेष्वर्धभक्षितान् ॥ १२

ददर्श हरिशार्दूलो मयूरान्कुक्कुटांस्तथा ।
वराहवाध्राणसकान् दधिसौवर्चलायुतान् ॥ १३

शल्यान्मृगमयूरांश्च हनुमानन्ववैक्षत ।
क्रकरान्विविधान्सिद्धांश्चकोरानर्धभक्षितान् ॥ १४

महिषानेकशल्यांश्च च्छागांश्च कृतनिष्ठितान् ।
लेह्यानुच्चावचान्पेयान् भोज्यानि विविधानि च ॥ १५

तथाऽऽम्ललवणोत्तंसैर्विविधैरागषाडवैः ।
हारनूपुरकेयूरैरपविद्धैर्महाधनैः ॥ १६

पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ।
कृतपुष्पोपहारा भूरधिकं पुष्यति श्रियम् ॥ १७

तत्र तत्र च विन्यस्तैस्सुश्लिष्टैश्शयनासनैः ।
पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते ॥ १८

बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ।
मांसैः कुशलसम्पृक्तैः पानभूमिगतैः पृथक् ॥ १९

दिव्याः प्रसन्ना विविधास्सुराः कृतसुरा अपि ।
शर्करासवमाध्वीकपुष्पासवफलासवाः ॥ २०

वासचूर्णैश्च विविधैर्दृष्टास्तैस्तैः पृथक्पृथक् ।
सन्तता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः ॥ २१

हिरण्मयैश्च विविधैर्भाजनैस्स्फाटिकैरपि ।
जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता ॥ २२

राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ।
पानश्रेष्ठं तदा भूरि कपिस्तत्र ददर्श सः ॥ २३

सोऽपश्यच्छातकुम्भानि शीधोः मणिमयानि च ।
राजतानि च पूर्णानि भाजनानि महाकपिः ॥ २४

क्वचिदल्पावशेषाणि क्वचित्पीतानि सर्वशः ।
क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह ॥ २५

क्वचिद्भक्ष्यांश्च विविधान् क्वचित्पानानि भागशः ।
क्वचिदन्नावशेषाणि पश्यन्वै विचचार ह ॥ २६

क्वचित्प्रभिन्नैः करकैः क्वचिदालोलितैर्घटैः ।
क्वचित्सम्पृक्तमाल्यानि जलानि च फलानि च ॥ २७

शयनान्यत्र नारीणां शुभ्राणि बहुधा पुनः ।
परस्परं समाश्लिष्य काश्चित्सुप्ता वराङ्गनाः ॥ २८

काश्चिच्च वस्त्रमन्यस्यास्स्वपन्त्याः परिधाय च ।
आहृत्य चाबलास्सुप्ता निद्राबलपराजिताः ॥ २९

तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् ।
नात्यर्थं स्पन्दते चित्रं प्राप्य मन्दमिवानिलम् ॥ ३०

चन्दनस्य च शीतस्य शीधोर्मधुरसस्य च ।
विविधस्य च माल्यस्य धूपस्य विविधस्य च ॥ ३१

बहुधा मारुतस्तत्र गन्धं विविधमुद्वहन् ।
रसानां चन्दनानां च धूपानां चैव मूर्छितः ॥ ३२

प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ।
श्यामावदातास्तत्रान्याः काश्चित्कृष्णा वराङ्गनाः ॥ ३३

काश्चित्काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये ।
तासां निद्रावशत्वाच्च मदनेन विमूर्च्छितम् ॥ ३४

पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ।
एवं सर्वमशेषेण रावणान्तःपुरं कपिः ॥ ३५

ददर्श सुमहातेजा न ददर्श च जानकीम् ।
निरीक्षमाणश्च तदा तास्त्रियस्स महाकपिः ॥ ३६

परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् ।
इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ ३७

न हि मे परदाराणां दृष्टिर्विषयवर्तिनी ।
अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ३८

तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः ।
निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनः ॥ ३९

कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न हि मे मनसः किञ्चिद्वैकृत्यमुपपद्यते ॥ ४०

मनो हि हेतुस्सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ ४१

नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे ॥ ४२
यस्य सत्त्वस्य या योनिस्तस्यां तत्परिमार्ग्यते ।
न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥ ४३
तदिदं मार्गितं तावच्छुद्धेन मनसा मया ।
रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ ४४
देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् ।
अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ॥ ४५
तामपश्यन्कपिस्तत्र पश्यंश्चान्या वरस्त्रियः ।
अपक्रम्य तदा वीरः प्रध्यातुमुपचक्रमे ॥ ४६
स भूयस्तु परं श्रीमान्मारुतिर्यत्नमास्थितः ।
आपानभूमिमुत्सृज्य तद्विचेतुं प्रचक्रमे ॥ ४७

॥ इति श्रीमत्सुन्दरकाण्डे एकादशस्सर्गः ॥

---

## ॥ द्वादशस्सर्गः ॥

स तस्य मध्ये भवनस्य मारुतिर्लतागृहांश्चित्रगृहान्निशागृहान् ।
जगाम सीतां प्रति दर्शनोत्सुको न चैव तां पश्यति चारुदर्शनाम् ॥
स चिन्तयामास ततो महाकपिः प्रियामपश्यन्रघुनन्दनस्य ताम् ।
ध्रुवं हि सीता म्रियते यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥
सा राक्षसानां प्रवरेण जानकी स्वशीलसंरक्षणतत्परा सती ।
अनेन नून प्रति दुष्टकर्मणा हता भवेदार्यपथे परे स्थिता ॥ ३

विरूपरूपा विकृता विवर्चसो महानना दीर्घविरूपदर्शनाः ।
समीक्ष्य सा राक्षसराजयोषितो भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४
सीतामदृष्ट्वा ह्यनवाप्य पौरुषं विहृत्य कालं सह वानरैश्चिरम् ।
न मेऽस्ति सुग्रीवसमीपगा गतिस्सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५
दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः ।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६
किं नु मां वानरास्सर्वे गतं वक्ष्यन्ति सङ्गताः ।
गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥ ७
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् ।
ध्रुवं प्रायमुपैष्यन्ति कालस्य व्यतिवर्तने ॥ ८
किं वा वक्ष्यन्ति वृद्धश्च जाम्बवानङ्गदश्च सः ।
गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ १०
करोति सफलं जन्तोः कर्म यत्तत्करोति सः ।
तस्मादनिर्वेदकृतं यत्नं चेष्टेऽहमुत्तमम् ॥ ११
भूयस्तावद्विचेष्यामि देशान्रावणपालितान् ।
[भूयस्तत्र विचेष्यामि न यत्र विचयः कृतः]
आपानशाला विचितास्तथा पुष्पगृहाणि च ॥ १२
चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ।
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः ॥ १३

इति सञ्चिन्त्य भूयोऽपि विचेतुमुपचक्रमे ।
भूमीगृहांश्चैत्यगृहान्गृहातिगृहकानपि ॥ १४

उत्पतन्निष्पतंश्चापि तिष्ठन्गच्छन्पुनःपुनः ।
अपावृण्वंश्च द्वाराणि कवाटान्यवघाटयन् ॥ १५

प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि ।
सर्वमप्यवकाशं स विचचार महाकपिः ॥ १६

चतुरङ्गुलमात्रोऽपि नावकाशस्स विद्यते ।
रावणान्तःपुरे तस्मिन्यं कपिर्न जगाम सः ॥ १७

प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ।
दीर्घिकाः पुष्करिण्यश्च सर्वं तेनावलोकितम् ॥ १८

राक्षस्यो विविधाकारा विरूपा विकृतास्तथा ।
दृष्टा हनुमता तत्र न तु सा जनकात्मजा ॥ १९

रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः ।
दृष्टा हनुमता तत्र न तु राघवनन्दिनी ॥ २०

नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः ।
दृष्टा हनुमता तत्र न तु सीता सुमध्यमा ॥ २१

प्रमथ्य राक्षसेन्द्रेण देवकन्या बलाद्धृताः ।
दृष्टा हनुमता तत्र न सा जनकनन्दिनी ॥ २२

सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ।
विषसाद मुहुर्धीमान्हनुमान्मारुतात्मजः ॥ २३

उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ।
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् ॥ २४

अवतीर्य विमानाच्च हनुमान्मारुतात्मजः ।
चिन्तामुपजगामाथ शोकोपहतचेतनः ॥ २५

॥ इति श्रीमत्सुन्दरकाण्डे द्वादशस्सर्गः ॥

---

## ॥ त्रयोदशस्सर्गः ॥

विमानात्तु सुसङ्क्रम्य प्राकारं हरियूथपः ।
हनुमान्वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १
सम्परिक्रम्य हनुमान्रावणस्य निवेशनात् ।
अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् ।
न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३
पल्वलानि तटाकानि सरांसि सरितस्तथा ।
नद्योऽनूपवनांताश्च दुर्गाश्च धरणीधराः ॥ ४
लोलिता वसुधा सर्वा न तु पश्यामि जानकीम् ।
इह सम्पापिना सीता रावणस्य निवेशने ॥ ५
आख्याता गृध्रराजेन न च पश्यामि तामहम् ।
किं नु सीताऽथ वैदेही मैथिली जनकात्मजा ॥ ६
उपतिष्ठेत विवशा रावणं दुष्टचारिणम् ।
क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ॥ ७
बिभ्यतो रामबाणानामन्तरा पतिता भवेत् ।
अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ॥ ८

मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् ।
रावणस्योरुवेगेन भुजाभ्यां पीडितेन च ॥ ९

तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया ।
उपर्युपरि वा नूनं सागरं क्रमतस्तदा ॥ १०

विवेष्टमाना पतिता समुद्रे जनकात्मजा ।
अहो क्षुद्रेण वाऽनेन रक्षन्ती शीलमात्मनः ॥ ११

अबन्धुर्भक्षिता सीता रावणेन तपस्विनी ।
अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ॥ १२

अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति ।
सम्पूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् ॥ १३

रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता ।
हा राम लक्ष्मणेत्येवं हाऽयोध्ये चेति मैथिली ॥ १४

विलप्य बहु वैदेही न्यस्तदेहा भविष्यति ।
अथवा निहिता मन्ये रावणस्य निवेशने ॥ १५

नूनं लालप्यते सीता पञ्जरस्थेव शारिका ।
जनकस्य सुता सीता रामपत्नी सुमध्यमा ॥ १६

कथमुत्पलपत्त्राक्षी रावणस्य वशं व्रजेत् ।
विनष्टा वा प्रणष्टा वा मृता वा जनकात्मजा ॥ १७

रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् ।
निवेद्यमाने दोषस्स्याद्दोषस्स्यादनिवेदने ॥ १८

कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे ।
अस्मिन्नेवं गते कार्ये प्राप्तकालं क्षमं च किम् ॥ १९

भवेदिति मतं भूयो हनुमान्प्रविचारयत् ।
यदि सीतामदृष्ट्वाऽहं वानरेन्द्रपुरीमितः ॥ २०

गमिष्यामि ततः को मे पुरुषार्थो भविष्यति ।
ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ॥ २१

प्रवेशश्चैव लङ्कायाः राक्षसानां च दर्शनम् ।
किं मां वक्ष्यति सुग्रीवो हरयो वा समागताः ॥ २२

किष्किन्धां समनुप्राप्तं तौ वा दशरथात्मजौ ।
गत्वा तु यदि काकुत्स्थं वक्ष्यामि परमप्रियम् ॥ २३

न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् ।
परुषं दारुणं क्रूरं तीक्ष्णमिन्द्रियतापनम् ॥ २४

सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति ।
तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ॥ २५

भृशानुरक्तो मेधावी न भविष्यति लक्ष्मणः ।
विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ॥ २६

भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति ।
पुत्रान् मृतान् समीक्ष्याथ न भविष्यन्ति मातरः ॥ २७

कौसल्या च सुमित्रा च कैकेयी च न संशयः ।
कृतज्ञस्सत्यसन्धश्च सुग्रीवः प्लवगाधिपः ॥ २८

रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् ।
दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ॥ २९

पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् ।
वालिजेन तु दुःखेन पीडिता शोककर्शिता ॥ ३०

पञ्चत्वं च गते राज्ञि ताराऽपि न भविष्यति ।
मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ॥ ३१

कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम् ।
भर्तृजेन तु दुःखेन ह्यभिभूता वनौकसः ॥ ३२

शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च ।
सान्त्वेनानुप्रदानेन मानेन च यशस्विना ॥ ३३

लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः ।
न वनेषु न शैलेषु न निरोधेषु वा पुनः ॥ ३४

क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः ।
सपुत्त्रदारास्सामात्याः भर्तृव्यसनपीडिताः ॥ ३५

शैलाग्रेभ्यः पतिष्यन्ति समेत्य विषमेषु च ।
विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा ॥ ३६

उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः ।
घोरमारोदनं मन्ये गते मयि भविष्यति ॥ ३७

इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् ।
सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ॥ ३८

न च शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना ।
मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ ॥ ३९

आशया तौ धरिष्येते वानराश्च मनस्विनः ।
हस्तादानो मुखादानो नियतो वृक्षमूलिकः ॥ ४०

वानप्रस्थो भविष्यामि ह्यदृष्ट्वा जनकात्मजाम् ।
सागरानूपजे देशे बहुमूलफलोदके ॥ ४१

चितां कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् ।
उपविष्टस्य वा सम्यग्लिङ्गिनीं साधयिष्यतः ॥ ४२
शरीरं भक्षयिष्यन्ति वायसाश्श्वापदानि च ।
इदं महर्षिभिर्दृष्टं निर्याणमिति मे मतिः ॥ ४३
सम्यगापः प्रवेक्ष्यामि न चेत्पश्यामि जानकीम् ।
सुजातमूला सुभगा कीर्तिमाला यशस्विनी ॥ ४४
प्रभग्ना चिररात्रीयं मम सीतामपश्यतः ।
तापसो वा भविष्यामि नियतो वृक्षमूलिकः ॥ ४५
नेतः प्रतिगमिष्यामि तामदृष्ट्वाऽसितेक्षणाम् ।
यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम् ॥ ४६
अङ्गदस्सह तैस्सर्वैर्वानरैर्न भविष्यति ।
विनाशे बहवो दोषा जीवन् भद्राणि पश्यति ॥ ४७
तस्मात्प्राणान् धरिष्यामि ध्रुवो जीवितसङ्गमः ।
एवं बहुविधं दुःखं मनसा धारयन्मुहुः ॥ ४८
नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः ।
[ततो विक्रममासाद्य धैर्यवान् कपिकुञ्जरः ।]
रावणं वा वधिष्यामि दशग्रीवं महाबलम् ॥ ४९
काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ।
अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् ॥ ५०
रामायोपहरिष्यामि पशुं पशुपतेरिव ।
इति चिन्तां समापन्नस्सीतामनधिगम्य ताम् ॥ ५१
ध्यानशोकपरीतात्मा चिन्तयामास वानरः ।
यावत्सीतां हि पश्यामि रामपत्नीं यशस्विनीम् ॥ ५२

तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ।
सम्पातिवचनाच्चापि रामं यद्यानयाम्यहम् ॥ ५३

अपश्यन्राघवो भार्यां निर्दहेत्सर्ववानरान् ।
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः ॥ ५४

न मत्कृते विनश्येयुस्सर्वे ते नरवानराः ।
अशोकवनिका चेयं दृश्यते या महाद्रुमा ॥ ५५

इमामधिगमिष्यामि न हीयं विचिता मया ।
वसून्रुद्रांस्तथाऽदित्यानश्विनौ मरुतोऽपि च ॥ ५६

नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ।
जित्वा तु राक्षसान्सर्वानिक्ष्वाकुकुलनन्दिनीम् ॥ ५७

सम्प्रदास्यामि रामाय यथा सिद्धिं तपस्विने ।
स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः ॥ ५८

उदतिष्ठन्महातेजा हनुमान्मारुतात्मजः ।
नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ॥ ५९

नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ।
स तेभ्यस्तु नमस्कृत्य सुग्रीवाय च मारुतिः ॥ ६०

दिशस्सर्वास्समालोक्य ह्यशोकवनिकां प्रति ।
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् ॥ ६१

उत्तरं चिन्तयामास वानरो मारुतात्मजः ।
ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला ॥ ६२

अशोकवनिकचिन्त्या सर्वसंस्कारसंस्कृता ।
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् ॥ ६३

भगवानपि सर्वात्मा नातिक्षोभं प्रवाति वै ।
संक्षिप्तोऽयं मयाऽऽत्मा च रामार्थे रावणस्य च ॥ ६४

सिद्धिं मे संविधास्यन्ति देवास्सर्षिगणास्त्विह ।
ब्रह्मा स्वयम्भूर्भगवान् देवाश्चैव दिशन्तु मे ॥ ६५

सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत् ।
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च ॥ ६६

अश्विनौ च महात्मानौ मरुतश्शर्व एव च ।
सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः ॥ ६७

दास्यन्ति मम ये चान्ये ह्यदृष्टाः पथि गोचराः ।
तदुन्नसं पाण्डुरदन्तमव्रणं शुचिस्मितं पद्मपलाशलोचनम् ।
द्रक्ष्ये तदार्यावदनं कदान्वहं प्रसन्नताराधिपतुल्यदर्शनम् ॥ ६८

क्षुद्रेण पापेन नृशंसकर्मणा सुदारुणालङ्कृतवेषधारिणा ।
बलाभिभूता ह्यबला तपस्विनी कथं नु मे दृष्टिपथेऽद्य सा भवेत् ? ॥

॥ इति श्रीमत्सुन्दरकाण्डे त्रयोदशस्सर्गः ॥

## ॥ चतुर्दशस्सर्गः ॥

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम् ।
अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः ॥ १

स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः ।
पुष्पिताग्रान्वसन्तादौ ददर्श विविधान्द्रुमान् ॥ २

सालानशोकान्भव्यांश्च चम्पकांश्च सुपुष्पितान् ।
उद्दालकान्नागवृक्षांश्चूतान्कपिमुखानपि ॥ ३

अथाम्रवनसञ्छन्नां लताशतसमावृताम् ।
ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम् ॥ ४

स प्रविश्य विचित्रां तां विहगैरभिनादिताम् ।
राजतैः काञ्चनैश्चैव पादपैस्सर्वतो वृताम् ॥ ५

विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् ।
उदितादित्यसङ्काशां ददर्श हनुमान्कपिः ॥ ६

वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः ।
कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम् ॥ ७

प्रहृष्टमनुजे काले मृगपक्षिसमाकुले ।
मत्तबर्हिणसङ्घुष्टां नानाद्विजगणायुताम् ॥ ८

मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम् ।
सुखप्रसुप्तान्विहगान्बोधयामास वानरः ॥ ९

उत्पतद्भिर्द्विजगणैः पक्षैस्सालास्समाहताः ।
अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः ॥ १०

पुष्पावकीर्णश्शुशुभे हनुमान्मारुतात्मजः ।
अशोकवनिकामध्ये यथा पुष्पमयो गिरिः ॥ ११

दिशस्सर्वाः प्रधावन्तं वृक्षषण्डगतं कपिम् ।
दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे ॥ १२

वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः ।
रराज वसुधा तत्र प्रमदेव विभूषिता ॥ १३

तरस्विना ते तरवस्तरसाभिप्रकम्पिताः ।
कुसुमानि विचित्राणि ससृजुः कपिना तदा ॥ १४

निर्धूतपत्रशिखराश्शीर्णपुष्पफला द्रुमाः ।
निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः ॥ १५

हनूमता वेगवता कम्पितास्ते नगोत्तमाः ।
पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः ॥ १६

विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः ।
बभूवुरगमास्सर्वे मारुतेनेव निर्धुताः ॥ १७

निर्धूतकेशी युवतिर्यथा मृदितवर्णका ।
निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता ॥ १८

तथा लाङ्गूलहस्तैश्च चरणाभ्यां च मर्दिता ।
बभूवाशोकवनिका प्रभग्नवरपादपा ॥ १९

महालतानां दामानि व्यधमत् तरसा कपिः ।
यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः ॥ २०

स तत्र मणिभूमीश्च राजतीश्च मनोरमाः ।
तथा काञ्चनभूमीश्च ददर्श विचरन्कपिः ॥ २१

वापीश्च विविधाकाराः पूर्णाः परमवारिणा ।
महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२

मुक्ताप्रवाळसिकताः स्फाटिकान्तरकुट्टिमाः ।
काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३

फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः ।
नत्यूहरुतसङ्घुष्टा हंससारसनादिताः ॥ २४

दीर्घाभिर्द्रुमयुक्ताभिस्सरिद्भिश्च समन्ततः ।
अमृतोपमतोयाभिश्शिवाभिरुपसंस्कृताः ॥ २५

लताशतैरवततास्सन्तानकुसुमावृताः ।
नानागुल्मावृतघनाः करवीरकृतान्तराः ॥ २६

ततोम्बुधरसङ्काशं प्रवृद्धशिखरं गिरिम् ।
विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७

शिलागृहैरवततं नानावृक्षैस्समावृतम् ।
ददर्श हरिशार्दूलो रम्यं जगति पर्वतम् ॥ २८

ददर्श च नगात्तस्मान्नदीं निपतितां कपिः ।
अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९

जले निपतिताग्रैश्च पादपैरुपशोभिताम् ।
वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३०

पुनरावृत्ततोयां च ददर्श स महाकपिः ।
प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१

तस्यादूरात्सपद्मिन्यो नानाद्विजगणायुताः ।
ददर्श हरिशार्दूलो हनुमान्मारुतात्मजः ॥ ३२

कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा ।
मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३

विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् ।
प्रासादैस्सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४

काननैः कृत्रिमैश्चापि सर्वतस्समलङ्कृताम् ।
ये केचित्पादपास्तत्र पुष्पोपगफलोपगाः ॥ ३५

सच्छत्रास्सवितर्दीकास्सर्वे सौवर्णवेदिकाः ।
लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ ३६

काञ्चनीं शिंशुपामेकां ददर्श स महाकपिः ।
वृतां हेममयीभिस्तु वेदिकाभिस्समन्ततः ॥ ३७

तेषां द्रुमाणां प्रभया मेरोरिव दिवाकरः ।
अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः ॥ ३८

सोऽपश्यद्भूमिभागांश्च गर्तप्रस्रवणानि च ।
सुवर्णवृक्षानपरान्ददर्श शिखिसन्निभान् ॥ ३९

तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् ।
किङ्किणीशतनिर्घोषां दृष्ट्वा विस्मयमागमत् ॥ ४०

स पुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् ।
तामारुह्य महाबाहुश्शिंशुपां पर्णसंवृताम् ॥ ४१

इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् ।
इतश्चेतश्च दुःखार्तां सम्पतन्तीं यदृच्छया ॥ ४२

अशोकवनिका चेयं दृढं रम्या दुरात्मनः ।
चम्पकैश्चन्दनैश्चापि वकुलैश्च विभूषिता ॥ ४३

इयं च नलिनी रम्या द्विजसङ्घनिषेविता ।
इमां सा राममहिषी नूनमेष्यति जानकी ॥ ४४

सा रामा राममहिषी राघवस्य प्रिया सती ।
वनसञ्चारकुशला नूनमेष्यति जानकी ॥ ४५

अथवा मृगशावाक्षी वनस्यास्य विचक्षणा ।
वनमेष्यति साऽऽर्येह रामचिन्तानुकर्शिता ॥ ४६

रामशोकाभिसन्तप्ता सा देवी वामलोचना ।
वनवासे रता नित्यमेष्यते वनचारिणी ॥ ४७

वनेचराणां सततं नूनं स्पृहयते पुरा ।
रामस्य दयिता भार्या जनकस्य सुता सती ॥ ४८
सन्ध्याकालमनाश्श्यामा ध्रुवमेष्यति जानकी ।
नदीं चेमां शिवजलां सन्ध्यार्थे वरवर्णिनी ॥ ४९
तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा ।
शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य सम्मता ॥ ५०
यदि जीवति सा देवी ताराधिपनिभानना ।
आगमिष्यति साऽवश्यमिमां शिवजलां नदीम् ॥ ५१
एवं तु मत्वा हनुमान्महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पर्णघने निलीनः ॥ ५२

इति श्रीमत्सुन्दरकाण्डे चतुर्दशस्सर्गः ॥

---

## ॥ पञ्चदशस्सर्गः ॥

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् ।
अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १
सन्तानकलताभिश्च पादपैरुपशोभिताम् ।
दिव्यगन्धरसोपेतां सर्वतस्समलङ्कृताम् ॥ २
तां स नन्दनसङ्काशां मृगपक्षिभिरावृताम् ।
हर्म्यप्रासादसम्बाधां कोकिलाकुलनिस्वनाम् ॥ ३
काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् ।
बह्वासनकुथोपेतां बहुभूमिगृहायुताम् ॥ ४

सर्वर्तुकुसुमैरम्यां फलवद्भिश्च पादपैः ।
पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥ ५

प्रदीप्तामिव तत्रस्थो मारुतिस्समुदैक्षत ।
निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥ ६

विनिष्पतद्भिश्शतशश्चित्रैः पुष्पावतंसकैः ।
आमूलपुष्पनिचितैरशोकैश्शोकनाशनैः ॥ ७

पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् ।
कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८

स देशः प्रभया तेषां प्रदीप्त इव सर्वतः ।
पुन्नागास्सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥ ९

विवृद्धमूला बहवश्शोभन्ते स्म सुपुष्पिताः ।
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः ॥ १०

नीलाञ्जननिभाः केचित्तत्राऽशोकास्सहस्रशः ।
नन्दनं विविधोद्यानं चित्रं चैत्ररथं यथा ॥ ११

अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यं श्रिया वृतम् ।
द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥ १२

पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा ।
सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ १३

नानानिनादैरुद्यानं रम्यं मृगगणैर्द्विजैः ।
अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् ॥ १४

शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् ।
अशोकवनिकायां तु तस्यां वानरपुङ्गवः ॥ १५

स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् ।
मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डुरम् ॥ १६

प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् ।
मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥ १७

विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् ।
ततो मलिनसंवीतां राक्षसीभिस्समावृताम् ॥ १८

उपवासकृशां दीनां निश्श्वसन्तीं पुनः पुनः ।
ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ १९

मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् ।
पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ २०

पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा ।
सपङ्कामनलङ्कारां विपद्मामिव पद्मिनीम् ॥ २१

व्रीडितां दुःखसन्तप्तां परिम्लानां तपस्विनीम् ।
ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ २२

अश्रुपूर्णमुखीं दीनां कृशामनशनेन च ।
शोकध्यानपरां दीनां नित्यं दुःखपरायणाम् ॥ २३

प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् ।
स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव ॥ २४

नीलनागाभया वेण्या जघनं गतयैकया ।
नीलया नीरदापाये वनराज्या महीमिव ॥ २५

सुखार्हां दुःखसन्तप्तां व्यसनानामकोविदाम् ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥ २६

तर्कयामास सीतेति कारणैरुपपादिभिः ।
ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥ २७

यथारूपा हि दृष्टा वै तथारूपेयमङ्गना ।
पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥ २८

कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ।
तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥ २९

सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा ।
इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ३०

भूमौ सुतनुमासीनां नियतामिव तापसीम् ।
निश्श्वासबहुलां भीरुं भुजगेन्द्रवधूमिव ॥ ३१

शोकजालेन महता विततेन न राजतीम् ।
संसक्तां धूमजालेन शिखामिव विभावसोः ॥ ३२

तां स्मृतीमिव सन्दिग्धामृद्धिं निपतितामिव ।
विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥ ३३

सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव ।
अभूतेनापवादेन कीर्तिं निपतितामिव ॥ ३४

रामोपरोधव्यथितां रक्षोहरणकर्शिताम् ।
अबलां मृगशावाक्षीं वीक्षमाणां ततस्ततः ॥ ३५

बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा ।
वदनेनाप्रसन्नेन निश्श्वसन्तीं पुनः पुनः ॥ ३६

मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् ।
प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३७

तस्य सन्दिदिहे बुद्धिर्मुहुस्सीतां निरीक्ष्य तु ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ३८

दुःखेन बुबुधे सीतां हनुमाननलङ्कृताम् ।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३९

तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् ।
तर्कयामास सीतेति कारणैरुपपादिभिः ॥ ४०

वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् ।
तान्याभरणजालानि शाखाशोभीन्यलक्षयत् ॥ ४१

सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ ।
मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥ ४२

श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च ।
तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ ४३

तत्र यान्यवहीनानि तान्यहं नोपलक्षये ।
यान्यस्या नावहीनानि तानीमानि न संशयः ॥ ४४

पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् ।
उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥ ४५

भूषणानि च मुख्यानि दृष्टानि धरणीतले ।
अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ ४६

इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् ।
तथाऽपि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ ४७

इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया ।
प्रणष्टाऽपि सती याऽस्य मनसो न प्रणश्यति ॥ ४८

इयं सा यत्कृते रामश्चतुर्भिः परितप्यते ।
कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४९

स्त्री प्रणष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः ।
पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५०

अस्या देव्या यथारूपमङ्गप्रत्यङ्गसौष्ठवम् ।
रामस्य च यथा रूपं तस्येयमसितेक्षणा ॥ ५१

अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् ।
तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२

दुष्करं कृतवान्रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३

दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् ।
सीतां विना महाबाहुर्मुहूर्तमपि जीवति ॥ ५४

एवं सीतां तदा दृष्ट्वा हृष्टः पवनसम्भवः ।
जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ५५

इति श्रीमत्सुन्दरकाण्डे पञ्चदशस्सर्गः ॥

---

## ॥ षोडशस्सर्गः ॥

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुङ्गवः ।
गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १

स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः ।
सीतामाश्रित्य तेजस्वी हनुमान्विललाप ह ॥ २

मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया ।
यदि सीताऽपि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३

रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः ।
नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४

तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् ।
राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ५

तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् ।
जगाम मनसा रामं वचनं चेदमब्रवीत् ॥ ६

अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः ।
रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥ ७

विराधश्च हतस्सङ्ख्ये राक्षसो भीमविक्रमः ।
वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः ॥ ८

चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९

खरश्च निहतस्सङ्ख्ये त्रिशिराश्च निपातितः ।
दूषणश्च महातेजा रामेण विदितात्मना ॥ १०

ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् ।
अस्या निमित्ते सुग्रीवः प्राप्तवाल्लोकसत्कृतम् ॥ ११

सागरश्च मयाक्रान्तश्श्रीमान्नदनदीपतिः ।
अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ १२

यदि रामस्समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३

राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात्कलाम् ॥ १४

इयं सा धर्मशीलस्य मैथिलस्य महात्मनः ।
सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ १५

उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते ।
पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६

विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः ।
स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी ॥ १७

धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः ।
इयं सा दयिता भार्या राक्षसीवशमागता ॥ १८

सर्वान्भोगान्परित्यज्य भर्तृस्नेहबलात्कृता ।
अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥ १९

संतुष्टा फलमूलेन भर्तृशुश्रूषणे रता ।
या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २०

सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी ।
सहते यातनामेतामनार्थानामभागिनी ॥ २१

इमां तु शीलसम्पन्नां द्रष्टुमर्हति राघवः ।
रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२

अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३

कामभोगैः परित्यक्ता हीना बन्धुजनेन च ।
धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी ॥ २४

नैषा पश्यति राक्षस्यो नेमान्पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५

भर्ता नाम परं नार्या भूषणं भूषणादपि ।
एषा तु रहिता तेन भूषणार्हा न शोभते ॥ २६

दुष्करं कुरुते रामो हीनो यदनया प्रभुः ।
धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७

इमामसितकेशान्तां शतपत्रनिभेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥ २८

क्षितिक्षमा पुष्करसन्निभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् ।
सा राक्षसीभिर्विकृतेक्षणाभिस्संरक्ष्यते सम्प्रति वृक्षमूले ॥ २९

हिमहतनलिनीव नष्टशोभा व्यसनपरम्परया निपीड्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ ३०

अस्या हि पुष्पावनताग्रशाखाश्शोकं दृढं वै जनयन्त्यशोकाः ।
हिमव्यपायेन च मन्दरश्मिरभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव निविष्टबुद्धिः ।
संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥ ३२

इति श्रीमत्सुन्दरकाण्डे षोडशस्सर्गः ॥

## ॥ सप्तदशस्सर्गः ॥

ततः कुमुदषण्डाभो निर्मलो निर्मलं स्वयम् ।
प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १

साचिव्यमिव कुर्वन्स प्रभया निर्मलप्रभः ।
चन्द्रमा रश्मिभिश्शीतैस्सिषेवे पवनात्मजम् ॥ २

स ददर्श ततस्सीतां पूर्णचन्द्रनिभाननाम् ।
शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३

दिदृक्षमाणो वैदेहीं हनुमान्मारुतात्मजः ।
स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥ ५

अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् ।
ध्वस्तकेशीं तथाऽकेशीं केशकम्बलधारिणीम् ॥ ६

लम्बकर्णललाटां च लम्बोदरपयोधराम् ।
लम्बोष्ठीं चुबुकोष्ठीं च लम्बास्यां लम्बजानुकाम् ॥ ७

ह्रस्वां दीर्घां तथा कुब्जां विकटां वामनां तथा ।
करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥ ८

विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः ।
कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९

वराहमृगशार्दूलमहिषाजशिवामुखीः ।
गजोष्ट्रहयपादीश्च निखातशिरसोऽपराः ॥ १०

एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः ।
गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथाऽपराः ॥ ११

अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः ।
गजसन्निभनासाश्च ललाटोच्छ्वासनासिकाः ॥ १२

हस्तिपादा महापादा गोपादाः पादचूडिकाः ।
अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ॥ १३

अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा ।
अजामुखीर्हस्तिमुखीर्गोमुखीस्सूकरीमुखीः ॥ १४

हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः ।
शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः ॥ १५

कराला धूम्रकेशीश्च राक्षसीर्विकृताननाः ।
पिबन्तीस्सततं पानं सदा मांससुराप्रियाः ॥ १६

मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः ।
ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥ १७

स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् ।
तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् ॥ १८

लक्षयामास लक्ष्मीवान् हनुमान् जनकात्मजाम् ।
निष्प्रभां शोकसन्तप्तां मलसङ्कुलमूर्धजाम् ॥ १९

क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव ।
चारित्रव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ २०

भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषणाम् ।
राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ २१

वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव ।
चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥ २२

क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् ।
सीतां भर्तृवशे युक्तामयुक्तां राक्षसीवशे ॥ २३

अशोकवनिकामध्ये शोकसागरमाप्लुताम् ।
ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ २४

ददर्श हनुमान् देवीं लतामकुसुमामिव ।
सा मलेन च दिग्धाङ्गी वपुषा चाप्यलङ्कृता ॥ २५

मृणाळी पङ्कदिग्धेव विभाति न विभाति च ।
मलिनेन तु वस्त्रेण परिक्लिष्टेन भामिनीम् ॥ २६

संवृतां मृगशावाक्षीं ददर्श हनुमान्कपिः ।
तां देवीं दीनवदनामदीनां भर्तृतेजसा ॥ २७

रक्षितां स्वेन शीलेन सीतामसितलोचनाम् ।
तां दृष्ट्वा हनुमान्सीतां मृगशावनिभेक्षणाम् ॥ २८

मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः ।
दहन्तीमिव निश्श्वासैर्वृक्षान् पल्लवधारिणः ॥ २९

सङ्घातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् ।
तां क्षमां सुविभक्ताङ्गीं विनाभरणशोभिनीम् ॥ ३०

प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् ।
हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ॥ ३१

मुमोद हनुमांस्तत्र नमश्चक्रे च राघवम् ।
नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् ॥ ३२

सीतादर्शनसंहृष्टो हनुमान् संवृतोऽभवत् ।

॥ इति श्रीमत्सुन्दरकाण्डे सप्तदशस्सर्गः ॥

---

## ॥ अष्टादशस्सर्गः ॥

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् ।
विचिन्वतश्च वैदेहीं किञ्चिच्छेषा निशाऽभवत् ॥ १

षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् ।
शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ २

अथ मङ्गलवादित्रैः शब्दैश्श्रोत्रमनोहरैः ।
प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३

विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् ।
स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४

भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः ।
न स तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५

स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् ।
तां नगैर्बहुभिर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६

वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् ।
सदामदैश्च विहगैर्विचित्रां परमाद्भुताम् ॥ ७

ईहामृगैश्च विविधैर्जुष्टां दृष्टिमनोहरैः ।
वीथीस्सम्प्रेक्षमाणश्च मणिकाञ्चनतोरणाः ॥ ८

नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् ।
अशोकवनिकामेव प्राविशत्सन्ततद्रुमाम् ॥ ९

अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजत् ।
महेन्द्रमिव पौलस्त्यं देवगन्धर्वयोषितः ॥ १०

दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः ।
वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥ ११

काञ्चनैरपि भृङ्गारैर्जह्रुस्सलिलमग्रतः ।
मण्डलाग्रान्बृसीं चैव गृह्यान्याः पृष्ठतो ययुः ॥ १२

काचिद्रत्नमयीं स्थालीं पूर्णां पानस्य भामिनी ।
दक्षिणा दक्षिणेनैव तदा जग्राह पाणिना ॥ १३

राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् ।
सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४

निद्रामदपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः ।
अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५

व्याविद्धहारकेयूरास्समा मृदितवर्णकाः ।
समागलितकेशान्तास्सस्वेदवदनास्तथा ॥ १६

घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः ।
स्वेदक्लिष्टाङ्गकुसुमास्सुमाल्याकुलमूर्धजाः ॥ १७

प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः ।
बहुमानाच्च कामाच्च प्रिया भार्यास्तमन्वयुः ॥ १८

स च कामपराधीनः पतिस्तासां महाबलः ।
सीतासक्तमना मन्दो मदाञ्चितगतिर्बभौ ॥ १९

ततः काञ्चीनिनादं च नूपुराणां च निस्स्वनम् ।
शुश्राव परमस्त्रीणां स कपिर्मारुतात्मजः ॥ २०

तं चाप्रतिमकर्माणमचिन्त्यबलपौरुषम् ।
द्वारदेशमनुप्राप्तं ददर्श हनुमान्कपिः ॥ २१

दीपिकाभिरनेकाभिस्समन्तादवभासितम् ।
गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२

कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् ।
समक्षमिव कन्दर्पमपविद्धशरासनम् ॥ २३

मथितामृतफेनाभमरजोवस्त्रमुत्तमम् ।
सलीलमनुकर्षन्तं विमुक्तं सक्तमङ्गदे ॥ २४
तं पत्त्रविटपे लीनः पत्त्रपुष्पघनावृतः ।
समीपमिव सङ्क्रान्तं निध्यातुमुपचक्रमे ॥ २५
अवेक्षमाणस्तु ततो ददर्श कपिकुञ्जरः ।
रूपयौवनसम्पन्ना रावणस्य वरस्त्रियः ॥ २६
ताभिः परिवृतो राजा सुरूपाभिर्महायशाः ।
तन्मृगद्विजसङ्घुष्टं प्रविष्टः प्रमदावनम् ॥ २७
क्षीबो विचित्राभरणश्शङ्कुकर्णो महाबलः ।
तेन विश्रवसः पुत्रस्स दृष्टो राक्षसाधिपः ॥ २८
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः ।
तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥ २९
रावणोऽयं महाबाहुरिति सञ्चिन्त्य वानरः ।
[सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे]
अवप्लुतो महातेजा हनुमान्मारुतात्मजः ॥ ३०
स तथाऽप्युग्रतेजास्सन्निर्धूतस्तस्य तेजसा ।
पत्त्रगुह्यान्तरे सक्तो हनुमान्संवृतोऽभवत् ॥ ३१
स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम् ।
दिदृक्षुरसितापाङ्गामुपावर्तत रावणः ॥ ३२

॥ इति श्रीमत्सुन्दरकाण्डे अष्टादशस्सर्गः ॥

---

## ॥ एकोनविंशस्सर्गः ॥

तस्मिन्नेव ततः काले राजपुत्त्रीत्वनिन्दिता ।
रूपयौवनसम्पन्नं भूषणोत्तमभूषितम् ॥ १
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् ।
प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २
आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ ।
उपविष्टा विशालाक्षी रुदन्ती वरवर्णिनी ॥ ३
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः ।
ददर्श सीतां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४
असंवृतायामासीनां धरण्यां संशितव्रताम् ।
छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५
मलमण्डनचित्राङ्गीं मण्डनार्हाममण्डिताम् ।
मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६
समीपं राजसिंहस्य रामस्य विदितात्मनः ।
सङ्कल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७
शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् ।
दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८
वेष्टमानां तथाऽऽविष्टां पन्नगेन्द्रवधूमिव ।
धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९
वृत्तशीलकुले जातामाचारवति धार्मिके ।
पुनस्संस्कारमापन्नां जातामिव च दुष्कुले ॥ १०

अभूतेनापवादेन कीर्तिं निपतितामिव ।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ११

सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् ।
पूजामिव परिक्षीणामाशां प्रतिहतामिव ॥ १२

आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव ।
दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १३

पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव ।
प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ॥ १४

वेदीमिव परामृष्टां शान्तामग्निशिखामिव ।
पौर्णमासीमिव निशां राहुग्रस्तेन्दुमण्डलाम् ॥ १५

उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् ।
हस्तिहस्तपरामृष्टामाकुलां पद्मिनीमिव ॥ १६

पतिशोकातुरां शुष्कां नदीं विस्रावितामिव ।
परया मृजया हीनां कृष्णपक्षनिशामिव ॥ १७

सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ॥ १८

गृहीतामालितां स्तम्भे यूथपेन विनाकृताम् ।
निश्श्वसन्तीं सुदुःखार्तां गजराजवधूमिव ॥ १९

एकया दीर्घया वेण्या शोभमानामयत्नतः ।
नीलया नीरदापाये वनराज्या महीमिव ॥ २०

उपवासेन शोकेन ध्यानेन च भयेन च ।
परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ॥ २१

आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव ।
भावेन रघुमुख्यस्य दशग्रीवपराभवम् ॥ २२

समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ॥ २३

॥ इति श्रीमत्सुन्दरकाण्डे एकोनविंशस्सर्गः ॥

---

## ॥ विंशस्सर्गः ॥

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् ।
साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ॥ १

मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् ।
अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ॥ २

कामये त्वां विशालाक्षि बहुमन्यस्व मां प्रिये ।
सर्वाङ्गगुणसम्पन्ने सर्वलोकमनोहरे ॥ ३

नेह केचिन्मनुष्या वा राक्षसाः कामरूपिणः ।
व्यपसर्पतु ते सीते भयं मत्तस्समुत्थितम् ॥ ४

स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः ।
गमनं वा परस्त्रीणां हरणं सम्प्रमथ्य वा ॥ ५

एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि ।
कामं कामश्शरीरे मे यथाकामं प्रवर्तताम् ॥ ६

देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये ।
प्रणयस्व च तत्त्वेन मैवं भूश्शोकलालसा ॥ ७

एकवेणीधरा शय्या ध्यानं मलिनमम्बरम् ।
अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ॥ ८

विचित्राणि च माल्यानि चन्दनान्यगरूणि च ।
विविधानि च वासांसि दिव्यान्याभरणानि च ॥ ९

महार्हाणि च पानानि शयनान्यासनानि च ।
गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ॥ १०

स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् ।
मां प्राप्य हि कथं नु स्यास्त्वमनर्हा सुविग्रहे ॥ ११

इदं ते चारु सञ्जातं यौवनं व्यतिवर्तते ।
यदतीतं पुनर्नैति स्रोतश्शीघ्रमपामिव ॥ १२

त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृक् ।
न हि रूपोपमा त्वन्या तवास्ति शुभदर्शने ॥ १३

त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् ।
कः पुमानतिवर्तेत साक्षादपि पितामहः ॥ १४

यद्यत्पश्यामि ते गात्रं शीतांशुसदृशानने ।
तस्मिंस्तस्मिन्पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १५

भव मैथिलि भार्या मे मोहमेनं विसर्जय ।
बह्वीनामुत्तमस्त्रीणामाहृतानामितस्ततः ॥ १६

सर्वासामेव भद्रं ते ममाग्रमहिषी भव ।
लोकेभ्यो यानि रत्नानि सम्प्रमथ्याहृतानि वै ॥ १७

तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ।
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् ॥ १८

जनकाय प्रदास्यामि तव हेतोर्विलासिनि ।
नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् ॥ १९

पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ।
असकृत्संयुगे भग्ना मया विमृदितध्वजाः ॥ २०

अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ।
इच्छया क्रियतामद्य प्रतिकर्म तवोत्तमम् ॥ २१

सप्रभाण्यवसज्यन्तां तवाङ्गे भूषणानि च ।
साधु पश्यामि ते रूपं संयुक्तं प्रतिकर्मणा ॥ २२

प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ।
भुङ्क्ष्व भोगान्यथाकामं पिब भीरु रमस्व च ॥ २३

यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ।
ललस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च ॥ २४

मत्प्रसादाल्ललन्त्याश्च ललन्तां बान्धवास्तव ।
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे ॥ २५

किं करिष्यसि रामेण सुभगे चीरवाससा ।
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः ॥ २६

व्रती स्थण्डिलशायी च शङ्के जीवति वा नवा ।
न हि वैदेहि रामस्त्वां द्रष्टुं वाप्युपलप्स्यते ॥ २७

पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ।
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः ॥ २८

हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ।
चारुस्मिते चारुदति चारुनेत्रे विलासिनि ॥ २९

मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ।
क्लिष्टकौशेयवसनां तन्वीमप्यनलङ्कृताम् ॥ ३०
त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ।
अन्तःपुरनिवासिन्यस्स्त्रियस्सर्वगुणान्विताः ॥ ३१
यावन्त्यो मम सर्वासामैश्वर्यं कुरु जानकि ।
मम ह्यसितकेशान्ते त्रैलोक्यप्रवरास्स्त्रियः ॥ ३२
तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ।
यानि वैश्रवणे सुभ्रु रत्नानि च धनानि च ॥ ३३
तानि लोकांश्च सुश्रोणि मां च भुङ्क्ष्व यथासुखम् ।
न रामस्तपसा देवि न बलेन न विक्रमैः ॥ ३४
न धनेन मया तुल्यस्तेजसा यशसाऽपि वा ।
पिब विहर रमस्व भुङ्क्ष्व भोगान् धननिचयं प्रदिशामि मेदिनीं च ।
मयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते ॥
कुसुमिततरुजालसन्ततानि भ्रमरयुतानि समुद्रतीरजानि ।
कनकविमलहारभूषिताङ्गी विहर मया सह भीरु काननानि ॥ ३६

॥ इति श्रीमत्सुन्दरकाण्डे विंशस्सर्गः ॥

---

## ॥ एकविंशस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः ।
आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥ १
दुःखार्ता रुदती सीता वेपमाना तपस्विनी ।
चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २

तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता ।
निवर्तय मनो मत्तस्स्वजने क्रियतां मनः ॥ ३

न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् ।
अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ॥ ४

कुलं सम्प्राप्तया पुण्यं कुले महति जातया ।
एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ॥ ५

राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् ।
नाहमौपयिकी भार्या परभार्या सती तव ॥ ६

साधु धर्ममवेक्षस्व साधु साधुव्रतं चर ।
यथा तव तथाऽन्येषां दारा रक्ष्या निशाचर ॥ ७

आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् ।
अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ॥ ८

नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् ।
इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ॥ ९

तथा हि विपरीता ते बुद्धिराचारवर्जिता ।
वचो मिथ्या प्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥ १०

राक्षसानामभावाय त्वं वा न प्रतिपद्यसे ।
अकृतात्मानमासाद्य राजानमनये रतम् ॥ ११

समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च ।
तथेयं त्वां समासाद्य लङ्का रत्नौघसङ्कुला ॥ १२

अपराधात्तवैकस्य न चिराद्विनशिष्यति ।
स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ॥ १३

अभिनन्दन्ति भूतानि विनाशे पापकर्मणः ।
एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ॥ १४

दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः ।
शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ॥ १५

अनन्या राघवेणाहं भास्करेण प्रभा यथा ।
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ॥ १६

कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् ।
अहमौपयिकी भार्या तस्यैव वसुधापतेः ॥ १७

व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः ।
साधु रावण रामेण मां समानय दुःखिताम् ॥ १८

वने वाशितया सार्धं करेण्वेव गजाधिपम् ।
मित्रमौपयिकं कर्तुं रामस्स्थानं परीप्सता ॥ १९

वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभः ।
विदितस्स हि धर्मज्ञश्शरणागतवत्सलः ॥ २०

तेन मैत्री भवतु ते यदि जीवितुमिच्छसि ।
प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ॥ २१

मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि ।
एवं हि ते भवेत्स्वस्ति सम्प्रदाय रघूत्तमे ॥ २२

अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण ।
वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ॥ २३

त्वद्विधं तु न सङ्क्रुद्धो लोकनाथस्स राघवः ।
रामस्य धनुषश्शब्दं श्रोष्यसि त्वं महास्वनम् ॥ २४

शतक्रतुविसृष्टस्य निर्घोषमशनेरिव ।
इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ॥ २५
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः ।
रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः ॥ २६
असम्पातं करिष्यन्ति पतन्तः कङ्कवाससः ।
राक्षसेन्द्रमहासर्पान् स रामगरुडो महान् ॥ २७
उद्धरिष्यति वेगेन वैनतेय इवोरगान् ।
अपनेष्यति मां भर्ता त्वत्तश्शीघ्रमरिन्दमः ॥ २८
असुरेभ्यश्श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः ।
जनस्थाने हतस्थाने निहते रक्षसां बले ॥ २९
अशक्तेन त्वया रक्षः कृतमेतदसाधु वै ।
आश्रमं तु तयोश्शून्यं प्रविश्य नरसिंहयोः ॥ ३०
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाऽधम ।
न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ॥ ३१
शक्यं सन्दर्शने स्थातुं शुना शार्दूलयोरिव ।
तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ॥ ३२
वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः ।
क्षिप्रं तव सनाथो मे रामस्सौमित्रिणा सह ॥ ३३
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ।
गिरिं कुबेरस्य गतोऽपधाय वा सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथेर्न मोक्ष्यसे महाद्रुमः कालहतोऽशनेरिव ॥ ३४

इति श्रीमत्सुन्दरकाण्डे एकविंशस्सर्गः ॥

## ॥ द्वाविंशस्सर्गः ॥

सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः ।
प्रत्युवाच ततस्सीतां विप्रियं प्रियदर्शनाम् ॥ १

यथा यथा सांत्वयिता वश्यस्स्त्रीणां तथा तथा ।
यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २

सन्नियच्छति मे क्रोधं त्वयि कामस्समुत्थितः ।
द्रवतोऽमार्गमासाद्य हयानिव सुसारथिः ॥ ३

वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ।
जने तस्मिंस्त्वनुक्रोशस्स्नेहश्च किल जायते ॥ ४

एतस्मात्कारणान्न त्वां घातयामि वरानने ।
वधार्हामवमानार्हां मिथ्या प्रव्रजिते रताम् ॥ ५

परुषाणीह वाक्यानि यानि यानि ब्रवीषि माम् ।
तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६

एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः ।
क्रोधसंरम्भसंयुक्तस्सीतामुत्तरमब्रवीत् ॥ ७

द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः ।
ततश्शयनमारोह मम त्वं वरवर्णिनि ॥ ८

ऊर्ध्वं द्वाभ्यां तु मासाभ्यां भर्तारं मामनिच्छतीम् ।
मम त्वां प्रातराशार्थमारभन्ते महानसे ॥ ९

तां तर्ज्यमानां सम्प्रेक्ष्य राक्षसेन्द्रेण जानकीम् ।
देवगन्धर्वकन्यास्ता विषेदुर्विकृतेक्षणाः ॥ १०

ओष्ठप्रकारैरपरा वक्त्रनेत्रैस्तथाऽपराः ।
सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११

ताभिराश्वासिता सीता रावणं राक्षसाधिपम् ।
उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥ १२

नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः ।
निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥ १३

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः ।
त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसाऽपि कः ॥ १४

राक्षसाधम रामस्य भार्याममिततेजसः ।
उक्तवानसि यत्पापं क्व गतस्तस्य मोक्ष्यसे ॥ १५

यथा दृप्तश्च मातङ्गश्शशश्च सहितो वने ।
तथा द्विरदवद्रामस्त्वं नीच शशवत्स्मृतः ॥ १६

स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे ।
चक्षुषोर्विषयं तस्य न तावदुपगच्छसि ॥ १७

इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले ।
क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः ॥ १८

तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च ।
कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते ॥ १९

असन्देशात्तु रामस्य तपसश्चानुपालनात् ।
न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा ॥ २०

नापहर्तुमहं शक्या त्वया रामस्य धीमतः ।
विधिस्तव वधार्थाय विहितो नात्र संशयः ॥ २१

शूरेण धनदभ्रात्रा बलैस्समुदितेन च ।
अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम् ॥ २२

सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः ।
विवृत्य नयने क्रूरे जानकीमन्ववैक्षत ॥ २३

नीलजीमूतसङ्काशो महाभुजशिरोधरः ।
सिंहसत्त्वगतिश्श्रीमान् दीप्तजिह्वाग्रलोचनः ॥ २४

चलाग्रमकुटप्रांशुश्चित्रमाल्यानुलेपनः ।
रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः ॥ २५

श्रोणिसूत्रेण महता मेचकेन सुसंवृतः ।
अमृतोत्पादनद्धेन भुजगेनेव मन्दरः ॥ २६

ताभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः ।
शुशुभेऽचलसङ्काशश्शृङ्गाभ्यामिव मन्दरः ॥ २७

तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः ।
रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः ॥ २८

स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान् ।
श्मशानचैत्यप्रतिमो भूषितोऽपि भयङ्करः ॥ २९

अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः ।
उवाच रावणस्सीतां भुजङ्ग इव निश्श्वसन् ॥ ३०

अनयेनाभिसम्पन्नमर्थहीनमनुव्रते ।
नाशयाम्यहमद्य त्वां सूर्यस्सन्ध्यामिवौजसा ॥ ३१

इत्युक्त्वा मैथिलीं राजा रावणश्शत्रुरावणः ।
सन्दिदेश ततस्सर्वा राक्षसीर्घोरदर्शनाः ॥ ३२

एकाक्षीमेककर्णां च कर्णप्रावरणां तथा ।
गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम् ॥ ३३

हस्तिपाद्यश्वपाद्यौ च गोपादीं पादचूलिकाम् ।
एकाक्षीमेकपादीं च पृथुपादीमपादिकाम् ॥ ३४

अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम् ।
अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम् ॥ ३५

अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम् ॥
यथा मद्वशगा सीता क्षिप्रं भवति जानकी ॥ ३६

तथा कुरुत राक्षस्यस्सर्वाः क्षिप्रं समेत्य च ।
प्रतिलोमानुलोमैश्च सामदानादिभेदनैः ॥ ३७

आवर्जयत वैदेहीं दण्डस्योद्यमनेन च ।
इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः ॥ ३८

काममन्युपरीतात्मा जानकीं पर्यतर्जयत् ।
उपगम्य ततः क्षिप्रं राक्षसी धान्यमालिनी ॥ ३९

परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् ।
मया क्रीड महाराज सीतया किं तवानया ॥ ४०

विवर्णया कृपणया मानुष्या राक्षसेश्वर ।
नूनमस्य महाराज न दिव्यान्भोगसत्तमान् ॥ ४१

विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् ।
अकामां कामयानस्य शरीरमुपतप्यते ॥ ४२

इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ।
एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥ ४३

प्रहसन्मेघसङ्काशो राक्षसस्सन्यवर्तत ।
प्रस्थितस्स दशग्रीवः कम्पयन्निव मेदिनीम् ॥ ४४

ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् ।
देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः ।
परिवार्य दशग्रीवं विविशुस्तं गृहोत्तमम् ॥ ४५

स मैथिलीं धर्मपरामवस्थितां
प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहित-
स्स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६

॥ इति श्रीमत्सुन्दरकाण्डे द्वाविंशस्सर्गः ॥

---

## ॥ त्रयोविंशस्सर्गः ॥

इत्युक्त्वा मैथिलीं राजा रावणश्शत्रुरावणः ।
सन्दिश्य च ततस्सर्वा राक्षसीर्निर्जगाम ह ॥ १

निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते ।
राक्षस्यो भीमरूपास्तास्सीतां समभिदुद्रुवुः ॥ २

ततस्सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः ।
परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३

पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः ।
दशग्रीवस्य भार्या त्वं सीते न बहुमन्यसे ॥ ४

ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् ।
आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५

प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः ।
मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६

पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसस्सुतः ।
नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७

तस्य पुत्रो विशालाक्षि रावणश्शत्रुरावणः ।
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८

मयोक्तं चारु सर्वाङ्गि वाक्यं किं नानुमन्यसे ।
ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९

विवर्त्य नयने कोपान्मार्जारसदृशेक्षणा ।
येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः ॥ १०

तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ।
ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्च्छिता ॥ ११

भर्त्सयन्ती तदा घोरमिदं वचनमब्रवीत् ।
वीर्योत्सिक्तस्य शूरस्य सङ्ग्रामेष्वनिवर्तिनः ॥ १२

बलिनो वीर्ययुक्तस्य भार्या त्वं किं न लप्स्यसे ।
प्रियां बहुमतां भार्यां त्यक्त्वा राजा महाबलः ॥ १३

सर्वासां च महाभागां त्वामुपैष्यति रावणः ।
समृद्धं स्त्रीसहस्रेण नानारत्नोपशोभितम् ॥ १४

अन्तःपुरं समुत्सृज्य त्वामुपैष्यति रावणः ।
अन्या तु विकटा नाम राक्षसी वाक्यमब्रवीत् ॥ १५

असकृद्देवतायुद्धे नागगन्धर्वदानवाः ।
निर्जितास्समरे येन स ते पार्श्वमुपागतः ॥ १६

तस्य सर्वसमृद्धस्य रावणस्य महात्मनः ।
किमद्य राक्षसेन्द्रस्य भार्यात्वं नेच्छसेऽधमे ? ॥ १७

ततस्तु दुर्मुखी नाम राक्षसी वाक्यमब्रवीत् ।
यस्य सूर्यो न तपति भीतो यस्य च मारुतः ॥ १८

न वाति स्मायतापाङ्गे किं त्वं तस्य न तिष्ठसि ? ।
पुष्पवृष्टिं च तरवो मुमुचुर्यस्य वै भयात् ॥ १९

शैलाश्च सुभ्रु पानीयं जलदाश्च यदेच्छति ।
तस्य नैर्ऋतराजस्य राजराजस्य भामिनि ॥ २०

किं त्वं न कुरुषे बुद्धिं भार्यार्थे रावणस्य हि ।
साधु ते तत्त्वतो देवि कथितं साधु भामिनि ॥ २१

गृहाण सुस्मिते वाक्यमन्यथा न भविष्यसि ।

॥ इति श्रीमत्सुन्दरकाण्डे त्रयोविंशस्सर्गः ॥

## ॥ चतुर्विंशस्सर्गः ॥

ततस्सीतामुपागम्य राक्षस्यो विकृताननाः ।
परुषं परुषा नार्य ऊचुस्तां वाक्यमप्रियम् ॥ १

किं त्वमन्तःपुरे सीते सर्वभूतमनोहरे ।
महार्हशयनोपेते न वासमनुमन्यसे ॥ २

मानुषी मानुषस्यैव भार्यात्वं बहुमन्यसे ।
प्रत्याहर मनो रामान्न त्वं जातु भविष्यसि ॥ ३

त्रैलोक्यवसुभोक्तारं रावणं राक्षसेश्वरम् ।
भर्तारमुपसङ्गम्य विहरस्व यथासुखम् ॥ ४

मानुषी मानुषं तं तु राममिच्छसि शोभने ।
राज्याद्भ्रष्टमसिद्धार्थं विक्लबं त्वमनिन्दिते ॥ ५

राक्षसीनां वचश्श्रुत्वा सीता पद्मनिभेक्षणा ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६

यदिदं लोकविद्विष्टमुदाहरथ सङ्गताः ।
नैतन्मनसि वाक्यं मे किल्बिषं प्रतिभाति वः ॥ ७

न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ८

दीनो वा राज्यहीनो वा यो मे भर्ता स मे गुरुः ।
तं नित्यमनुरक्ताऽस्मि यथा सूर्यं सुवर्चला ॥ ९

यथा शची महाभागा शक्रं समुपतिष्ठति ।
अरुन्धती वसिष्ठं च रोहिणी शशिनं यथा ॥ १०

लोपामुद्रा यथाऽगस्त्यं सुकन्या च्यवनं यथा ।
सावित्री सत्यवन्तं च कपिलं श्रीमती यथा ॥ ११

सौदासं मदयन्तीव केशिनी सगरं यथा ।
नैषधं दमयन्तीव भैमी पतिमनुव्रता ॥ १२

तथाऽहमिक्ष्वाकुवरं रामं पतिमनुव्रता ।
सीताया वचनं श्रुत्वा राक्षस्यः क्रोधमूर्च्छिताः ॥ १३

भर्त्सयन्ति स्म परुषैः वाक्यै रावणचोदिताः ।
अवलीनस्स निर्वाक्यो हनुमान्शिंशुपाद्रुमे ॥ १४

सीतां सन्तर्जयन्तीस्ता राक्षसीरशृणोत्कपिः ।
तामभिक्रम्य सङ्क्रुद्धा वेपमानां समन्ततः ॥ १५

भृशं संलिलिहुर्दीप्तान्प्रलम्बान्दशनच्छदान् ।
ऊचुश्च परमक्रुद्धाः प्रगृह्याशु परश्वथान् ॥ १६

नेयमर्हति भर्तारं रावणं राक्षसाधिपम् ।
सा भर्त्स्यमाना भीमाभीराक्षसीभिर्वरानना ॥ १७

सा बाष्पमपमार्जन्ती शिंशुपां तामुपागमत् ।
ततस्तां शिंशुपां सीता राक्षसीभिस्समावृता ॥ १८

अभिगम्य विशालाक्षी तस्थौ शोकपरिप्लुता ।
तां कृशां दीनवदनां मलिनाम्बरधारिणीम् ॥ १९

भर्त्सयाञ्चक्रिरे सीतां राक्षस्यस्तां समन्ततः ।
ततस्तां विनता नाम राक्षसी भीमदर्शना ॥ २०

अब्रवीत्कुपिताकारा कराला निर्णतोदरी ।
सीते पर्याप्तमेतावद्भर्तुस्स्नेहो निदर्शितः ॥ २१

सर्वत्रातिकृतं भद्रे व्यसनायोपकल्पते ।
परितुष्टाऽस्मि भद्रं ते मानुषस्ते कृतो विधिः ॥ २२

ममापितु वचः पथ्यं ब्रुवन्त्याः कुरु मैथिलि ।
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥ २३

विक्रान्तं रूपवन्तं च सुरेशमिव वासवम् ।
दक्षिणं त्यागशीलं च सर्वस्य प्रियदर्शनम् ॥ २४

मानुषं कृपणं रामं त्यक्त्वा रावणमाश्रय ।
दिव्याङ्गरागा वैदेहि दिव्याभरणभूषिता ॥ २५

अद्य प्रभृति सर्वेषां लोकानामीश्वरी भव ।
अग्नेस्स्वाहा यथा देवी शचीवेन्द्रस्य शोभने ॥ २६

किं ते रामेण वैदेहि कृपणेन गतायुषा ।
एतदुक्तं च मे वाक्यं यदि त्वं न करिष्यसि ॥ २७
अस्मिन्मुहूर्ते सर्वास्त्वां भक्षयिष्यामहे वयम् ।
अन्या तु विकटा नाम लम्बमानपयोधरा ॥ २८
अब्रवीत्कुपिता सीतां मुष्टिमुद्यम्य गर्जती ।
बहून्यप्रियरूपाणि वचनानि सुदुर्मते ॥ २९
अनुक्रोशान्मृदुत्वाच्च सोढानि तव मैथिलि ।
न च नः कुरुषे वाक्यं हितं कालपुरस्कृतम् ॥ ३०
आनीताऽसि समुद्रस्य पारमन्यैर्दुरासदम् ।
रावणान्तःपुरं घोरं प्रविष्टा चासि मैथिलि ॥ ३१
रावणस्य गृहे रुद्धामस्माभिस्तु सुरक्षिताम् ।
न त्वां शक्तः परित्रातुमपि साक्षात्पुरन्दरः ॥ ३२
कुरुष्व हितवादिन्या वचनं मम मैथिलि ।
अलमश्रुप्रपातेन त्यज शोकमनर्थकम् ॥ ३३
भज प्रीतिं च हर्षं च त्यजैतां नित्यदैन्यताम् ।
सीते राक्षसराजेन सह क्रीड यथासुखम् ॥ ३४
जानासि हि यथा भीरु स्त्रीणां यौवनमध्रुवम् ।
यावन्न ते व्यतिक्रामेत्तावत्सुखमवाप्नुहि ॥ ३५
उद्यानानि च रम्याणि पर्वतोपवनानि च ।
सह राक्षसराजेन चर त्वं मदिरेक्षणे ॥ ३६
स्त्रीसहस्राणि ते सप्त वशे स्थास्यन्ति सुन्दरि ।
रावणं भज भर्तारं भर्तारं सर्वरक्षसाम् ॥ ३७

उत्पाट्य वा ते हृदयं भक्षयिष्मामि मैथिलि ।
यदि मे व्याहृतं वाक्यं न यथावत्करिष्यसि ॥ ३८
ततश्चण्डोदरी नाम राक्षसी क्रोधमूर्च्छिता ।
भ्रामयन्ती महच्छूलमिदं वचनमब्रवीत् ॥ ३९
इमां हरिणलोलाक्षीं त्रासोत्कम्पिपयोधराम् ।
रावणेन हृतां दृष्ट्वा दौहृदो मे महानभूत् ॥ ४०
यकृत्प्लीहमथोत्पीडं हृदयं च सबन्धनम् ।
आन्त्राण्यपि तथा शीर्षं खादेयमिति मे मतिः ॥ ४१
ततस्तु प्रघसा नाम राक्षसी वाक्यमब्रवीत् ।
कण्ठमस्या नृशंसायाः पीडयाम किमास्यते ॥ ४२
निवेद्यतां ततो राज्ञे मानुषी सा मृतेति ह ।
नात्र कश्चन सन्देहः खादतेति स वक्ष्यति ॥ ४३
ततस्त्वजामुखी नाम राक्षसी वाक्यमब्रवीत् ।
विशस्येमां ततस्सर्वास्समान्कुरुत पीलुकान् ॥ ४४
विभजाम ततस्सर्वा विवादो मे न रोचते ।
पेयमानीयतां क्षिप्रं लेह्यमुच्चावचं बहु ॥ ४५
ततश्शूर्पणखा नाम राक्षसी वाक्यमब्रवीत् ।
अजामुख्या यदुक्तं हि तदेव मम रोचते ॥ ४६
सुरा चानीयतां क्षिप्रं सर्वशोकविनाशिनी ।
मानुषं मांसमास्वाद्य नृत्यामोऽथ निकुम्भिलाम् ॥ ४७
एवं सम्भर्त्स्यमाना सा सीता सुरसुतोपमा ।
राक्षसीभिस्सुघोराभिर्धैर्यमुत्सृज्य रोदिति ॥ ४८

इति श्रीमत्सुन्दरकाण्डे चतुर्विंशस्सर्गः ॥

## ॥ पञ्चविंशस्सर्गः ॥

तथा तासां वदन्तीनां परुषं दारुणं बहु ।
राक्षसीनामसौम्यानां रुरोद जनकात्मजा ॥ १
एवमुक्ता तु वैदेही राक्षसीभिर्मनस्विनी ।
उवाच परमत्रस्ता बाष्पगद्गदया गिरा ॥ २
न मानुषी राक्षसस्य भार्या भवितुमर्हति ।
कामं खादत मां सर्वा न करिष्यामि वो वचः ॥ ३
सा राक्षसीमध्यगता सीता सुरसुतोपमा ।
न शर्म लेभे दुःखार्ता रावणेन च तर्जिता ॥ ४
वेपतेस्माधिकं सीता विशन्ती वाङ्गमात्मनः ।
वने यूथपरिभ्रष्टा मृगी कोकैरिवार्दिता ॥ ५
सा त्वशोकस्य विपुलां शाखामालम्ब्य पुष्पिताम् ।
चिन्तयामास शोकेन भर्तारं भग्नमानसा ॥ ६
सा स्नापयन्ती विपुलौ स्तनौ नेत्रजलस्रवैः ।
चिन्तयन्ती न शोकस्य तदान्तमधिगच्छति ॥ ७
सा वेपमाना पतिता प्रवाते कदली यथा ।
राक्षसीनां भयत्रस्ता विवर्णवदनाऽभवत् ॥ ८
तस्यास्सा दीर्घविपुला वेपन्त्या सीतया तदा ।
ददृशे कम्पिनी वेणी व्यालीव परिसर्पती ॥ ९
सा निश्श्वसन्ती दुःखार्ता शोकोपहतचेतना ।
आर्ता व्यसृजदश्रूणि मैथिली विललाप ह ॥ १०

हा रामेति च दुःखार्ता हा पुनर्लक्ष्मणेति च ।
हा श्वश्रु मम कौसल्ये हा सुमित्रेति भामिनी ॥ ११
लोकप्रवादस्सत्योऽयं पण्डितैस्समुदाहृतः ।
अकाले दुर्लभो मृत्युस्स्त्रिया वा पुरुषस्य वा ॥ १२
यत्राहमेवं क्रूराभी राक्षसीभिरिहार्दिता ।
जीवामि हीना रामेण मुहूर्तमपि दुःखिता ॥ १३
एषाऽल्पपुण्या कृपणा विनशिष्याम्यनाथवत् ।
समुद्रमध्ये नौः पूर्णा वायुवेगैरिवाहता ॥ १४
भर्तारं तमपश्यन्ती राक्षसीवशमागता ।
सीदामि खलु शोकेन कूलं तोयहतं यथा ॥ १५
तं पद्मदळपत्राक्षं सिंहविक्रान्तगामिनम् ।
धन्याः पश्यन्ति मे नाथं कृतज्ञं प्रियवादिनम् ॥ १६
सर्वथा तेन हीनाया रामेण विदितात्मना ।
तीक्ष्णं विषमिवास्वाद्य दुर्लभं मम जीवितम् ॥ १७
कीदृशं तु मया पापं पुरा जन्मान्तरे कृतम् ।
येनेदं प्राप्यते दुःखं मया घोरं सुदारुणम् ॥ १८
जीवितं त्यक्तुमिच्छामि शोकेन महता वृता ।
राक्षसीभिश्च रक्ष्यन्त्या रामो नासाद्यते मया ॥ १९
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितुम् ॥ २०

॥ इति श्रीमत्सुन्दरकाण्डे पञ्चविंशस्सर्गः ॥

## ॥ षड्विंशस्सर्गः ॥

प्रसक्ताश्रुमुखीत्येवं ब्रुवन्ती जनकात्मजा ।
अधोमुखमुखी बाला विलप्तुमुपचक्रमे ॥ १
उन्मत्तेव प्रमत्तेव भ्रान्तचित्तेव शोचती ।
उपावृत्ता किशोरीव विवेष्टन्ती महीतले ॥ २
राघवस्य प्रमत्तस्य रक्षसा कामरूपिणा ।
रावणेन प्रमथ्याहमानीता क्रोशती बलात् ॥ ३
राक्षसीवशमापन्ना भर्त्स्यमाना सुदारुणम् ।
चिन्तयन्ती सुदुःखार्ता नाहं जीवितुमुत्सहे ॥ ४
न हि मे जीवितेनार्थो नैवार्थैर्न च भूषणैः ।
वसन्त्या राक्षसीमध्ये विना रामं महारथम् ॥ ५
अश्मसारमिदं नूनमथवाप्यजरामरम् ।
हृदयं मम येनेदं न दुःखेनावशीर्यते ॥ ६
धिङ्मामनार्यामसतीं याऽहं तेन विनाकृता ।
मुहूर्तमपि रक्षामि जीवितं पापजीविता ॥ ७
का च मे जीविते श्रद्धा सुखे वा तं प्रियं विना ।
भर्तारं सागरान्ताया वसुधायाः प्रियंवदम् ॥ ८
भिद्यतां भक्ष्यतां वापि शरीरं विसृजाम्यहम् ।
न चाप्यहं चिरं दुःखं सहेयं प्रियवर्जिता ॥ ९
चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किंपुनरहं कामयेयं विगर्हितम् ॥ १०

प्रत्याख्यातं न जानाति नात्मानं नात्मनः कुलम् ।
यो नृशंसस्वभावेन मां प्रार्थयितुमिच्छति ॥ ११

छिन्ना भिन्ना विभक्ता वा दीप्तेवाऽग्नौ प्रदीपिता ।
रावणं नोपतिष्ठेयं किं प्रलापेन वश्चिरम् ॥ १२

ख्यातः प्राज्ञः कृतज्ञश्च सानुक्रोशश्च राघवः ।
सद्वृत्तो निरनुक्रोशश्शङ्के मद्भाग्यसङ्क्षयात् ॥ १३

राक्षसानां सहस्राणि जनस्थाने चतुर्दश ।
येनैकेन निरस्तानि स मां किं नाभिपद्यते ॥ १४

निरुद्धा रावणेनाहमल्पवीर्येण रक्षसा ।
समर्थः खलु मे भर्ता रावणं हन्तुमाहवे ॥ १५

विराधो दण्डकारण्ये येन राक्षसपुङ्गवः ।
रणे रामेण निहतस्स मां किं नाभिपद्यते ॥ १६

कामं मध्ये समुद्रस्य लङ्केयं दुष्प्रधर्षणा ।
न तु राघवबाणानां गतिरोधीह विद्यते ॥ १७

किन्नु तत्कारणं येन रामो दृढपराक्रमः ।
रक्षसापहृतां भार्यामिष्टां नाभ्यवपद्यते ॥ १८

इहस्थां मां न जानीते शङ्के लक्ष्मणपूर्वजः ।
जानन्नपि हि तेजस्वी धर्षणं मर्षयिष्यति ॥ १९

हृतेति योऽधिगत्वा मां राघवाय निवेदयेत् ।
गृध्रराजोऽपि स रणे रावणेन निपातितः ॥ २०

कृतं कर्म महत्तेन मां तथाऽभ्यवपद्यता ।
तिष्ठता रावणद्वन्द्वे वृद्धेनापि जटायुषा ॥ २१

यदि मामिह जानीयाद्वर्तमानां स राघवः ।
अद्य बाणैरभिक्रुद्धः कुर्याल्लोकमराक्षसम् ॥ २२

विधमेच्च पुरीं लङ्कां शोषयेच्च महोदधिम् ।
रावणस्य च नीचस्य कीर्तिं नाम च नाशयेत् ॥ २३

ततो निहतनाथानां राक्षसीनां गृहे गृहे ।
यथाहमेवं रुदती तथा भूयो न संशयः ॥ २४

अन्विष्य रक्षसां लङ्कां कुर्याद्रामस्सलक्ष्मणः ।
न हि ताभ्यां रिपुर्दृष्टो मुहूर्तमपि जीवति ॥ २५

चिताधूमाकुलपथा गृध्रमण्डलसङ्कुला ।
अचिरेण तु लङ्केयं श्मशानसदृशी भवेत् ॥ २६

अचिरेणैव कालेन प्राप्स्याम्येव मनोरथम् ।
दुष्प्रस्थानोऽयमाख्याति सर्वेषां वो विपर्ययम् ॥ २७

यादृशानीह दृश्यन्ते लङ्कायामशुभानि वै ।
अचिरेण तु कालेन भविष्यति हतप्रभा ॥ २८

नूनं लङ्का हते पापे रावणे राक्षसाधमे ।
शोषं यास्यति दुर्धर्षा प्रमदा विधवा यथा ॥ २९

पुण्योत्सवसमुत्था च नष्टभर्त्री सराक्षसी ।
भविष्यति पुरी लङ्का नष्टभर्त्री यथाऽङ्गना ॥ ३०

नूनं राक्षसकन्यानां रुदन्तीनां गृहे गृहे ।
श्रोष्यामि न चिरादेव दुःखार्तानामिह ध्वनिम् ॥ ३१

सान्धकारा हतद्योता हतराक्षसपुङ्गवा ।
भविष्यति पुरी लङ्का निर्दग्धा रामसायकैः ॥ ३२

यदि नाम स शूरो मां रामो रक्तान्तलोचनः ।
जानीयाद्वर्तमानां हि रावणस्य निवेशने ॥ ३३
अनेन तु नृशंसेन रावणेनाधमेन मे ।
समयो यस्तु निर्दिष्टस्तस्य कालोऽयमागतः ॥ ३४
[स च मे विहितो मृत्युरस्मिन्दुष्टे न वर्तते]
अकार्यं ये न जानन्ति नैर्ऋताः पापकारिणः ।
अधर्मात्तु महोत्पातो भविष्यति हि साम्प्रतम् ॥ ३५
नैते धर्मं विजानन्ति राक्षसाः पिशिताशनाः ।
ध्रुवं मां प्रातराशार्थे राक्षसः कल्पयिष्यति ॥ ३६
साऽहं कथं करिष्यामि तं विना प्रियदर्शनम् ।
रामं रक्तान्तनयनमपश्यन्ती सुदुःखिता ॥ ३७
यदि कश्चित्प्रदाता मे विषस्याद्य भवेदिह ।
क्षिप्रं वैवस्वतं देवं पश्येयं पतिना विना ॥ ३८
नाजानाज्जीवतीं रामस्स मां लक्ष्मणपूर्वजः ।
जानन्तौ तौ न कुर्यातां नोर्व्यां हि मम मार्गणम् ॥ ३९
नूनं ममैव शोकेन स वीरो लक्ष्मणाग्रजः ।
देवलोकमितो यातस्त्यक्त्वा देहं महीतले ॥ ४०
धन्या देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ ४१
अथवा किन्नु तस्यार्थो धर्मकामस्य धीमतः ।
मया रामस्य राजर्षेर्भार्यया परमात्मनः ॥ ४२

दृश्यमाने भवेत्प्रीतिस्सौहृदं नास्त्यपश्यतः ।
नाशयन्ति कृतघ्नास्तु न रामो नाशयिष्यति ॥ ४३
किं तु मे न गुणाः केचित्किं वा भाग्यक्षयो मम ।
याऽहं सीदामि रामेण हीना मुख्येन भामिनी ॥ ४४
श्रेयो मे जीवितान्मर्तुं विहीनाया महात्मनः ।
रामादक्लिष्टचारित्राच्छूराच्छत्रुनिबर्हणात् ॥ ४५
अथवा न्यस्तशस्त्रौ तौ वने मूलफलाशिनौ ।
भ्रातरौ हि नरश्रेष्ठौ संवृत्तौ वनगोचरौ ॥ ४६
अथवा राक्षसेन्द्रेण रावणेन दुरात्मना ।
छद्मना घातितौ शूरौ भ्रातरौ रामलक्ष्मणौ ॥ ४७
साऽहमेवं गते काले मर्तुमिच्छामि सर्वथा ।
न च मे विहितो मृत्युरस्मिन्दुःखेऽपि वर्तति ॥ ४८
धन्याः खलु महात्मानो मुनयस्त्यक्तकिल्बिषाः ।
जितात्मनो महाभागा येषां न स्तः प्रियाप्रिये ॥ ४९
प्रियान्न सम्भवेद्दुःखमप्रियादधिकं भयम् ।
ताभ्यां हि ये वियुज्यन्ते नमस्तेषां महात्मनाम् ॥ ५०
साऽहं त्यक्ता प्रियार्हेण रामेण विदितात्मना ।
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गता वशम् ॥ ५१

इति श्रीमत्सुन्दरकाण्डे षड्विंशस्सर्गः ॥

## ॥ सप्तविंशस्सर्गः ॥

इत्युक्तास्सीतया घोरा राक्षस्यः क्रोधमूर्च्छिताः ।
काश्चिज्जग्मुस्तदाख्यातुं रावणस्य तरस्विनः ॥ १

ततस्सीतामुपागम्य राक्षस्यो घोरदर्शनाः ।
पुनः परुषमेकार्थमनर्थार्थमथाब्रुवन् ॥ २

अद्येदानीं तवानार्ये सीते पापविनिश्चये ।
राक्षस्यो भक्षयिष्यन्ति मांसमेतद्यथासुखम् ॥ ३

सीतां ताभिरनार्याभिर्दृष्ट्वा सन्तर्जितां तदा ।
राक्षसी त्रिजटा वृद्धा शयाना वाक्यमब्रवीत् ॥ ४

आत्मानं खादतानार्या न सीतां भक्षयिष्यथ ।
जनकस्य सुतामिष्टां स्नुषां दशरथस्य च ॥ ५

स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
राक्षसानामभावाय भर्तुरस्याजयाय च ॥ ६

एवमुक्तास्त्रिजटया राक्षस्यः क्रोधमूर्च्छिताः ।
सर्वा एवाब्रुवन्भीतास्त्रिजटां तामिदं वचः ॥ ७

कथयस्व त्वया दृष्टः स्वप्नोऽयं कीदृशो निशि ।
तासां श्रुत्वा तु वचनं राक्षसीनां मुखाच्च्युतम् ॥ ८

उवाच वचनं काले त्रिजटा स्वप्नसंश्रितम् ।
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ॥ ९

युक्तां हंससहस्रेण स्वयमास्थाय राघवः ।
शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ॥ १०

स्वप्ने चाद्य मया दृष्टा सीता शुक्लाम्बरावृता ।
सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थिता ॥ ११
रामेण सङ्गता सीता भास्करेण प्रभा यथा ।
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ॥ १२
आरूढश्शैलसङ्काशं चचार सह लक्ष्मणः ।
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ॥ १३
शुक्लमाल्याम्बरधरौ जानकीं पर्युपस्थितौ ।
ततस्तस्य नगस्याग्रे ह्याकाशस्थस्य दन्तिनः ॥ १४
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ।
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ॥ १५
चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ।
ततस्ताभ्यां कुमाराभ्यामास्थितस्स गजोत्तमः ॥ १६
सीतया च विशालाक्ष्या लङ्काया उपरि स्थितः ।
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ॥ १७
[शुक्लमाल्याम्बरधरो लक्ष्मणेन सहागतः ।
ततोऽन्यत्र मया दृष्टो रामस्सत्यपराक्रमः]
इहोपयातः काकुत्स्थस्सीतया सह भार्यया ।
[साण्डं त्रिभुवनं सर्वं सर्वतस्सचराचरम् ।
सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकर्मणा ॥
क्षीरोदधिजले मध्ये श्वेतश्शैलस्समुच्छ्रितः ।
तस्य मूर्ध्नि ततश्श्वेतश्चतुर्दन्तो महागजः ॥

तस्य पृष्ठे स्थितः श्रीमान्रामो राजीवलोचनः ।
ततस्सीता समुत्पत्य भर्तुरङ्काश्रिता तदा ॥

बाहुभ्यां सम्परिष्वज्य सम्पूर्णं चन्द्रमण्डलम् ।
ततोऽन्यत्र मया दृष्टो रामो राजीवलोचनः ॥

आसीनः प्राङ्मुखः श्रीमानासने परमाद्भुते ।
अभिषिक्तस्तु काकुत्स्थः सर्वदेवैर्नमस्कृतः ॥

स ब्रह्मर्षिगणैस्सर्वैः सर्वतीर्थजलेन च ।
शुक्लमाल्याम्बरधरा शुक्लमाल्यानुलेपना ॥

साधु सा तत्र सुश्रोणी रराज जनकात्मजा ।
ततो देवास्सगन्धर्वाः सिद्धाश्च परमर्षयः ॥

ब्रह्माणमग्रतः कृत्वा रामं तत्र ववन्दिरे ।
पुनरेव मया दृष्टो रामो रमयतां वरः ॥

विष्णुरेव स्वयं भूत्वा तस्मिन्नास्ते वरासने ।
परं ब्रह्म परं तत्त्वं परं ज्ञानं परन्तपः ॥

परं बीजं परं क्षेत्रं परं कारणकारणम् ।
शङ्खचक्रगदश्श्रीमान्पुण्डरीकायतेक्षणः ॥

श्रीवत्सवक्षा नित्यश्रीरजेयश्शाश्वतो ध्रुवः ।
एवम्भूतो महातेजा रामः कमललोचनः ॥

सर्वलोकेश्वरश्श्रीमान्ससर्ज रघुनन्दनः ॥

ततोऽमरेन्द्राः पितरो मुनीन्द्रा गन्धर्वविद्याधरपन्नगेन्द्राः ।
कृताभिषेकं परिवार्य रामं प्रतुष्टुवुः प्राञ्जलयः प्रहृष्टाः ॥

ततस्तु सर्वाप्सरसः प्रहृष्टा नृत्यन्ति गायन्ति समेत्य तत्र ।
वाद्यं प्रकुर्वन्ति समेत्य शङ्खा वंशाश्च वीणामुरजाश्च भेर्यः ॥
ततोऽन्यत्र मया दृष्टो रामस्सत्यपराक्रमः । ]
लक्ष्मणेन सह भ्रात्रा सीतया सह वीर्यवान् ॥ १८

आरुह्य पुष्पकं दिव्यं विमानं सूर्यसन्निभम् ।
उत्तरां दिशमालोक्य जगाम पुरुषोत्तमः ॥ १९

एवं स्वप्ने मया दृष्टो रामो विष्णुपराक्रमः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह राघवः ॥ २०

न हि रामो महातेजाश्शक्यो जेतुं सुरासुरैः ।
राक्षसैर्वापि चान्यैर्वा स्वर्गः पापजनैरिव ॥ २१

रावणश्च मया दृष्टः क्षितौ तैलसमुक्षितः ।
रक्तवासाः पिबन्मत्तः करवीरकृतस्रजः ॥ २२

विमानात्पुष्पकादद्य रावणः पतितो भुवि ।
कृष्यमाणस्स्त्रिया दृष्टो मुण्डः कृष्णाम्बरः पुनः ॥ २३

रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
पिबंस्तैलं हसन्नृत्यन्भ्रान्तचित्ताकुलेन्द्रियः ॥ २४

गर्दभेन ययौ शीघ्रं दक्षिणां दिशमास्थितः ।
पुनरेव मया दृष्टो रावणो राक्षसेश्वरः ॥ २५

पतितोऽवाक्छिरा भूमौ गर्दभाद्भयमोहितः ।
सहसोत्थाय सम्भ्रान्तो भयार्तो मदविह्वलः ॥ २६

उन्मत्तइव दिग्वासा दुर्वाक्यं प्रलपन्बहु ।
दुर्गन्धं दुस्सहं घोरं तिमिरं नरकोपमम् ॥ २७

मलपङ्कं प्रविश्याशु मग्नस्तत्र स रावणः ।
[प्रस्थितो दक्षिणामाशां प्रविष्टः कर्दमह्रदम् ।]
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ॥ २८
काली कर्दमलिप्ताङ्गी दिशं याम्यां प्रकर्षति ।
एवं तत्र मया दृष्टः कुम्भकर्णो निशाचरः ॥ २९
रावणस्य सुतास्सर्वे दृष्टास्तैलसमुक्षिताः ।
वराहेण दशग्रीवश्शिंशुमारेण चेन्द्रजित् ॥ ३०
उष्ट्रेण कुम्भकर्णश्च प्रयातो दक्षिणां दिशम् ।
एकस्तत्र मया दृष्टश्श्वेतच्छत्रो विभीषणः ॥ ३१
शुक्लमाल्याम्बरधरश्शुक्लगन्धानुलेपनः ।
शङ्खदुन्दुभिनिर्घोषैर्नृत्तगीतैरलङ्कृतः ॥ ३२
आरुह्य शैलसङ्काशं मेघस्तनितनिस्स्वनम् ।
चतुर्दन्तं गजं दिव्यमास्ते तत्र विभीषणः ॥ ३३
चतुर्भिस्सचिवैस्सार्धं वैहायसमुपस्थितः ।
समाजश्च मया दृष्टो गीतवादित्रनिस्स्वनः ॥ ३४
पिबतां रक्तमाल्यानां रक्षसां रक्तवाससाम् ।
लङ्का चेयं पुरी रम्या सवाजिरथकुञ्जरा ॥ ३५
सागरे पतिता दृष्टा भग्नगोपुरतोरणा ।
लङ्का दृष्टा मया स्वप्ने रावणेनाभिरक्षिता ॥ ३६
दग्धा रामस्य दूतेन वानरेण तरस्विना ।
पीत्वा तैलं प्रनृत्ताश्च प्रहसन्त्यो महास्वनाः ॥ ३७

लङ्कायां भस्मरूक्षायां प्रविष्टा राक्षसस्त्रियः ।
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ॥ ३८

रक्तं निवसनं गृह्य प्रविष्टा गोमयह्रदे ।
अपगच्छत नश्यध्वं सीतामाप स राघवः ॥ ३९

घातयेत्परमामर्षी सर्वैस्सार्धं हि राक्षसैः ।
[रावणं राघवो घोरे भार्याहर्तारमाहवे]
प्रियां बहुमतां भार्यां वनवासमनुव्रताम् ॥ ४०

भर्त्सितां तर्जितां वापि नानुमंस्यति राघवः ।
तदलं क्रूरवाक्यैर्वस्सान्त्वमेवाभिधीयताम् ॥ ४१

अभियाचाम वैदेहीमेतद्धि मम रोचते ।
यस्यामेवंविधस्स्वप्नो दुःखितायां प्रदृश्यते ॥ ४२

सा दुःखैर्विविधैर्मुक्ता प्रियं प्राप्नोत्यनुत्तमम् ।
भर्त्सितामपि याचध्वं राक्षस्यः किं विवक्षया ॥ ४३

राघवाद्धि भयं घोरं राक्षसानामुपस्थितम् ।
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ४४

अलमेषा परित्रातुं राक्षस्यो महतो भयात् ।
[ततस्सा ह्रीमती बाला भर्तुर्विजयहर्षिता ।
अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः]
अपि चास्या विशालाक्ष्यां न किञ्चिदुपलक्षये ॥ ४५

विरूपमपि चाङ्गेषु सुसूक्ष्ममपि लक्षणम् ।
छायावैगुण्यमात्रं तु शङ्के दुःखमुपस्थितम् ॥ ४६

अदुःखार्हामिमां देवीं वैहायसमुपस्थिताम् ।
अर्थसिद्धिं तु वैदेह्याः पश्याम्यहमुपस्थिताम् ॥ ४७
राक्षसेन्द्रविनाशं च विजयं राघवस्य च ।
निमित्तभूतमेतत्तु श्रोतुमस्या महत्प्रियम् ॥ ४८
दृश्यते च स्फुरच्चक्षुः पद्मपत्रमिवायतम् ।
ईषच्च हृषितो वास्या दक्षिणाया ह्यदक्षिणः ॥ ४९
अकस्मादेव वैदेह्या बाहुरेकः प्रकम्पते ।
करेणुहस्तप्रतिमस्सव्यश्चोरुरनुत्तमः ॥ ५०
वेपमानस्सूचयति राघवं पुरतस्स्थितम् ।
पक्षी च शाखानिलयं प्रविष्टः पुनः पुनश्चोत्तमसान्त्ववादी ।
सुस्वागतां वाचमुदीरयानः पुनः पुनश्चोदयतीव हृष्टः ॥ ५१

॥ इति श्रीमत्सुन्दरकाण्डे सप्तविंशस्सर्गः ॥

---

## ॥ अष्टाविंशस्सर्गः ॥

सा राक्षसेन्द्रस्य वचो निशम्य तद्रावणस्याप्रियमप्रियार्ता ।
सीता वितत्रास यथा वनान्ते सिंहाभिपन्ना गजराजकन्या ॥ १
सा राक्षसीमध्यगता च भीरुर्वाग्भिर्भृशं रावणतर्जिता च ।
कान्तारमध्ये विजने विसृष्टा बालेव कन्या विललाप सीता ॥ २
सत्यं बतेदं प्रवदन्ति लोके नाकालमृत्युर्भवतीति सन्तः ।
यत्राहमेवं परिभर्त्स्यमाना जीवामि किञ्चित्क्षणमप्यपुण्या ॥ ३
सुखाद्विहीनं बहुदुःखपूर्णमिदं तु नूनं हृदयं स्थिरं मे ।
विशीर्यते यन्न सहस्रधाऽद्य वज्राहतं शृङ्गमिवाचलस्य ॥ ४

नैवास्ति दोषं मम नूनमत्र वध्याहमस्याऽप्रियदर्शनस्य ।
भावं न चास्याहमनुप्रदातुमलं द्विजो मन्त्रमिवाद्विजाय ॥ ५

नूनं ममाङ्गान्यचिरादनार्यश्शस्त्रैश्शितैश्छेत्स्यति राक्षसेन्द्रः ।
तस्मिन्ननागच्छति लोकनाथे गर्भस्थजन्तोरिव शल्यकृन्तः ॥ ६

दुःखं बतेदं मम दुखिताया मासौ चिरायाधिगमिष्यतो द्वौ ।
बद्धस्य वध्यस्य तथा निशान्ते राजापराधादिव तस्करस्य ॥ ७

हा राम हा लक्ष्मण हा सुमित्रे हा राममातस्सह मे जनन्या ।
एषा विपद्याम्यहमल्पभाग्या महार्णवे नौरिव मूढवाता ॥ ८

तरस्विनौ धारयता मृगस्य सत्त्वेन रूपं मनुजेन्द्रपुत्रौ ।
नूनं विशस्तौ मम कारणात्तौ सिंहर्षभौ द्वाविव वैद्युतेन ॥ ९

नूनं स कालो मृगरूपधारी मामल्पभाग्यां लुलुभे तदानीम् ।
यत्रार्यपुत्रं विससर्ज मूढा रामानुजं लक्ष्मणपूर्वजं च ॥ १०

हा राम सत्यव्रत दीर्घबाहो हा पूर्णचन्द्रप्रतिमानवक्त्र ।
हा जीवलोकस्य हितः प्रियश्च वध्यान्न मां वेत्सि हि राक्षसानाम् ॥

अनन्यदैवत्वमियं क्षमा च भूमौ च शय्या नियमश्च धर्मे ।
पतिव्रतात्वं विफलं ममेदं कृतं कृतघ्नेष्विव मानुषाणाम् ॥ १२

मोघो हि धर्मश्चरितो मयाऽयं तथैकपत्नीत्वमिदं निरर्थम् ।
या त्वां न पश्यामि कृशा विवर्णा हीना त्वया सङ्गमने निराशा ॥

पितुर्निदेशं नियमेन कृत्वा वनान्निवृत्तश्चरितव्रतश्च ।
स्त्रीभिस्तु मन्ये विपुलेक्षणाभिस्त्वं रंस्यसे वीतभयः कृतार्थः ॥ १४

अहं तु राम त्वयि जातकामा चिरं विनाशाय निबद्धभावा ।
मोघं चरित्वा च तपो व्रतं च त्यक्ष्यामि धिग्जीवितमल्पभाग्या ॥

सा जीवितं क्षिप्रमहं त्यजेयं विषेण शस्त्रेण शितेन वापि ।
विषस्य दाता न हि मेऽस्ति कश्चिच्छस्त्रस्य वा वेश्मनि राक्षसस्य ॥
इतीव देवी बहुधा विलप्य सर्वात्मना राममनुस्मरन्ती ।
प्रवेपमाना परिशुष्कवक्त्रा नगोत्तमं पुष्पितमाससाद ॥ १७
शोकाभितप्ता बहुधा विचिन्त्य सीताऽथ वेण्युद्ग्रथनं गृहीत्वा ।
उद्बध्य वेण्युद्ग्रथनेन शीघ्रमहं गमिष्यामि यमस्य मूलम् ॥ १८
उपस्थिता सा मृदुसर्वगात्री शाखां गृहीत्वाऽथ नगस्य तस्य ।
तस्यास्तु रामं प्रविचिन्तयन्त्या रामानुजं स्वं च कुलं शुभाङ्ग्याः ॥
शोकानिमित्तानि तथा बहूनि धैर्यार्जितानि प्रवराणि लोके ।
प्रादुर्निमित्तानि तदा बभूवुः पुरापि सिद्धान्युपलक्षितानि ॥ २०

इति श्रीमत्सुन्दरकाण्डे अष्टाविंशस्सर्गः ॥

---

## ॥ एकोनत्रिंशस्सर्गः ॥

तथागतां तां व्यथितामनिंदितां व्यपेतहर्षां परिदीनमानसाम् ।
शुभां निमित्तानि शुभानि भेजिरे नरं श्रिया जुष्टमिवोपजीविनः ॥ १
तस्याश्शुभं वाममरालपक्ष्मराजीवृतं कृष्णविशालशुक्लम् ।
प्रास्पन्दतैकं नयनं सुकेश्या मीनाहतं पद्ममिवाभिताम्रम् ॥ २
भुजश्च चार्वञ्चितपीनवृत्तः परार्ध्यकालागरुचन्दनार्हः ।
अनुत्तमेनाध्युषितः प्रियेण चिरेण वामस्समवेपताऽशु ॥ ३
गजेन्द्रहस्तप्रतिमश्च पीनस्तयोर्द्वयोरस्संहतयोस्सुजातः ।
प्रस्पन्दमानः पुनरूरुरस्या रामं पुरस्तात् स्थितमाचचक्षे ॥ ४

शुभं पुनर्हेमसमानवर्णमीषद्रजोध्वस्तमिवामलक्ष्याः ।
वासस्स्थितायाश्शिखराग्रदत्याः किञ्चित्परिस्रंसत चारुगात्र्याः ॥ ५

एतैर्निमित्तैरपरैश्च सुभ्रूस्सम्बोधिता प्रागपि साधुसिद्धैः ।
वातातपक्लान्तमिव प्रणष्टं वर्षेण बीजं प्रतिसञ्जहर्ष ॥ ६

तस्याः पुनर्बिम्बफलाधरोष्ठं स्वक्षिभ्रु केशान्तमरालपक्ष्म ।
वक्त्रं बभासे सितशुक्लदंष्ट्रं राहोर्मुखाच्चन्द्र इव प्रमुक्तः ॥ ७

सा वीतशोका व्यपनीततन्द्री शान्तज्वरा हर्षविवृद्धसत्त्वा ।
अशोभतार्या वदनेन शुक्ले शीतांशुना रात्रिरिवोदितेन ॥ ८

इति श्रीमत्सुन्दरकाण्डे एकोनत्रिंशस्सर्गः ॥

---

## ॥ त्रिंशस्सर्गः ॥

हनुमानपि विक्रान्तस्सर्वं शुश्राव तत्त्वतः ।
सीतायास्त्रिजटायाश्च राक्षसीनां च तर्जनम् ॥ १

अवेक्षमाणस्तां देवीं देवतामिव नन्दने ।
ततो बहुविधां चिन्तां चिन्तयामास वानरः ॥ २

यां कपीनां सहस्राणि सुबहून्ययुतानि च ।
दिक्षु सर्वासु मार्गन्ते सेयमासादिता मया ॥ ३

चारेण तु सुयुक्तेन शत्रोश्शक्तिमवेक्षता ।
गूढेन चरता तावदवेक्षितमिदं मया ॥ ४

राक्षसानां विशेषश्च पुरी चेयमवेक्षिता ।
राक्षसाधिपतेरस्य प्रभावो रावणस्य च ॥ ५

युक्तं तस्याप्रमेयस्य सर्वसत्त्वदयावतः ।
समाश्वासयितुं भार्यां पतिदर्शनकाङ्क्षिणीम् ॥ ६

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां दुःखस्यान्तमगच्छतीम् ॥ ७

यद्यप्यहमिमां देवीं शोकोपहतचेतनाम् ।
अनाश्वास्य गमिष्यामि दोषवद्गमनं भवेत् ॥ ८

गते हि मयि तत्रेयं राजपुत्री यशस्विनी ।
परित्राणमविन्दन्ती जानकी जीवितं त्यजेत् ॥ ९

मया च स महाबाहुः पूर्णचन्द्रनिभाननः ।
समाश्वासयितुं न्याय्यस्सीतादर्शनलालसः ॥ १०

निशाचरीणां प्रत्यक्षमनर्हं चापि भाषणम् ।
कथं नु खलु कर्तव्यमिदं कृच्छ्रगतो ह्यहम् ॥ ११

अनेन रात्रिशेषेण यदि नाश्वास्यते मया ।
सर्वथा नास्ति सन्देहः परित्यक्ष्यति जीवितम् ॥ १२

रामश्च यदि पृच्छेन्मां किं मां सीताऽब्रवीद्वचः ।
किमहं तं प्रतिब्रूयामसम्भाष्य सुमध्यमाम् ॥ १३

सीतासन्देशरहितं मामितस्त्वरया गतम् ।
निर्दहेदपि काकुत्स्थः क्रुद्धस्तीव्रेण चक्षुषा ॥ १४

यदि चोद्योजयिष्यामि भर्तारं रामकारणात् ।
व्यर्थमागमनं तस्य ससैन्यस्य भविष्यति ॥ १५

अन्तरं त्वहमासाद्य राक्षसीनामिह स्थितः ।
शनैराश्वासयिष्यामि सन्तापबहुलामिमाम् ॥ १६

अहं ह्यतितनुश्चैव वानरश्च विशेषतः ।
वाचं चोदाहरिष्यामि मानुषीमिह संस्कृताम् ॥ १७

यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम् ।
रावणं मन्यमाना मां सीता भीता भविष्यति ॥ १८

वानरस्य विशेषेण कथं स्यादभिभाषणम् ।
अवश्यमेव वक्तव्यं मानुषं वाक्यमर्थवत् ॥ १९

मया सान्त्वयितुं शक्या नान्यथेयमनिन्दिता ।
सेयमालोक्य मे रूपं जानकी भाषितं तथा ॥ २०

रक्षोभिस्त्रासिता पूर्वं भूयस्त्रासं गमिष्यति ।
ततो जातपरित्रासा शब्दं कुर्यान्मनस्विनी ॥ २१

जानमाना विशालाक्षी रावणं कामरूपिणम् ।
सीतया च कृते शब्दे सहसा राक्षसीगणः ॥ २२

नानाप्रहरणो घोरस्समेयादन्तकोपमः ।
ततो मां सम्परिक्षिप्य सर्वतो विकृताननाः ॥ २३

वधे च ग्रहणे चैव कुर्युर्यत्नं यथाबलम् ।
गृह्य शाखाः प्रशाखाश्च स्कन्धांश्चोत्तमशाखिनाम् ॥ २४

दृष्ट्वा विपरिधावन्तं भवेयुर्भयशङ्किताः ।
मम रूपं च सम्प्रेक्ष्य वने विचरतो महत् ॥ २५

राक्षस्यो भयवित्रस्ता भवेयुर्विकृताननाः ।
ततः कुर्युस्समाह्वानं राक्षस्यो रक्षसामपि ॥ २६

राक्षसेन्द्रनियुक्तानां राक्षसेन्द्रनिवेशने ।
ते शूलशक्तिनिस्त्रिंशविविधायुधपाणयः ॥ २७

आपतेयुर्विमर्देऽस्मिन्वेगेनोद्विग्नकारिणः ।
संरुद्धस्तैस्तु परितो विधमन्रक्षसां बलम् ॥ २८

शक्नुयां न तु सम्प्राप्तुं परं पारं महोदधेः ।
मां वा गृह्णीयुराप्लुत्य बहवश्शीघ्रकारिणः ॥ २९

स्यादियं चागृहीतार्था मम च ग्रहणं भवेत् ।
हिंसाभिरुचयो हिंस्युरिमां वा जनकात्मजाम् ॥ ३०

विपन्नं स्यात्ततः कार्यं रामसुग्रीवयोरिदम् ।
उद्देशे नष्टमार्गेऽस्मिन्राक्षसैः परिवारिते ॥ ३१

सागरेण परिक्षिप्ते गुप्ते वसति जानकी ।
विशस्ते वा गृहीते वा रक्षोभिर्मयि संयुगे ॥ ३२

नान्यं पश्यामि रामस्य साहाय्यं कार्यसाधने ।
विमृशंश्च न पश्यामि यो हते मयि वानरः ॥ ३३

शतयोजनविस्तीर्णं लङ्घयेत महोदधिम् ।
कामं हन्तुं समर्थोऽस्मि सहस्राण्यपि रक्षसाम् ॥ ३४

न तु शक्ष्यामि सम्प्राप्तुं परं पारं महोदधेः ।
असत्यानि च युद्धानि संशयो मे न रोचते ॥ ३५

कश्च निस्संशयं कार्यं कुर्यात्प्राज्ञस्ससंशयम् ।
प्राणत्यागश्च वैदेह्या भवेदनभिभाषणे ॥ ३६

एष दोषो महान्हि स्यान्मम सीताभिभाषणे ।
भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ॥ ३७

विक्लबं दूतमासाद्य तमस्सूर्योदये यथा ।
अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ॥ ३८

[यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने]
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ।
न विनश्येत्कथं कार्यं वैक्लव्यं न कथं भवेत् ॥ ३९

लङ्घनञ्च समुद्रस्य कथं नु न वृथा भवेत् ।
कथं नु खलु वाक्यं मे शृणुयान्नोद्विजेत वा ॥ ४०

इति सञ्चिन्त्य हनुमांश्चकार मतिमान्मतिम् ।
राममक्लिष्टकर्माणं स्वबन्धुमनुकीर्तयन् ॥ ४१

नैनामुद्वेजयिष्यामि तद्बन्धुगतमानसाम् ।
इक्ष्वाकूणां वरिष्ठस्य रामस्य विदितात्मनः ॥ ४२

शुभानि धर्मयुक्तानि वचनानि समर्पयन् ।
श्रावयिष्यामि सर्वाणि मधुरां प्रब्रुवन् गिरम् ॥ ४३

श्रद्धास्यति यथा हीयं तथा सर्वं समादधे ।
इति स बहुविधं महानुभावो जगतिपतेः प्रमदामवेक्षमाणः ।
मधुरमवितथं जगाद वाक्यं द्रुमविटपान्तरमास्थितो हनूमान् ॥ ४४

॥ इति श्रीमत्सुन्दरकाण्डे त्रिंशस्सर्गः ॥

---

## ॥ एकत्रिंशस्सर्गः ॥

एवं बहुविधां चिन्तां चिन्तयित्वा महाकपिः ।
संश्रवे मधुरं वाक्यं वैदेह्या व्याजहार ह ॥ १

राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पुण्यशीलो महाकीर्तिर्ऋजुरासीन्महायशाः ॥ २

राजर्षीणां गुणश्रेष्ठस्तपसा चर्षिभिस्समः ।
चक्रवर्तिकुले जातः पुरन्दरसमो बले ॥ ३

अहिंसारतिरक्षुद्रो घृणी सत्यपराक्रमः ।
मुख्यश्चेक्ष्वाकुवंशस्य लक्ष्मीवान्लक्ष्मिवर्धनः ॥ ४

पार्थिवव्यञ्जनैर्युक्तः पृथुश्रीः पार्थिवर्षभः ।
पृथिव्यां चतुरन्तायां विश्रुतस्सुखदस्सुखी ॥ ५

तस्य पुत्त्रः प्रियो ज्येष्ठस्ताराधिपनिभाननः ।
रामो नाम विशेषज्ञः श्रेष्ठस्सर्वधनुष्मताम् ॥ ६

रक्षिता स्वस्य धर्मस्य स्वजनस्य च रक्षिता ।
रक्षिता जीवलोकस्य धर्मस्य च परन्तपः ॥ ७

तस्य सत्याभिसन्धस्य वृद्धस्य वचनात्पितुः ।
सभार्यस्सह च भ्रात्रा वीरः प्रव्राजितो वनम् ॥ ८

तेन तत्र महारण्ये मृगयां परिधावता ।
राक्षसा निहताश्शूरा बहवः कामरूपिणः ॥ ९

जनस्थानवधं श्रुत्वा हतौ च खरदूषणौ ।
ततस्त्वमर्षापहृता जानकी रावणेन तु ॥ १०

वञ्चयित्वा वने रामं मृगरूपेण मायया ।
स मार्गमाणस्तां देवीं रामस्सीतामनिन्दिताम् ॥ ११

आससाद वने मित्त्रं सुग्रीवं नाम वानरम् ।
ततस्स वालिनं हत्वा रामः परपुरञ्जयः ॥ १२

प्रायच्छत्कपिराज्यं तत्सुग्रीवाय महाबलः ।
सुग्रीवेणापि सन्दिष्टा हरयः कामरूपिणः ॥ १३

तरसा तां समुत्पाट्य चिक्षेप बलवद्बली ।
तां शरैर्दशभिः क्रुद्धस्ताडयामास राक्षसः ॥ ११
विपन्नं कर्म तद्दृष्ट्वा हनूमांश्चण्डविक्रमः ।
सालं विपुलमुत्पाट्य भ्रामयामास वीर्यवान् ॥ १२
भ्रामयन्तं कपिं दृष्ट्वा सालवृक्षं महाबलम् ।
चिक्षेप सुबहून् बाणान् जम्बुमाली महाबलः ॥ १३
सालं चतुर्भिश्चिच्छेद वानरं पञ्चभिर्भुजे ।
उरस्येकेन बाणेन दशभिस्तु स्तनान्तरे ॥ १४
स शरैः पूरिततनुः क्रोधेन महता वृतः ।
तमेव परिघं गृह्य भ्रामयामास वेगितः ॥ १५
अतिवेगोऽतिवेगेन भ्रामयित्वा बलोत्कटः ।
परिघं पातयामास जम्बुमालेर्महोरसि ॥ १६
तस्य चैव शिरो नास्ति न बाहू न च जानुनी ।
न धनुर्न रथो नाश्वास्तत्रादृश्यन्त नेषवः ॥ १७
स हतस्तरसा तेन जम्बुमाली महाबलः ।
पपात निहतो भूमौ चूर्णिताङ्गविभूषणः ॥ १८
जम्बुमालिं च निहतं किङ्करांश्च महाबलान् ।
चुक्रोध रावणश्श्रुत्वा कोपसंरक्तलोचनः ॥ १९
सरोषसंवर्तिततास्रलोचनः प्रहस्तपुत्रे निहते महाबले ।
अमात्यपुत्रानतिवीर्यविक्रमान् समादिदेशाशु निशाचरेश्वरः ॥ २०

इति श्रीमत्सुन्दरकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

॥ पञ्चचत्वारिंशस्सर्गः ॥

ततस्ते राक्षसेन्द्रेण चोदिता मन्त्रिणस्सुताः ।
निर्ययुर्भवनात्तस्मात्सप्तसप्तार्चिवर्चसः ॥ १
महाबलपरीवारा धनुष्मन्तो महाबलाः ।
कृतास्त्रास्त्रविदां श्रेष्ठाः परस्परजयैषिणः ॥ २
हेमजालपरिक्षिप्तैर्ध्वजवद्भिः पताकिभिः ।
तोयदस्वननिर्घोषैर्वाजियुक्तैर्महारथैः ॥ ३
तप्तकाञ्चनचित्राणि चापान्यमितविक्रमाः ।
विष्फारयन्तस्संहृष्टास्तटित्वन्त इवाम्बुदाः ॥ ४
जनन्यस्तु ततस्तेषां विदित्वा किङ्करान्हतान् ।
बभूवुश्शोकसम्भ्रान्तास्सबान्धवसुहृज्जनाः ॥ ५
ते परस्परसन्घर्षात्तप्तकाञ्चनभूषणाः ।
अभिपेतुर्हनूमन्तं तोरणस्थमवस्थितम् ॥ ६
सृजन्तो बाणवृष्टिं ते रथगर्जितनिस्स्वनाः ।
वृष्टिमन्त इवाम्भोदा विचेरुर्नैर्ऋताम्बुदाः ॥ ७
अवकीर्णस्ततस्ताभिर्हनुमान् शरवृष्टिभिः ।
अभवत्संवृताकारश्शैलराडिव वृष्टिभिः ॥ ८
स शरान्मोघयामास तेषामाशुचरः कपिः ।
रथवेगं च वीराणां विचरन्विमलेऽम्बरे ॥ ९
स तैः क्रीडन्धनुष्मद्भिर्व्योम्नि वीरः प्रकाशते ।
धनुष्मद्भिर्यथा मेघैर्मारुतः प्रभुरम्बरे ॥ १०

स कृत्वा निनदं घोरं त्रासयंस्तां महाचमूम् ।
चकार हनुमान् वेगं तेषु रक्षस्सु वीर्यवान् ॥ ११

तलेनाभ्यहनत्कांश्चित्पादैः कांश्चित्परन्तपः ।
मुष्टिनाऽभ्यहनत्कांश्चिन्नखैः कांश्चिद्व्यदारयत् ॥ १२

प्रममाथोरसा कांश्चिदूरुभ्यामपरान् कपिः ।
केचित्तस्य निनादेन तत्रैव पतिता भुवि ॥ १३

ततस्तेष्ववसन्नेषु भूमौ निपतितेषु च ।
तत्सैन्यमगमत्सर्वं दिशो दश भयार्दितम् ॥ १४

विनेदुर्विस्वरं नागा निपेतुर्भुवि वाजिनः ।
भग्ननीडध्वजच्छत्रैर्भूश्च कीर्णाऽभवद्रथैः ॥ १५

स्रवता रुधिरेणाथ स्रवन्त्यो दर्शिताः पथि ।
विविधैश्च स्वरैर्लङ्का ननाद विकृतं तदा ॥ १६

सतान्प्रवृद्धान्विनिहत्य राक्षसान् महाबलश्चण्डपराक्रमः कपिः ।
युयुत्सुरन्यैः पुनरेव राक्षसैस्तमेव वीरोऽभिजगाम तोरणम् ॥ १७

इति श्रीमत्सुन्दरकाण्डे पञ्चचत्वारिंशस्सर्गः॥

॥ षट्चत्वारिंशस्सर्गः ॥

हतान्मन्त्रिसुतान्बुद्ध्वा वानरेण महात्मना ।
रावणस्संवृताकारश्चकार मतिमुत्तमाम् ॥ १

स विरूपाक्षयूपाक्षौ दुर्धरं चैव राक्षसम् ।
प्रघसं भासकर्णं च पञ्च सेनाग्रनायकान् ॥ २

सन्दिदेश दशग्रीवो वीरान्नयविशारदान् ।
हनुमद्ग्रहणव्यग्रान्वायुवेगसमान्युधि ॥ ३

यात सेनाग्रगास्सर्वे महाबलपरिग्रहाः ।
सवाजिरथमातङ्गास्स कपिश्शास्यतामिति ॥ ४

यत्तैश्च खलु भाव्यं स्यात्तमासाद्य वनालयम् ।
कर्म चापि समाधेयं देशकालविरोधिनम् ॥ ५

[वानरोयमिति ज्ञात्वा न हि शुद्ध्यति मे मनः ।
नैवाहं तं कपिं मन्ये यथेयं प्रस्तुता कथा ॥]

न ह्यहं तं कपिं मन्ये कर्मणा प्रतितर्कयन् ।
सर्वथा तन्महद्भूतं महाबलपरिग्रहम् ॥ ६

भवेन्दिद्रेण वा सृष्टमस्मदर्थं तपोबलात् ।
सनागयक्षगन्धर्वा देवासुरमहर्षयः ॥ ७

युष्माभिस्सहितैस्सर्वैर्मया सह विनिर्जिताः ।
तैरवश्यं विधातव्यं व्यळीकं किञ्चिदेव नः ॥ ८

तदेव नात्र सन्देहः प्रसह्य परिगृह्यताम् ।
नावमान्यो भवद्भिश्च हरिर्धीरपराक्रमः ॥ ९

दृष्टा हि हरयः पूर्वं मया विपुलविक्रमाः ।
वाली च सह सुग्रीवो जाम्बवांश्च महाबलः ॥ १०

नीलस्सेनापतिश्चैव ये चान्ये द्विविदादयः ।
नैवं तेषां गतिर्भीमा न तेजो न पराक्रमः ॥ ११

न मतिर्न बलोत्साहौ न रूपपरिकल्पनम् ।
महत्सत्त्वमिदं ज्ञेयं कपिरूपं व्यवस्थितम् ॥ १२

प्रयत्नं महदास्थाय क्रियतामस्य निग्रहः ।
कामं लोकास्त्रयस्सेन्द्रास्ससुरासुरमानवाः ॥ १३

भवतामग्रतः स्थातुं न पर्याप्ता रणाजिरे ।
तथापितु नयज्ञेन जयमाकाङ्क्षता रणे ॥ १४

आत्मा रक्ष्यः प्रयत्नेन युद्धसिद्धिर्हि चञ्चला ।
ते स्वामिवचनं सर्वे प्रतिगृह्य महौजसः ॥ १५

समुत्पेतुर्महावेगा हुताशसमतेजसः ।
रथैर्मत्तैश्च मातङ्गैर्वाजिभिश्च महाजवैः ॥ १६

शस्त्रैश्च विविधैस्तीक्ष्णैस्सर्वैश्चोपचिता बलैः ।
ततस्तं ददृशुर्वीरा दीप्यमानं महाकपिम् ॥ १७

रश्मिमन्तमिवोद्यन्तं स्वतेजोरश्मिमालिनम् ।
तोरणस्थं महोत्साहं महासत्त्वं महाबलम् ॥ १८

महामतिं महावेगं महाकायं महाबलम् ।
तं समीक्ष्यैव ते सर्वे दिक्षु सर्वास्ववस्थिताः ॥ १९

तैस्तैः प्रहरणैर्भीमैरभिपेतुस्ततस्ततः ।
तस्य पञ्चायसास्तीक्ष्णाश्शिताः पीतमुखाश्शराः ॥ २०

शिरस्युत्पलपत्राभा दुर्धरेण निपातिताः ।
स तैः पञ्चभिराविद्धश्शरैश्शिरसि वानरः । २१

उत्पपात नदन् व्योम्नि दिशो दश विनादयन् ।
ततस्तु दुर्धरो वीरस्सरथस्सज्यकार्मुकः ॥ २२

किरन् शरशतैस्तीक्ष्णैरभिपेदे महाबलः ।
स कपिर्वारयामास तं व्योम्नि शरवर्षिणम् ॥ २३

वृष्टिमन्तं पयोदान्ते पयोदमिव मारुतः ।
अर्द्यमानस्ततस्तेन दुर्धरेणानिलात्मजः ॥ २४
चकार कदनं भूयो व्यवर्धत च वेगवान् ।
स दूरं सहसोत्पत्य दुर्धरस्य रथे हरिः ॥ २५
निपपात महावेगो विद्युद्राशिर्गिराविव ।
ततस्स मथिताष्टाश्वं रथं भग्नाक्षकूबरम् ॥ २६
विहाय न्यपतद्भूमौ दुर्धरस्त्यक्तजीवितः ।
तं विरूपाक्षयूपाक्षौ दृष्ट्वा निपतितं भुवि ॥ २७
सञ्जातरोषौ दुर्धर्षावुत्पेततुररिन्दमौ ।
स ताभ्यां सहसोत्पत्य विष्ठितो विमलेऽम्बरे ॥ २८
मुद्गराभ्यां महाबाहुर्वक्षस्यभिहतः कपिः ।
तयोर्वेगवतोर्वेगं विनिहत्य महाबलः ॥ २९
निपपात पुनर्भूमौ सुपर्णसमविक्रमः ।
स सालवृक्षमासाद्य तमुत्पाट्य च वानरः ॥ ३०
तावुभौ राक्षसौ वीरौ जघान पवनात्मजः ।
ततस्तांस्त्रीन् हतान् ज्ञात्वा वानरेण तरस्विना ॥ ३१
अभिपेदे महावेगः प्रसह्य प्रघसो हरिम् ।
भासकर्णश्च सङ्क्रुद्धश्शूलमादाय वीर्यवान् ॥ ३२
एकतः कपिशार्दूलं यशस्विनमवस्थितम् ।
पट्टसेन शिताग्रेण प्रघसः प्रत्ययोधयत् ॥ ३३
भासकर्णश्च शूलेन राक्षसः कपिसत्तमम् ।
स ताभ्यां विक्षतैर्गात्रैरसृग्दिग्धतनूरुहः ॥ ३४

अभवद्वानरः क्रुद्धो बालसूर्यसमप्रभः ।
समुत्पाट्य गिरेश्शृङ्गं समृगव्यालपादपम् ॥ १५
जघान हनुमान्वीरो राक्षसौ कपिकुञ्जरः ।
[ गिरिशृङ्गविनिष्पिष्टौ तिरश्शस्तौ बभूवतुः ]
ततस्तेष्ववसन्नेषु सेनापतिषु पञ्चसु ॥ १६
बलं तदवशेषं च नाशयामास वानरः ।
अश्वैरश्वान्गजैर्नागान्योधैर्योधान्रथैरथान् ॥ १७
स कपिर्नाशयामास सहस्राक्ष इवासुरान् ।
हतैर्नागैश्च तुरगैर्भग्नाक्षैश्च महारथैः ॥ १८
हतैश्च राक्षसैर्भूमी रुद्धमार्गा समन्ततः ।
ततः कपिस्तान्ध्वजिनीपतीन्रणे निहत्य वीरान्सबलान्सवाहनान् ।
समीक्ष्य वीरः परिगृह्य तोरणं कृतक्षणः काल इव प्रजाक्षये ॥ १९

॥ इति श्रीमत्सुन्दरकाण्डे षट्चत्वारिंशस्सर्गः ॥

---

## ॥ सप्तचत्वारिंशस्सर्गः ॥

सेनापतीन् पञ्च स तु प्रमापितान् हनूमता सानुचरान् सवाहनान् ।
समीक्ष्य राजा समरोद्धतोन्मुखं कुमारमक्षं प्रसमैक्षताग्रतः ॥ १
स तस्य दृष्ट्यर्पणसम्प्रचोदितः प्रतापवान् काञ्चनचित्रकार्मुकः ।
समुत्पपाताथ सदस्युदीरितो द्विजातिमुख्यैर्हविषेव पावकः ॥ २
ततो महद्बालदिवाकरप्रभं प्रतप्तजाम्बूनदजालसन्ततम् ।
रथं समास्थाय ययौ स वीर्यवान् महाहरिं तं प्रति नैर्ऋतर्षभः ॥ ३

ततस्तपस्सङ्ग्रहसञ्चयार्जितं प्रतप्तजाम्बूनदजालशोभितम् ।
पताकिनं रत्नविभूषितध्वजं मनोजवाष्टाश्ववरैस्सुयोजितम् ॥ ४

सुरासुराधृष्यमसङ्गचारिणं रविप्रभं व्योमचरं समाहितम् ।
सतूणमष्टासिनिबद्धबन्धुरं यथाक्रमावेशितशक्तितोमरम् ॥ ५

विराजमानं प्रतिपूर्णवस्तुना सहेमदाम्ना शशिसूर्यवर्चसा ।
दिवाकराभं रथमास्थितस्ततस्स निर्जगामामरतुल्यविक्रमः ॥ ६

स पूरयन् खं च महीं च साचलां तुरङ्गमातङ्गमहारथस्वनैः ।
बलैस्समेतैस्स हि तोरणस्थितं समर्थमासीनमुपागमत्कपिम् ॥ ७

स तं समासाद्य हरिं हरीक्षणो युगान्तकालाग्निमिव प्रजाक्षये ।
अवस्थितं विस्मितजातसम्भ्रमस्समैक्षताक्षो बहुमानचक्षुषा ॥ ८

स तस्य वेगं च कपेर्महात्मनः पराक्रमं चारिषु पार्थिवात्मजः ।
विचारयन् स्वं च बलं महाबलो हिमक्षये सूर्य इवाभिवर्धते ॥ ९

स जातमन्युः प्रसमीक्ष्य विक्रमं स्थिरं स्थितस्संयति दुर्निवारणम् ।
समाहितात्मा हनुमन्तमाहवे प्रचोदयामास शरैस्त्रिभिश्शितैः ॥ १०

ततः कपिं तं प्रसमीक्ष्य गर्वितं जितश्रमं शत्रुपराजयोर्जितम् ।
अवैक्षताक्षस्समुदीर्णमानसस्सबाणपाणिः प्रगृहीतकार्मुकः ॥ ११

स हेमनिष्काङ्गदचारुकुण्डलस्समाससादाऽऽशु पराक्रमः कपिम् ।
तयोर्बभूवाप्रतिमस्समागमस्सुरासुराणामपि सम्भ्रमप्रदः ॥ १२

ररास भूमिर्न तताप भानुमान्ववौ न वायुः प्रचचाल चाचलः ।
कपेः कुमारस्य च वीक्ष्य संयुगं ननाद च द्यौरुदधिश्च चुक्षुभे ॥ १३

ततस्स वीरस्सुमुखान्पतत्रिणस्सुवर्णपुङ्खान्सविषानिवोरगान् ।
समाधिसंयोगविमोक्षतत्त्वविच्छरानथ त्रीन्कपिमूर्ध्न्यपातयत् ॥ १४

स तैश्शरैर्मूर्ध्नि समं निपातितैः क्षरन्नसृग्दिग्धविवृत्तलोचनः ।
नवोदितादित्यनिभश्शरांशुमान् व्यराजतादित्य इवांशुमालिकः ॥ १५

ततस्स पिङ्गाधिपमन्त्रिसत्तमस्समीक्ष्य तं राजवरात्मजं रणे ।
उदग्रचित्रायुधचित्रकार्मुकं जहर्ष चापूर्यत चाहवोन्मुखः ॥ १६

स मन्दराग्रस्थ इवांशुमालिको विवृद्धकोपो बलवीर्यसंयुतः ।
कुमारमक्षं सबलं सवाहनं ददाह नेत्राग्निमरीचिभिस्तदा ॥ १७

ततस्स बाणासनचित्रकार्मुकश्शरप्रवर्षो युधि राक्षसाम्बुदः ।
शरान्मुमोचाऽऽशु हरीश्वराचले वलाहको वृष्टिमिवाचलोत्तमे ॥ १८

ततः कपिस्तं रणचण्डविक्रमं विवृद्धतेजोबलवीर्यसंयुतम् ।
कुमारमक्षं प्रसमीक्ष्य संयुगे ननाद हर्षाद्घनतुल्यविक्रमम् ॥ १९

स बालभावाद्युधि वीर्यदर्पितः प्रवृद्धमन्युः क्षतजोपमेक्षणः ।
समाससादाप्रतिमं कपिं रणे गजो महाकूपमिवावृतं तृणैः ॥ २०

स तेन बाणैः प्रसभं निपातितैश्चकार नादं घननादनिस्स्वनः ।
समुत्पाताशु नभस्स मारुतिर्भुजोरुविक्षेपणघोरदर्शनः ॥ २१

समुत्पतन्तं समभिद्रवद्बली स राक्षसानां प्रवरः प्रतापवान् ।
रथी रथिश्रेष्ठतमः किरञ्शरैः पयोधरश्शैलमिवाश्मवृष्टिभिः ॥ २२

स तान्शरांस्तस्य हरिर्विमोक्षयञ्चचार वीरः पथि वायुसेविते ।
शरान्तरे मारुतवद्विनिष्पतन्मनोजवस्संयति चण्डविक्रमः ॥ २३

तमात्तबाणासनमाहवोन्मुखं खमास्तृणन्तं विशिखैश्शरोत्तमैः ।
अवैक्षताक्षं बहुमानचक्षुषा जगाम चिन्तां च स मारुतात्मजः ॥ २४

ततश्शरैर्भिन्नभुजान्तरः कपिः कुमारवीरेण महात्मना नदन् ।
महाभुजः कर्मविशेषतत्त्वविद्विचिन्तयामास रणे पराक्रमम् ॥ २५

अबालवद्बालदिवाकरप्रभः करोत्ययं कर्म महान्महाबलः।
न चास्य सर्वाहवकर्मशोभिनः प्रमापणे मे मतिरत्र जायते ॥ २६

अयं महात्मा च महांश्च वीर्यतस्समाहितश्चातिसहश्च संयुगे।
असंशयं कर्मगुणोदयादयं सनागयक्षैर्मुनिभिश्च पूजितः ॥ २७

पराक्रमोत्साहविवृद्धमानसस्समीक्षते मां प्रमुखाग्रतस्स्थितः।
पराक्रमो ह्यस्य मनांसि कम्पयेत्सुरासुराणामपि शीघ्रगामिनः ॥ २८

न खल्वयं नाभिभवेदुपेक्षितः पराक्रमो ह्यस्य रणे विवर्धते।
प्रमापणं त्वेव ममाद्य रोचते न वर्धमानोऽग्निरुपेक्षितुं क्षमः ॥ २९

इति प्रवेगं तु परस्य तर्कयन् स्वकर्मयोगं च विधाय वीर्यवान्।
चकार वेगं तु महाबलस्तदा मतिं च चक्रेऽस्य वधे महाकपिः ॥ ३०

स तस्य तानष्टहयान्महाजवान् समाहितान् भारसहान्विवर्तने।
जघान वीरः पथि वायुसेविते तलप्रहारैः पवनात्मजः कपिः ॥ ३१

ततस्तलेनाभिहतो महारथस्स तस्य पिङ्गाधिपमन्त्रिनिर्जितः।
प्रभग्ननीडः परिमुक्तकूबरः पपात भूमौ हतवाजिरम्बरात् ॥ ३२

स तं परित्यज्य महारथो रथं सकार्मुकः खड्गधरः खमुत्पतन्।
तपोऽभियोगादृषिरुग्रवीर्यवान् विहाय देहं मरुतामिवालयम् ॥ ३३

ततः कपिस्तं विचरन्तमम्बरे पतत्रिराजानिलसिद्धसेविते।
समेत्य तं मारुततुल्यविक्रमः क्रमेण जग्राह स पादयोर्दृढम् ॥ ३४

स तं समाविध्य सहस्रशः कपिर्महोरगं गृह्य इवाण्डजेश्वरः।
मुमोच वेगात्पितृतुल्यविक्रमो महीतले संयति वानरोत्तमः ॥ ३५

स भग्नबाहूरुकटीशिरोधरः क्षरन्नसृङ्निर्मथितास्थिलोचनः।
स भग्नसन्धिः प्रविकीर्णबन्धनो हतः क्षितौ वायुसुतेन राक्षसः ॥

महाकपिर्भूमितले निपीड्य तं चकार रक्षोधिपतेर्महद्भयम् ।
महर्षिभिश्चक्रचरैर्महाव्रतैस्समेत्य भूतैश्च सयक्षपन्नगैः ॥ ३७
सुरैश्च सेन्द्रैर्भृशजातविस्मयैर्हते कुमारे स कपिर्निरीक्षितः ।
निहत्य तं वज्रिसुतोपमप्रभं कुमारमक्षं क्षतजोपमेक्षणम् ॥ ३८
तमेव वीरोऽभिजगाम तोरणं कृतक्षणः काल इव प्रजाक्षये ।

॥ इति श्रीमत्सुन्दरकाण्डे सप्तचत्वारिंशस्सर्गः ॥

---

## ॥ अष्टचत्वारिंशस्सर्गः ॥

ततस्स रक्षोधिपतिर्महात्मा हनूमताऽक्षे निहते कुमारे ।
मनस्समाधाय तदेन्द्रकल्पं समादिदेशेन्द्रजितं सरोषम् ॥ १
त्वमस्त्रविच्छस्त्रविदां वरिष्ठस्सुरासुराणामपि शोकदाता ।
सुरेषु सेन्द्रेषु च दृष्टकर्मा पितामहाराधनसञ्चितास्त्रः ॥ २
तवास्त्रबलमासाद्य नासुरा न मरुद्गणाः ।
न शेकुस्समरे स्थातुं सुरेश्वरसमाश्रिताः ॥ ३
न कश्चित्त्रिषु लोकेषु संयुगे न गतश्रमः ।
भुजवीर्याभिगुप्तश्च तपसा चाभिरक्षितः ॥ ४
देशकालविभागज्ञस्त्वमेव मतिसत्तमः ।
न तेऽस्त्यशक्यं समरेषु कर्मणा न तेऽस्त्यकार्यं मतिपूर्वमन्त्रणे ।
न सोऽस्ति कश्चित्त्रिषु सङ्ग्रहेषु वै न वेद यस्तेऽस्त्रबलं बलं च ते ॥ ५
ममानुरूपं तपसो बलं च पराक्रमश्चास्त्रबलं च संयुगे ।
न त्वां समासाद्य रणावमर्दे मनश्श्रमं गच्छति निश्चितार्थम् ॥ ६
निहताः किङ्कराः सर्वे जम्बुमाली च राक्षसः ।

अमात्यपुत्रा वीराश्च पञ्च सेनाग्रयायिनः ॥ ७

बलानि सुसमृद्धानि साश्वनागरथानि च ।
सहोदरस्ते दयितः कुमारोऽक्षश्च सूदितः ॥ ८

न हि तेष्वेव मे सारो यस्त्वय्यरिनिषूदन ।
इदं हि दृष्ट्वा मतिमन्महद्बलं कपेः प्रभावं च पराक्रमं च ।
त्वमात्मनश्चापि समीक्ष्य सारं कुरुष्व वेगं स्वबलानुरूपम् ॥ ९

बलावमर्दस्त्वयि सन्निकृष्टे यथा गते शाम्यति शान्तशत्रौ ।
तथा समीक्ष्यात्मबलं परञ्च समारभस्वास्त्रविदां वरिष्ठ ॥ १०

न वीर सेना गणशो च्यवन्ति न वज्रमादाय विशालसारम् ।
न मारुतस्यास्य गतेः प्रमाणं न चाग्निकल्पः करणेन हन्तुम् ॥ ११

तमेवमर्थं प्रसमीक्ष्य सम्यक् स्वकर्मसाम्याद्धि समाहितात्मा ।
स्मरंश्च दिव्यं धनुषोऽस्त्रवीर्यं व्रजाक्षतं कर्म समारभस्व ॥ १२

न खल्वियं मतिश्श्रेष्ठा यत्त्वां सम्प्रेषयाम्यहम् ।
इयञ्च राजधर्माणां क्षत्रस्य च मतिर्मता ॥ १३

नानाशस्त्रैश्च सङ्ग्रामे वैशारद्यमरिन्दम ।
अवश्यमेव योद्धव्यं काम्यश्च विजयो रणे ॥ १४

ततः पितुस्तद्वचनं निशम्य प्रदक्षिणं दक्षसुतप्रभावः ।
चकार भर्तारमदीनसत्त्वो रणाय वीरः प्रतिपन्नबुद्धिः ॥ १५

ततस्तैस्स्वगणैरिष्टैरिन्द्रजित्प्रतिपूजितः ।
युद्धोद्धतः कृतोत्साहस्सङ्ग्रामं प्रत्यपद्यत ॥ १६

श्रीमान्पद्मपलाशाक्षो राक्षसाधिपतेस्सुतः ।
निर्जगाम महातेजास्समुद्र इव पर्वसु ॥ १७

सपक्षिराजोपमतुल्यवेगैर्व्यालैश्चतुर्भिस्सिततीक्ष्णदंष्ट्रैः ।
रथं समायुक्तमसङ्गवेगं समारुरोहेन्द्रजिदिन्द्रकल्पः ॥ १८

स रथी धन्विनां श्रेष्ठश्शस्त्रज्ञोऽस्त्रविदां वरः ।
रथेनाभिययौ क्षिप्रं हनुमान्यत्र सोऽभवत् ॥ १९

स तस्य रथनिर्घोषं ज्यास्वनं कार्मुकस्य च ।
निशम्य हरिवीरोऽसौ सम्प्रहृष्टतरोऽभवत् ॥ २०

सुमहच्चापमादाय शितशल्यांश्च सायकान् ।
हनुमन्तमभिप्रेत्य जगाम रणपण्डितः ॥ २१

तस्मिंस्ततस्संयति जातहर्षे रणाय निर्गच्छति बाणपाणौ ।
दिशश्च सर्वाः कलुषा बभूवुर्मृगाश्च रौद्रा बहुधा विनेदुः ॥ २२

समागतास्तत्र तु नागयक्षा महर्षयश्चक्रचराश्च सिद्धाः ।
नभस्समावृत्य च पक्षिसङ्घा विनेदुरुच्चैः परमप्रहृष्टाः ॥ २३

आयान्तं सरथं दृष्ट्वा तूर्णमिन्द्रजितं कपिः ।
विननाद महानादं व्यवर्धत च वेगवान् ॥ २४

इन्द्रजित्तु रथं दिव्यमास्थितश्चित्रकार्मुकः ।
धनुर्विस्फारयामास तटिदूर्जितनिस्स्वनम् ॥ २५

ततस्समेतावतितीक्ष्णवेगौ महाबलौ तौ रणनिर्विशङ्कौ ।
कपिश्च रक्षोधिपतेश्च पुत्रस्सुरासुरेन्द्राविव बद्धवैरौ ॥ २६

स तस्य वीरस्य महारथस्य धनुष्मतस्संयति सम्मतस्य ।
शरप्रवेगं व्यहनत्प्रवृद्धश्चचार मार्गे पितुरप्रमेये ॥ २७

ततश्शरानायततीक्ष्णशल्यान्सुपत्रिणः काञ्चनचित्रपुङ्खान् ।
मुमोच वीरः परवीरहन्ता सुसन्नतान्वज्रनिपातवेगान् ॥ २८

ततस्तु तत्स्यन्दननिस्स्वनञ्च मृदङ्गभेरीपटहस्वनञ्च ।
विकृष्यमाणस्य च कार्मुकस्य निशम्य घोषं पुनरुत्पपात ॥ २९

शराणामन्तरेष्वाशु व्यवर्तत महाकपिः ।
हरिस्तस्याभिलक्ष्यस्य मोघयन्लक्ष्यसङ्ग्रहम् ॥ ३०

शराणामग्रतस्तस्य पुनस्समभिवर्तत ।
प्रसार्य हस्तौ हनुमानुत्पपातानिलात्मजः ॥ ३१

तावुभौ वेगसम्पन्नौ रणकर्मविशारदौ ।
सर्वभूतमनोग्राहि चक्रतुर्युद्धमुत्तमम् ॥ ३२

हनूमतो वेद न राक्षसोऽन्तरं न मारुतिस्तस्य महात्मनोऽन्तरम् ।
परस्परं निर्विषहौ बभूवतुस्समेत्य तौ देवसमानविक्रमौ ॥ ३३

ततस्तु लक्ष्ये स विहन्यमाने शरेष्वमोघेषु च सम्पतत्सु ।
जगाम चिन्तां महतीं महात्मा समाधिसंयोगसमाहितात्मा ॥ ३४

ततो मतिं राक्षसराजसूनुश्चकार तस्मिन्हरिवीरमुख्ये ।
अवध्यतां तस्य कपेस्समीक्ष्य कथं निगच्छेदिति निग्रहार्थम् ॥ ३५

ततः पैतामहं वीरस्सोऽस्त्रमस्त्रविदां वरः ।
सन्दधे सुमहातेजास्तं हरिप्रवरं प्रति ॥ ३६

अवध्योऽयमिति ज्ञात्वा तमस्त्रेणास्त्रतत्त्ववित् ।
निजग्राह महाबाहुर्मारुतात्मजमिन्द्रजित् ॥ ३७

तेन बद्धस्ततोऽस्त्रेण राक्षसेन स वानरः ।
अभवन्निर्विचेष्टश्च पपात स महीतले ॥ ३८

ततोऽथ बुद्ध्वा स तदास्त्रबन्धं प्रभोः प्रभावाद्विगतात्मवेगः ।
पितामहानुग्रहमात्मनश्च विचिन्तयामास हरिप्रवीरः ॥ ३९

ततस्स्वायम्भुवैर्मन्त्रैर्ब्रह्मास्त्रमभिमन्त्रितम् ।
हनुमांश्चिन्तयामास वरदानं पितामहात् ॥ ४०

न मेऽस्त्रबन्धस्य च शक्तिरस्ति विमोक्षणे लोकगुरोः प्रभावात् ।
इत्येवमुक्त्वा विहितोऽस्त्रबन्धो मयात्मयोनेरनुवर्तितव्यः ॥ ४१

स वीर्यमस्त्रस्य कपिर्विचार्य पितामहानुग्रहमात्मनश्च ।
विमोक्षशक्तिं परिचिन्तयित्वा पितामहाज्ञामनुवर्तते स्म ॥ ४२

अस्त्रेणापि हि बद्धस्य भयं मम न जायते ।
पितामहमहेन्द्राभ्यां रक्षितस्यानिलेन च ॥ ४३

ग्रहणे चापि रक्षोभिर्महान्मे गुणदर्शनः ।
राक्षसेन्द्रेण संवादस्तस्माद्गृह्णन्तु मां परे ॥ ४४

स निश्चितार्थः परवीरहन्ता समीक्ष्यकारी विनिवृत्तचेष्टः ।
परैः प्रसह्याभिगतैर्निगृह्य ननाद तैस्तैः परिभर्त्स्यमानः ॥ ४५

ततस्तं राक्षसा दृष्ट्वा निर्विचेष्टमरिन्दमम् ।
बबन्धुश्शणवल्कैश्च द्रुमचीरैश्च संहतैः ॥ ४६

स रोचयामास परैश्च बन्धनं प्रसह्य वीरैरभिनिग्रहं च ।
कौतूहलान्मां यदि राक्षसेन्द्रो द्रष्टुं व्यवस्येदिति निश्चितार्थः ॥ ४७

स बद्धस्तेन वल्केन विमुक्तोऽस्त्रेण वीर्यवान् ।
अस्त्रबन्धस्स चान्यं हि न बन्धमनुवर्तते ॥ ४८

अथेन्द्रजित्तु द्रुमचीरबद्धं विचार्य वीरः कपिसत्तमं तम् ।
विमुक्तमस्त्रेण जगाम चिन्तां नान्येन बद्धो ह्यनुवर्ततेऽस्त्रम् ॥ ४९

अहो महत्कर्म कृतं निरर्थकं न राक्षसैर्मन्त्रगतिर्विमृष्टा ।
पुनश्च नास्त्रे विहतेऽस्त्रमन्यत्प्रवर्तते संशयितास्स्म सर्वे ॥ ५०

अस्त्रेण हनुमान्मुक्तो नात्मानमवबुध्यत ।
कृष्यमाणस्तु रक्षोभिस्तैश्च बन्धैर्निपीडितः ॥ ५१

हन्यमानस्ततः क्रूरै राक्षसैः काष्ठमुष्टिभिः ।
समीपं राक्षसेन्द्रस्य प्राकृष्यत स वानरः ॥ ५२

अथेन्द्रजित्तं प्रसमीक्ष्य मुक्तमस्त्रेण बद्धं द्रुमचीरसूत्रैः ।
ऽव्यदर्शयत्तत्र महाबलं तं हरिप्रवीरं सगणाय राज्ञे ॥ ५३

तं मत्तमिव मातङ्गं बद्धं कपिवरोत्तमम् ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ ५४

कोऽयं कस्य कुतो वाऽत्र किं कार्यं को व्यपाश्रयः ? ।
इति राक्षसवीराणां तत्र सञ्जज्ञिरे कथाः ॥ ५५

हन्यतां दह्यतां वाऽपि भक्ष्यतामिति चापरे ।
राक्षसास्तत्र संक्रुद्धा परस्परमथाब्रुवन् ॥ ५६

अतीत्य मार्गं सहसा महात्मा स तत्र रक्षोऽधिपपादमूले ।
ददर्श राज्ञः परिचारवृद्धान् गृहं महारत्नविभूषितं च ॥ ५७

स ददर्श महातेजा रावणः कपिसत्तमम् ।
रक्षोभिर्विकृताकारैः कृष्यमाणमितस्ततः ॥ ५८

राक्षसाधिपतिं चापि ददर्श कपिसत्तमः ।
तेजोबलसमायुक्तं तपन्तमिव भास्करम् ॥ ५९

स रोषसंवर्तिततांम्रदृष्टिर्दशाननस्तं कपिमन्ववेक्ष्य ।
अथोपविष्टान् कुलशीलवृद्धान् समादिशत्तं प्रति मन्त्रिमुख्यान् ॥ ६०

यथाक्रमं तैस्स कपिर्विपृष्टः कार्यार्थमर्थस्य च मूलमादौ ।
निवेदयामास हरीश्वरस्य दूतस्सकाशादहमागतोऽस्मि ॥ ६१

इति श्रीमत्सुन्दरकाण्डे अष्टचत्वारिंशस्सर्गः ॥

---

## ॥ एकोनपञ्चाशस्सर्गः ॥

ततस्स कर्मणा तस्य विस्मितो भीमविक्रमः ।
हनुमान्रोषताम्राक्षो रक्षोधिपमवैक्षत ॥ १
भ्राजमानं महार्हेण काञ्चनेन विराजितम् ।
मुक्ताजालावृतेनाथ मकुटेन महाद्युतिम् ॥ २
वज्रसंयोगसंयुक्तैर्महार्हमणिविग्रहैः ।
हैमैराभरणैश्चित्रैर्मनसेव प्रकल्पितैः ॥ ३
महार्हक्षौमसंवीतं रक्तचन्दनरूषितम् ।
स्वनुलिप्तं विचित्राभिर्विविधाभिश्च भक्तिभिः ॥ ४
विवृतैर्दर्शनीयैश्च रक्ताक्षैर्भीमविक्रमैः ।
दीप्ततीक्ष्णमहादंष्ट्रैः प्रलम्बदशनच्छदैः ॥ ५
शिरोभिर्दशभिर्वीरं भ्राजमानं महौजसम् ।
नानाव्याळसमाकीर्णैश्शिखरैरिव मन्दरम् ॥ ६
नीलाञ्जनचयप्रख्यं हारेणोरसि राजता ।
पूर्णचन्द्राभवक्त्रेण सबलाकमिवाम्बुदम् ॥ ७
बाहुभिर्बद्धकेयूरैश्चन्दनोत्तमरूषितैः ।
भ्राजमानांगदैः पीनैः पञ्चशीर्षैरिवोरगैः ॥ ८
महति स्फाटिके चित्रे रत्नसंयोगसंस्कृते ।
उत्तमास्तरणास्तीर्णे सूपविष्टं वरासने ॥ ९
अलङ्कृताभिरत्यर्थं प्रमदाभिस्समन्ततः ।
वालव्यजनहस्ताभिरारात्समुपसेवितम् ॥ १०

दुर्धरेण प्रहस्तेन महापार्श्वेन रक्षसा ।
मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्निकुम्भेन च मन्त्रिणा ॥ ११

सुखोपविष्टं रक्षोभिश्चतुर्भिर्बलदर्पितैः ।
कृत्स्नः परिवृतो लोकश्चतुर्भिरिव सागरैः ॥ १२

मन्त्रिभिर्मन्त्रतत्त्वज्ञैरन्यैश्च शुभबुद्धिभिः ।
अन्वास्यमानं रक्षोभिस्सुरैरिव सुरेश्वरम् ॥ १३

अपश्यद्राक्षसपतिं हनुमानतितेजसम् ।
विष्ठितं मेरुशिखरे सतोयमिव तोयदम् ॥ १४

स तैस्सम्पीड्यमानोऽपि रक्षोभिर्भीमविक्रमैः ।
विस्मयं परमं गत्वा रक्षोधिपमवैक्षत ॥ १५

भ्राजमानं ततो दृष्ट्वा हनुमान्राक्षसेश्वरम् ।
मनसा चिन्तयामास तेजसा तस्य मोहितः ॥ १६

अहो रूपमहो धैर्यमहो सत्त्वमहो द्युतिः ।
अहो राक्षसराजस्य सर्वलक्षणयुक्तता ॥ १७

यद्यधर्मो न बलवान् स्यादयं राक्षसेश्वरः ।
स्यादयं सुरलोकस्य सशक्रस्यापि रक्षिता ॥ १८

अस्य क्रूरैर्नृशंसैश्च कर्मभिर्लोककुत्सितैः ।
तेन बिभ्यति खल्वस्माल्लोकास्सामरदानवाः ॥ १९

अयं ह्युत्सहते क्रुद्धः कर्तुमेकार्णवं जगत् ।
इति चिन्तां बहुविधामकरोन्मतिमान्हरिः ॥ २०
दृष्ट्वा राक्षसराजस्य प्रभावममितौजसः ॥

इति श्रीमत्सुन्दरकाण्डे एकोनपञ्चाशस्सर्गः ॥

## ॥ पञ्चाशस्सर्गः ॥

तमुद्वीक्ष्य महाबाहुः पिङ्गाक्षं पुरतस्स्थितम् ।
कोपेन महताऽऽविष्टो रावणो लोकरावणः ॥ १

शङ्काहृतात्मा दध्यौ स कपीन्द्रं तेजसा वृतम् ।
किमेष भगवान्नन्दी भवेत्साक्षादिहागतः ॥ २

येन शप्तोऽस्मि कैलासे मया सञ्चालिते पुरा ।
सोऽयं वानरमूर्तिस्स्यात्किंस्विद्बाणोऽपि वाऽसुरः ॥ ३

स राजा रोषताम्राक्षः प्रहस्तं मन्त्रिसत्तमम् ।
कालयुक्तमुवाचेदं वचो विपुलमर्थवत् ॥ ४

दुरात्मा पृच्छ्यतामेष कुतः किं वाऽस्य कारणम् ।
वनभङ्गे च कोऽस्यार्थो राक्षसीनां च तर्जने ॥ ५

मत्पुरीमप्रधृष्यां वाऽऽगमने किं प्रयोजनम् ।
आयोधने वा किं कार्यं पृच्छ्यतामेष दुर्मतिः ॥ ६

रावणस्य वचश्श्रुत्वा प्रहस्तो वाक्यमब्रवीत् ।
समाश्वसिहि भद्रं ते न भीः कार्या त्वया कपे ॥ ७

यदि तावत्त्वमिन्द्रेण प्रेषितो रावणालयम् ।
तत्त्वमाख्याहि माभूत्ते भयं वानर मोक्ष्यसे ॥ ८

यदि वैश्रवणस्य त्वं यमस्य वरुणस्य च ।
चाररूपमिदं कृत्वा प्रविष्टो नः पुरीमिमाम् ॥ ९

विष्णुना प्रेषितो वाऽपि दूतो विजयकाङ्क्षिणा ।
न हि ते वानरं तेजो रूपमात्रं तु वानरम् ॥ १०

तत्त्वतः कथयस्वाद्य ततो वानर मोक्ष्यसे ।
अनृतं वदतश्चापि दुर्लभं तव जीवितम् ॥ ११
अथवा यन्निमित्तं ते प्रवेशो रावणालये ।
एवमुक्तो हरिश्रेष्ठस्तदा रक्षोगणेश्वरम् ॥ १२
अब्रवीन्नास्मि शक्रस्य यमस्य वरुणस्य वा ।
धनदेन न मे सख्यं विष्णुना नास्मि चोदितः ॥ १३
जातिरेव मम त्वेषा वानरोऽहमिहाऽऽगतः ।
दर्शने राक्षसेन्द्रस्य दुर्लभे तदिदं मया ॥ १४
वनं राक्षसराजस्य दर्शनार्थे विनाशितम् ।
ततस्ते राक्षसाः प्राप्ता बलिनो युद्धकाङ्क्षिणः ॥ १५
रक्षणार्थं तु देहस्य प्रतियुद्धा मया रणे ।
अस्त्रपाशैर्न शक्योऽहं बद्धुं देवासुरैरपि ॥ १६
पितामहादेव वरो ममाप्येषोऽभ्युपागतः ।
राजानं द्रष्टुकामेन मयाऽस्त्रमनुवर्तितम् ॥ १७
विमुक्तो ह्यहमस्त्रेण राक्षसैस्त्वभिपीडितः ।
केनचिद्राजकार्येण सम्प्राप्तोऽस्मि तवान्तिकम् ॥ १८
दूतोऽहमिति विज्ञेयो राघवस्यामितौजसः ।
श्रूयतां चापि वचनं मम पथ्यमिदं प्रभो ॥ १९

इति श्रीमत्सुन्दरकाण्डे पञ्चाशस्सर्गः ॥

## ॥ एकपञ्चाशस्सर्गः ॥

तं समीक्ष्य महासत्त्वं सत्त्ववान्हरिसत्तमः ।
वाक्यमर्थवदव्यग्रस्तमुवाच दशाननम् ॥ १
अहं सुग्रीवसन्देशादिह प्राप्तस्तवालयम् ।
राक्षसेन्द्र हरीशस्त्वां भ्राता कुशलमब्रवीत् ॥ २
भ्रातुश्शृणु समादेशं सुग्रीवस्य महात्मनः ।
धर्मार्थोपहितं वाक्यमिह चामुत्र च क्षमम् ॥ ३
राजा दशरथो नाम रथकुञ्जरवाजिमान् ।
पितेव बन्धुर्लोकस्य सुरेश्वरसमद्युतिः ॥ ४
ज्येष्ठस्तस्य महाबाहुः पुत्रः प्रियकरः प्रभुः ।
पितुर्निदेशान्निष्क्रान्तः प्रविष्टो दण्डकावनम् ॥ ५
लक्ष्मणेन सह भ्रात्रा सीतया चापि भार्यया ।
रामो नाम महातेजा धर्म्यं पन्थानमाश्रितः ॥ ६
तस्य भार्या वने नष्टा सीता पतिमनुव्रता ।
वैदेहस्य सुता राज्ञो जनकस्य महात्मनः ॥ ७
स मार्गमाणस्तां देवीं राजपुत्रस्सहानुजः ।
ऋश्यमूकमनुप्राप्तस्सुग्रीवेण समागतः ॥ ८
तस्य तेन प्रतिज्ञातं सीतायाः परिमार्गणम् ।
सुग्रीवस्यापि रामेण हरिराज्यं निवेदितम् ॥ ९
ततस्तेन मृधे हत्वा राजपुत्रेण वालिनम् ।
सुग्रीवः स्थापितो राज्ये हर्यृक्षाणां गणेश्वरः ॥ १०

त्वया विज्ञातपूर्वश्च वाली वानरपुङ्गवः ।
रामेण निहतस्संख्ये शरेणैकेन वानरः ॥ ११

स सीतामार्गणे व्यग्रस्सुग्रीवस्सत्यसङ्गरः ।
हरीन् सम्प्रेषयामास दिशस्सर्वा हरीश्वरः ॥ १२

तां हरीणां सहस्राणि शतानि नियुतानि च ।
दिक्षु सर्वासु मार्गन्ते ह्यधश्चोपरि चाम्बरे ॥ १३

वैनतेयसमाः केचित्केचित्तत्रानिलोपमाः ।
असङ्गगतयश्शीघ्रा हरिवीरा महाबलाः ॥ १४

अहं तु हनुमान्नाम मारुतस्यौरसस्सुतः ।
सीतायास्तु कृते तूर्णं शतयोजनमायतम् ॥ १५

समुद्रं लङ्घयित्वैव तां दिदृक्षुरिहाऽऽगतः ।
भ्रमता च मया दृष्टा गृहे ते जनकात्मजा ॥ १६

तद्भवान्दृष्टधर्मार्थस्तपःकृतपरिग्रहः ।
परदारान्महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ १७

न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ १८

कश्च लक्ष्मणमुक्तानां रामकोपानुवर्तिनाम् ।
शराणामग्रतः स्थातुं शक्तो देवासुरेष्वपि ॥ १९

न चापि त्रिषु लोकेषु राजन्विद्येत कश्चन ।
राघवस्य व्यळीकं यः कृत्वा सुखमवाप्नुयात् ॥ २०

तत्त्रिकालहितं वाक्यं धर्म्यमर्थानुबन्धि च ।
बुध्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥ २१

दृष्टा हीयं मया देवी लब्धं यदिह दुर्लभम् ।
उत्तरं कर्म यच्छेषं निमित्तं तत्र राघवः ॥ २२
लक्षितेयं मया सीता तथा शोकपरायणा ।
गृह्य यां नाभिजानासि पञ्चास्यामिव पन्नगीम् ॥ २३
नेयं जरयितुं शक्या सासुरैरमरैरपि ।
विषसंसृष्टमत्यर्थं भुक्तमन्नमिवौजसा ॥ २४
तपस्सन्तापलब्धस्ते योऽयं धर्मपरिग्रहः ।
न स नाशयितुं न्याय्य आत्मप्राणपरिग्रहः ॥ २५
अवध्यतां तपोभिर्यां भवान् समनुपश्यति ।
आत्मनस्सासुरैर्देवैर्हेतुस्तत्राप्ययं महान् ॥ २६
सुग्रीवो न हि देवोऽयं नासुरो न च राक्षसः ।
न दानवो न गन्धर्वो न यक्षो न च पन्नगः ॥ २७
[मानुषो राघवो राजन् सुग्रीवश्च हरीश्वरः ।]
तस्मात्प्राणपरित्राणं कथं राजन्करिष्यसि ।
न तु धर्मोपसंहारमधर्मफलसंहितम् ॥ २८
तदेव फलमन्वेति धर्मश्चाधर्मनाशनः ।
प्राप्तं धर्मफलं तावद्भवता नात्र संशयः ॥ २९
फलमस्याप्यधर्मस्य क्षिप्रमेव प्रपत्स्यसे ।
जनस्थानवधं बुध्वा बुध्वा वालिवधं तथा ॥ ३०
रामसुग्रीवसख्यं च बुध्यस्व हितमात्मनः ।
कामं खल्वहमप्येकस्सवाजिरथकुञ्जराम् ॥ ३१

लङ्कां नाशयितुं शक्तस्तस्यैष तु विनिश्चयः ।
रामेण हि प्रतिज्ञातं हर्यृक्षगणसन्निधौ ॥ ३२

उत्सादनममित्राणां सीता यैस्तु प्रधर्षिता ।
अपकुर्वन्हि रामस्य साक्षादपि पुरन्दरः ॥ ३३

न सुखं प्राप्नुयादन्यः किं पुनस्त्वद्विधो जनः ।
यां सीतेत्यभिजानासि येयं तिष्ठति ते वशे ॥ ३४

कालरात्रीति तां विद्धि सर्वलङ्काविनाशिनीम् ।
तदलं कालपाशेन सीताविग्रहरूपिणा ॥ ३५

स्वयं स्कन्धावसक्तेन क्षममात्मनि चिन्त्यताम् ।
सीतायास्तेजसा दग्धां रामकोपप्रपीडिताम् ॥ ३६

दह्यमानामिमां पश्य पुरीं साट्टप्रतोलिकाम् ।
स्वानि मित्राणि मन्त्रींश्च ज्ञातीन्भ्रातॄन्सुतान्हितान् ॥ ३७

भोगान्दारांश्च लङ्कां च मा विनाशमुपानय ।
सत्यं राक्षसराजेन्द्र शृणुष्व वचनं मम ॥ ३८

रामदासस्य दूतस्य वानरस्य विशेषतः ।
सर्वान्लोकान्सुसंहृत्य सभूतान्सचराचरान् ॥ ३९

पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ।
देवासुरनरेन्द्रेषु यक्षरक्षोगणेषु च ॥ ४०

विद्याधरेषु सर्वेषु गन्धर्वेषूरगेषु च ।
सिद्धेषु किन्नरेन्द्रेषु पतत्रिषु च सर्वतः ॥ ४१

सर्वभूतेषु सर्वत्र सर्वकालेषु नास्ति सः ।
यो रामं प्रतियुध्येत विष्णुतुल्यपराक्रमम् ॥ ४२

सर्वलोकेश्वरस्यैवं कृत्वा विप्रियमुत्तमम् ।
रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ॥ ४३

देवाश्च दैत्याश्च निशाचरेन्द्र गन्धर्वविद्याधरनागयक्षाः ।
रामस्य लोकत्रयनायकस्य स्थातुं न शक्तास्समरेषु सर्वे ॥ ४४

ब्रह्मा स्वयम्भूश्चतुराननो वा रुद्रस्त्रिणेत्रस्त्रिपुरान्तको वा ।
इन्द्रो महेन्द्रस्सुरनायको वा त्रातुं न शक्ता युधि रामवध्यम् ॥ ४५

स सौष्ठवोपेतमदीनवादिनः कपेर्निशम्याप्रतिमोऽप्रियं वचः ।
दशाननः कोपविवृत्तलोचनस्समादिशत्तस्य वधं महाकपेः ॥ ४६

॥ इति श्रीमत्सुन्दरकाण्डे एकपञ्चाशस्सर्गः ॥

---

## ॥ द्विपञ्चाशस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा वानरस्य महात्मनः ।
आज्ञापयद्वधं तस्य रावणः क्रोधमूर्च्छितः ॥ १

वधे तस्य समाज्ञप्ते रावणेन दुरात्मना ।
निवेदितवतो दौत्यं नानुमेने विभीषणः ॥ २

तं रक्षोधिपतिं क्रुद्धं तच्च कार्यमुपस्थितम् ।
विदित्वा चिन्तयामास कार्यं कार्यविधौ स्थितः ॥ ३

निश्चितार्थस्ततस्साम्ना पूज्य शत्रुजिदग्रजम् ।
उवाच हितमत्यर्थं वाक्यं वाक्यविशारदः ॥ ४

क्षमस्व रोषं त्यज राक्षसेन्द्र प्रसीद मद्वाक्यमिदं शृणुष्व ।
वधं न कुर्वन्ति परावरज्ञाः दूतस्य सन्तो वसुधाधिपेन्द्राः ॥ ५

राजधर्मविरुद्धं च लोकवृत्तेश्च गर्हितम् ।
तव चासदृशं वीर कपेरस्य प्रमापणम् ॥ ६

धर्मज्ञश्च कृतज्ञश्च राजधर्मविशारदः ।
परावरज्ञो भूतानां त्वमेव परमार्थवित् ॥ ७

गृह्यन्ते यदि रोषेण त्वादृशोऽपि विपश्चितः ।
ततश्शास्त्रविपश्चित्त्वं श्रम एव हि केवलम् ॥ ८

तस्मात्प्रसीद शत्रुघ्न राक्षसेन्द्र दुरासद ।
युक्तायुक्तं विनिश्चित्य दूतदण्डो विधीयताम् ॥ ९

विभीषणवचश्श्रुत्वा रावणो राक्षसेश्वरः ।
रोषेण महताऽविष्टो वाक्यमुत्तरमब्रवीत् ॥ १०

न पापानां वधे पापं विद्यते शत्रुसूदन ।
तस्मादेनं वधिष्यामि वानरं पापचारिणम् ॥ ११

अधर्ममूलं बहुदोषयुक्तमनार्यजुष्टं वचनं निशम्य ।
उवाच वाक्यं परमार्थतत्त्वं विभीषणो बुद्धिमतां वरिष्ठः ॥ १२

प्रसीद लङ्केश्वर राक्षसेन्द्र धर्मार्थयुक्तं वचनं शृणुष्व ।
दूतानवध्यान्समयेषु राजन्सर्वेषु सर्वत्र वदन्ति सन्तः ॥ १३

असंशयं शत्रुरयं प्रवृद्धः कृतं ह्यनेनाप्रियमप्रमेयम् ।
न दूतवध्यां प्रवदन्ति सन्तो दूतस्य दृष्टा बहवो हि दण्डाः ॥ १४

वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्ष्मणसन्निपातः ।
एतान् हि दूते प्रवदन्ति दण्डान्वधस्तु दूतस्य न नश्श्रुतोऽपि ॥ १५

कथं च धर्मार्थविनीतबुद्धिः परावरप्रत्ययनिश्चितार्थः ।
भवद्विधः कोपवशे हि तिष्ठेत् कोपं नियच्छन्ति हि सत्त्ववन्तः ॥

न धर्मवादे न च लोकवृत्ते न शास्त्रबुद्धिग्रहणेषु चापि।
विद्येत कश्चित्तव वीर तुल्यस्त्वं ह्युत्तमस्सर्वसुरासुराणाम् ॥ १७

[पराक्रमोत्साहमनस्विनाञ्च सुरासुराणामपि दुर्जयेन ।
त्वयाऽप्रमेयेन सुरेन्द्रसङ्घाः जिताश्च युद्धेष्वसकृन्नरेन्द्राः ॥

इत्थं विधास्यामरदैत्यशत्रोश्शूरस्य वीरस्य तवाजितस्य ।
कुर्वन्ति वीरा मनसाप्यलीकं प्राणैर्विमुक्ता न तु भोः पुरा ते ॥]

न चाप्यस्य कपेर्घाते कञ्चित्पश्याम्यहं गुणम् ।
तेष्वयं पात्यतां दण्डो यैरयं प्रेषितः कपिः ॥ १८

साधुर्वा यदि वाऽसाधुः परैरेष समर्पितः ।
ब्रुवन्परार्थं परवान्न दूतो वधमर्हति ॥ १९

अपि चास्मिन्हते राजन्नान्यं पश्यामि खेचरम् ।
इह यः पुनरागच्छेत्परं पारं महोदधेः ॥ २०

तस्मान्नास्य वधे यत्नः कार्यः परपुरञ्जय ;
भवान्सेन्द्रेषु देवेषु यत्नमास्थातुमर्हति ॥ २१

अस्मिन्विनष्टे न हि दूतमन्यं पश्यामि यस्तौ नरराजपुत्रौ ।
युद्धाय युद्धप्रियदुर्विनीतावुद्योजयेद्दीर्घपथावरुद्धौ ॥ २२

[अस्मिन्हते वानरयूथमुख्ये सर्वापदं सम्प्रवदन्ति सन्तः ।
न हि प्रपश्यामि गुणं यशो वा लोकापवादो भवति प्रसिद्धः ॥

मूढैः प्रगल्भैरपि दुर्विनीतैर्यैर्वानरोऽयं पुरुषैर्विसृष्टः ।
तेषां वधार्थं कुरु वीर यत्नं शीघ्रं विनाशाय निशाचरेन्द्र ॥

कुरुष्व तावत्परमप्रयत्नं धर्मं समास्थाय सुरेन्द्रशत्रो ।
देवेषु सर्वेषु सवासवेषु दैत्येषु सर्वेषु सदानवेषु ॥

कृत्वा प्रयत्नं सुदृढं सुशीघ्रं मद्वाक्यमेवं मनसा प्रगृह्य ।
तौ राजपुत्रौ विनिगृह्य वीरौ जयं परं प्राप्स्यसि राक्षसेन्द्र ॥]
पराक्रमोत्साहमनस्विनां च सुरासुराणामपि दुर्जयेन ।
त्वया मनो नन्दन नैर्ऋतानां युद्धायतिर्नाशयितुं न युक्ता ॥ २३
हिताश्च शूराश्च समाहिताश्च कुलेषु जाताश्च महागुणेषु ।
मनस्विनश्शस्त्रभृतां वरिष्ठाः कोट्यग्रतस्ते सुभृताश्च योधाः ॥ २४
तदेकदेशेन बलस्य तावत्केचित्तवाऽऽदेशकृतोऽभियान्तु ।
तौ राजपुत्रौ विनिगृह्य मूढौ परेषु ते भावयितुं प्रभावम् ॥ २५
निशाचराणामधिपोऽनुजस्य विभीषणस्योत्तमवाक्यमिष्टम् ।
जग्राह बुद्ध्या सुरलोकशत्रुर्महाबलो राक्षसराजमुख्यः ॥ २६
[किं वानरं ब्रह्म परं च सत्यं सर्वस्य बीजं जगतोऽस्य विष्णोः ।
यद्देवदेवस्य परञ्च तेजः तदेव तेजः कपिरेष वीरः ॥
वधाय मे वैष्णवतेज एव निस्संशयोऽयं कपिरूपधारी ।
इत्येवमेतद्बहुधा विचिन्त्य रक्षोधिपः क्रोधवशं जगाम ॥
क्रोधञ्च जातं हृदये निरुध्य विभीषणोक्तं वचनं सुपूज्य ।]
उवाच रक्षोधिपतिर्महात्मा विभीषणं शस्त्रभृतां वरिष्ठम् ॥]

इति श्रीमत्सुन्दरकाण्डे द्विपञ्चाशस्सर्गः ॥

---

## ॥ त्रिपञ्चाशस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा दशग्रीवो महाबलः ।
देशकालहितं वाक्यं भ्रातुरुत्तरमब्रवीत् ॥ १

सम्यगुक्तं हि भवता दूतवध्या विगर्हिता ।
अवश्यं तु वधादन्यः क्रियतामस्य निग्रहः ॥ २

कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् ।
तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु ॥ ३

ततः पश्यन्त्विमं दीनमङ्गवैरूप्यकर्शितम् ।
समित्त्रज्ञातयस्सर्वे बान्धवास्ससुहृज्जनाः ॥ ४

आज्ञापयद्राक्षसेन्द्रः पुरं सर्वं सचत्वरम् ।
लाङ्गूलेन प्रदीप्तेन रक्षोभिः परिणीयताम् ॥ ५

तस्य तद्वचनं श्रुत्वा राक्षसाः कोपकर्शिताः ।
वेष्टयन्ति स्म लाङ्गूलं जीर्णैः कार्पासकैः पटैः ॥ ६

संवेष्ट्यमाने लाङ्गूले व्यवर्धत महाकपिः ।
शुष्कमिन्धनमासाद्य वनेष्विव हुताशनः ॥ ७

तैलेन परिषिच्याथ तेऽग्निं तत्राभ्यपातयन् ।
लाङ्गूलेन प्रदीप्तेन राक्षसांस्तानपातयत् ॥ ८

रोषामर्षपरीतात्मा बालसूर्यसमाननः ।
लाङ्गूलं सम्प्रदीप्तं तु द्रष्टुं तस्य हनूमतः ॥ ९

सह स्त्रीबालवृद्धाश्च जग्मुः प्रीता निशाचराः ।
स भूयस्सङ्गतैः क्रूरैः राक्षसैर्हरिसत्तमः ॥ १०

निबद्धः कृतवान्वीरस्तत्कालसदृशीं मतिम् ।
कामं खलु न मे शक्ता निबद्धस्यापि राक्षसाः ॥ ११

छित्त्वा पाशान्समुत्पत्य हन्यामहमिमान्पुनः ।
यदि भर्तुर्हितार्थाय चरन्तं भर्तृशासनात् ॥ १२

बध्नन्त्येते दुरात्मानो न तु मे निष्कृतिः कृता ।
सर्वेषामेव पर्याप्तो राक्षसानामहं युधि ॥ १३

किन्तु रामस्य प्रीत्यर्थं विषहिष्येऽहमीदृशम् ।
लङ्का चारयितव्या वै पुनरेव भवेदिति ॥ १४

रात्रौ न हि सुदृष्टा मे दुर्गकर्मविधानतः ।
अवश्यमेव द्रष्टव्या मया लङ्का निशाक्षये ॥ १५

कामं बद्धस्य मे भूयः पुच्छस्योद्दीपनेन च ।
पीडां कुर्वन्तु रक्षांसि न मेऽस्ति मनसश्श्रमः ॥ १६

ततस्ते संवृताकारं सत्त्ववन्तं महाकपिम् ।
परिगृह्य ययुर्हृष्टा राक्षसाः कपिकुञ्जरम् ॥ १७

शङ्खभेरीनिनादैस्तं घोषयन्तस्स्वकर्मभिः ।
राक्षसाः क्रूरकर्माणश्चारयन्ति स्म तां पुरीम् ॥ १८

अन्वीयमानो रक्षोभिर्ययौ सुखमरिन्दमः ।
हनुमांश्चारयामास राक्षसानां महापुरीम् ॥ १९

अथापश्यद्विमानानि विचित्राणि महाकपिः ।
संवृतान्भूमिभागांश्च सुविभक्तांश्च चत्वरान् ॥ २०

वीथीश्च गृहसम्बाधाः कपिश्शृङ्गाटकानि च ।
तथा रथ्योपरथ्याश्च तथैव गृहकान्तरान् ॥ २१

गृहांश्च मेघसङ्काशान्ददर्श पवनात्मजः ।
चत्वरेषु चतुष्केषु राजमार्गे तथैव च ॥ २२

घोषयन्ति कपिं सर्वे चारी क इति राक्षसाः ।
स्त्रीबालवृद्धा निर्जग्मुस्तत्र तत्र कुतूहलात् ॥ २३

तं प्रदीपितलाङ्गूलं हनुमन्तं दिदृक्षवः ।
दीप्यमाने ततस्तस्य लाङ्गूलाग्रे हनूमतः ॥ २४
राक्षस्यस्ता विरूपाक्ष्यश्शंसुर्देव्यास्तदप्रियम् ।
यस्त्वया कृतसंवादस्सीते ताम्रमुखः कपिः ॥ २५
लाङ्गूलेन प्रदीप्तेन स एष परिणीयते ।
श्रुत्वा तद्वचनं क्रूरमात्मापहरणोपमम् ॥ २६
वैदेही शोकसन्तप्ता हुताशनमुपागमत् ।
मङ्गलाभिमुखी तस्य सा तदाऽऽसीन्महाकपेः ॥ २७
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ।
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ॥ २८
यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ।
यदि किञ्चिदनुक्रोशस्तस्य मय्यस्ति धीमतः ॥ २९
यदि वा भाग्यशेषो मे शीतो भव हनूमतः ।
यदि मां वृत्तसम्पन्नां तत्समागमलालसाम् ॥ ३०
स विजानाति धर्मात्मा शीतो भव हनूमतः ।
यदि मां तारयेदार्यस्सुग्रीवस्सत्यसङ्गरः ॥ ३१
अस्माद्दुःखाम्बुसंरोधाच्छीतो भव हनूमतः ।
ततस्तीक्ष्णार्चिरव्यग्रः प्रदक्षिणशिखोऽनलः ॥ ३२
जज्वाल मृगशावाक्ष्याश्शंसन्निव शिवं कपेः ।
हनुमज्जनकश्चापि पुच्छानलयुतोऽनिलः ॥ ३३
ववौ स्वास्थ्यकरो देव्याः प्रालेयानिलशीतलः ।

[तां तदा परमोद्विग्नां सीतां शोकाभिकर्शिताम् ।
हनूमति गृहीते तु रक्षोभिर्भीमविक्रमैः ॥

उवाच सरमा वाक्यं तामाश्वासयितुं तदा ।
माशुचो देवि वैदेहि हनूमन्तं महाकपिम् ॥

हत्वा तु रक्षिणस्सर्वान् राक्षसांस्तत एव सः ।
पुरीं लङ्कां दहति स साक्षादिव हुताशनः ॥

भवनाद्भवनं गच्छन्नसावत्यन्तवीर्यवान् ।
प्रासादवरसंस्थाश्च गवाक्षस्थाश्च योषितः ॥

वह्निप्रदीप्तनयनाः तथा क्रन्दन्ति दुःखिताः ।
एता वरविशालाक्ष्यो वह्निज्वालासमावृताः ॥

अपश्यन्तः क्वचित् स्थातुं सर्वतोऽग्निसमावृताः ।
वह्नावभ्युत्पतन्त्याशु कर्तव्यं नैव जज्ञिरे ॥

अभिधावन्ति सहसा क्रोशन्त्यास्सह बालकैः ।
अवकुण्ठानि कृत्वा स्म वासोभिर्वेष्टितास्तदा ॥

स्तम्भैराजतसौवर्णैः प्रवाळमणिचारुभिः ।
दृश्यन्तेऽग्निसमासक्ता वह्नौ वह्नेरिवोद्यताः ॥

प्रासादमाला बहुधा अग्निदग्धाः पतन्ति वा ।
अर्चिषेव हिरण्यानां प्रभाभिः कृष्णवर्त्मनः ॥

दीप्यमाना इवाभाति लङ्केयं कालपर्यये ।
क्वचिद्दग्धाः प्रदेशास्तु क्वचिद्दग्धा विनाशिताः ॥

बहुभौमा विमान्ति स्म गृहाणां भूमयश्शुभाः ।
कान्ताभिस्सह वित्रस्ता दृश्यन्ते राक्षसास्तदा ॥

हाहेत्युच्चैर्वदन्ति स्म त्रातारं नाभिजज्ञिरे ।
सम्प्रदीप्तां पुरीं लङ्कां हनुमद्वीर्यधर्षिताम् ॥
अन्तः पुराणि सर्वाणि दृष्ट्वा दुद्रुविरे तदा ।
कचित्कुङ्कुमवर्णाभाः कचित्किंशुकसंनिभाः ॥
कचिन्मलिनसङ्काशाः शिखा वह्नेश्चकाशिरे ।
धूमेन संवृताः केचिद्गृहोद्देशास्सुशोभनाः ॥
वर्षाकाले तु संप्राप्ते घनैरिव नभस्तलम् ।
देवि व्यपैतु ते त्रासो हनूमन्तं प्रति भिये ॥
दग्ध्वैव लङ्कां सुमहान्व्योम्नि वीरः प्रकाशते ।
दीर्घैर्घनाम्बुसंरोधैः मुक्तचन्द्र इवामलः ॥
एतच्छ्रुत्वाऽभवत्प्रीता सीता शशिनिभानना ।
निर्वृतिं परमां प्राप्ता बाला स्वस्थाऽभवत्तदा ॥]
दह्यमाने च लाङ्गूले चिन्तयामास वानरः ॥ ३४
प्रदीप्तोऽग्निरयं कस्मान्न मां दहति सर्वतः ।
दृश्यते च महाज्वालः करोति न च मे रुजम् ॥ ३५
शिशिरस्येव सम्पातो लाङ्गूलाग्रे प्रतिष्ठितः ।
अथवा तदिदं व्यक्तं यद्दृष्टं प्लवता मया ॥ ३६
रामप्रभावादाश्चर्यं पर्वतस्सरितां पतौ ।
यदि तावत्समुद्रस्य मैनाकस्य च धीमतः ॥ ३७
रामार्थं सम्भ्रमस्तादृक्किमग्निर्न करिष्यति ।
सीतायाश्चानृशंस्येन तेजसा राघवस्य च ॥ ३८

पितुश्च मम सख्येन न मां दहति पावकः ।
भूयस्स चिन्तयामास मुहूर्तं कपिकुञ्जरः । ३९
[कथमस्माद्विधस्येह बन्धनं राक्षसाधमैः ।
प्रतिक्रियास्य युक्ता स्यात्सति मह्यं पराक्रमे ।
ततश्छित्वा च तान्पाशान्वेगवान्वै महाकपिः ॥]
उत्पपाताथ वेगेन ननाद च महाकपिः ।
पुरद्वारं ततश्श्रीमाञ्शैलशृङ्गमिवोन्नतम् ॥ ४०
विभक्तरक्षस्सम्बाधमाससादानिलात्मजः ।
स भूत्वा शैलसङ्काशः क्षणेन पुनरात्मवान् ॥ ४१
ह्रस्वतां परमां प्राप्तो बन्धनान्यवशातयत् ।
विमुक्तश्चाभवच्छ्रीमान्पुनः पर्वतसन्निभः ॥ ४२
वीक्षमाणश्च ददृशे परिघं तोरणाश्रितम् ।
स तं गृह्य महाबाहुः कालायसपरिष्कृतम् ॥ ४३
रक्षिणस्तान्पुनस्सर्वान्सूदयामास मारुतिः ।
स तान्निहत्वा रणचण्डविक्रमस्समीक्षमाणः पुनरेव लङ्काम् ।
प्रदीप्तलाङ्गूलकृतार्चिमाली प्रकाशतादित्य इवार्चिमाली ॥ ४४

॥ इति श्रीमत्सुन्दरकाण्डे त्रिपञ्चाशस्सर्गः ॥

---

## ॥ चतुःपञ्चाशस्सर्गः ॥

वीक्षमाणस्ततो लङ्कां कपिः कृतमनोरथः ।
वर्धमानसमुत्साहः कार्यशेषमचिन्तयत् ॥ १

किन्तु खल्ववशिष्टं मे कर्तव्यमिह साम्प्रतम् ।
यदेषां रक्षसां भूयस्सन्तापजननं भवेत् ॥ २

वनं तावत्प्रमथितं प्रकृष्टा राक्षसा हताः ।
बलैकदेशः क्षपितश्शेषं दुर्गविनाशनम् ॥ ३

दुर्गे विनाशिते कर्म भवेत्सुखपरिश्रमम् ।
अल्पयत्नेन कार्येऽस्मिन् मम स्यात्सफलश्श्रमः ॥ ४

यो ह्ययं मम लाङ्गूले दीप्यते हव्यवाहनः ।
अस्य सन्तर्पणं न्याय्यं कर्तुमेभिर्गृहोत्तमैः ॥ ५

ततः प्रदीप्तलाङ्गूलस्सविद्युदिव तोयदः ।
भवनाग्रेषु लङ्काया विचचार महाकपिः ॥ ६

गृहाद्गृहं राक्षसानामुद्यानानि च वानरः ।
वीक्षमाणो ह्यसंत्रस्तः प्रासादांश्च चचार सः ॥ ७

अवप्लुत्य महावेगः प्रहस्तस्य निवेशनम् ।
अग्निं तत्र स निक्षिप्य श्वसनेन समो बली ॥ ८

ततोऽन्यत्पुप्लुवे वेश्म महापार्श्वस्य वीर्यवान् ।
मुमोच हनुमानग्निं कालानलशिखोपमम् ॥ ९

वज्रदंष्ट्रस्य च तदा पुप्लुवे स महाकपिः ।
शुकस्य च महातेजाः सारणस्य च धीमतः ॥ १०

तथा चेन्द्रजितो वेश्म ददाह हरियूथपः ।
जम्बुमालेस्सुमालेश्च ददाह भवनं ततः ॥ ११

रश्मिकेतोश्च भवनं सूर्यशत्रोस्तथैव च ।
ह्रस्वकर्णस्य दंष्ट्रस्य रोमशस्य च रक्षसः ॥ १२

युद्धोन्मत्तस्य मत्तस्य ध्वजग्रीवस्य रक्षसः ।
विद्युज्जिह्वस्य घोरस्य तथा हस्तिमुखस्य च ॥ १३

करालस्य पिशाचस्य शोणिताक्षस्य चैव हि ।
कुम्भकर्णस्य भवनं मकराक्षस्य चैव हि ॥ १४

यज्ञशत्रोश्च भवनं ब्रह्मशत्रोस्तथैव च ।
नरान्तकस्य कुम्भस्य निकुम्भस्य दुरात्मनः ॥ १५

वर्जयित्वा महातेजा विभीषणगृहं प्रति ।
क्रममाणः क्रमेणैव ददाह हरिपुङ्गवः ॥ १६

तेषु तेषु महार्हेषु भवनेषु महायशाः ।
गृहेष्वृद्धिमतामृद्धिं ददाह स महाकपिः ॥ १७

सर्वेषां समतिक्रम्य राक्षसेन्द्रस्य वीर्यवान् ।
आससादाथ लक्ष्मीवान्रावणस्य निवेशनम् ॥ १८

ततस्तस्मिन्गृहे मुख्ये नानारत्नविभूषिते ।
मेरुमन्दरसङ्काशे सर्वमङ्गलशोभिते ॥ १९

प्रदीप्तमग्निमुत्सृज्य लाङ्गूलाग्रे प्रतिष्ठितम् ।
ननाद हनुमान्वीरो युगान्तजलदो यथा ॥ २०

श्वसनेन च संयोगादतिवेगो महाबलः ।
कालाग्निरिव जज्वाल प्रावर्धत हुताशनः ॥ २१

प्रदीप्तमग्निं पवनस्तेषु वेश्मस्वचारयत् ।
अभूच्छ्वसनसंयोगादतिवेगो हुताशनः ॥ २२

तानि काञ्चनजालानि मुक्तामणिमयानि च ।
भवनान्यवशीर्यन्त रत्नवन्ति महान्ति च ॥ २३

तानि भग्नाविमानानि निपेतुर्वसुधातले ।
भवनानीव सिद्धानामम्बरात्पुण्यसङ्क्षये ॥ २४

सञ्जज्ञे तुमुलश्शब्दो राक्षसानां प्रधावताम् ।
स्वगृहस्य परित्राणे भग्नोत्साहोर्जितश्रियाम् ॥ २५

नूनमेषोऽग्निरायातः कपिरूपेण हा इति ।
क्रन्दन्त्यस्सहसा पेतुस्स्तनन्धयधराः स्त्रियः ॥ २६

काश्चिदग्निपरीतेभ्यो हर्म्येभ्यो मुक्तमूर्धजाः ।
पतन्त्यो रेजिरेऽभ्रेभ्यस्सौदामिन्य इवाम्बरात् ॥ २७

वज्रविद्रुमवैडूर्यमुक्तारजतसंहितान् ।
विचित्रान्भवनान्धातून्स्यन्दमानान्ददर्श सः ॥ २८

नाग्निस्तृप्यति काष्ठानां तृणानां हरियूथपः ।
नाग्नेर्नापि विशस्तानां राक्षसानां वसुन्धरा ॥ २९

क्वचित्किंशुकसङ्काशाः क्वचिच्छाल्मलिसन्निभाः ।
क्वचित्कुङ्कुमसङ्काशाश्शिखा वह्नेश्चकाशिरे ॥ ३०

हनूमता वेगवता वानरेण महात्मना ।
लङ्कापुरं प्रदग्धं तद्रुद्रेण त्रिपुरं यथा ॥ ३१

ततस्तु लङ्कापुरपर्वताग्रे समुत्थितो भीमपराक्रमोऽग्निः ।
प्रसार्य चूडावलयं प्रदीप्तो हनूमता वेगवता विसृष्टः ॥ ३२

युगान्तकालानलतुल्यवेगस्समारुतोऽग्निर्ववृधे दिवि स्पृक् ।
विधूमरश्मिर्भवनेषु सक्तो रक्षश्शरीराज्यसमर्पितार्चिः ॥ ३३

[ स तामत्यर्थतो वह्निर्लङ्कां राक्षससङ्कुलाम् ।
ज्वालामालापरिक्षेपैरदहन्मारुतात्मजः ॥

तेन शब्देन वित्रस्ता धर्षितास्तेन चाग्निना ।
अभिपेतुस्तदा घोरा हनूमन्तं निशाचराः ॥

तं प्रदीप्तैश्च शूलाग्रैः प्रासैः खड्गैः परश्वधैः ।
हनूमन्तं महावेगैरक्षिपन्नैर्ऋतर्षभाः ॥

ते राक्षसा भीमबला नानाप्रहरणान्विताः ।
निहत्य च स तांस्तत्र दिवमेवोत्पपात ह ॥

स च विक्रम्य सहसा सङ्क्रमंश्च गृहाद्गृहम् ।
लङ्कामादीपयामास वायुपुत्रः प्रतापवान् ॥

स लाङ्गूलोपसक्ताग्निः मुक्तो मृत्युगृहादिव ।
लङ्कां पर्यदहत्कृत्स्नां खे ग्रहस्सम्पतन्निव ॥

तोरणेषु गवाक्षेषु रम्येषु शिखरेषु च ।
तिष्ठन्ति स्म प्रपश्यन्ति राक्षसाः प्लवगोत्तमम् ॥

हुताशनज्वालसमावृता सा हतप्रवीरा हतसर्वशोभना ।
हनूमतः क्रोधबलाभिभूता बभूव कालोपहतेव लङ्का ॥

स सम्भ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ।
ददर्श लङ्कां हनुमान्महामनाः स्वयम्भुकोपोपहतामिवावनिम् ॥

गृहाग्र्यशृङ्गाग्र्यतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजतादित्य इवार्चिमाली ॥]

आदित्यकोटीसदृशस्सुतेजा लङ्कां समस्तां परिवार्य तिष्ठन् ।
शब्दैरनेकैरशनिप्ररूढैर्भिन्दन्निवाण्डं प्रबभौ महाऽग्निः ॥ ३४

तत्राम्बरादग्निरतिप्रवृद्धो रूक्षप्रभः किंशुकपुष्पचूडः ।
निर्वाणधूमाकुलराजयश्च नीलोत्पलाभाः प्रचकाशिरेऽभ्राः ॥ ३५

वज्री महेन्द्रस्त्रिदशेश्वरो वा साक्षाद्यमो वा वरुणोऽनिलो वा ।
रुद्रोऽग्निरर्को धनदश्च सोमो न वानरोऽयं स्वयमेव कालः ॥ ३६

किं ब्रह्मणस्सर्वपितामहस्य सर्वस्य धातुश्चतुराननस्य ।
इहाऽऽगतो वानररूपधारी रक्षोपसंहारकरः प्रकोपः ॥ ३७

किं वैष्णवं वा कपिरूपमेत्य रक्षोविनाशाय परं सुतेजः ।
अनन्तमव्यक्तमचिन्त्यमेकं स्वमायया साम्प्रतमागतं वा ॥ ३८

इत्येवमूचुर्बहवो विशिष्टा रक्षोगणास्तत्र समेत्य सर्वे ।
सप्राणिसङ्घां सगृहां सवृक्षां दग्धां पुरीं तां सहसा समीक्ष्य ॥ ३९

ततस्तु लङ्का सहसा प्रदग्धा सराक्षसा साश्वरथा सनागा ।
सपक्षिसङ्घा समृगा सवृक्षा रुरोद दीना तुमुलं सशब्दम् ॥ ४०

हा तात हा पुत्रक कान्त मित्र हा जीवितं भोगयुतं सुपुण्यम् ।
रक्षोभिरेवं बहुधा ब्रुवद्भिश्शब्दः कृतो घोरतरस्सुभीमः ॥ ४१

हुताशनज्वालसमावृता सा हतप्रवीरा परिवृत्तयोधा ।
हनूमतः क्रोधबलाभिभूता बभूव शापोपहतेव लङ्का ॥ ४२

ससम्भ्रमत्रस्तविषण्णराक्षसां समुज्ज्वलज्ज्वालहुताशनाङ्किताम् ।
ददर्श लङ्कां हनुमान्महामनाः स्वयम्भुकोपोपहतामिवावनिम् ॥ ४३

भङ्क्त्वा वनं पादपरत्नसङ्कुलं हत्वा तु रक्षांसि महान्ति संयुगे ।
दग्ध्वा पुरीं तां गृहरत्नमालिनीं तस्थौ हनूमान्पवनात्मजः कपिः ॥

त्रिकूटशृङ्गाग्रतले विचित्रे प्रतिष्ठितो वानरराजसिंहः ।
प्रदीप्तलाङ्गूलकृतार्चिमाली व्यराजताऽऽदित्य इवांशुमाली ॥ ४५

स राक्षसांस्तान्सुबहूंश्च हत्वा वनं च भङ्क्त्वा बहुपादपं तत् ।
विसृज्य रक्षो भवनेषु चाग्निं जगाम रामं मनसा महात्मा ॥ ४६

[ततो महात्मा हनुमान्मनस्वी निशाचराणां क्षतकृत्कृतार्थः ।
रामस्य नाथस्य जगत्त्रयाणां श्रीपादमूलं मनसा जगाम ॥]

ततस्तु तं वानरवीरमुख्यं महाबलं मारुततुल्यवेगम् ।
महामतिं वायुसुतं वरिष्ठं प्रतुष्टुवुर्देवगणाश्च सर्वे ॥ ४७

भङ्क्त्वा वनं महातेजा हत्वा रक्षांसि संयुगे ।
दग्ध्वा लङ्कापुरीं रम्यां रराज स महाकपिः ॥ ४८

तत्र देवास्सगन्धर्वाः सिद्धाश्च परमर्षयः ।
दृष्ट्वा लङ्कां प्रदग्धां तां विस्मयं परमं गताः ॥ ४९

तं दृष्ट्वा वानरश्रेष्ठं हनुमन्तं महाकपिम् ।
कालाग्निरिति सञ्चिन्त्य सर्वभूतानि तत्रसुः ॥ ५०

देवाश्च सर्वे मुनिपुङ्गवाश्च गन्धर्वविद्याधरनागयक्षाः ।
भूतानि सर्वाणि महान्ति तत्र जग्मुः परां प्रीतिमतुल्यरूपाम् ॥ ५१

॥ इति श्रीमत्सुन्दरकाण्डे चतुःपञ्चाशस्सर्गः ॥

---

## ॥ पञ्चपञ्चाशस्सर्गः ॥

लङ्कां समस्तां सन्दीप्य लाङ्गूलाग्निं महाबलः ।
निर्वापयामास तदा समुद्रे हरिसत्तमः ॥ १

सन्दीप्यमानां विध्वस्तां त्रस्तरक्षोगणां पुरीम् ।
अवेक्ष्य हनुमाल्लङ्कां चिन्तयामास वानरः ॥ २

तस्याभूत्सुमहांस्त्रासः कुत्सा चाऽऽत्मन्यजायत ।
लङ्कां प्रदहता कर्म किंस्वित्कृतमिदं मया ॥ ३

धन्यास्ते पुरुषश्रेष्ठा ये बुद्ध्या कोपमुत्थितम् ।
निरुन्धन्ति महात्मानो दीप्तमग्निमिवाम्भसा ॥ ४

क्रुद्धः पापं न कुर्यात्कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरस्साधूनधिक्षिपेत् ॥ ५

वाच्यावाच्यं प्रकुपितो न विजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥ ६

यस्समुत्पतितं क्रोधं क्षमयैव निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ७

धिगस्तु मां सुदुर्बुद्धिं निर्लज्जं पापकृत्तमम् ।
अचिन्तयित्वा तां सीतामग्निदं स्वामिघातुकम् ॥ ८

यदि दग्धा त्वियं लङ्का नूनमार्याऽपि जानकी ।
दग्धा तेन मया भर्तुर्हतं कार्यमजानता ॥ ९

यदर्थमयमारम्भस्तत्कार्यमवसादितम् ।
मया हि दहता लङ्कां न सीता परिरक्षिता ॥ १०

ईषत्कार्यमिदं कार्यं कृतमासीन्न संशयः ।
तस्य क्रोधाभिभूतेन मया मूलक्षयः कृतः ॥ ११

विनष्टा जानकी नूनं न ह्यदग्धः प्रदृश्यते ।
लङ्कायां कश्चिदुद्देशस्सर्वा भस्मीकृता पुरी ॥ १२

यदि तद्विहतं कार्यं मम प्रज्ञाविपर्ययात् ।
इहैव प्राणसन्न्यासो ममापि ह्यद्य रोचते ॥ १३

किमग्नौ निपताम्यद्य आहोस्विद्बडबामुखे ।
शरीरमाहो सत्त्वानां दद्मि सागरवासिनाम् ॥ १४

कथं हि जीवता शक्यो मया द्रष्टुं हरीश्वरः ॥
तौ वा पुरुषशार्दूलौ कार्यसर्वस्वघातिना ॥ १५

मया खलु तदेवेदं रोषदोषात्प्रदर्शितम् ।
प्रथितं त्रिषु लोकेषु कपित्वमनवस्थितम् ॥ १६

धिगस्तु राजसं भावमनीशमनवस्थितम् ॥
ईश्वरेणापि यद्रागान्मया सीता न रक्षिता ॥ १७

विनष्टायां तु सीतायां तावुभौ विनशिष्यतः ।
तयोर्विनाशे सुग्रीवस्सबन्धुर्विनशिष्यति ॥ १८

एतदेव वचश्श्रुत्वा भरतो भ्रातृवत्सलः ।
धर्मात्मा सह शत्रुघ्नः कथं शक्ष्यति जीवितुम् ॥ १९

इक्ष्वाकुवंशे धर्मिष्ठे गते नाशमसंशयम् ।
भविष्यन्ति प्रजास्सर्वाश्शोकसन्तापपीडिताः ॥ २०

तदहं भाग्यरहितो लुप्तधर्मार्थसङ्ग्रहः ।
रोषदोषपरीतात्मा व्यक्तं लोकविनाशनः ॥ २१

इति चिन्तयतस्तस्य निमित्तान्युपपेदिरे ।
पूर्वमप्युपलब्धानि साक्षात्पुनरचिन्तयत् ॥ २२

अथवा चारुसर्वाङ्गी रक्षिता स्वेन तेजसा ।
न नशिष्यति कल्याणी नाग्निरग्नौ प्रवर्तते ॥ २३

न हि धर्मात्मनस्तस्य भार्याममिततेजसः ।
स्वचारित्राभिगुप्तां तां स्प्रष्टुमर्हति पावकः ॥ २४

नूनं रामप्रभावेन वैदेह्यास्सुकृतेन च ।
यन्मां दहनकर्माऽयं नादहद्धव्यवाहनः ॥ २५

त्रयाणां भरतादीनां भ्रातॄणां देवता च या ।
रामस्य च मनः कान्ता सा कथं विनशिष्यति ॥ २६

यद्वा दहनकर्माऽयं सर्वत्र प्रभुरव्ययः ।
न मे दहति लाङ्गूलं कथमार्यां प्रधक्ष्यति ॥ २७

पुनश्चाचिन्तयत्तत्र हनुमान्विस्मितस्तदा ।
हिरण्यनाभस्य गिरेर्जलमध्ये प्रदर्शनम् ॥ २८

तपसा सत्यवाक्येन अनन्यत्वाच्च भर्तरि ।
अपि सा निर्दहेदग्निं न तामग्निः प्रधक्ष्यति ॥ २९

स तथा चिन्तयंस्तत्र देव्या धर्मपरिग्रहम् ।
शुश्राव हनुमान्वाक्यं चारणानां महात्मनाम् ॥ ३०

अहो खलु कृतं कर्म दुष्करं हि हनूमता ।
अग्निं विसृजताऽभीक्ष्णं भीमं राक्षसवेश्मनि ॥ ३१

प्रपलायितरक्षःस्त्री बालवृद्धसमाकुला ।
जनकोलाहलाध्माता क्रन्दन्तीवाद्रिकन्दरे ॥ ३२

दग्धेयं नगरी सर्वा साट्टप्राकारतोरणा ।
जानकी न च दग्धेति विस्मयोऽद्भुत एव नः ॥ ३३

[इति शुश्राव हनुमान्वाचं ताममृतोपमाम् ।
बभूव चास्य मनसो हर्षस्तत्कालसम्भवः ॥]

स निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च हनुमानभवत्प्रीतमानसः ॥ ३४

ततः कपिः प्राप्तमनोरथार्थस्तामक्षतां राजसुतां विदित्वा ।
प्रत्यक्षतस्तां पुनरेव दृष्ट्वा प्रतिप्रयाणाय मतिं चकार ॥ ३५

॥ इति श्रीमत्सुन्दरकाण्डे पञ्चपञ्चाशस्सर्गः ॥

---

॥ षट्पञ्चाशस्सर्गः ॥

ततस्तु शिंशुपामूले जानकीं पर्युपस्थिताम् ।
अभिवाद्याब्रवीद्दिष्ट्या पश्यामि त्वामिहाक्षताम् ॥ १
ततस्तं प्रस्थितं सीता वीक्षमाणा पुनः पुनः ।
भर्तृस्नेहान्वितं वाक्यं हनुमन्तमभाषत ॥ २
[यदि त्वं मन्यसे तात वसैकाहमिहानघ ।
क्वचित्सुसंवृते देशे विश्रान्तश्श्वो गमिष्यसि ॥
मम चैवाल्पभाग्यायाः सान्निध्यात्तव वानर ।
शोकस्यास्याप्रमेयस्य मुहूर्तं स्यादपि क्षयः ॥
गते हि हरिशार्दूल पुनस्सम्प्राप्तये त्वयि ।
प्राणेष्वपि न विश्वासो मम वानरपुङ्गव ॥
अदर्शनं च ते वीर भूयो मां दारयिष्यति ।
दुःखाद्दुःखतरं प्राप्तां दुर्मनश्शोककर्शिताम् ॥
अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः ।
सुमहत्सु सहायेषु हर्यृक्षेषु महाबलः ॥
कथं नु खलु दुष्पारं सन्तरिष्यन्ति सागरम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥
त्रयाणामेव भूतानां सागरस्यातिलङ्घने ।
शक्तिस्स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥
तदत्र कार्यनिर्बन्धे समुत्पन्ने दुरासदे ।
किं पश्यसि समाधानं त्वं हि कार्यविशारदः ॥]

काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्नः यशस्यस्ते बलोदयः ॥ ३

शरैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ ४

तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥ ५

तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्य हनुमांस्तस्य वाक्यमुत्तरमब्रवीत् ॥ ६

[देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवस्सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥

स वानरसहस्राणां कोटीभिरभिसंवृतः ।
क्षिप्रमेष्यति वैदेहि सुग्रीवः प्लवगाधिपः ॥

तौ च वीरौ नरवरौ सहितौ रामलक्ष्मणौ ।
आगम्य नगरीं लङ्कां सायकैर्विधमिष्यतः ॥

सगणं राक्षसं हत्वा न चिराद्रघुनन्दनः ।
त्वामादाय वरारोहे स्वां पुरीं प्रतियास्यति ॥

समाश्वसिहि भद्रं ते भव त्वं कालकाङ्क्षिणी ।
क्षिप्रं द्रक्ष्यसि रामेण निहतं रावणं रणे ॥

निहते राक्षसेन्द्रे च सपुत्रामात्यबान्धवे ।
त्वं समेष्यसि रामेण शशाङ्केनेव रोहिणी ॥]

क्षिप्रमेष्यति काकुत्स्थो हर्यृक्षप्रवरैर्वृतः ।
यस्ते युधि विजित्यारीन् शोकं व्यपनयिष्यति ॥ ७

एवमाश्वास्य वैदेहीं हनुमान्मारुतात्मजः ।
गमनाय मतिं कृत्वा वैदेहीमभ्यवादयत् ॥ ८

[ राक्षसान्प्रवरान्हत्वा नाम विश्राव्य चात्मनः ।
समाश्वास्य च वैदेहीं दर्शयित्वा परं बलम् ॥
नगरीमाकुलां कृत्वा वञ्चयित्वा च रावणम् ।
दर्शयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥
प्रतिगन्तुं मनश्चक्रे पुनर्मध्येन सागरम् ॥]

ततस्स कपिशार्दूलस्स्वामिसन्दर्शनोत्सुकः ।
आरुरोह गिरिश्रेष्ठमरिष्टमरिमर्दनः ॥ ९

तुङ्गपद्मकजुष्टाभिर्नीलाभिर्वनराजिभिः ।
सोत्तरीयमिवाम्भोदैश्शृङ्गान्तरविलम्बिभिः ॥ १०

बोध्यमानमिव प्रीत्या दिवाकरकरैश्शुभैः ।
उन्मिषन्तमिवोद्धूतैर्लोचनैरिव धातुभिः ॥ ११

तोयौघनिस्स्वनैर्मन्द्रैः प्रधीतमिव पर्वतम् ।
प्रगीतमिव विस्पष्टैर्नानाप्रस्रवणस्वनैः ॥ १२

देवदारुभिरत्युच्चैरूर्ध्वबाहुमिव स्थितम् ।
प्रपातजलनिर्घोषैः प्राक्रुष्टमिव सर्वतः ॥ १३

वेपमानमिव श्यामैः कम्पमानैश्शरद्घनैः ।
वेणुभिर्मारुतोद्धूतैः कूजन्तमिव कीचकैः ॥ १४

निश्श्वसन्तमिवामर्षाद्घोरैराशीविषोत्तमैः ।
नीहारकृतगम्भीरैर्ध्यायन्तमिव गह्वरैः ॥ १५

मेघपादनिभैः पादैः प्रक्रान्तमिव सर्वतः ।
जृम्भमाणमिवाऽऽकाशे शिखरैरभ्रमालिभिः ॥ १६

कूटैश्च बहुधा कीर्णैश्शोभितं बहुकन्दरैः ।
सालतालाश्वकर्णैश्च वंशैश्च बहुभिर्वृतम् ॥ १७

लतावितानैर्विततैः पुष्पवद्भिरलङ्कृतम् ।
नानामृगगणाकीर्णं धातुनिष्यन्दभूषितम् ॥ १८

बहुप्रस्रवणोपेतं शिलासञ्चयसङ्कटम् ।
महर्षियक्षगन्धर्वकिन्नरोरगसेवितम् ॥ १९

लतापादपसङ्घातं सिंहाध्युषितकन्दरम् ।
व्याघ्रसङ्घसमाकीर्णं स्वादुमूलफलद्रुमम् ॥ २०

तमारुरोह हनुमान्पर्वतं पवनात्मजः ।
रामदर्शनशीघ्रेण प्रहर्षेणाभिचोदितः ॥ २१

तेन पादतलाक्रान्ता रम्येषु गिरिसानुषु ।
सघोषास्समशीर्यन्त शिलाश्चूर्णीकृतास्ततः ॥ २२

स तमारुह्य शैलेन्द्रं व्यवर्धत महाकपिः ।
दक्षिणादुत्तरं पारं प्रार्थयन्लवणाम्भसः ॥ २३

अधिरुह्य ततो वीरः पर्वतं पवनात्मजः ।
ददर्श सागरं भीमं मीनोरगनिषेवितम् ॥ २४

स मारुत इवाऽऽकाशं मारुतस्याऽऽत्मसम्भवः ।
प्रपेदे हरिशार्दूलो दक्षिणादुत्तरां दिशम् ॥ २५

स तदा पीडितस्तेन कपिना पर्वतोत्तमः ।
ररास सह तैर्भूतैः प्रविशन्वसुधातलम् ॥ २६

कम्पमानैश्च शिखरैः पतद्भिरपि च द्रुमैः ।
तस्योरुवेगोन्मथिताः पादपाः पुष्पशालिनः ॥ २७
निपेतुर्भूतले रुग्णाश्शक्रायुधहता इव ।
कन्दरान्तरसंस्थानां पीडितानां महौजसाम् ॥ २८
सिंहानां निनदो भीमो नभो भिन्दन्स शुश्रुवे ।
त्रस्तव्यावृत्तवसना व्याकुलीकृतभूषणाः ॥ २९
विद्याधर्यस्समुत्पेतुः सहसा धरणीधरात् ।
अतिप्रमाणा बलिनो दीप्तजिह्वा महाविषाः ॥ ३०
निपीडितशिरोग्रीवा व्यवेष्टन्त महाहयः ।
किन्नरोरगगन्धर्वयक्षविद्याधरास्तदा ॥ ३१
पीडितं तं नगवरं त्यक्त्वा गगनमास्थिताः ।
स च भूमिधरश्श्रीमान्बलिना तेन पीडितः ॥ ३२
स वृक्षशिखरोदग्रः प्रविवेश रसातलम् ।
दशयोजनविस्तारस्त्रिंशद्योजनमुच्छ्रितः ॥ ३३
धरण्यां समतां यातः स बभूव धराधरः ।
स लिलङ्घयिषुर्भीमं सलीलं लवणार्णवम् ॥ ३४
कल्लोलास्फालवेलान्तमुत्पपात नभो हरिः ।

॥ इति श्रीमत्सुन्दरकाण्डे षट्पञ्चाशस्सर्गः ॥

---

## ॥ सप्तपञ्चाशस्सर्गः ॥

[ आप्लुत्य च महावेगः पक्षवानिव पर्वतः । ]
सचन्द्रकुमुदं रम्यं सार्ककारण्डवं शुभम् ।
तिष्यश्रवणकादम्बमभ्रशैवालशाद्वलम् ॥ १

पुनर्वसुमहामीनं लोहिताङ्गमहाग्रहम् ।
ऐरावतमहाद्वीपं स्वातींहंसविलोळितम् ॥ २
वातसङ्घातजालोर्मिचन्द्रांशुशिशिराबुमत् ।
भुजङ्गयक्षगन्धर्वप्रबुद्धकमलोत्पलम् ॥ ३
हनुमान्मारुतगतिर्महनौरिव सागरम् ।
अपारमपरिश्रान्तः पुप्लुवे गगनार्णवम् ॥ ४
ग्रसमान इवाऽऽकाशं ताराधिपमिवोल्लिखन् ।
हरन्निव सनक्षत्रं गगनं सार्कमण्डलम् ॥ ५
मारुतस्याऽऽत्मजश्श्रीमान्कपिर्व्योमचरो महान् ।
[अपारमपरिश्रान्तश्चाम्बुधिं समगाहत ।]
हनुमान्मेघजालानि विकर्षन्निव गच्छति ॥ ६
पाण्डुरारुणवर्णानि नीलमाञ्जिष्ठकानि च ।
हरितारुणवर्णानि महाभ्राणि चकाशिरे ॥ ७
प्रविशन्नभ्रजालानि निष्पतंश्च पुनः पुनः ।
प्रच्छन्नश्च प्रकाशश्च चन्द्रमा इव लक्ष्यते ॥ ८
विविधाभ्रघनापन्नगोचरो धवळाम्बरः ।
दृश्यादृश्यतनुर्वीरस्तदा चन्द्रायतेऽम्बरे ॥ ९
तार्क्ष्यायमाणो गगने बभासे वायुनन्दनः ।
दारयन्मेघबृन्दानि निष्पतंश्च पुनः पुनः ॥ १०
नदन्नादेन महता मेघस्वनमहास्वनः ।
प्रवरान्राक्षसान् हत्वा नाम विश्राव्य चाऽऽत्मनः ॥ ११

आकुलां नगरीं कृत्वा व्यथयित्वा च रावणम् ।
अर्दयित्वा बलं घोरं वैदेहीमभिवाद्य च ॥ १२

आजगाम महातेजाः पुनर्मध्येन सागरम् ।
पर्वतेन्द्रं सुनाभं च समुपस्पृश्य वीर्यवान् ॥ १३

ज्यामुक्त इव नाराचो महावेगोऽभ्युपागतः ।
स किञ्चिदनुसम्प्राप्तः समालोक्य महागिरिम् ॥ १४

महेन्द्रं मेघसंकाशं ननाद हरिपुङ्गवः ।
स पूरयामास कपिर्दिशो दश समन्ततः ॥ १५

नदन्नादेन महता मेघस्वनमहास्वनः ।
स तं देशमनुप्राप्तः सुहृद्दर्शनलालसः ॥ १६

ननाद हरिशार्दूलो लाङ्गूलं चाप्यकम्पयत् ।
तस्य नानद्यमानस्य सुपर्णचरिते पथि ॥ १७

फलतीवास्य घोषेण गगनं सार्कमण्डलम् ।
ये तु तत्रोत्तरे तीरे समुद्रस्य महाबलाः ॥ १८

पूर्वं संविष्ठितारशूरा वायुपुत्रदिदृक्षवः ।
महतो वातनुन्नस्य तोयदस्येव गर्जितम् ॥ १९

शुश्रुवुस्ते तदा घोषमूरुवेगं हनूमतः ।
ते दीनमनसस्सर्वे शुश्रुवुः काननौकसः ॥ २०

वानरेन्द्रस्य निर्घोषं पर्जन्यनिनदोपमम् ।
निशम्य नदतो नादं वानरास्ते समन्ततः ॥ २१

बभूवुरुत्सुकास्सर्वे सुहृद्दर्शनकाङ्क्षिणः ।
जाम्बवान्स हरिश्रेष्ठः प्रीतिसंहृष्टमानसः ॥ २२

उपामन्त्र्य हरीन् सर्वानिदं वचनमब्रवीत् ।
सर्वथा कृतकार्योऽसौ हनुमान्नात्र संशयः ॥ २३

नह्यस्याकृतकार्यस्य नाद एवं विधो भवेत् ।
तस्य बाहूरुवेगं च निनादं च महात्मनः ॥ २४

निशम्य हरयो हृष्टाः समुत्पेतुस्ततस्ततः ।
ते नगाग्रान्नगाग्राणि शिखराच्छिखराणि च ॥ २५

प्रहृष्टास्समपद्यन्त हनूमन्तं दिदृक्षवः ।
ते प्रीताः पादपाग्रेषु गृह्य शाखास्सुविष्ठिताः ॥ २६

वासांसीव प्रशाखाश्च समाविध्यन्त वानराः ।
गिरिगह्वरसंलीनो यथा गर्जति मारुतः ॥ २७

एवं जगर्ज बलवान् हनुमान्मारुतात्मजः ।
तमभ्रघनसङ्काशमापतन्तं महाकपिम् ॥ २८

दृष्ट्वा ते वानरास्सर्वे तस्थुः प्राञ्जलयस्तदा ।
ततस्तु वेगवांस्तस्य गिरेर्गिरिनिभः कपिः ॥ २९

निपपात महेन्द्रस्य शिखरे पादपाकुले ।
हर्षेणाऽऽपूर्यमाणोऽसौ रम्ये पर्वतनिर्झरे ॥ ३०

छिन्नपक्ष इवाऽऽकाशात्पपात धरणीधरः ।
ततस्ते प्रीतमनसः सर्वे वानरपुङ्गवाः ॥ ३१

हनुमन्तं महात्मानं परिवार्योपतस्थिरे ।
परिवार्य च ते सर्वे परां प्रीतिमुपागताः ॥ ३२

प्रहृष्टवदनास्सर्वे तमरोगमुपागतम् ।
उपायनानि चाऽऽदाय मूलानि च फलानि च ॥ ३३

प्रत्यर्चयन् हरिश्रेष्ठं हरयो मारुतात्मजम् ।
[विनेदुर्मुदिताः केचित्केचित्किलिकिलास्तथा ॥ ३४

हृष्टाः पादपशाखाश्च आनिन्युर्वानरर्षभाः ॥]
हनुमांस्तु गुरून्वृद्धाञ्जाम्बवत्प्रमुखांस्तदा ॥ ३५

कुमारमङ्गदं चैव सोऽवन्दत महाकपिः ।
स ताभ्यां पूजितः पूज्यः कपिभिश्च प्रसादितः ॥ ३६

दृष्टा सीतेति विक्रान्तस्संक्षेपेण न्यवेदयत् ।
निषसाद च हस्तेन गृहीत्वा वालिनस्सुतम् ॥ ३७

रमणीये वनोद्देशे महेन्द्रस्य गिरेस्तदा ।
हनुमानब्रवीद्धृष्टस्तदा तान्वानरर्षभान् ॥ ३८

अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ।
रक्ष्यमाणा सुघोराभीराक्षसीभिरनिन्दिता ॥ ३९

एकवेणीधरा बाला रामदर्शनलालसा ।
उपवासपरिश्रान्ता जटिला मलिना कृशा ॥ ४०

ततो दृष्टेति वचनं महार्थममृतोपमम् ।
निशम्य मारुतेस्सर्वे मुदिता वानरा भवन् ॥ ४१

क्ष्वेळन्त्यन्ये नदन्त्यन्ये गर्जन्त्यन्ये महाबलाः ।
चक्रुः किलकिलामन्ये प्रतिगर्जन्ति चापरे ॥ ४२

केचिदुच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः ।
अञ्चितायतदीर्घाणि लाङ्गूलानि प्रविव्यधुः ॥ ४३

अपरे च हनूमन्तं वानरा वारणोपमम् ।
आप्लुत्य गिरिशृङ्गेभ्यः संस्पृशन्ति स्म हर्षिताः ॥ ४४

उक्तवाक्यं हनूमन्तमङ्गदस्तमथाब्रवीत् ।
सर्वेषां हरिवीराणां मध्ये वचनमुत्तमम् ॥ ४५
सत्त्वे वीर्ये न ते कश्चित्समो वानर विद्यते ।
यदवप्लुत्य विस्तीर्णं सागरं पुनरागतः ॥ ४६
[जीवितस्य प्रदाता नस्त्वमेको वानरोत्तम ।
त्वत्प्रसादात्समेष्यामस्सिद्धार्था राघवेण ह ॥]
अहो स्वामिनि ते भक्तिरहो वीर्यमहो धृतिः ।
दिष्ट्या दृष्टा त्वया देवी रामपत्नी यशस्विनी ॥ ४७
दिष्ट्या त्यक्ष्यति काकुत्स्थश्शोकं सीतावियोगजम् ।
ततोऽङ्गदं हनूमन्तं जाम्बवन्तं च वानराः ॥ ४८
परिवार्य प्रमुदिता भेजिरे विपुलाश्शिलाः ।
[उपविष्टा गिरेस्तस्य शिलासु विपुलासु च ॥]
श्रोतुकामास्समुद्रस्य लङ्घनं वानरोत्तमाः ॥ ४९
दर्शनं चापि लङ्कायास्सीताया रावणस्य च ।
तस्थुः प्राञ्जलयस्सर्वे हनुमद्वदनोन्मुखाः ॥ ५०
तस्थौ तत्राङ्गदश्श्रीमान्वानरैर्बहुभिर्वृतः ।
उपास्यमानो विबुधैर्दिवि देवपतिर्यथा ॥ ५१
हनूमता कीर्तिमता यशस्विना तथाङ्गदेनाङ्गदबद्धबाहुना ।
मुदा तदाऽध्यासितमुन्नतम्महन्महीधराग्रं ज्वलितं श्रियाऽभवत् ॥

॥ इति श्रीमत्सुन्दरकाण्डे सप्तपञ्चाशस्सर्गः ॥

---

## ॥ अष्टपञ्चाशस्सर्गः ॥

ततस्तस्य गिरेश्शृङ्गे महेन्द्रस्य महाबलाः ।
हनुमत्प्रमुखाः प्रीतिं हरयो जग्मुरुत्तमाम् ॥ १

तं ततः प्रीतिसंहृष्टः प्रीतिमन्तं महाकपिम् ।
जाम्बवान्कार्यवृत्तान्तमपृच्छदनिलात्मजम् ॥ २

कथं दृष्टा त्वया देवी कथं वा तत्र वर्तते ।
तस्यां वा स कथं वृत्तः क्रूरकर्मा दशाननः ॥ ३

तत्त्वतस्सर्वमेतन्नः प्रब्रूहि त्वं महाकपे ।
[संमार्गिता कथं देवी किञ्च सा प्रत्यभाषत]
श्रुतार्थाश्चिन्तयिष्यामो भूयः कार्यविनिश्चयम् ॥ ४

यश्चार्थस्तत्र वक्तव्यो गतैरस्माभिरात्मवान् ।
रक्षितव्यं च यत्तत्र तद्भवान्व्याकरोतु नः ॥ ५

स नियुक्तस्ततस्तेन सम्प्रहृष्टतनूरुहः ।
प्रणम्य शिरसा देव्यै सीतायै प्रत्यभाषत ॥ ६

प्रत्यक्षमेव भवतां महेन्द्राग्रात्खमाप्लुतः ।
उदधेर्दक्षिणं पारं काङ्क्षमाणस्समाहितः ॥ ७

गच्छतश्च हि मे घोरं विघ्नरूपमिवाभवत् ।
काञ्चनं शिखरं दिव्यं पश्यामि सुमनोहरम् ॥ ८

स्थितं पन्थानमावृत्य मेने विघ्नं च तं नगम् ।
उपसङ्गम्य तं दिव्यं काञ्चनं नगसत्तमम् ॥ ९

कृता मे मनसा बुद्धिर्भेत्तव्योऽयं मयेति च ।
प्रहतं च मया तस्य लाङ्गूलेन महागिरेः ॥ १०

शिखरं सूर्यसङ्काशं व्यशीर्यत सहस्रधा ।
व्यवसायं च तं बुद्ध्वा सहोवाच महागिरिः ॥ ११

पुत्रेति मधुरां वाणीं मनः प्रह्लादयन्निव ।
पितृव्यं चापि मां विद्धि सखायं मातरिश्वनः ॥ १२

मैनाकमिति विख्यातं निवसन्तं महोदधौ ।
पक्षवन्तः पुरा पुत्र बभूवुः पर्वतोत्तमाः ॥ १३

छन्दतः पृथिवीं चेरुर्बाधमानास्समन्ततः ।
श्रुत्वा नगानां चरितं महेन्द्रः पाकशासनः ॥ १४

चिच्छेद भगवान्पक्षान्वज्रेणैषां सहस्रशः ।
अहं तु मोक्षितस्तस्मात्तव पित्रा महात्मना ॥ १५

मारुतेन तदा वत्स प्रक्षिप्तोऽस्मि महार्णवे ।
रामस्य च मया साह्ये वर्तितव्यमरिन्दम ॥ १६

रामो धर्मभृतां श्रेष्ठो महेन्द्रसमविक्रमः ।
एतच्छ्रुत्वा वचस्तस्य मैनाकस्य महात्मनः ॥ १७

कार्यमावेद्य तु गिरेरुद्यतं च मनो मम ।
तेन चाहमनुज्ञातो मैनाकेन महात्मना ॥ १८

स चाप्यन्तर्हितश्शैलो मानुषेण वपुष्मता ।
शरीरेण महाशैलः शैलेन च महोदधौ ॥ १९

उत्तमं जवमास्थाय शेषं पन्थानमास्थितः ।
ततोऽहं सुचिरं कालं वेगेनाभ्यगमं पथि ॥ २०

ततः पश्याम्यहं देवीं सुरसां नागमातरम् ।
समुद्रमध्ये सा देवी वचनं मामभाषत ॥ २१

मम भक्षः प्रदिष्टस्त्वममरैर्हरिसत्तमः ।
अतस्त्वां भक्षयिष्यामि विहितस्त्वं चिरस्य मे ॥ २२

एवमुक्तस्सुरसया प्राञ्जलिः प्रणतः स्थितः ।
विवर्णवदनो भूत्वा वाक्यं चेदमुदीरयम् ॥ २३

रामो दाशरथिश्श्रीमान्प्रविष्टो दण्डकावनम् ।
लक्ष्मणेन सह भ्रात्रा सीतया च परन्तपः ॥ २४

तस्य सीता हृता भार्या रावणेन दुरात्मना ।
तस्यास्सकाशं दूतोऽहं गमिष्ये रामशासनात् ॥ २५

कर्तुमर्हसि रामस्य साहाय्यं विषये सती ।
अथवा मैथिलीं दृष्ट्वा रामं चाक्लिष्टकारिणम् ॥ २६

आगमिष्यामि ते वक्त्रं सत्यं प्रतिशृणोमि ते ।
एवमुक्ता मया सा तु सुरसा कामरूपिणी ॥ २७

अब्रवीन्नातिवर्तेत कश्चिदेष वरो मम ।
एवमुक्तस्सुरसया दशयोजनमायतः ॥ २८

ततोऽर्धगुणविस्तारो बभूवाहं क्षणेन तु ।
मत्प्रमाणानुरूपं च व्यादितं च मुखं तया ॥ २९

तद्दृष्ट्वा व्यादितं चाऽऽस्यं ह्रस्वं ह्यकरवं वपुः ।
तस्मिन्मुहूर्ते च पुनर्बभूवाङ्गुष्ठमात्रकः ॥ ३०

अभिपत्याऽऽशु तद्वक्त्रं निर्गतोऽहं ततः क्षणात् ।
अब्रवीत्सुरसा देवी स्वेन रूपेण मां पुनः ॥ ३१

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ॥ ३२

सुखी भव महाबाहो प्रीताऽस्मि तव वानर ।
ततोऽहं साधु साध्वीति सर्वभूतैः प्रशंसितः ॥ ३३

ततोऽन्तरिक्षं विपुलं प्लुतोऽहं गरुडो यथा ।
छाया मे निगृहीता च न च पश्यामि किञ्चन ॥ ३४

सोऽहं विगतवेगस्तु दिशो दश विलोकयन् ।
न किञ्चित्तत्र पश्यामि येन मेऽपहृता गतिः ॥ ३५

ततो मे बुद्धिरुत्पन्ना किन्नाम गगने मम ।
ईदृशो विघ्न उत्पन्नो रूपं यत्र न दृश्यते ॥ ३६

अधोभागेन मे दृष्टिश्शोचता पातिता मया ।
ततोऽद्राक्षमहं भीमां राक्षसीं सलिलेशयाम् ॥ ३७

प्रहस्य च महानादमुक्तोऽहं भीमया तया ।
अवस्थितमसम्भ्रान्तमिदं वाक्यमशोभनम् ॥ ३८

क्वासि गन्ता महाकाय क्षुधिताया ममेप्सितः ।
भक्षः प्रीणय मे देहं चिरमाहारवर्जितम् ॥ ३९

बाढमित्येव तां वाणीं प्रत्यगृह्णामहं ततः ।
आस्यप्रमाणादधिकं तस्याः कायमपूरयम् ॥ ४०

तस्याश्चाऽऽस्यं महद्भीमं वर्धते मम भक्षणे ।
न च मां साधु बुबुधे मम वा निकृतं कृतम् ॥ ४१

ततोऽहं विपुलं रूपं सङ्क्षिप्य निमिषान्तरात् ।
तस्या हृदयमादाय प्रपतामि नभस्स्थलम् ॥ ४२

सा विसृष्टभुजा भीमा पपात लवणाम्भसि ।
मया पर्वतसङ्काशा निकृत्तहृदया सती ॥ ४३

शृणोमि खगतानां च सिद्धानां चारणैस्सह ।
राक्षसी सिंहिका भीमा क्षिप्रं हनुमता हता ॥ ४४

तां हत्वा पुनरेवाहं कृत्यमात्ययिकं स्मरन् ।
गत्वा चाहं महाध्वानं पश्यामि नगमण्डितम् ॥ ४५

दक्षिणं तीरमुदधेर्लङ्का यत्र च सा पुरी ।
अस्तं दिनकरे याते रक्षसां निलयं पुरम् ॥ ४६

प्रविष्टोऽहमविज्ञातो रक्षोभिर्भीमविक्रमैः ।
तत्र प्रविशतश्चापि कल्पान्तघनसन्निभा ॥ ४७

अट्टहासं विमुञ्चन्ती नारी काप्युत्थिता पुरः ॥
जिघांसन्तीं ततस्तां तु ज्वलदग्निशिरोरुहाम् ॥ ४८

सव्यमुष्टिप्रहारेण पराजित्य सुभैरवाम् ।
प्रदोषकाले प्रविशं भीतयाऽहं तयोदितः ॥ ४९

अहं लङ्का पुरी वीर निर्जिता विक्रमेण ते ।
यस्मात्तस्माद्विजेतासि सर्वरक्षांस्यशेषतः ॥ ५०

तत्राहं सर्वरात्रं तु विचिन्वञ्जनकात्मजाम् ।
रावणान्तःपुरगतो न चापश्यं सुमध्यमाम् ॥ ५१

ततस्सीतामपश्यंस्तु रावणस्य निवेशने ।
शोकसागरमासाद्य न पारमुपलक्षये ॥ ५२

शोचता च मया दृष्टं प्राकारेण समावृतम् ।
काञ्चनेन विकृष्टेन गृहोपवनमुत्तमम् ॥ ५३

स प्राकारमवप्लुत्य पश्यामि बहुपादपम् ।
अशोकवनिकामध्ये शिंशुपापादपो महान् ॥ ५४

तमारुह्य च पश्यामि काञ्चनं कदळीवनम् ।
अदूरे शिंशुपावृक्षात्पश्यामि वरवर्णिनीम् ॥ ५५

श्यामां कमलपत्राक्षीमुपवासकृशाननाम् ।
तदेकवासस्संवीतां रजोध्वस्तशिरोरुहाम् ॥ ५६

शोकसन्तापदीनाङ्गीं सीतां भर्तृहिते स्थिताम् ।
राक्षसीभिः विरूपाभिः क्रूराभिरभिसंवृताम् ॥ ५७

मांसशोणितभक्षाभिर्व्याघ्रीभिर्हरिणीमिव ।
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ ५८

एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
भूमिशय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ५९

रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ।
कथञ्चिन्मृगशावाक्षी तूर्णमासादिता मया ॥ ६०

तां दृष्ट्वा तादृशीं नारीं रामपत्नीं यशस्विनीम् ।
तत्रैव शिंशुपावृक्षे पश्यन्नहमवस्थितः ॥ ६१

ततो हलहलाशब्दं काञ्चीनूपुरमिश्रितम् ।
शृणोम्यधिकगम्भीरं रावणस्य निवेशने ॥ ६२

ततोऽहं परमोद्विग्नः स्वं रूपं प्रतिसंहरन् ।
अहं तु शिंशुपावृक्षे पक्षीव गहने स्थितः ॥ ६३

ततो रावणदाराश्च रावणश्च महाबलः ।
तं देशं समनुप्राप्ता यत्र सीताऽभवत्स्थिता ॥ ६४

तं दृष्ट्वाऽथ वरारोहा सीता रक्षोगणेश्वरम् ।
सङ्कुच्योरू स्तनौ पीनौ बाहुभ्यां परिरभ्य च ॥ ६५

वित्रस्तां परमोद्विग्नां वीक्षमाणां ततस्ततः ।
त्राणं किञ्चिदपश्यन्तीं वेपमानां तपस्विनीम् ॥ ६६

तामुवाच दशग्रीवस्सीतां परमदुःखिताम् ।
अवाक्छिराः प्रपतितो बहुमन्यस्व मामिति ॥ ६७

यदि चेत्त्वं तु दर्पान्मां नाभिनन्दसि गर्विते ।
द्वौ मासावन्तरं सीते पास्यामि रुधिरं तव ॥ ६८

एतच्छ्रुत्वा वचस्तस्य रावणस्य दुरात्मनः ।
उवाच परमक्रुद्धा सीता वचनमुत्तमम् ॥ ६९

राक्षसाधम रामस्य भार्याममिततेजसः ।
इक्ष्वाकुकुलनाथस्य स्नुषां दशरथस्य च ॥ ७०

अवाच्यं वदतो जिह्वा कथं न पतिता तव ।
किञ्चिद्वीर्यं तवानार्य यो मां भर्तुरसन्निधौ ॥ ७१

अपहृत्याऽऽगतः पाप तेनादृष्टो महात्मना ।
न त्वं रामस्य सदृशो दास्येऽप्यस्य न युज्यसे ॥ ७२

यज्ञीयस्सत्यवादी च रणश्लाघी च राघवः ।
जानक्या परुषं वाक्यमेवमुक्तो दशाननः ॥ ७३

जज्वाल सहसा कोपाच्चितास्थ इव पावकः ।
विवृत्य नयने क्रूरे मुष्टिमुद्यम्य दक्षिणम् ॥ ७४

मैथिलीं हन्तुमारब्धः स्त्रीभिर्हाहाकृतं तदा ।
स्त्रीणां मध्यात्समुत्पत्य तस्य भार्या दुरात्मनः ॥ ७५

वरा मन्दोदरी नाम तया स प्रतिषेधितः ।
उक्तश्च मधुरां वाणीं तया स मदनार्दितः ॥ ७६

सीतया तव किं कार्यं महेन्द्रसमविक्रम ।
[मया सह रमस्वाद्य मद्विशिष्टा न जानकी]
देवगन्धर्वकन्याभिर्यक्षकन्याभिरेव च ॥ ७७
सार्धं प्रभो रमस्वेह सीतया किं करिष्यसि ।
ततस्ताभिस्समेताभिर्नारीभिस्स महाबलः ॥ ७८
प्रसाद्य सहसा नीतो भवनं स्वं निशाचरः ।
याते तस्मिन्दशग्रीवे राक्षस्यो विकृताननाः ॥ ७९
सीतां निर्भर्त्सयामासुर्वाक्यैः क्रूरैस्सुदारुणैः ।
तृणवद्भाषितं तासां गणयामास जानकी ॥ ८०
गर्जितं च तदा तासां सीतां प्राप्य निरर्थकम् ।
वृथागर्जितनिश्चेष्टा राक्षस्यः पिशिताशनाः ॥ ८१
रावणाय शशंसुस्तास्सीताध्यवसितं महत् ।
ततस्तास्सहितास्सर्वा निहताशा निरुद्यमाः ॥ ८२
परिक्षिप्य समन्तात्तां निद्रावशमुपागताः ।
तासु चैव प्रसुप्तासु सीता भर्तृहिते रता ॥ ८३
विलप्य करुणं दीना प्रशुशोच सुदुःखिता ।
तासां मध्यात्समुत्थाय त्रिजटा वाक्यमब्रवीत् ॥ ८४
आत्मानं खादत क्षिप्रं न सीता विनशिष्यति ।
जनकस्याऽऽत्मजा साध्वी स्नुषा दशरथस्य च ॥ ८५
स्वप्नो ह्यद्य मया दृष्टो दारुणो रोमहर्षणः ।
रक्षसां च विनाशाय भर्तुरस्या जयाय च ॥ ८६

अलमस्मात्परित्रातुं राघवाद्राक्षसीगणम् ।
अभियाचाम वैदेहीमेतद्धि मम रोचते ॥ ८७
यस्या ह्येवंविधस्स्वप्नो दुःखितायाः प्रदृश्यते ।
सा दुःखैर्विविधैर्मुक्ता सुखमाप्नोत्यनुत्तमम् ॥ ८८
प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
[अलमेषा परित्रातुं राक्षस्यो महतो भयात् ]
ततस्सा ह्रीमती बाला भर्तुर्विजयहर्षिता ॥ ८९
अवोचद्यदि तत्तथ्यं भवेयं शरणं हि वः ।
तां चाहं तादृशीं दृष्ट्वा सीताया दारुणां दशाम् ॥ ९०
चिन्तयामास विक्रान्तो न च मे निर्वृतं मनः ।
सम्भाषणार्थं च मया जानक्याश्चिन्तितो विधिः ॥ ९१
इक्ष्वाकूणां हि वंशस्तु ततो मम पुरस्कृतः ।
श्रुत्वा तु गदितां वाचं राजर्षिगणपूजिताम् ॥ ९२
प्रत्यभाषत मां देवी बाष्पैः पिहितलोचना ।
कस्त्वं केन कथं चेह प्राप्तो वानरपुङ्गव ॥ ९३
का च रामेण ते प्रीतिस्तन्मे शंसितुमर्हसि ।
तस्यास्तद्वचनं श्रुत्वा ह्यहमप्यब्रुवं वचः ॥ ९४
देवि रामस्य भर्तुस्ते सहायो भीमविक्रमः ।
सुग्रीवो नाम विक्रान्तो वानरेन्द्रो महाबलः ॥ ९५
तस्य मां विद्धि भृत्यं त्वं हनुमन्तमिहाऽऽगतम् ।
भर्त्राऽहं प्रेषितस्तुभ्यं रामेणाक्लिष्टकर्मणा ॥ ९६

इदं च पुरुषव्याघ्रः श्रीमान्दाशरथिस्स्वयम् ।
अङ्गुळीयमभिज्ञानमदात्तुभ्यं यशस्विनि ॥ ९७
तदिच्छामि त्वयाऽऽज्ञप्तं देवि किं करवाण्यहम् ।
रामलक्ष्मणयोः पार्श्वं नयामि त्वां किमुत्तरम् ॥ ९८
एतच्छ्रुत्वा विदित्वा च सीता जनकनन्दिनी ।
आह रावणमुत्साद्य राघवो मां नयत्विति ॥ ९९
प्रणम्य शिरसा देवीमहमार्यामनिन्दिताम् ।
राघवस्य मनोह्लादमभिज्ञानमयाचिषम् ॥ १००
अथ मामब्रवीत्सीता गृह्यतामयमुत्तमः ।
मणिर्येन महाबाहू रामस्त्वां बहुमन्यते ॥ १०१
इत्युक्त्वा तु वरारोहा मणिप्रवरमद्भुतम् ।
प्रायच्छत्परमोद्विग्ना वाचा मां सन्दिदेश ह ॥ १०२
ततस्तस्यै प्रणम्याहं राजपुत्र्यै समाहितः ।
प्रदक्षिणं परिक्रामन्निहाभ्युद्गतमानसः ॥ १०३
उक्तोऽहं पुनरेवेदं निश्चित्य मनसा तया ।
[ज्ञात्वा सम्प्रस्थितं सीता मामुवाच तपस्विनी]
हनुमन्मम वृत्तान्तं वक्तुमर्हसि राघवे ॥ १०४
यथा श्रुत्वैव न चिरात्तावुभौ रामलक्ष्मणौ ।
सुग्रीवसहितौ वीरावुपेयातां तथा कुरु ॥ १०५
यद्यन्यथा भवेदेतद्द्वौ मासौ जीवितं मम ।
न मां द्रक्ष्यति काकुत्स्थो म्रिये साऽहमनाथवत् ॥ १०६

तच्छ्रुत्वा करुणं वाक्यं क्रोधो मामभ्यवर्तत ।
उत्तरं च मया दृष्टं कार्यशेषमनन्तरम् ॥ १०७

ततोऽवर्धत मे कायस्तदा पर्वतसन्निभः ।
युद्धकाङ्क्षी वनं तच्च विनाशयितुमारभे ॥ १०८

तद्भग्नं वनषण्डं तु भ्रान्तत्रस्तमृगद्विजम् ।
प्रतिबुद्धा निरीक्षन्ते राक्षस्यो विकृताननाः ॥ १०९

मां च दृष्ट्वा वने तस्मिन् समागम्य ततस्ततः ।
तास्समभ्यागताः क्षिप्रं रावणायाऽचचक्षिरे ॥ ११०

राजन्वनमिदं दुर्गं तव भग्नं दुरात्मना ।
वानरेण ह्यविज्ञाय तव वीर्यं महाबल ॥ १११

दुर्बुद्धेस्तस्य राजेन्द्र तव विप्रियकारिणः ।
वधमाज्ञापय क्षिप्रं यथाऽसौ विलयं व्रजेत् ॥ ११२

तच्छ्रुत्वा राक्षसेन्द्रेण विसृष्टा भृशदुर्जयाः ।
राक्षसाः किङ्करा नाम रावणस्य मनोनुगाः ॥ ११३

तेषामशीतिसाहस्रं शूलमुद्गरपाणिनाम् ।
मया तस्मिन्वनोद्देशे परिघेण निषूदितम् ॥ ११४

तेषां तु हतशेषा ये ते गत्वा लघुविक्रमाः ।
निहतं च महत्सैन्यं रावणायाऽऽचचक्षिरे ॥ ११५

ततो मे बुद्धिरुत्पन्ना चैत्यप्रासादमाक्रमम् ।
तत्रस्थान्राक्षसान्हत्वा शतं स्तम्भेन वै पुनः ॥ ११६

ललामभूतो लङ्कायास्स वै विध्वंसितो मया ।
ततः प्रहस्तस्य सुतं जम्बुमालिनमादिशत् ॥ ११७

राक्षसैर्बहुभिस्सार्धं घोररूपैर्भयानकैः ।
तमहं बलसम्पन्नं राक्षसं रणकोविदम् ॥ ११८

परिघेणातिघोरेण सूदयामि सहानुगम् ।
तच्छ्रुत्वा राक्षसेन्द्रस्तु मन्त्रिपुत्रान् महाबलान् ॥ ११९

पदातिबलसम्पन्नान् प्रेषयामास रावणः ।
परिघेणैव तान् सर्वान्नयामि यमसादनम् ॥ १२०

मन्त्रिपुत्रान्हतान्श्रुत्वा समरेऽलघुविक्रमान् ।
पञ्च सेनाग्रगान्शूरान् प्रेषयामास रावणः ॥ १२१

तानहं सहसैन्यान्वै सर्वानेवाभ्यसूदयम् ।
ततः पुनर्दशग्रीवः पुत्रमक्षं महाबलम् ॥ १२२

बहुभीराक्षसैस्सार्धं प्रेषयामास रावणः ।
तं तु मन्दोदरीपुत्रं कुमारं रणपण्डितम् ॥ १२३

सहसा खं समुत्क्रान्तं पादयोश्च गृहीतवान् ।
चर्मासिनं शतगुणं भ्रामयित्वा व्यपेषयम् ॥ १२४

तमक्षमागतं भग्नं निशम्य स दशाननः ।
तत इन्द्रजितं नाम द्वितीयं रावणस्सुतम् ॥ १२५

व्यादिदेश सुसङ्क्रुद्धो बलिनं युद्धदुर्मदम् ।
तच्चाप्यहं बलं सर्वं तं च राक्षसपुङ्गवम् ॥ १२६

नष्टौजसं रणे कृत्वा परं हर्षमुपागमम् ।
महतोऽपि महाबाहुः प्रत्ययेन महाबलः ॥ १२७

प्रेषितो रावणेनैव सह वीरैर्मदोत्कटैः ।
सोऽविषह्यं हि मां बुद्ध्वा स्वबलं चावमर्दितम् ॥ १२८

आक्षेणाक्षेण स तु मां प्राबध्नश्चातिवेगितः ।
रज्जुभिश्चाभिबध्नन्ति ततो मां तत्र राक्षसाः ॥ १२९

रावणस्य समीपं च गृहीत्वा मामुपानयन् ।
दृष्ट्वा सम्भाषितश्चाहं रावणेन दुरात्मना । १३०

पृष्टश्च लङ्कागमनं राक्षसानां च तं वधम् ।
तत्सर्वं च मया तत्र सीतार्थमिति जल्पितम् ॥ १३१

अस्याहं दर्शनाकाङ्क्षी प्राप्तस्त्वद्भुवनं विभो ।
मारुतस्यौरसः पुत्रो वानरो हनुमानहम् ॥ १३२

रामदूतं च मां विद्धि सुग्रीवसचिवं कपिम् ।
सोऽहं दूत्येन रामस्य त्वत्सकाशमिहाऽऽगतः ॥ १३३

सुग्रीवश्च महातेजास्स त्वां कुशलमब्रवीत् ।
[शृणुतापि समादेशं यदहं प्रब्रवीमि ते ।
राक्षसेशहरीशस्त्वां वाक्यमाह समाहितम् ॥]
धर्मार्थकामसहितं हितं पथ्यमुवाच च ॥ १३४

वसतो ऋश्यमूके मे पर्वते विपुलद्रुमे ।
राघवो रणविक्रान्तो मित्रत्वं समुपागतः ॥ १३५

तेन मे कथितं राज्ञा भार्या मे रक्षसा हृता ।
तत्र साहाय्यमस्माकं कार्यं सर्वात्मना त्वया ॥ १३६

मया च कथितं तस्मै वालिनश्च वधं प्रति ।
तत्र साहाय्यहेतोर्मे समयं कर्तुमर्हसि ॥ १३७

वालिना हृतराज्येन सुग्रीवेण महाप्रभुः ।
चक्रेऽग्निसाक्षिकं सख्यं राघवस्सह लक्ष्मणः ॥ १३८

तेन वालिनमुत्पाट्य शरेणैकेन संयुगे ।
वानराणां महाराजः कृतस्स प्लवतां प्रभुः ॥ १३९

तस्य साहाय्यमस्माभिः कार्यं सर्वात्मना त्विह ।
तेन प्रस्थापितस्तुभ्यं समीपमिह धर्मतः ॥ १४०

क्षिप्रमानीयतां सीता दीयतां राघवाय च ।
यावन्न हरयो वीरा विधमन्ति बलं तव ॥ १४१

वानराणां प्रभावो हि न केन विदितः पुरा ।
देवतानां सकाशं च ये गच्छन्ति निमन्त्रिताः ॥ १४२

इति वानरराजस्त्वामाहेत्यभिहितो मया ।
मामैक्षत ततः क्रुद्धश्चक्षुषा प्रदहन्निव ॥ १४३

तेन वध्योऽहमाज्ञप्तो रक्षसा रौद्रकर्मणा ।
मत्प्रभावमविज्ञाय रावणेन दुरात्मना ॥ १४४

ततो विभीषणो नाम तस्य भ्राता महामतिः ।
तेन राक्षसराजोऽसौ याचितो मम कारणात् ॥ १४५

नैवं राक्षसशार्दूल त्यज्यतामेष निश्चयः ।
राजशास्त्रव्यपेतो हि मार्गस्संसेव्यते त्वया ॥ १४६

दूतवध्या न दृष्टा हि राजशास्त्रेषु राक्षस ।
दूतेन वेदितव्यं च यथार्थं हितवादिना ॥ १४७

सुमहत्यपराधेऽपि दूतस्यातुलविक्रम ।
विरूपकरणं दृष्टं न वधोऽस्तीति शास्त्रतः ॥ १४८

विभीषणेनैवमुक्तो रावणस्सन्दिदेश तान् ।
राक्षसानेतदेवास्य लाङ्गूलं दह्यतामिति ॥ १४९

ततस्तस्य वचश्श्रुत्वा मम पुच्छं समन्ततः ।
वेष्टितं शणवल्कैश्च जीर्णैः कार्पासजैः पटैः ॥ १५०

राक्षसास्सिद्धसन्नाहास्ततस्ते चण्डविक्रमाः ।
तदाऽदहन्त मे पुच्छं निघ्नन्तः काष्ठमुष्टिभिः ॥ १५१

बद्धस्य बहुभिः पाशैर्यन्त्रितस्य च राक्षसैः ।
[न मे पीडा भवेत्काचिद्दिदृक्षोर्नगरीं दिवा]
ततस्ते राक्षसाश्शूरा बद्धं मामग्निसंवृतम् ॥ १५२

अघोषयन्राजमार्गे नगरद्वारमागताः ।
ततोऽहं सुमहद्रूपं संक्षिप्य पुनरात्मनः ॥ १५३

विमोचयित्वा तं बन्धं प्रकृतिस्थः स्थितः पुनः ।
आयसं परिघं गृह्य तानि रक्षांस्यसूदयम् ॥ १५४

ततस्तन्नगरद्वारं वेगेनाऽऽप्लुतवानहम् ।
पुच्छेन च प्रदीप्तेन तां पुरीं साट्टगोपुराम् ॥ १५५

दहाम्यहमसम्भ्रान्तो युगान्ताग्निरिव प्रजाः ।
[ततो मे ह्यभवत्त्रासो लङ्कां दग्धां समीक्ष्य तु]
विनष्टा जानकी व्यक्तं न ह्यदग्धः प्रदृश्यते ॥ १५६

लङ्कायां कश्चिदुद्देशस्सर्वा भस्मीकृता पुरी ।
दहता च मया लङ्कां दग्धा सीता न संशयः ॥ १५७

रामस्य हि महत्कार्यं मयेदं वितथीकृतम् ।
इति शोकसमाविष्टश्चिन्तामहमुपागतः ॥ १५८

अथाहं वाचमश्रौषं चारणानां शुभाक्षराम् ।
जानकी न च दग्धेति विस्मयोदन्तभाषिणाम् ॥ १५९

ततो मे बुद्धिरुत्पन्ना श्रुत्वा तामद्भुतां गिरम् ।
अदग्धा जानकीत्येवं निमित्तैश्चोपलक्षिता ॥ १६०

दीप्यमाने तु लाङ्गूले न मां दहति पावकः ।
हृदयं च प्रहृष्टं मे वातास्सुरभिगन्धिनः ॥ १६१

तैर्निमित्तैश्च दृष्टार्थैः कारणैश्च महागुणैः ।
ऋषिवाक्यैश्च सिद्धार्थैरभवं हृष्टमानसः ॥ १६२

पुनर्दृष्ट्वा च वैदेहीं विसृष्टश्च तया पुनः ।
ततः पर्वतमासाद्य तत्रारिष्टमहं पुनः ॥ १६३

प्रतिप्लवनमारेभे युष्मद्दर्शनकाङ्क्षया ।
ततः पवनचन्द्रार्कसिद्धगन्धर्वसेवितम् ॥ १६४

पन्थानमहमाक्रम्य भवतो दृष्टवानिह ।
राघवस्य प्रभावेन भवतां चैव तेजसा ॥ १६५

सुग्रीवस्य च कार्यार्थं मया सर्वमनुष्ठितम् ।
एतत्सर्वं मया तत्र यथावदुपपादितम् ।
अत्र यन्न कृतं शेषं तत्सर्वं क्रियतामिति ॥ १६६

॥ इति श्रीमत्सुन्दरकाण्डे अष्टपञ्चाशस्सर्गः ॥

---

## ॥ एकोनषष्टितमस्सर्गः ॥

एतदाख्याय तत्सर्वं हनुमान्मारुतात्मजः ।
भूयस्समुपचक्राम वचनं वक्तुमुत्तरम् ॥ १

सफलो राघवोद्योगस्सुग्रीवस्य च सम्भ्रमः ।
शीलमासाद्य सीताया मम च प्रवणं मनः ॥ २

[ आर्यायास्सदृशं शीलं सीतायाः प्लवगर्षभाः ]
तपसा निर्दहेल्लोकान्क्रुद्धो वा निर्दहेदपि ।
सर्वथाऽतिप्रवृद्धोऽसौ रावणो राक्षसाधिपः ॥ ३
तस्य तां स्पृशतो गात्रं तपसा न विनाशितम् ।
न तदग्निशिखा कुर्यात्संस्पृष्टा पाणिना सती ॥ ४
जनकस्याऽऽत्मजा कुर्याद्यत्क्रोधकलुषीकृता ।
जाम्बवत्प्रमुखान् सर्वाननुज्ञाप्य महाहरीन् ॥ ५
अस्मिन्नेवं गते कार्ये भवतां च निवेदिते ।
न्याय्यं स्म सह वैदेह्या द्रष्टुं तौ पार्थिवात्मजौ ॥ ६
अहमेकोऽपि पर्याप्तस्सराक्षसगणां पुरीम् ।
तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥ ७
किं पुनस्सहितो वीरैर्बलवद्भिः कृतात्मभिः ।
कृतास्त्रैः प्लवगैश्शूरैर्भवद्भिर्विजयैषिभिः ॥ ८
अहं तु रावणं युद्धेससैन्यं सपुरस्सरम् ।
सहपुत्रं वधिष्यामि सहोदरयुतं युधि ॥ ९
ब्राह्ममैन्द्रञ्च रौद्रञ्च वायव्यं वारुणं तथा ।
यदि शक्रजितोऽस्त्राणि दुर्निरीक्ष्याणि संयुगे ॥ १०
तान्यहं विधमिष्यामि हनिष्यामि च राक्षसान् ।
भवतामभ्यनुज्ञातो विक्रमो मे रुणद्धि तम् ॥ ११
मयातुला विसृष्टा हि शैलवृष्टिर्निरन्तरा ।
देवानपि रणे हन्यात्किम्पुनस्तान्निशाचरान् ॥ १२
[ भवतामननुज्ञातो विक्रमो मे रुणद्धि माम् ॥ ]

सागरोऽप्यतियाद्वेलां मन्दरः प्रचलेदपि ।
न जाम्बवन्तं समरे कम्पयेदरिवाहिनी ॥ १३
सर्वराक्षससङ्घानां राक्षसा ये च पूर्वकाः ।
अलमेको विनाशाय वीरो वालिसुतः कपिः ॥ १४
पनसस्योरुवेगेन नीलस्य च महात्मनः ।
मन्दरोऽप्यवशीर्येत किं पुनर्युधि राक्षसः ॥ १५
न देवासुरयक्षेषु गन्धर्वोरगपक्षिषु ।
मैन्दस्य प्रतियोद्धारं शंसत द्विविदस्य वा ॥ १६
अश्विपुत्रौ महाभागावेतौ प्लवगसत्तमौ ।
एतयोः प्रतियोद्धारं न पश्यामि रणाजिरे ॥ १७
पितामहवरोत्सेकात्परमं दर्पमाश्रितौ ।
अमृतप्राशनावेतौ सर्ववानरसत्तमौ ॥ १८
अश्विनोर्माननार्थं हि सर्वलोकपितामहः ।
सर्वावध्यत्वमतुलमनयोर्दत्तवान्पुरा ॥ १९
वरोत्सेकेन मत्तौ च प्रमथ्य महतीं चमूम् ।
सुराणाममृतं वीरौ पीतवन्तौ प्लवङ्गमौ ॥ २०
एतावेव हि संक्रुद्धौ सवाजिरथकुञ्जराम् ।
लङ्कां नाशयितुं शक्तौ सर्वे तिष्ठन्तु वानराः ॥ २१
मयैव निहता लङ्का दग्धा भस्मीकृता पुनः ।
राजमार्गेषु सर्वत्र नाम विश्रावितं मया ॥ २२
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥ २३

अहं कोसलराजस्य दासः पवनसम्भवः ।
हनुमानिति सर्वत्र नाम विश्रावितं मया ॥ २४
अशोकवनिकामध्ये रावणस्य दुरात्मनः ।
अधस्ताच्छिंशुपावृक्षे साध्वी करुणमास्थिता ॥ २५
राक्षसीभिः परिवृता शोकसन्तापकर्शिता ।
मेघलेखापरिवृता चन्द्रलेखेव निष्प्रभा ॥ २६
अचिन्तयन्ती वैदेही रावणं बलदर्पितम् ।
पतिव्रता च सुश्रोणी अवष्टब्धा च जानकी ॥ २७
अनुरक्ता हि वैदेही रामं सर्वात्मना शुभा ।
अनन्यचित्ता रामे च पौलोमीव पुरन्दरे ॥ २८
तदेकवासस्संवीता रजोध्वस्ता तथैव च ।
शोकसन्तापदीनाङ्गी सीता भर्तृहिते रता ॥ २९
सा मया राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ।
राक्षसीभिर्विरूपाभिर्दृष्टा हि प्रमदावने ॥ ३०
एकवेणीधरा दीना भर्तृचिन्तापरायणा ।
अधश्शय्या विवर्णाङ्गी पद्मिनीव हिमागमे ॥ ३१
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ।
कथञ्चिन्मृगशावाक्षी विश्वासमुपपादिता ॥ ३२
ततस्सम्भाषिता चैव सर्वमर्थं च दर्शिता ।
रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ॥ ३३
नियतस्समुदाचारो भक्तिर्भर्तरि चोत्तमा ।
यन्न हन्ति दशग्रीवं स महात्मा कृतागसम् ॥ ३४

निमित्तमात्रं रामस्तु वधे तस्य भविष्यति ।
सा प्रकृत्यैव तन्वङ्गी तद्वियोगाच्च कर्शिता ॥ ३५

प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ।
एवमास्ते महाभागा सीता शोकपरायणा ॥ ३६

यदत्र प्रतिकर्तव्यं तत्सर्वमुपपद्यताम् ।

॥ इति श्रीमत्सुन्दरकाण्डे एकोनषष्टितमस्सर्गः ॥

## ॥ षष्टितमस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा वालिसूनुरभाषत ।
[अहमेको हि पर्याप्तः सराक्षसगणां पुरीम् ।

तां लङ्कां तरसा हन्तुं रावणं च महाबलम् ॥
किंपुनस्सहितैर्वीरैर्बलवद्भिः कृतात्मभिः ।

कृतास्त्रैः प्लवगैश्शक्तैर्भवद्भिर्विजयैषिभिः ।
वायुसूनोर्बलेनैव दग्धा लङ्केति नश्श्रुतम् ॥]

अयुक्तं तु विना देवीं दृष्टवद्भिश्च वानराः ॥ १
समीपं गन्तुमस्माभी राघवस्य महात्मनः ।

दृष्टा देवी न चाऽऽनीता इति तत्र निवेदनम् ॥ २
अयुक्तमिव पश्यामि भवद्भिः ख्यातविक्रमैः ।

न हि नः प्लवने कश्चिन्नापि कश्चित्पराक्रमे ॥ ३
तुल्यस्सामरदैत्येषु लोकेषु हरिसत्तमाः ।

[जित्वा लङ्कां सरक्षौघां हत्वा तं रावणं रणे ।
सीतामादाय गच्छामस्सिद्धार्था हृष्टमानसाः ॥]

तेष्वेवं हतवीरेषु राक्षसेषु हनूमता ॥ ४

किमन्यदत्र कर्तव्यं गृहीत्वा याम जानकीम् ।
रामलक्ष्मणयोर्मध्ये न्यस्याम जनकात्मजाम् ।
किं व्यलीकैस्तु तान्सर्वान्वानरान्वानरर्षभान् ॥
वयमेव हि गत्वा तान्हत्वा राक्षसपुङ्गवान् ।
राघवं द्रष्टुमर्हामः सुग्रीवं सह लक्ष्मणम् ॥]
तमेवं कृतसङ्कल्पं जाम्बवान्हरिसत्तमः ॥ ५
उवाच परमप्रीतो वाक्यमर्थवदर्थवित् ।
[नैषा बुद्धिर्महाबुद्धे यद्ब्रवीषि महाकपे ।
विचेतुं वयमाज्ञप्ता दक्षिणां दिशमुत्तमाम् ॥
नानेतुं कपिराजेन नैव रामेण धीमता ।
कथंचिन्निर्जितां सीतामस्माभिर्नाभिरोचयेत् ॥
प्रभवो नृपशार्दूलः कुलं व्यपदिशन्स्वकम् ।
प्रतिज्ञाय स्वयं राजा सीता विजयमग्रतः ॥
सर्वेषां कपिमुख्यानां कथं मिथ्या करिष्यति ।
विफलं कर्म च कृतं भवेत्तुष्टिर्नरस्य च ॥
वृथा च दर्शितं वीर्यं भवेद्वानरपुङ्गवाः ।
तस्माद्गच्छाम वै सर्वे यत्र रामस्सलक्ष्मणः ॥
सुग्रीवश्च महातेजाः कार्यस्यास्य निवेदने]
न तावदेषा मतिरक्षमा नो यथा भवान्पश्यति राजपुत्र ।
यथा तु रामस्य मतिर्निविष्टा तथा भवान्पश्यतु कार्यसिद्धिम् ॥ ६

इति श्रीमत्सुन्दरकाण्डे षष्टितमस्सर्गः ॥

## ॥ एकषष्टितमस्सर्गः ॥

ततो जाम्बवतो वाक्यमगृह्णन्त वनौकसः ।
अङ्गदप्रमुखा वीरा हनुमांश्च महाकपिः ॥ १
प्रीतिमन्तस्ततस्सर्वे वायुपुत्रपुरस्सराः ।
महेन्द्राद्रिं परित्यज्य पुप्लुवुः प्लवगर्षभाः ॥ २
मेरुमन्दरसङ्काशा मत्ता इव महागजाः ।
छादयन्त इवाकाशं महाकाया महाबलाः ॥ ३
सभाज्यमानं भूतैस्तमात्मवन्तं महाबलम् ।
हनुमन्तं महावेगं वहन्त इव दृष्टिभिः ॥ ४
राघवे चार्थनिर्वृत्तिं कर्तुं च परमं यशः ।
समाधाय समृद्धार्थाः कर्मसिद्धिभिरुन्नताः ॥ ५
प्रियाख्यानोन्मुखास्सर्वे सर्वे युद्धाभिनन्दिनः ।
सर्वे रामप्रतीकारे निश्चितार्था मनस्विनः ॥ ६
प्लवमानाः खमाप्लुत्य ततस्ते काननौकसः ।
नन्दनोपममासेदुर्वनं द्रुमलतायुतम् ॥ ७
यत्तन्मधुवनं नाम सुग्रीवस्याभिरक्षितम् ।
अधृष्यं सर्वभूतानां सर्वभूतमनोहरम् ॥ ८
यद्रक्षति महावीर्यस्सदा दधिमुखः कपिः ।
मातुलः कपिमुख्यस्य सुग्रीवस्य महात्मनः ॥ ९
ते तद्वनमुपागम्य बभूवुः परमोत्कटाः ।
वानरा वानरेन्द्रस्य मनः कान्ततमं महत् ॥ १०

ततस्ते वानरा हृष्टा दृष्ट्वा मधुवनं महत् ।
कुमारमभ्ययाचन्त मधूनि मधुपिङ्गलाः ॥ ११
ततः कुमारस्तान्वृद्धाञ्जाम्बवत्प्रमुखान्कपीन् ।
अनुमान्य ददौ तेषां निसर्गं मधुभक्षणे ॥ १२
[ते निसृष्टाः कुमारेण धीमता वालिसूनुना ।
हरयस्समपद्यन्त द्रुमान्मधुकराकुलान् ॥
भक्षयन्तस्सुगन्धीनि मूलानि च फलानि च ।
जग्मुः प्रहर्षं ते सर्वे बभूवुश्च मदोत्कटाः ॥]
ततश्चानुमतास्सर्वे सम्प्रहृष्टा वनौकसः ।
मुदिताः प्रेरिताश्चापि प्रनृत्यन्तोऽभवंस्ततः ॥ १३
गायन्ति केचित्प्रणमन्ति केचिन्नृत्यन्ति केचित्प्रहसन्ति केचित् ।
पतन्ति केचिद्विचरन्ति केचित्प्लवन्ति केचित्प्रलपन्ति केचित् ॥ १४
परस्परं केचिदुपाश्रयन्ते परस्परं केचिदुपाक्रमन्ते ।
परस्परं केचिदुपब्रुवन्ते परस्परं केचिदुपारमन्ते ॥ १५
द्रुमाद्द्रुमं केचिदभिद्रवन्ति क्षितौ नगाग्रान्निपतन्ति केचित् ।
महीतलात्केचिदुदीर्णवेगा महाद्रुमाग्राण्यभिसम्पतन्ति ॥ १६
[धावन्ति केचित्सुपतन्ति केचिन्महाबला वानरयूथमुख्याः ।]
गायन्तमन्यः प्रहसन्नुपैति हसन्तमन्यः प्ररुदन्नुपैति ।
रुदन्तमन्यः प्रणुदन्नुपैति तुदन्तमन्यः प्रणदन्नुपैति ॥ १७
समाकुलं तत्कपिसैन्यमासीन्मधुप्रपानोत्कटसत्त्वचेष्टम् ।
न चात्र कश्चिन्न बभूव मत्तो न चात्र कश्चिन्न बभूव तृप्तः ॥ १८

ततो वनं तत्परिभक्ष्यमाणं द्रुमांश्च विध्वंसितपत्रपुष्पान् ।
समीक्ष्य कोपाद्दधिवक्त्रनामा निवारयामास कपिः कपींस्तान् ॥ १९

स तैः प्रवृद्धैः परिभर्त्स्यमानो वनस्य गोप्ता हरिवीरवृद्धः ।
चकार भूयो मतिमुग्रतेजा वनस्य रक्षां प्रति वानरेभ्यः ॥ २०

उवाच कांश्चित्परुषाणि धृष्टमसक्तमन्यांश्च तलैर्जघान ।
समेत्य कैश्चित् कलहं चकार तथैव साम्नोपजगाम कांश्चित् ॥ २१

स तैर्मदात्सम्परिवार्य वाक्यैर्बलाच्च तेन प्रतिवार्यमाणैः ।
प्रधर्षितस्त्यक्तभयैस्समेत्य प्रकृष्यते चाप्यनवेक्ष्य दोषम् ॥ २२

नखैस्तुदन्तो दशनैर्दशन्तस्तलैश्च पादैश्च समापयन्तः ।
मदात्कपिं तं कपयस्समग्रा महावनं निर्विषयं च चक्रुः ॥ २३

॥ इति श्रीमत्सुन्दरकाण्डे एकषष्टितमस्सर्गः ॥

---

## ॥ द्विषष्टितमस्सर्गः ॥

तानुवाच हरिश्रेष्ठो हनुमान्वानरर्षभः ।
अव्यग्रमनसो यूयं मधु सेवत वानराः ॥ १

अहमावारयिष्यामि युष्माकं परिपन्थिनः ।
श्रुत्वा हनुमतो वाक्यं हरीणां प्रवरोऽङ्गदः ॥ २

प्रत्युवाच प्रसन्नात्मा पिबन्तु हरयो मधु ।
अवश्यं कृतकार्यस्य वाक्यं हनुमतो मया ॥ ३

अकार्यमपि कर्तव्यं किमङ्ग पुनरीदृशम् ।
अङ्गदस्य मुखाच्छ्रुत्वा वचनं वानरर्षभाः ॥ ४

साधु साध्विति संहृष्टा वानराः प्रत्यपूजयन् ।
पूजयित्वाऽङ्गदं सर्वे वानरा वानरर्षभम् ॥ ५

जग्मुर्मधुवनं यत्र नदीवेग इव द्रुमम् ।
ते प्रविष्टा मधुवनं पालानाक्रम्य वीर्यतः ॥ ६

अतिसर्गाच्च पटवो दृष्ट्वा श्रुत्वा च मैथिलीम् ।
पपुस्सर्वे मधु तदा रसवत्फलमाददुः ॥ ७

उत्पत्य च ततस्सर्वे वनपालान्समागतान् ।
ताडयन्ति स्म शतशस्सक्तान्मधुवने तदा ॥ ८

मधूनि द्रोणमात्राणि बाहुभिःपरिगृह्य ते ।
पिबन्ति सहितास्सर्वे निघ्नन्ति स्म तथा परे ॥ ९

केचित्पीत्वाऽपविध्यन्ति मधूनि मधुपिङ्गलाः ।
मधूच्छिष्टेन केचिच्च जघ्नुरन्योन्यमुत्कटाः ॥ १०

अपरे वृक्षमूले तु शाखां गृह्य व्यवस्थिताः ।
अत्यर्थं च मदग्लानाः पर्णान्यास्तीर्य शेरते ॥ ११

उन्मत्तभूताः प्लवगा मधुमत्ताश्च हृष्टवत् ।
क्षिपन्ति च तदान्योऽन्यं स्खलन्ति च तथाऽपरे ॥ १२

केचित्क्ष्वेळां प्रकुर्वन्ति केचित्कूजन्ति हृष्टवत् ।
हरयो मधुना मत्ताः केचित्सुप्ता महीतले ॥ १३

कृत्वा केचिद्धसंत्यन्ये केचित्कुर्वन्ति चेतरत् ।
कृत्वा केचिद्वदंत्यन्ये केचिद्बुध्यन्ति चेतरत् ॥ १४

येऽप्यत्र मधुपालास्स्युःप्रेष्या दधिमुखस्य तु ।
तेऽपि तैर्वानरैर्भीमैः प्रतिषिद्धा दिशो गताः ॥ १५

जानुभिस्तु प्रकृष्टाश्च देवमार्गं प्रदर्शिताः ।
अब्रुवन्परमोद्विग्ना गत्वा दधिमुखं वचः ॥ १६

हनूमता दत्तवरैर्हतं मधुवनं बलात् ।
वयं च जानुभिः कृष्टा देवमार्गं च दर्शिताः ॥ १७

ततो दधिमुखः क्रुद्धो वनपस्तत्र वानरः ।
हतं मधुवनं श्रुत्वा सान्त्वयामास तान्हरीन् ॥ १८

इहागच्छत गच्छामो वानरान्बलदर्पितान् ।
बलेन वारयिष्यामो मधु भक्षयतो वयम् ॥ १९

श्रुत्वा दधिमुखस्येदं वचनं वानरर्षभाः ।
पुनर्वीरा मधुवनं तेनैव सहसा ययुः ॥ २०

मध्ये चैषां दधिमुखः प्रगृह्य तरसा तरुम् ।
समभ्यधावद्वेगेन ते च सर्वे प्लवङ्गमाः ॥ २१

ते शिलाः पादपांश्चापि पर्वतांश्चापि वानराः ।
गृहीत्वाऽभ्यगमन्क्रुद्धा यत्र ते कपिकुञ्जराः ॥ २२

ते स्वामिवचनं वीरा हृदयेष्ववसज्य तत् ।
त्वरया ह्यभ्यधावन्त सालतालशिलायुधाः ॥ २३

वृक्षस्थांश्च तलस्थांश्च वानरान्बलदर्पितान् ।
अभ्यक्रामंस्ततो वीराः पालास्तत्र सहस्रशः ॥ २४

[बलान्निवारयन्तश्च आनेदुर्हरयो हरीन् ।
सन्दष्टोष्ठपुटक्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥]

अथ दृष्ट्वा दधिमुखं क्रुद्धं वानरपुङ्गवाः ।
अभ्यधावन्त वेगेन हनुमत्प्रमुखास्तदा ॥ २५

तं सवृक्षं महाबाहुं रूपवन्तं महाबलम् ।
आर्यकं प्राहरत्तत्र बाहुभ्यां कुपितोऽङ्गदः ॥ २६

मदान्धश्च न वेदैनमार्यकोऽयं ममेति सः ।
अथैनं निष्पिपेषाशु वेगवद्वसुधातले ॥ २७

स भग्नबाहूरुभुजो विह्वलश्शोणितोक्षितः ।
मुमोह सहसा वीरो मुहूर्तं कपिकुञ्जरः ॥ २८

स समाश्वास्य सहसा सङ्क्रुद्धो राजमातुलः ।
वानरान्वारयामास दण्डेन मधुमोहितान् ॥ २९

स कथञ्चिद्विमुक्तस्तैर्वानरैर्वानरर्षभः ।
उवाचैकान्तमाश्रित्य भृत्यान्स्वान्समुपागतान् ॥ ३०

एते तिष्ठन्तु गच्छामो भर्ता नो यत्र वानरः ।
सुग्रीवो विपुलग्रीवस्सह रामेण तिष्ठति ॥ ३१

सर्वं चैवाङ्गदे दोषं श्रावयिष्यामि पार्थिवे ।
अमर्षी वचनं श्रुत्वा घातयिष्यति वानरान् ॥ ३२

इष्टं मधुवनं ह्येतत्सुग्रीवस्य महात्मनः ।
पितृपैतामहं दिव्यं देवैरपि दुरासदम् ॥ ३३

स वानरानिमान्सर्वान्मधुलुब्धान्गतायुषः ।
घातयिष्यति दण्डेन सुग्रीवस्ससुहृज्जनान् ॥ ३४

वध्या ह्येते दुरात्मानो नृपाज्ञापरिभाविनः ।
अमर्षप्रभवो रोषस्सफलो नो भविष्यति ॥ ३५

एवमुक्त्वा दधिमुखो वनपालान्महाबलः ।
जगाम सहसोत्पत्य वनपालैस्समन्वितः ॥ ३६

निमेषान्तरमात्रेण स हि प्राप्तो वनालयः ।
सहस्रांशुसुतो धीमान्सुग्रीवो यत्र वानरः ॥ ३७
रामं च लक्ष्मणं चैव दृष्ट्वा सुग्रीवमेव च ।
समप्रतिष्ठां जगतीमाकाशान्निपपात ह ॥ ३८
सन्निपत्य महावीर्यस्सर्वैस्तैः परिवारितः ।
हरिर्दधिमुखः पालैः पालानां परमेश्वरः ॥ ३९
स दीनवदनो भूत्वा कृत्वा शिरसि चाञ्जलिम् ।
सुग्रीवस्य शुभौ मूर्ध्ना चरणौ प्रत्यपीडयत् ॥ ४०

॥ इति श्रीमत्सुन्दरकाण्डे द्विषष्टितमस्सर्गः ॥

## ॥ त्रिषष्टितमस्सर्गः ॥

ततो मूर्ध्ना निपतितं वानरं वानरर्षभः ।
दृष्ट्वैवोद्विग्नहृदयो वाक्यमेतदुवाच ह ॥ १
उत्तिष्ठोत्तिष्ठ कस्मात्त्वं पादयोः पतितो मम ।
अभयं ते भवेद्वीर सर्वमेवाभिधीयताम् ॥ २
[किं सम्भ्रमाद्धितं कृत्स्नं ब्रूहि यद्वक्तुमर्हसि ।
कच्चिन्मधुवने स्वस्ति श्रोतुमिच्छामि वानर ॥]
स तु विश्वासितस्तेन सुग्रीवेण महात्मना ।
उत्थाय सुमहाप्राज्ञो वाक्यं दधिमुखोऽब्रवीत् ॥ ३
नैवर्क्षरजसा राजन्न त्वया नापि वालिना ।
वनं निसृष्टपूर्वं हि भक्षितं तच्च वानरैः ॥ ४

[न्यवारयमहं सर्वान्सहैभिर्वनचारिभिः ।
अचिन्तयित्वा मां हृष्टा भक्षयन्ति पिबन्ति च ॥]

एभिः प्रधर्षिताश्चैव वानरा वनरक्षिभिः ।
मधून्यचिन्तयित्वेमान्भक्षयन्ति पिबन्ति च ॥ ५

शिष्टमत्रापविध्यन्ति भक्षयन्ति तथापरे ।
निवार्यमाणास्ते सर्वे भ्रुवौ वै दर्शयन्ति हि ॥ ६

इमे हि संरब्धतरास्तथा तैस्सम्प्रधर्षिताः ।
वारयन्तो वनात्तस्मात्क्रुद्धैर्वानरपुङ्गवैः ॥ ७

ततस्तैर्बहुभिर्वीरैर्वानरैर्वानरर्षभः ।
संरक्तनयनैः क्रोधाद्धरयः प्रविचालिताः ॥ ८

पाणिभिर्निहताः केचित्केचिज्जानुभिराहताः ।
प्रकृष्टाश्च यथाकामं देवमार्गं च दर्शिताः ॥ ९

एवमेते हताश्शूरास्त्वयि तिष्ठति भर्तरि ।
कृत्स्नं मधुवनं चैव प्रकामं तैः प्रभक्ष्यते ॥ १०

एवं विज्ञाप्यमानं तं सुग्रीवं वानरर्षभम् ।
अपृच्छत्तं महाप्राज्ञो लक्ष्मणः परवीरहा ॥ ११

किमयं वानरो राजन्वनपः प्रत्युपस्थितः ।
कञ्चार्थमभिनिर्दिश्य दुःखितो वाक्यमब्रवीत् ॥ १२

एवमुक्तस्तु सुग्रीवो लक्ष्मणेन महात्मना ।
लक्ष्मणं प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥ १३

आर्य लक्ष्मण सम्प्राह वीरो दधिमुखः कपिः ।
अङ्गदप्रमुखैर्वीरैर्भक्षितं मधु वानरैः ॥ १४

विचित्य दक्षिणामाशामागतैर्हरिपुङ्गवैः ।
नैषामकृतकृत्यानामीदृशस्स्यादुपक्रमः ॥ १५
आगतैश्च प्रमथितं यथा मधुवनं हि तैः ।
धर्षितं च वनं कृत्स्नमुपयुक्तं च वानरैः ।
वनं यदाऽभिपन्नास्ते साधितं कर्म वानरैः ॥ १६
[वारयन्तो भृशं प्राप्ताः पाला जानुभिराहताः ।
तथा न गणितश्चायं कपिर्दधिमुखो बली ॥
कपिर्मम वनस्यायमस्माभिस्स्थापितस्स्वयम् ॥]
दृष्टा देवी न सन्देहो न चान्येन हनूमता ॥ १७
न ह्यन्यस्साधने हेतुः कर्मणोऽस्य हनूमतः ।
कार्यसिद्धिर्मतिश्चैव तस्मिन्वानरपुङ्गवे ॥ १८
व्यवसायश्च वीर्यं च श्रुतं चापि प्रतिष्ठितम् ।
जाम्बवान्यत्र नेता स्यादङ्गदश्च महाबलः ॥ १९
हनुमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ।
अङ्गदप्रमुखैर्वीरैर्हतं मधुवनं किल ॥ २०
वारयन्तश्च सहितास्तथा जानुभिराहताः ।
एतदर्थमयं प्राप्तो वक्तुं मधुरवागिह ॥ २१
नाम्ना दधिमुखो नाम हरिः प्रख्यातविक्रमः ।
दृष्टा सीता महाबाहो सौमित्रे पश्य तत्त्वतः ॥ २२
अभिगम्य तथा सर्वे पिबन्ति मधु वानराः ।
न चाप्यदृष्ट्वा वैदेहीं विश्रुताः पुरुषर्षभ ॥ २३

वनं दत्तवरं दिव्यं धर्षयेयुर्वनौकसः ।
ततः प्रहृष्टो धर्मात्मा लक्ष्मणस्सह राघवः ॥ २४
श्रुत्वा कर्णसुखां वाणीं सुग्रीववदनाच्च्युताम् ।
प्राहृष्यत भृशं रामो लक्ष्मणश्च महाबलः ॥ २५
श्रुत्वा दधिमुखस्येदं सुग्रीवस्तु प्रहृष्य च ।
वनपालं पुनर्वाक्यं सुग्रीवः प्रत्यभाषत ॥ २६
प्रीतोऽस्मि सोऽहं यद्भुक्तं वनं तैः कृतकर्मभिः ।
मर्षितं मर्षणीयं च चेष्टितं कृतकर्मणाम् ॥ २७
[गच्छ शीघ्रं मधुवनं संरक्षस्व त्वमेव हि ।
शीघ्रं प्रेषय सर्वांस्तान्हनुमत्प्रमुखान्कपीन् ॥]
इच्छामि शीघ्रं हनुमत्प्रधानान्शाखामृगांस्तान्मृगराजदर्पान् ।
द्रष्टुं कृतार्थान्सहराघवाभ्यां श्रोतुं च सीताधिगमे प्रयत्नम् ॥ २८
प्रीतिस्फीताक्षौ सम्प्रहृष्टौ कुमारौ दृष्ट्वा सिद्धार्थौ वानराणां च राजा ।
अङ्गैस्संहृष्टैः कर्मसिद्धिं विदित्वा बाह्वोरासन्नांसोऽतिमात्रं ननन्द ॥

इति श्रीमत्सुन्दरकाण्डे त्रिषष्टितमस्सर्गः ॥

---

## ॥ चतुष्षष्टितमस्सर्गः ॥

सुग्रीवेणैवमुक्तस्तु हृष्टो दधिमुखः कपिः ।
राघवं लक्ष्मणं चैव सुग्रीवं चाभ्यवादयत् ॥ १
स प्रणम्य च सुग्रीवं राघवौ च महाबलौ ।
वानरैस्सहितैश्शूरैर्दिवमेवोत्पपात ह ॥ २

स यथैवागतः पूर्वं तथैव त्वरितं गतः ।
निपत्य गगनाद्भूमौ तद्वनं प्रविवेश ह ॥ ३

स प्रविष्टो मधुवनं ददर्श हरियूथपान् ।
विमदानुत्थितान् सर्वान् मेहमानान् मधूदकम् ॥ ४

स तानुपागमद्वीरो बध्वा करपुटाञ्जलिम् ।
उवाच वचनं श्लक्ष्णमिदं हृष्टवदङ्गदम् ॥ ५

सौम्य रोषो न कर्तव्यो यदेभिरभिवारितः ।
अज्ञानाद्रक्षिभिः क्रोधाद्भवन्तः प्रतिषेधिताः ॥ ६

[श्रान्तो दूरादनुप्राप्तो भक्षयस्व स्वकं मधु]
युवराजस्त्वमीशश्च वनस्यास्य महाबलः ।
मौर्ख्यात्पूर्वं कृतो दोषस्तं भवान् क्षन्तुमर्हति ॥ ७

[यथैव हि पिता तेऽभूत्पूर्वं हरिगणेश्वरः ।
तथा त्वमपि सुग्रीवो नान्यस्तु हरिसत्तम ॥]

आख्यातं हि मया गत्वा पितृव्यस्य तवानघ ।
इहोपयातं सर्वेषामेतेषां वनचारिणाम् ॥ ८

स त्वदागमनं श्रुत्वा सहैभिर्हरियूथपैः ।
प्रहृष्टो न तु रुष्टोऽसौ वनं श्रुत्वा प्रधर्षितम् ॥ ९

प्रहृष्टो मां पितृव्यस्ते सुग्रीवो वानरेश्वरः ।
शीघ्रं प्रेषय सर्वांस्तानिति होवाच पार्थिवः ॥ १०

श्रुत्वा दधिमुखस्येदं वचनं श्लक्ष्णमङ्गदः ।
अब्रवीत्तान् हरिश्रेष्ठो वाक्यं वाक्यविशारदः ॥ ११

शङ्के श्रुतोऽयं वृत्तान्तो रामेण हरियूथपाः ।

[अयं च हर्षादाख्याति तेन जानामि हेतुना]
तत् क्षमं (णं) नेह नस्स्थातुं कृते कार्ये परन्तपाः ॥ १२

पीत्वा मधु यथाकामं विश्रान्ता वनचारिणः ।
किं शेषं गमनं तत्र सुग्रीवो यत्र मे गुरुः ॥ १३

सर्वे यथा मां वक्ष्यन्ति समेत्य हरियूथपाः ।
तथाऽस्मि कर्ता कर्तव्ये भवद्भिः परवानहम् ॥ १४

नाज्ञापयितुमीशोऽहं युवराजोऽस्मि यद्यपि ।
अयुक्तं कृतकर्माणो यूयं धर्षयितुं मया ॥ १५

ब्रुवतश्चाङ्गदस्यैवं श्रुत्वा वचनमव्ययम् ।
प्रहृष्टमनसो वाक्यमिदमूचुर्वनौकसः ॥ १६

एवं वक्ष्यति को राजन् प्रभुस्सन्वानरर्षभ ।
ऐश्वर्यमदमत्तो हि सर्वोऽहमिति मन्यते ॥ १७

तव चेदं तु सदृशं वाक्यं नान्यस्य कस्यचित् ।
सन्नतिर्हि तवाख्याति भविष्यच्छुभयोग्यताम् ॥ १८

सर्वे वयमपि प्राप्तास्तत्र गन्तुं कृतक्षणाः ।
स यत्र हरिवीराणां सुग्रीवः पतिरव्ययः ॥ १९

त्वया ह्यनुक्तैर्हरिभिर्नैव शक्यं पदात्पदम् ।
क्वचिद्गन्तुं हरिश्रेष्ठ ब्रूमस्सत्यमिदं तु ते ॥ २०

एवं तु वदतां तेषामङ्गदः प्रत्युवाच ह ।
बाढं गच्छाम इत्युक्त्वा खमुत्पेतुर्महाबलाः ॥ २१

उत्पतन्तमनूत्पेतुस्सर्वे ते हरियूथपाः ।
कृत्वाऽऽकाशं निराकाशं यन्त्रोत्क्षिप्ता इवाचलाः ॥ २२

[अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ।]
तेऽम्बरं सहसोत्पत्य वेगवन्तः प्लवङ्गमाः ।
विनदन्तो महानादं घना वातेरिता यथा ॥ २३

अङ्गदे समनुप्राप्ते सुग्रीवो वानराधिपः ।
उवाच शोकोपहतं रामं कमललोचनम् ॥ २४

समाश्वसिहि भद्रं ते दृष्टा देवी न संशयः ।
नागन्तुमिह शक्यं तैरतीते समये हि नः ॥ २५

[अङ्गदस्य प्रहर्षाच्च जानामि शुभदर्शन ।]
न मत्सकाशमागच्छेत्कृत्ये हि विनिपातिते ।
युवराजो महाबाहुः प्लवतां प्रवरोऽङ्गदः ॥ २६

यद्यप्यकृतकृत्यानामीदृशस्स्यादुपक्रमः ।
भवेत्स दीनवदनो भ्रान्तविप्लुतमानसः ॥ २७

पितृपैतामहं चैतत्पूर्वकैरभिरक्षितम् ।
न मे मधुवनं हन्यादहृष्टः प्लवगेश्वरः ॥ २८

कौसल्यासुप्रजा राम समाश्वसिहि सुव्रत ।
दृष्टा देवी न सन्देहो न चान्येन हनूमता ॥ २९

न ह्यन्यः कर्मणो हेतुस्साधनेऽस्य हनूमतः ।
हनूमति हि सिद्धिश्च मतिश्च मतिसत्तम ॥ ३०

व्यवसायश्च वीर्यं च सूर्ये तेज इव ध्रुवम् ।
जाम्बवान्यत्र नेता स्यादङ्गदश्च बलेश्वरः ॥ ३१

हनुमांश्चाप्यधिष्ठाता न तस्य गतिरन्यथा ।
माभूश्चिन्तासमायुक्तस्सम्प्रत्यमितविक्रमः ॥ ३२

[यथा हि दर्पितोदग्राः सङ्गताः काननौकसः ।
नैषामकृतकार्याणामीदृशस्स्यादुपक्रमः ॥
वनभङ्गेन जानामि मधूनां भक्षणेन च ।]
ततः किलकिलाशब्दं शुश्रावासन्नमम्बरे ।
हनुमत्कर्मदृप्तानां नर्दतां काननौकसाम् ॥ ३३
किष्किन्धामुपयातानां सिद्धिं कथयतामिव ।
ततश्श्रुत्वा निनादं तं कपीनां कपिसत्तमः ॥ ३४
आयताञ्चितलाङ्गूलस्सोऽभवद्धृष्टमानसः ।
आजग्मुस्तेऽपि हरयो रामदर्शनकांक्षिणः ॥ ३५
अङ्गदं पुरतः कृत्वा हनूमन्तं च वानरम् ।
तेऽङ्गदप्रमुखा वीराः प्रहृष्टाश्च मुदान्विताः ॥ ३६
निपेतुर्हरिराजस्य समीपे राघवस्य च ।
हनुमांश्च महाबाहुः प्रणम्य शिरसा ततः ॥ ३७
नियतामक्षतां देवीं राघवाय न्यवेदयत् ।
[दृष्टा देवीति हनुमद्वदनादमृतोपमम् ।
आकर्ण्य वचनं रामो हर्षमाप सलक्ष्मणः ॥]
निश्चितार्थस्ततस्तस्मिन्सुग्रीवः पवनात्मजे ॥ ३८
लक्ष्मणः प्रीतिमान्प्रीतं बहुमानादवैक्षत ।
प्रीत्या च रममाणोऽथ राघवः परवीरहा ॥ ३९
बहुमानेन महता हनुमन्तमवैक्षत ।

इति श्रीमत्सुन्दरकाण्डे चतुष्षष्टितमस्सर्गः ॥

---

## ॥ पञ्चषष्टितमस्सर्गः ॥

ततः प्रस्रवणं शैलं ते गत्वा चित्रकाननम् ।
प्रणम्य शिरसा रामं लक्ष्मणं च महाबलम् ॥ १
युवराजं पुरस्कृत्य सुग्रीवमभिवाद्य च ।
प्रवृत्तिमथ सीतायाः प्रवक्तुमुपचक्रमुः ॥ २
रावणान्तःपुरे रोधं राक्षसीभिश्च तर्जनम् ।
रामे समनुरागं च यश्चायं समयः कृतः ॥ ३
एतदाख्यान्ति ते सर्वे हरयो रामसन्निधौ ।
वैदेहीमक्षतां श्रुत्वा रामस्तूत्तरमब्रवीत् ॥ ४
क्व सीता वर्तते देवी कथं च मयि वर्तते ।
एतन्मे सर्वमाख्यात वैदेहीं प्रति वानराः ॥ ५
रामस्य गदितं श्रुत्वा हरयो रामसन्निधौ ।
चोदयन्ति हनूमन्तं सीतावृत्तान्तकोविदम् ॥ ६
श्रुत्वा तु वचनं तेषां हनुमान्मारुतात्मजः ।
प्रणम्य शिरसा देव्यै सीतायै तां दिशं प्रति ॥ ७
उवाच वाक्यं वाक्यज्ञस्सीताया दर्शनं यथा ।
[तं मणिं काञ्चनं दिव्यं दीप्यमानं स्वतेजसा ।
दत्वा रामाय हनुमांस्ततः प्राञ्जलिरब्रवीत् ॥]
समुद्रं लङ्घयित्वाऽहं शतयोजनमायतम् ॥ ८
अगच्छं जानकीं सीतां मार्गमाणो दिदृक्षया ।
तत्र लङ्केति नगरी रावणस्य दुरात्मनः ॥ ९

दक्षिणस्य समुद्रस्य तीरे वसति दक्षिणे ।
तत्र दृष्टा मया सीता रावणान्तःपुरे सती ॥ १०

सन्न्यस्य त्वयि जीवन्ती रामा राममनोरथम् ।
दृष्टा मे राक्षसीमध्ये तर्ज्यमाना मुहुर्मुहुः ॥ ११

राक्षसीभिर्विरूपाभीरक्षिता प्रमदावने ।
दुःखमासाद्यते देवी तथाऽदुःखोचिता सती ॥ १२

रावणान्तः पुरे रुद्धा राक्षसीभिस्सुरक्षिता ।
एकवेणीधरा दीना त्वयि चिन्तापरायणा ॥ १३

अधश्शय्या विवर्णाङ्गी पद्मिनीव हिमागमे ।
रावणाद्विनिवृत्तार्था मर्तव्यकृतनिश्चया ॥ १४

देवी कथञ्चित् काकुत्स्थ त्वन्मना मार्गिता मया ।
इक्ष्वाकुवंशविख्यातिं शनैः कीर्तयताऽनघ ॥ १५

सा मया नरशार्दूल विश्वासमुपपादिता ।
ततस्सम्भाषिता देवी सर्वमर्थं च दर्शिता ॥ १६

रामसुग्रीवसख्यं च श्रुत्वा प्रीतिमुपागता ।
नियतस्समुदाचारो भक्तिश्चास्यास्तथा त्वयि ॥ १७

एवं मया महाभागा दृष्टा जनकनन्दिनी ।
उग्रेण तपसा युक्ता त्वद्भक्त्या पुरुषर्षभ ॥ १८

अभिज्ञानं च मे दत्तं यथा वृत्तं तवान्तिके ।
चित्रकूटे महाप्राज्ञ वायसं प्रति राघव ॥ १९

विज्ञाप्यश्च नरव्याघ्रो रामो वायुसुत त्वया ।
अखिलेनेह यद्दृष्टमिति मामाह जानकी ॥ २०

अयं चास्मै प्रदातव्यो यत्नात्सुपरिरक्षितः ।
ब्रुवता वचनान्येवं सुग्रीवस्योपशृण्वतः ॥ २१
एष चूडामणिश्श्रीमान् मया सुपरिरक्षितः ।
मनश्शिलायास्तिलको गण्डपार्श्वे निवेशितः ॥ २२
त्वया प्रणष्टे तिलके तं किल स्मर्तुमर्हसि ।
एष निर्यातितश्श्रीमान्मया ते वारिसम्भवः ॥ २३
एतं दृष्ट्वा प्रमोदिष्ये व्यसने त्वामिवानघ ।
जीवितं धारयिष्यामि मासं दशरथात्मज ॥ २४
ऊर्ध्वं मासान्न जीवेयं रक्षसां वशमागता ।
इति मामब्रवीत्सीता कृशाङ्गी धर्मचारिणी ॥ २५
रावणान्तःपुरे रुद्धा मृगीवोत्फुल्ललोचना ।
एतदेव मयाऽऽख्यातं सर्वं राघव यद्यथा ॥ २६
सर्वथा सागरजले सन्तारः प्रविधीयताम् ।
तौ जाताश्वासौ राजपुत्रौ विदित्वा तच्चाभिज्ञानं राघवाय प्रदाय ।
देव्या चाऽऽख्यातं सर्वमेवानुपूर्व्याद्वाचा सम्पूर्णं वायुपुत्रश्शशंस ॥

॥ इति श्रीमत्सुन्दरकाण्डे पञ्चषष्टितमस्सर्गः ॥

---

## ॥ षट्षष्टितमस्सर्गः ॥

एवमुक्तो हनुमता रामो दशरथात्मजः ।
तं मणिं हृदये कृत्वा प्ररुरोद सलक्ष्मणः ॥ १
तं तु दृष्ट्वा मणिश्रेष्ठं राघवश्शोककर्शितः ।
नेत्राभ्यामश्रुपूर्णाभ्यां सुग्रीवमिदमब्रवीत् ॥ २

यथैव धेनुस्स्रवति स्नेहाद्वत्सस्य वत्सला ।
तथा ममापि हृदयं मणिरत्नस्य दर्शनात् ॥ ३

मणिरत्नमिदं दत्तं वैदेह्याश्श्वशुरेण मे ।
वधूकाले यथा बद्धमधिकं मूर्ध्नि शोभते ॥ ४

अयं हि जलसम्भूतो मणिस्सज्जनपूजितः ।
यज्ञे परमतुष्टेन दत्तश्शक्रेण धीमता ॥ ५

इमं दृष्ट्वा मणिश्रेष्ठं यथा तातस्य दर्शनम् ।
अद्यास्म्यवगतस्सौम्य वैदेहस्य तथा विभोः ॥ ६

अयं हि शोभते तस्याः प्रियाया मूर्ध्नि मे मणिः ।
अस्याद्य दर्शनेनाहं प्राप्तां तामिव चिन्तये ॥ ७

किमाह सीता वैदेही ब्रूहि सौम्य पुनः पुनः ।
पिपासुमिव तोयेन सिञ्चन्ती वाक्यवारिणा ॥ ८

इतस्तु किं दुःखतरं यदिमं वारिसम्भवम् ।
मणिं पश्यामि सौमित्रे वैदेहीमागतं विना ॥ ९

चिरं जीवति वैदेही यदि मासं धरिष्यति ।
क्षणं सौम्य न जीवेयं विना तामसितेक्षणाम् ॥ १०

नय मामपि तं देशं यत्र दृष्टा मम प्रिया ।
न तिष्ठेयं क्षणमपि प्रवृत्तिमुपलभ्य च ॥ ११

कथं सा मम सुश्रोणी भीरुभीरुस्सती सदा ।
भयावहानां घोराणां मध्ये तिष्ठति रक्षसाम् ॥ १२

शारदस्तिमिरोन्मुक्तो नूनं चन्द्र इवाम्बुदैः ।
आवृतं वदनं तस्या न विराजति राक्षसैः ॥ १३

किमाह सीता हनुमंस्तत्त्वतः कथयाद्य मे ।
एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥　　१४

मधुरा मधुरालापा किमाह मम भामिनी ।
मद्विहीना वरारोहा हनुमन्कथयस्व मे ॥　　१५

[दुःखाद्दुःखतरं प्राप्य कथं जीवति जानकी ।]

इति श्रीमत्सुन्दरकाण्डे षट्षष्टितमस्सर्गः ॥

---

## ॥ सप्तषष्टितमस्सर्गः ॥

एवमुक्तस्तु हनुमान्राघवेण महात्मना ।
सीताया भाषितं सर्वं न्यवेदयत राघवे ॥　　१

इदमुक्तवती देवी जानकी पुरुषर्षभ ।
पूर्ववृत्तमभिज्ञानं चित्रकूटे यथातथम् ॥　　२

सुखसुप्ता त्वया सार्धं जानकी पूर्वमुत्थिता ।
वायसस्सहसोत्पत्य विददार स्तनान्तरे ॥　　३

पर्यायेण च सुप्तस्त्वं देव्यङ्के भरताग्रज ।
पुनश्च किल पक्षी स देव्या जनयति व्यथाम् ॥　　४

पुनःपुनरुपागम्य विरराद भृशं किल ।
ततस्त्वं बोधितस्तस्याश्शोणितेन समुत्क्षितः ॥　　५

वायसेन च तेनैव सततं बाध्यमानया ।
बोधितः किल देव्या त्वं सुखसुप्तः परन्तप ॥　　६

तां तु दृष्ट्वा महाबाहो दारितां च स्तनान्तरे ।
आशीविषइव क्रुद्धो निश्वसन्नभ्यभाषथाः ॥　　७

नखाग्रैः केन ते भीरु दारितं तु स्तनान्तरम् ।
कः क्रीडति सरोषेण पञ्चवक्त्रेण भोगिना ॥ ८

निरीक्षमाणस्सहसा वायसं समवैक्षथाः ।
नखैस्सरुधिरैस्तीक्ष्णैस्तामेवाभिमुखं स्थितम् ॥ ९

सुतः किल स शक्रस्य वायसः पततां वरः ।
धरान्तरचरश्शीघ्रं पवनस्य गतौ समः ॥ १०

ततस्तस्मिन्महाबाहो कोपसंवर्तितेक्षणः ।
वायसे त्वं कृथाः क्रूरां मतिं मतिमतां वरः ॥ ११

स दर्भं संस्तराद्गृह्य ब्रह्मास्त्रेण ह्ययोजयः ।
प्रदीप्त इव कालाग्निर्जज्वालाभिमुखः खगम् ॥ १२

क्षिप्तवांस्त्वं प्रदीप्तं हि दर्भं तं वायसं प्रति ।
ततस्तु वायसं दीप्तस्स दर्भोऽनुजगाम ह ॥ १३

स पित्रा च परित्यक्तस्सुरैश्च समहर्षिभिः ।
त्रीन्लोकान्सम्परिक्रम्य त्रातारं नाधिगच्छति ॥ १४

पुनरेवागतस्त्रस्तस्त्वत्सकाशमरिन्दम ।
स तं निपतितं भूमौ शरण्यश्शरणागतम् ॥ १५

वधार्हमपि काकुत्स्थ कृपया पर्यपालयः ।
मोघमस्त्रं न शक्यं तु कर्तुमित्येव राघव ॥ १६

भवांस्तस्याक्षि काकस्य हिनस्ति स्म स दक्षिणम् ।
राम त्वां स नमस्कृत्य राज्ञे दशरथाय च ॥ १७

विसृष्टस्तु तदा काकः प्रतिपेदे स्वमालयम् ।
एवमस्त्रविदां श्रेष्ठस्सत्त्ववाञ्शीलवानपि ॥ १८

किमर्थमस्त्रं रक्षस्सु न योजयति राघवः ।
न नागा नापि गन्धर्वा नासुरा न मरुद्गणाः ॥ १९

न च सर्वे रणे शक्ता रामं प्रति समासितुम् ।
तस्य वीर्यवतः कश्चिद्यद्यस्ति मयि सम्भ्रमः ॥ २०

क्षिप्रं सुनिशितैर्बाणैर्हन्यतां युधि रावणः ।
भ्रातुरादेशमाज्ञाय लक्ष्मणो वा परन्तपः ॥ २१

स किमर्थं नरवरो न मां रक्षति राघवः ।
शक्तौ तौ पुरुषव्याघ्रौ वाय्वग्निसमतेजसौ ॥ २२

सुराणामपि दुर्धर्षौ किमर्थं मामुपेक्षतः ।
ममैव दुष्कृतं किञ्चिन्महदस्ति न संशयः ॥ २३

समर्थौ सहितौ यन्मां नावेक्षेते परन्तपौ ।
वैदेह्या वचनं श्रुत्वा करुणं साश्रुभाषितम् ॥ २४

पुनरप्यहमार्यां तामिदं वचनमब्रुवम् ।
त्वच्छोकविमुखो रामो देवि सत्येन ते शपे ॥ २५

रामे दुःखाभिभूते तु लक्ष्मणः परितप्यते ।
कथञ्चिद्भवती दृष्टा न कालः परिशोचितुम् ॥ २६

अस्मिन्मुहूर्ते दुःखानामन्तं द्रक्ष्यसि भामिनि ।
तावुभौ नरशार्दूलौ राजपुत्रावनिन्दितौ ॥ २७

त्वद्दर्शनकृतोत्साहौ लङ्कां भस्मीकरिष्यतः ।
हत्वा च समरे रौद्रं रावणं सहबान्धवम् ॥ २८

राघवस्त्वां वरारोहे स्वां पुरीं नयते ध्रुवम् ।
यत्तु रामो विजानीयादभिज्ञानमनिन्दिते ॥ २९

प्रीतिसञ्जननं तस्य प्रदातुं त्वमिहार्हसि ।
साऽभिवीक्ष्य दिशस्सर्वा वेण्युद्ग्रथितमुत्तमम् ॥ ३०
मुक्त्वा वस्त्राद्ददौ मह्यं मणिमेतं महाबल ।
प्रतिगृह्य मणिं दिव्यं तव हेतो रघूद्वह ॥ ३१
शिरसा तां प्रणम्यार्यामहमागमने त्वरे ।
गमने च कृतोत्साहमवेक्ष्य वरवर्णिनी ॥ ३२
विवर्धमानं च हि मामुवाच जनकात्मजा ।
अश्रुपूर्णमुखी दीना बाष्पसन्दिग्धभाषिणी ॥ ३३
ममोत्पतनसम्भ्रान्ता शोकवेगसमाहता ।
[मामुवाच ततस्सीता सभाग्योऽसि महाकपे ।
यद्द्रक्ष्यसि महाबाहुं रामं कमललोचनम् ॥
लक्ष्मणं च महाबाहुं देवरं मे यशस्विनम् ।
सीतयाप्येव मुक्तोऽहमब्रुवं मैथिलीं तथा ॥
पृष्ठमारोह मे देवि क्षिप्रं जनकनन्दिनि ।
यावत्ते दर्शयाम्यद्य ससुग्रीवं सलक्ष्मणम् ॥
राघवं च महाभागे भर्तारमसितेक्षणे ।
साऽब्रवीन्मां ततो देवी नैष धर्मो महाकपे ॥
यत्ते पृष्ठं सिषेवेऽहं स्ववशा हरिपुङ्गवम् ।
पुरा च यदहं वीर स्पृष्टा गात्रेषु रक्षसा ॥
तत्राहं किं करिष्यामि कालेनोपनिपीडिता ।
गच्छ त्वं कपिशार्दूल यत्र तौ नृपतेस्सुतौ ॥

इत्येवं सा समाभाष्य भूयस्सन्देष्टुमास्थिता ।]
हनुमन्सिंहसङ्काशावुभौ तौ रामलक्ष्मणौ ॥ १४

सुग्रीवं च सहामात्यं सर्वान्ब्रूया ह्यनामयम् ।
यथा च स महाबाहुर्मां तारयति राघवः ॥ १५

अस्माद्दुःखाम्बुसंरोधात्त्वं समाधातुमर्हसि ।
इमं च तीव्रं मम शोकवेगं रक्षोभिरेभिः परिभर्त्सनं च ।
ब्रूयास्तु रामस्य गतस्समीपं शिवश्च तेऽध्वास्तु हरिप्रवीर ॥ १६

एतत्तवार्या नृपराजसिंह सीता वचः प्राह विषादपूर्वम् ।
एतच्च बुद्ध्वा गदितं मया त्वं श्रद्धत्स्व सीतां कुशलां समग्राम् ॥ १७

॥ इति श्रीमत्सुन्दरकाण्डे सप्तषष्टितमस्सर्गः ॥

## ॥ अष्टषष्टितमस्सर्गः ॥

अथाहमुत्तरं देव्या पुनरुक्तस्ससम्भ्रमः ।
तव स्नेहान्नरव्याघ्र सौहार्दादनुमान्य वै ॥ १

एवं बहुविधं वाच्यो रामो दाशरथिस्त्वया ।
यथा मामाप्नुयाच्छीघ्रं हत्वा रावणमाहवे ॥ २

यदि वा मन्यसे वीर वसैकाहमरिन्दम ।
कस्मिंश्चित् संवृते देशे विश्रान्तश्श्वो गमिष्यसि ॥ ३

मम चाप्यल्पभाग्यायास्सान्निध्यात्तव वीर्यवन् ।
अस्य शोकविपाकस्य मुहूर्तं स्याद्विमोक्षणम् ॥ ४

गते हि त्वयि विक्रान्ते पुनरागमनाय वै ।
प्राणानामपि सन्देहो मम स्यान्नात्र संशयः ॥ ५

त्वादर्शनजश्शोको भूयो मां परितापयेत् ।
दुःखाद्दुःखपराभूतां दुर्गतां दुःखभागिनीम् ॥ ६
अयं च वीर सन्देहस्तिष्ठतीव ममाग्रतः ।
सुमहांस्त्वत्सहायेषु हर्यृक्षेषु हरीश्वर ॥ ७
कथं नु खलु दुष्पारं तरिष्यन्ति महोदधिम् ।
तानि हर्यृक्षसैन्यानि तौ वा नरवरात्मजौ ॥ ८
त्रयाणामेव भूतानां सागरस्यास्य लङ्घने ।
शक्तिस्स्याद्वैनतेयस्य तव वा मारुतस्य वा ॥ ९
तदस्मिन्कार्यनियोगे वीरैवं दुरतिक्रमे ।
किं पश्यसि समाधानं ब्रूहि कार्यविदां वर ॥ १०
काममस्य त्वमेवैकः कार्यस्य परिसाधने ।
पर्याप्तः परवीरघ्न यशस्यस्ते बलोदयः ॥ ११
बलैस्समग्रैर्यदि मां हत्वा रावणमाहवे ।
विजयी स्वां पुरीं रामो नयेत्तत्स्याद्यशस्करम् ॥ १२
यथाऽहं तस्य वीरस्य वनादुपधिना हृता ।
रक्षसा तद्भयादेव तथा नार्हति राघवः ॥ १३
बलैस्तु सङ्कुलां कृत्वा लङ्कां परबलार्दनः ।
मां नयेद्यदि काकुत्स्थस्तत्तस्य सदृशं भवेत् ॥ १४
तद्यथा तस्य विक्रान्तमनुरूपं महात्मनः ।
भवत्याहवशूरस्य तथा त्वमुपपादय ॥ १५
तदर्थोपहितं वाक्यं प्रश्रितं हेतुसंहितम् ।
निशम्याहं ततश्शेषं वाक्यमुत्तरमब्रुवम् ॥ १६

देवि हर्यृक्षसैन्यानामीश्वरः प्लवतां वरः ।
सुग्रीवस्सत्त्वसम्पन्नस्तवार्थे कृतनिश्चयः ॥ १७

तस्य विक्रमसम्पन्नास्सत्त्ववन्तो महाबलाः ।
मनस्सङ्कल्पसम्पाता निदेशे हरयस्स्थिताः ॥ १८

एषां नोपरि नाधस्तान्नतिर्यक्सज्जते गतिः ।
न च कर्मसु सीदन्ति महत्स्वमिततेजसः ॥ १९

असकृत्तैर्महाभागैर्वानरैर्बलदर्पितैः ।
प्रदक्षिणीकृता भूमिर्वायुमार्गानुसारिभिः ॥ २०

मद्विशिष्टाश्च तुल्याश्च सन्ति तत्र वनौकसः ।
मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ॥ २१

अहं तावदिह प्राप्तः किं पुनस्ते महाबलाः ।
न हि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ २२

तदलं परितापेन देवि मन्युर्व्यपैतु ते ।
एकोत्पातेन वै लङ्कामेष्यन्ति हरियूथपाः ॥ २३

मम पृष्ठगतौ तौ च चन्द्रसूर्याविवोदितौ ।
त्वत्सकाशं महाभागे नृसिंहावागमिष्यतः ॥ २४

अरिघ्नं सिंहसङ्काशं क्षिप्रं द्रक्ष्यसि राघवम् ।
लक्ष्मणं च धनुष्पाणिं लङ्काद्वारमुपस्थितम् ॥ २५

नखदंष्ट्रायुधान्वीरान् सिंहशार्दूलविक्रमान् ।
वानरान्वारणेन्द्राभान्क्षिप्रं द्रक्ष्यसि सङ्गतान् ॥ २६

शैलाम्बुदनिकाशानां लङ्कामलयसानुषु ।
नर्दतां कपिमुख्यानामचिराच्छ्रोष्यसि स्वनम् ॥ २७

निवृत्तवनवासं च त्वया सार्थमरिन्दमम् ।
अभिषिक्तमयोध्यायां क्षिप्रं द्रक्ष्यसि राघवम् ॥ २८

ततो मया वाग्भिरदीनभाषिणा
शिवाभिरिष्टाभिरभिप्रसादिता ।
जगाम शान्तिं मम मैथिलात्मजा
तवापि शोकेन तदाभिपीडिता ॥ २९

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये सुन्दरकाण्डे अष्टषष्टितमस्सर्गः

समाप्तश्चायं सुन्दरकाण्डः ॥

श्रीरामार्पणमस्तु ॥

---

॥ श्रीः ॥

# ॥ श्रीरामपट्टाभिषेकघट्टः ॥



## युद्धकाण्डे एकत्रिंशदुत्तरशततमस्सर्गः

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १
"पूजिता मामिका माता दत्तं राज्यमिदं मम ॥
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २
धुरमेकाकिना न्यस्तामृषभेण बलीयसा ।
किशोरीव गुरुं भारं न वोढुमहमुत्सहे ॥ ३
वारिवेगेन महता भिन्नस्सेतुरिव क्षरन् ।
दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४
गतिं खर इवाश्वस्य हंसस्येव च वायसः ।
नान्वेतुमुत्सहे राम ! तव मार्गमरिन्दम ! ॥ ५
यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ।
महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥ ६
शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ।
तस्य नानुभवेदर्थं यस्य हेतोस्स रोप्यते ॥ ७
एषोपमा महाबाहो ! त्वमर्थं वेत्तुमर्हसि ।
यद्यस्मान्मनुजेन्द्र ! त्वं भक्तान्भृत्यान्न शाधि हि ॥ ८

जगद्द्याभिषिक्तं त्वामनुपश्यतु सर्वतः ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९

तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ।
मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व राघव ॥ १०

यावदावर्तते चक्रं यावती च वसुन्धरा ।
तावत्त्वमिह सर्वस्य स्वामित्वमनुवर्तय" ॥ ११

भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ।
तथेति प्रतिजग्राह निषसादासने शुभे ॥ १२

ततश्शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः ।
सुखहस्तास्सुशीघ्राश्च राघवं पर्युपासत ॥ १३

पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले ।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४

विशोधितजटस्स्नातश्चित्रमाल्यानुलेपनः ।
महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५

प्रतिकर्म च रामस्य कारयामास वीर्यवान् ।
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६

प्रतिकर्म च सीतायास्सर्वा दशरथस्त्रियः ।
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७

ततो वानरपत्नीनां सर्वासामेव शोभनम् ।
चकार यत्नात्कौसल्या प्रहृष्टा पुत्रलालसा ॥ १८

ततश्शत्रुघ्नवचनात्सुमन्त्रो नाम सारथिः ।
योजयित्वाऽभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९

अर्कमण्डलसङ्काशं दिव्यं दृष्ट्वा रथोत्तमम् ।
आरुरोह महाबाहू रामस्सत्यपराक्रमः ॥ २०

सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती ।
स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुश्शुभकुण्डलौ ॥ २१

वराभरणसंपन्ना ययुस्ताश्शुभकुण्डलाः ।
सुग्रीवपत्न्यस्सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२

अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३

अशोको विजयश्चैव सुमन्त्रश्चैव सङ्गताः ।
मन्त्रयन्रामवृद्ध्यर्थमृद्ध्यर्थं नगरस्य च ॥ २४

"सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ।
कर्तुमर्हथ रामस्य यद्यन्मङ्गळपूर्वकम्" ॥ २५

इति ते मन्त्रिणस्सर्वे सन्दिश्य तु पुरोहितम् ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६

हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः ।
(रथमुत्तममारुह्य रराज रघुनायकः ॥) २७

प्रययौ रथमास्थाय रामो नगरमुत्तमम् ।
जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे ॥ २८

लक्ष्मणो व्यजनं तस्य मूर्ध्नि सम्पर्यवीजयत् ।
श्वेतं च वाळव्यजनं जग्राह पुरतः स्थितः ॥ २९

अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः ।
ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः ॥ ३०

स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ।
ततश्शत्रुंजयं नाम कुञ्जरं पर्वतोपमम् ॥ ३१

आरुरोह महातेजास्सुग्रीवः प्लवगर्षभः ।
नवनागसहस्राणि ययुरास्थाय वानराः ॥ ३२

मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ।
शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निस्वनैः ॥ ३३

प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ।
ददृशुस्ते समायान्तं राघवं सपुरस्सरम् ॥ ३४

विराजमानं वपुषा रथेनातिरथं तदा ।
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः ॥ ३५

अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ।
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः । ३६

श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ।
स पुरोगामिभिस्तूर्यैस्तालस्वस्तिकपाणिभिः ॥ ३७

प्रव्याहरद्भिर्मुदितैर्मङ्गलानि ययौ वृतः ।
अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः ॥ ३८

नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ।
सख्यं च रामस्सुग्रीवे प्रभावं चानिलात्मजे ॥ ३९

वानराणां च तत्कर्म राक्षसानां च तद्बलम् ।
विभीषणस्य संयोगमाचचक्षे च मन्त्रिणाम् ॥ ४०

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ।
द्युतिमानेतदाख्याय रामो वानरसंवृतः ॥ ४१

हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ।
ततो ह्यभ्युच्छ्रयन्पौराः पताकास्ते गृहे गृहे ॥ ४२

ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ।
अथाब्रवीद्राजसुतो भरतं धर्मिणां वरम् ॥ ४३

अर्थोपहितया वाचा मधुरं रघुनन्दनः ।
पितुर्भवनमासाद्य प्रविश्य च महात्मनः ॥ ४४

कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत् ।
" यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् ॥ ४५

मुक्तावैडूर्यसंकीर्णं सुग्रीवाय निवेदय । '
तस्य तद्वचनं श्रुत्वा भरतस्सत्यविक्रमः ॥ ४६

पाणौ गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ।
ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च ॥ ४७

गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ।
उवाच च महातेजास्सुग्रीवं राघवानुजः ॥ ४८

" अभिषेकाय रामस्य दूतानाज्ञापय प्रभो ! " ।
सौवर्णान्वानरेन्द्राणां चतुर्णां चतुरो घटान् ॥ ४९

ददौ क्षिप्रं ससुग्रीवस्सर्वरत्नविभूषितान् ।
" यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् ॥ ५०

पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः " ।
एवमुक्ता महात्मानो वानरा वारणोपमाः ॥ ५१

उत्पेतुर्गगनं शीघ्रं गरुडाइव शीघ्रगाः ।
जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः ॥ ५२

ऋषभश्चैव कलशान्जलपूर्णानथानयन् ।
नदीशतानां पञ्चानां जलं कुम्भेषु चाहरन् ॥ ५३
पूर्वात्समुद्रात्कलशं जलपूर्णमथाऽनयत् ।
सुषेणस्सत्त्वसंपन्नस्सर्वरत्नविभूषितम् ॥ ५४
ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरेत् ।
रक्तचन्दनशाखाभिस्संवृतं काञ्चनं घटम् ॥ ५५
गवयः पश्चिमात्तोयमाजहार महार्णवात् ।
रत्नकुम्भेन महता शीतं मारुतविक्रमः ॥ ५६
उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ।
आजहार स धर्मात्मा नलस्सर्वगुणान्वितः ॥ ५७
ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ।
अभिषेकाय रामस्य शत्रुघ्नस्सचिवैस्सह ॥ ५८

॥ श्रीरामपट्टाभिषेकः ॥

पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ।
ततस्सप्रयतो वृद्धो वसिष्ठो ब्राह्मणैस्सह ॥ ५९
रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ ६०
कात्यायनस्सुयज्ञश्च गौतमो विजयस्तथा ।
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ॥ ६१
सलिलेन सहस्राक्षं वसवो वासवं यथा ।
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ॥ ६२

योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टास्सनैगमैः ।
सर्वौषधिरसैर्दिव्यैर्दैवतैर्नभसि स्थितैः ॥ ६३

चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च संगतैः ।
(ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ॥ ६४

अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ।
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ॥ ६५

सभायां हेमवर्णायां शोभितायां महाजनैः ॥ ६६

रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः ।
नानारत्नमये पीठे कल्पयित्वा यथा विधि ॥ ६७

किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः) ॥ ६८

छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ ६९

अपरं चन्द्रसंकाशं (वालव्यजनमुत्तमम् ।
हृष्टो जग्राह रामस्य) राक्षसेन्द्रो विभीषणः ॥ ७०

मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ।
राघवाय ददौ वायुर्वासवेन प्रचोदितः ॥ ७१

सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् ।
मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ॥ ७२

प्रजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥ ७३

भूमिस्सस्यवती चैव फलवन्तश्च पादपाः ।
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ ७४

सहस्रशतमश्वानां धेनूनां च गवां तथा ।
ददौ शतं वृषान्पूर्वं द्विजेभ्यो मनुजर्षभः॥ ७५

त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ।
नानाभरणवस्त्राणि महार्हाणि च राघवः ॥ ७६

अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् ।
सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ॥ ७७

वैडूर्यमणिचित्रे च वज्ररत्नविभूषिते ।
वालिपुत्त्राय धृतिमानङ्गदायाङ्गदे ददौ ॥ ७८

मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ।
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ॥ ७९

अरजे वाससी दिव्ये शुभान्याभरणानि च ।
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥ ८०

अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ।
अवैक्षत हरीन् सर्वान्भर्तारं च मुहुर्मुहुः ॥ ८१

तामिङ्गितज्ञस्संप्रेक्ष्य बभाषे जनकात्मजाम् ।
"प्रदेहि सुभगे! हारं यस्य तुष्टासि भामिनि! ॥ ८२

पौरुषं विक्रमो बुद्धिरस्मिन्नेतानि सर्वशः" ।
ददौ सा वायुपुत्त्राय तं हारमसितेक्षणा ॥ ८३

हनूमांस्तेन हारेण शुशुभे वानरर्षभः ।
चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः ॥ ८४

ततो द्विविदमैन्दाभ्यां नीलाय च परंतपः ।
सर्वान्कामगुणान्वीक्ष्य प्रददौ वसुधाधिपः ॥ ८५

सर्ववानरवृद्धाश्च ये चान्ये वानरेश्वराः ।
वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८६

विभीषणोऽथ सुग्रीवो हनूमाञ्जाम्बवांस्तथा ।
सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८७

यथार्हं पूजितास्सर्वैः कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसस्सर्वे जग्मुरेव यथागतम् ॥ ८८

[दृष्ट्वा रामाभिषेकं ते महात्मानः कपीश्वराः] ।
दृष्ट्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः ॥ ८९

विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन् ।
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् ॥ ९०

[पूजितश्चैव रामेण किष्किन्धां प्राविशत्पुरीम् ।
रामेण सर्वकामैश्च यथार्हं प्रतिपूजितः] ॥

लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः ॥ ९१

स राज्यमखिलं शासन्निहतारिर्महायशाः ।
राघवः परमोदारश्शशास परया मुदा ॥ ९२

[स वानरे कपीन्द्रे तु राक्षसेन्द्रे विभीषणे] ।
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ९३

"आतिष्ठ धर्मज्ञ! मया सहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व" ॥ ९४

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानोऽपि च यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९५

पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ।
अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवर्षभः ॥ ९६

राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः ।
शताश्वमेधानाजह्रे सदश्वान्भूरिदक्षिणान् ॥ ९७

आजानुलम्बबाहुस्स महास्कन्धः प्रतापवान् ।
लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥ ९८

राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ।
ईजे बहुविधैर्यज्ञैस्ससुहृज्ज्ञातिबान्धवः ॥ ९९

न पर्यदेवन्विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं वापि रामे राज्यं प्रशासति ॥ १००

निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृशत् ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ १०१

सर्वं मुदितमेवासीत्सर्वो धर्मपरोऽभवत् ।
राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम् ॥ १०२

आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०३

"रामो रामो राम" इति प्रजानामभवन् कथाः ।
रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ १०४

नित्यपुष्पा नित्यफलास्तरवस्स्कन्धविस्तृताः ।
काले वर्षी च पर्जन्यस्सुखस्पर्शश्च मारुतः ॥ १०५

ब्राह्मणाः क्षत्रिया वैश्याश्शूद्रा लोभविवर्जिताः ।
स्वकर्मसु प्रवर्तन्ते तुष्टास्स्वैरेव कर्मभिः ॥ १०६

आसन्प्रजा धर्मरता रामे शासति नानृताः ।
सर्वे लक्षणसंपन्नास्सर्वे धर्मपरायणाः ॥ १०७

दशवर्षसहस्राणि दशवर्षशतानि च ।
भ्रातृभिस्सहितः श्रीमान्रामो राज्यमकारयत् ॥ १०८

धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ।
आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥ १०९

यः पठेच्छृणुयाल्लोके नरः पापाद्विमुच्यते ।
पुत्त्रकामस्तु पुत्त्रान्वै धनकामो धनानि च ॥ ११०

लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ।
महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १११

राघवेण यथा माता सुमित्रा लक्ष्मणेन च ।
भरतेनेव कैकेयी जीवपुत्त्रास्तथा स्त्रियः ॥ ११२

श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।
रामस्य विजयं चैव सर्वमक्लिष्टकर्मणः ॥ ११३

शृणोति य इदं काव्यमार्षं वाल्मीकिना कृतम् ।
श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ ११४

[प्रवसन्तो लभन्ते वै बान्धवैस्तु समागमम्] ।
समागमं प्रवासान्ते लभते चापि बान्धवैः ॥ ११५

प्रार्थितांश्च वरान् सर्वान्प्राप्नुयादिह राघवात् ।
श्रवणेन सुरास्सर्वे प्रीयन्ते संप्रशृण्वताम् ॥ ११६

विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य वै ।
विजयेत महीं राजा प्रवासी स्वस्तिमान्व्रजेत् ॥ ११७

स्त्रियो रजस्वला: श्रुत्वा पुत्रान्सूयुरनुत्तमान् ।
पूजयंश्च पठंश्चेममितिहासं पुरातनम् ॥ ११८
सर्वपापात्प्रमुच्येत दीर्घमायुरवाप्नुयात् ।
प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११९
ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ।
रामायणमिदं कृत्स्नं शृण्वतः पठतस्सदा ॥ १२०
प्रीयते सततं रामस्स हि विष्णुस्सनातनः ।
आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ॥ १२१
[प्रयच्छत्यायुरारोग्यं मुक्तिमप्यतिदुर्लभाम्]
कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्यास्सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥
आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं सुखं च ।
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ १२३
एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १२४
देवाश्च सर्वे तुष्यन्ति ग्रहणाच्छ्रवणात्तथा ।
रामायणस्य श्रवणात्तुष्यन्ति पितरस्तथा ॥ १२५
भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् ।
लेखयन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥ १२६

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायां
श्रीयुद्धकाण्डे श्रीरामपट्टाभिषेकोनामैकत्रिंशदुत्तरशततमस्सर्गः ॥

---

रावणादिनिहन्तारं श्रीशं रुद्रादिसेवितम् ।
सीतादेवीयुतं यौद्धे रामं ध्यायेद्धृदम्बुजे ।
श्रीरामचन्द्रः श्रितपारिजातः समस्तकल्याणगुणाम्बुराशिः ।
सीतामुखाम्भोरुहचञ्चरीको निरन्तरं मङ्गळमातनोतु ॥

श्रीमत्सुन्दरकाण्डः समाप्तः ॥

---

Printed at the 'Vavilla' Press, Madras,—1951.

## ॥ नामावळीसहितस्तोत्रादीनि ॥



# YUDDHAKANDAM

OF

# SRIMAD RAMAYANAM



**V. RAMASWAMY SASTRULU & SONS**

**292, Subhash Chandra Bose Road**

**MADRAS**

**1951**

॥ श्रीरस्तु ॥

श्रीमद्वाल्मीकिरामायणे

# ॥ युद्धकाण्डः ॥



चेन्नपुर्याम्

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटितः

१९५१

## ॥ श्रीरामायणयुद्धकाण्डफलश्रुतिः ॥

रामाञ्जनेयसंवादं श्रुत्वा मुच्येत किल्बिषात् ।
विभीषणपरीक्षादिश्रवणान्मोक्षमाप्नुयात् ॥ १
सकृदेवेत्यमुं श्रुत्वा नरः प्राप्नोति चाभयम् ।
सेतुबन्धस्य कथनं श्रुत्वा मुच्येत पातकात् ॥ २
संसारसागरं तीर्त्वा परं प्राप्नोति मानवः ।
हरिश्शतवलिर्वीर इति श्लोकादिमाक्षरम् ॥ ३
श्रुत्वा देव्याष्षोडशन्तदपमृत्युजयो भवेत् ।
धन्वी संहननोपेत इति श्लोकस्थितं शुभम् ॥ ४
घवर्णमादिमं श्रुत्वा सात्वतं पदमाप्नुयात् ।
यो वज्रपाताशनिसन्निपातानित्यत्र पूर्वाक्षरमादरेण ।
शृणोति चाष्टादशमाक्षरन्तु देव्याः प्रयात्येव पदन्तु पूरुषः ॥ ५
कुम्भकर्णस्य निधनं श्रुत्वा सद्गुरुवक्त्रतः ।
शापदोषेण मुच्येत पुमान्सद्यो न संशयः ॥ ६
रावणेर्निधनं श्रुत्वा कलिदोषात्प्रमुच्यते ।
यमदण्डोपमं भीममित्यत्रैकोनविंशतम् ॥ ७
गायत्रीबीजमाकर्ण्य यमलोकं न गच्छति ।
वधं राक्षसराजस्य रावणस्य महात्मनः ॥ ८
श्रुत्वा नरः पापबंधान्मुच्यते जन्मकोटिजात् ।
कुम्भकर्णस्य निधनं श्रुत्वा सद्गुरुवक्त्रतः ॥ ९
कुम्भीपाकगतान्सर्वानुत्तारयति पूर्वजान् ।
रावणेर्निधनं श्रुत्वा लक्ष्मणात्प्रीतिपूर्वकम् ॥ १०
स्वर्गस्थाः पितरस्तस्य विष्णुमंदिरगामिनः ।
भरद्वाजाश्रमं प्राप्य ववंदे नियतो मुनिम् ॥ ११
इत्यादि श्रूयतां नृणां यावत्पट्टाभिषेचनम् ।
सर्वकार्याणि सिध्यंति पापराशिश्च नश्यति ॥ १२

॥ श्रीः ॥

## स्मार्तादीनां सर्वेषां श्रीरामायणपारायणादौ

## ॥ कर्तव्यपूजाविधानम् ॥

आचम्य । प्राणानायम्य । ममोपात्त...शुभे शोभने मुहूर्ते अस्यां शुभतिथौ श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्र-देवताप्रीत्यर्थं यावच्छक्ति ध्यानावाहनादिषोडशोपचारपूजां करिष्ये ॥ आदौ निर्विघ्नेन परिसमाप्त्यर्थं गणाधिपतिपूजां करिष्ये ॥ तदंगत्वेन कलशपूजां करिष्ये ॥ कलशपूजां गणपतिपूजां च कृत्वा ॥

वैदेहीसहितं सुरद्रुमतले हैमे महामंटपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यांतं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥

ततश्श्रीमत्कोशोपरि श्रीरामध्यानावाहनादिनैवेद्यांतपूजा विधेया ॥ श्रीरामचन्द्रदेवताभ्यां नमः ॥ ध्यानावाहनादिषोडशोप-चारपूजां च कृत्वा ॥

---

## ॥ श्रीमद्रामायणपारायणारम्भक्रमः ॥

सद्गुरुसकाशाल्लब्धोपदेशोवक्ष्यमाणरीत्या श्रीरामायणपारायणं कुर्यात् - देशकालौ संकीर्त्य—

अस्य श्रीरामायणमहामंत्रस्य वाल्मीकि भगवान् ऋषिः-अनुष्टुप्छन्दः - श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रो देवता - रां बीजं - श्रीं शक्तिः - मं कीलकं - मम श्रीसीतालक्ष्मण-भरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्रप्रसादसिद्ध्यर्थे पारायणे विनि-

योगः - रः अंगुष्ठाभ्यान्नमः - रीं तर्जनीभ्यां स्वाहा - रूं मध्यमाभ्यां वषट् - रैं अनामिकाभ्यां हुं - रौं कनिष्ठिकाभ्यां वौषट् - रः करतलकरपृष्ठाभ्यां फट् - रां हृदयाय नमः - रीं शिरसे स्वाहा - रूं शिखायै वषट् - रैं कवचाय हुं - रौं नेत्रत्रयाय वौषट् - रः अस्त्राय फट् ॥ लोकत्रयेण दिग्बंधः ॥

ध्यानम्:—

कालांभोधरकांतिकांतमनिशं वीरासनाध्यासिनं
मुद्रां ज्ञानमयीं दधान मपरं हस्तांबुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यंतं मकुटांगदादिविविधाकल्पोज्ज्वलांगं भजे ॥

---

## ॥ अथ मानसिकपूजा ॥

लं पृथिव्यात्मने श्रीरामचन्द्रपरब्रह्मणे गंधं समर्पयामि - हं आकाशात्मने श्रीरामचन्द्रपरब्रह्मणे पुष्पं समर्पयामि - यं वाय्वात्मने श्रीरामचन्द्रपरब्रह्मणे धूपमाघ्रापयामि - रं अग्न्यात्मने श्रीरामचन्द्रपरब्रह्मणे दीपं दर्शयामि - वं अमृतात्मने श्रीरामचन्द्रपरब्रह्मणे अमृतोपहारं समर्पयामि - सं सर्वात्मने श्रीरामचन्द्रपरब्रह्मणे सर्वोपचारपूजास्समर्पयामि - इति मानसिकपूजा ॥

मूलमंत्रः—

धर्मात्मा सत्यसंधश्च रामो दाशरथि र्यदि ।
पौरुषे चाप्रतिद्वंद्वश्शरैनं जहि रावणिम् ॥

इति यथाशक्ति जपित्वा श्रीरामायणपारायणं कुर्यात् ॥ अनं-तरं पुनः ध्यानं मानसिकपूजां हृदयादिन्यासं च कुर्यात् - लोकत्रयेण दिग्विमोकः ॥

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादाद्रघूद्वह ! ॥

---

## श्रीवैष्णवानां

## ॥ श्रीमद्रामायणपठनोपक्रमानुसंधेयक्रमः ॥

प्रथमतः श्रीशैलेशे (रामानुजे)त्यादि स्वस्वसंप्रदायनिर्वाहकाचार्यानुसंधानम् । ततः 'लक्ष्मीनाथे' त्यारभ्य 'प्रणतोऽस्मिनित्य' मित्यंतम् अनंतरं श्रीशैलपूर्णविषयम् 'पितामह 'स्योति श्लोकमारभ्य श्रीभाष्य-कारप्रभृतिस्वाचार्यपर्यन्त विषया स्सांप्रदायिकश्लोका अनुसंधेयाः ॥ यद्वा श्रीधरादिस्वाचार्यपर्यंताः प्रतिव्यक्तिश्लोका अनुसंधेयाः ॥

ततः—

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन्रामकथानादं को न याति परां गतिम् ॥ २

यःपिबन्सततं रामचरितामृतसागरम् ।
अतृप्त स्तं मुनिं वन्दे प्राचेतस मकल्मषम् ॥ ३

गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ४

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीश मक्षहंतारं वन्दे लङ्काभयंकरम् ॥ ५

मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ६

उल्लङ्घ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ७

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ८

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ९

वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदःप्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १०

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ ११

श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् ।
आजानुबाहु मरविन्ददळायताक्षं रामं निशाचरविनाशकरं नमामि ॥ १

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १३

ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

---

## ॥ पारायणसमापनक्रमः ॥

एवमेतत्पुरावृत्त माख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १

लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषामिन्दीवरश्यामो हृदये सुप्रतिष्ठितः ॥ २

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणा स्सन्तु निर्भयाः ॥ ३

कावेरी वर्धतां काले काले वर्षतु वासवः ।
श्रीरङ्गनाथो जयतु श्रीरङ्गश्रीश्च वर्धताम् । ४

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येन मार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्तास्सुखिनो भवन्तु ॥

मङ्गळं कोसलेन्द्राय महनीयगुणात्मने ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ६

वेदवेदान्तवेद्याय मेघश्यामलमूर्तये ।
पुंसां मोहनरूपाय पुण्यश्लोकाय मङ्गळम् ॥ ७

विश्वामित्रान्तरङ्गाय मिथिलानगरीपतेः ।
भाग्यानां परिपाकाय भव्यरूपाय मङ्गळम् ॥ ८

पितृभक्ताय सततं भ्रातृभिस्सह सीतया ।
नन्दिताखिललोकाय रामभद्राय मङ्गळम् ॥ ९

त्यक्तसाकेतवासाय चित्रकूटविहारिणे ।
सेव्याय सर्वयमिनां धीरोदाराय मङ्गळम् ॥ १०

सौमित्रिणा च जानक्या चापबाणासिधारिणे ।
संसेव्याय सदा भक्त्या स्वामिने मम मङ्गळम् ॥ ११

दण्डकारण्यवासाय खण्डितामरशत्रवे ।
गृध्रराजाय भक्ताय मुक्तिदायास्तु मङ्गळम्॥ १२

सादरं शबरीदत्तफलमूलाभिलाषिणे ।
सौलभ्यपरिपूर्णाय सत्त्वोद्रिक्ताय मङ्गळम् ॥ १३

हनुमत्समवेताय हरीशाभीष्टदायिने ।
वालिप्रमथनायास्तु महाधीराय मङ्गळम् ॥ १४

श्रीमते रघुवीराय सेतूल्लङ्घितसिन्धवे ।
जितराक्षसराजाय रणधीराय मङ्गळम् । १५

आसाद्य नगरीं दिव्यामभिषिक्ताय सीतया ।
राजाधिराजराजाय रामभद्राय मङ्गळम् ॥ १६

मङ्गळाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैस्सत्कृतायास्तु मङ्गळम् ॥ १७

[कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मनावा प्रकृते स्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥]

ततः 'पितामह' स्येत्यारभ्य स्वाचार्यान्तश्लोका अनुसन्धेयाः ॥

---

## श्रीस्मार्तमाध्वादीनां श्रीमद्रामायण

### ॥ पठनोपक्रमानुसन्धेयः ॥

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

वागीशाद्यास्सुमनस स्सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्यास्स्युस्तं नमामि गजाननम् ॥ २

ततः श्रीमच्छङ्कराचार्यादि गुरुपरम्परानुसन्धेया ॥

दोर्भिर्युक्ता चतुर्भि स्फटिकमणिमयी मक्षमालां दधाना
हस्तेनैकेन पद्मं सितमपिच शुकं पुस्तकं चापरेण ।
भासा कुन्देन्दुशङ्खस्फटिकमणिनिभा भासमानाऽसमाना ।
सा मे वाग्देवतेयं निवसतु वदने सर्वदा सुप्रसन्ना ॥ ३

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्यकविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ ४

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ ५

यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ ६

गोष्पदीकृतवारार्शि मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ ७

अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥ ८

उल्लङ्घ्यसिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलि राञ्जनेयम् ॥ ९

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ १०

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ११

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १२

यः कर्णाञ्जलिसंपुटै रहरह स्सम्यक्पिबत्यादरा-
द्वाल्मीके र्वदनारविन्दगळितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणै रत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोः पदं शाश्वतम् ॥ १३

तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् ।
रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ १४

वाल्मीकिगिरिसंभूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥ १५

श्लोकसारसमाकीर्णं सर्गकल्लोलसङ्कुलम् ।
काण्डग्राहमहामीनं वन्दे रामायणार्णवम् ॥ १६

वेदवेद्ये परेपुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ १७

वैदेहीसहितं सुरद्रुमतले हैमे महामण्टपे
मध्येपुष्पक मासने मणिमये वीरासने सुस्थितम् ।

अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ १८

वामे भूमिसुता पुरश्च हनुमान् पश्चात्सुमित्रासुत-
श्शत्रुघ्नो भरतश्च पार्श्वदळयो र्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट्तारासुतो जाम्बवा-
न्मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥ १९

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ २०

[ततश्श्रीकोशोपरि श्रीरामावाहनादिनैवेद्यान्तपूजा विधेया ।
पारायणावसाने च पुनः पूजा कर्तव्या ॥]

---

## ॥ पारायणसमापनसमयानुसन्धेयक्रमः ॥

स्वस्ति प्रजाभ्यः परिपालयन्तां न्याय्येनमार्गेण महीं महीशाः ।
गोब्राह्मणेभ्यश्शुभमस्तु नित्यं लोकास्समस्ता स्सुखिनो भवन्तु ॥ १

काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणास्सन्तु निर्भयाः ॥ २

अपुत्राः पुत्रिणस्सन्तु पुत्रिणस्सन्तु पौत्रिणः ।
अधना स्सधनास्सन्तु जीवन्तु शरदां शतम् ॥ ३

चरितं रघुनाथस्य शतकोटिप्रविस्तरम् ।
एकैक मक्षरं प्रोक्तं महापातकनाशनम् ॥ ४

शृण्वन् रामायणं भक्त्या यः पादं पद मेव वा ।
स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥ ५

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥ ६

यन्मङ्गळं सहस्राक्षे सर्वदेवनमस्कृते ।
वृत्रनाशे समभवत्तत्ते भवतु मङ्गळम् ॥ ७

यन्मङ्गळं सुपर्णस्य विनताऽकल्पयत्पुरा ।
अमृतं प्रार्थयानस्य तत्ते भवतु मङ्गळम् ॥ ८

मङ्गळं कोसलेन्द्राय महनीयगुणाब्धये ।
चक्रवर्तितनूजाय सार्वभौमाय मङ्गळम् ॥ ९

अमृतोत्पादने दैत्यान् घ्नतो वज्रधरस्य यत् ।
अदितिर्मङ्गळं प्रादात्तत्ते भवतु मङ्गळम् ॥ १०

त्रीन्विक्रमान् प्रक्रमतो विष्णोरमिततेजसः ।
यदासीन्मङ्गळं राम तत्ते भवतु मङ्गळम् ॥ ११

ऋतवस्सागरा द्वीपा वेदा लोका दिशश्चते ।
मङ्गळानि महाबाहो दिशन्तु तव सर्वदा ॥ १२

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्याऽऽत्मनावा प्रकृतेस्स्वभावात् ।
करोमि यद्यत्सकलं परस्मै श्रीराघवायेति समर्पयामि ॥ १३

## ॥ श्रीगायत्रीरामायणम् ॥

तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकि र्मुनिपुङ्गवम् ॥ १

स हत्वा राक्षसान् सर्वान् यज्ञघ्नान् रघुनन्दनः ।
ऋषिभिः पूजित स्सम्यग्यथेन्द्रो विजयी पुरा ॥ २

विश्वामित्र स्स धर्मात्मा श्रुत्वा जनकभाषितम् ।
वत्स राम धनुः पश्य इति राघव मब्रवीत् ॥ ३

तुष्टावास्य तदा वंशं प्रविश्य स विशांपतेः ।
शयनीयं नरेन्द्रस्य तदासाद्यव्यतिष्ठत ॥ ४

वनवासं हि संख्याय वासांस्याभरणानिच ।
भर्तार मनुगच्छन्त्यै सीतायै श्वशुरो ददौ ॥ ५

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥ ३

निरीक्ष्य स मुहूर्तंतु ददर्श भरतो गुरुम् ।
उटजे राम मासीनं जटावल्कलधारिणम् ॥ ७

यदि बुद्धिः कृता द्रष्टु मगस्त्यं तं महामुनिम् ।
अद्यैव गमने बुद्धिं रोचयस्व महायशाः ॥ ८

भरतस्यार्यपुत्रस्य श्वश्रूणां मम च प्रभो ।
मृगरूपमिदं व्यक्तं विस्मयं जनयिष्यति ॥ ९

गच्छ शीघ्रमितो राम सुग्रीवं तं महाबलम् ।
वयस्यं तं कुरु क्षिप्रमितो गत्वाऽद्य राघव ॥ १०

देशकालौ प्रतीक्षस्व क्षममाणः प्रियाप्रिये ।
सुखदुःखसहः काले सुग्रीववशगो भव ॥ ११

वन्द्यास्ते तु तपस्सिद्धास्तपसा वीतकल्मषाः ।
प्रष्टव्यास्तेऽपि सीतायाः प्रवृत्तिं विनयान्वितैः ॥ १२

स निर्जित्य पुरीं श्रेष्ठां लङ्कां तां कामरूपिणीम् ।
विक्रमेण महातेजा हनूमान् मारुतात्मजः ॥ १३

धन्या देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
मम पश्यन्ति ये नाथं रामं राजीवलोचनम् ॥ १४

मङ्गलाभिमुखी तस्य सा तदाऽसीन्महाकपेः ।
उपतस्थे विशालाक्षी प्रयता हव्यवाहनम् ॥ १५

हितं महार्थं मृदुपूर्वसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ १६

धर्मात्मा रक्षसां श्रेष्ठस्संप्राप्तोऽयं विभीषणः ।
लंकैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ १७

यो वज्रपाताशनिसन्निपातान्न चुक्षुभे नापि चचाल राजा ।
स रामबाणाभिहतो भृशार्तश्चचाल चापं च मुमोच वीरः ॥ १८

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ॥ १९

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २०

प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ।
बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ॥ २१

चलनात्पर्वतेन्द्रस्य गणा देवाश्च कम्पिताः ।
चचाल पार्वती चापि तदाऽऽश्लिष्टा महेश्वरम् ॥ २२

दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभाजनम् ।
सर्वमेवाविभक्तं नो भविष्यति हरीश्वरः ॥ २३

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् ।
तामेव रात्रिं सीताऽपि प्रसूता दारकद्वयम् ॥ २४

इदं रामायणं कृत्स्नं गायत्रीबीजसंयुतम् ।
त्रिसन्ध्यं यः पठेन्नित्यं सर्वपापैः प्रमुच्यते ॥ २५

गायत्रीरामायणं सम्पूर्णम् ॥

---

## ॥ देवताप्रार्थना ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ १

रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाःपतये नमः ॥ २

---

### ॥ वाल्मीकिप्रार्थना ॥

कूजंतं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ १

वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः ।
शृण्वन् रामकथानादं को न याति परां गतिम् ॥ २

---

### ॥ आंजनेयप्रार्थना ॥

अंजनानंदनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहंतारं वन्दे लङ्काभयंकरम् ॥ १
गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ २
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि । ३

---

### ॥ श्रीरामायणप्रशंसा ॥

श्रीमद्ब्रह्म तदेव बीजममलं यस्याङ्कुरश्चिन्मयः
काण्डैस्सप्तभिरन्वितोऽतिविततो ऋष्यालवालोदितः ।
पत्रैस्तत्त्वसहस्रकैस्सुविलसच्छाखाशतैः पञ्चभिः
स्वात्मप्राप्तिफलप्रदो विजयते रामायणस्वस्तरुः ॥
यः कर्णाञ्जलिसंपुटैरहरहस्सम्यक्पिबत्यादरा-
द्वाल्मीकेर्वदनारविन्दगलितं रामायणाख्यं मधु ।
जन्मव्याधिजराविपत्तिमरणैरत्यन्तसोपद्रवं
संसारं स विहाय गच्छति पुमान्विष्णोःपदं शाश्वतम् ॥

वाल्मीकिगिरिसंभूता रामांभोनिधिसंगता ।
श्रीमद्रामायणी गंगा पुनातु भुवनत्रयम् ॥

॥ उमासंहितायां धर्मराजंप्रति ब्रह्मोक्तिः ॥

श्रीरामप्रातिपदिकमवशेनापि संगृणन् ।
मुक्तिं प्राप्नोति मनुजः किंपुनर्बुद्धिपूर्वकम् ॥ १

राशब्दोच्चारणादेव पातका देहपञ्जरात् ।
निर्यान्त्यायान्ति पापानि मवर्णादर्शनात्पुनः ॥ २

राशब्दोच्चारणे जाते वक्त्रात्पापं विगच्छति ।
मकारश्रवणे जाते भस्मीभावं गमिष्यति । ३

॥ तत्रैव तृतीयाध्याये उमां प्रति शिवोक्तिः ॥

रामेति रामचन्द्रेति रामभद्रेति वा मनुम् ।
यावज्जीवं जपन्मर्त्यो जीवन्मुक्तो न संशयः ॥ १

रामायणस्य माहात्म्यं वक्तुं वर्षशतैरपि ।
अशक्यं विस्तराद्वक्तुं संक्षेपाद्वच्मि सांप्रतम् ॥ २

रामायणस्य वाक्यं वा पादं वा पदमेव वा ।
भुक्त्यन्ते तु प्रयुंजानो ब्रह्मभूयाय कल्पते ॥ ३

रामायणकथामेव ये शृण्वंति नरोत्तमाः ।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥ ४

॥ तत्वसंग्रहरामायणे उत्तरकाण्डे एकविंशसर्गे द्वाविंशच्छ्लोकः ॥

संसारतापयुक्तानां जन्तूनां हतचेतसाम् ।
श्रीमद्रामायणाख्यानपीयूषं भेषजं स्मृतम् ॥ ५

॥ श्रीरस्तु ॥

श्रीहयग्रीवाय नमः ॥

# श्रीमद्रामायणे-युद्धकाण्डे

## ॥ प्रथमस्सर्गः ॥

श्रुत्वा हनुमतो वाक्यं यथावदभिभाषितम् ।
रामः प्रीतिसमायुक्तो वाक्यमुत्तरमब्रवीत् ॥ १

कृतं हनुमता कार्यं सुमहद्भुवि दुर्लभम् ।
मनसाऽपि यदन्येन न शक्यं धरणीतले ॥ २

न हि तं परिपश्यामि यस्तरेत महार्णवम् ।
अन्यत्र गरुडाद्वायोरन्यत्र च हनूमतः ॥ ३

देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम् ॥ ४

प्रविष्टस्सत्त्वमाश्रित्य श्वसन्को नाम निष्क्रमेत् ।
को विशेत्सुदुराधर्षां राक्षसैश्च सुरक्षिताम् ॥ ५

यो वीर्यबलसम्पन्नो न समस्स्याद्धनूमतः ।
भृत्यकार्यं हनुमता सुग्रीवस्य कृतं महत् ॥ ६

स्वयं पिधाय स्वबलं सदृशं विक्रमस्य च ।
यो हि भृत्यो नियुक्तस्सन् भर्त्रा कर्मणि दुष्करे ॥ ७

कुर्यात्तदनुरागेण तमाहुः पुरुषोत्तमम् ।
नियुक्तो यः परं कार्यं न कुर्यान्नृपतेः प्रियम् ॥ ८

भृत्यो युक्तस्समर्थश्च तमाहुर्मध्यमं नरम् ।
नियुक्तो नृपतेः कार्यं न कुर्याद्यस्समाहितः ॥ ९
भृत्यो युक्तस्समर्थश्च तमाहुः पुरुषाधमम् ।
तन्नियोगे नियुक्तेन कृतं कृत्यं हनूमता ॥ १०
न चात्मा लघुतां नीतस्सुग्रीवश्चापि तोषितः ।
अहं च रघुवंशश्च लक्ष्मणश्च महाबलः ॥ ११
वैदेह्या दर्शनेनाद्य धर्मतः परिरक्षिताः ।
इदं तु मम दीनस्य मनो भूयः प्रकर्षति ॥ १२
यदिहास्य प्रियाख्यातुर्न कुर्मि सदृशं प्रियम् ।
एष सर्वस्वभूतो मे परिष्वङ्गो हनूमतः ॥ १३
मया कालमिमं प्राप्य दत्तस्तस्य महात्मनः ।
इत्युक्त्वा प्रीतिहृष्टाङ्गो रामस्तं परिषस्वजे ॥ १४
हनूमन्तं महात्मानं कृतकार्यमुपागतम् ।
ध्यात्वा पुनरुवाचेदं वचनं रघुनन्दनः ॥ १५
हरीणामीश्वरस्यैव सुग्रीवस्योपशृण्वतः ।
सर्वथा सुकृतं तावत्सीतायाः परिमार्गणम् ॥ १६
सागरं तु समासाद्य पुनर्नष्टं मनो मम ।
कथं नाम समुद्रस्य दुष्पारस्य महाम्भसः ॥ १७
हरयो दक्षिणं पारं गमिष्यन्ति समागताः ।
यद्यप्येष तु वृत्तान्तो वैदेह्या गदितो मम ॥ १८
इत्युक्त्वा शोकसंभ्रान्तो रामश्शत्रुनिबर्हणः ।
हनूमन्तं महाबाहुस्ततो ध्यानमुपागमत् ॥ १९

इति श्रीमद्युद्धकाण्डे प्रथमस्सर्गः ॥

## ॥ द्वितीयस्सर्गः ॥

तं तु शोकपरिद्यूनं रामं दशरथात्मजम् ।
उवाच वचनं श्रीमान् सुग्रीवश्शोकनाशनम् ॥ १
किं त्वं सन्तप्यसे वीर यथान्यः प्राकृतस्तथा ।
मैवं भूस्त्यज सन्तापं कृतघ्न इव सौहृदम् ॥ २
सन्तापस्य च ते स्थानं नहि पश्यामि राघव ! ।
प्रवृत्तावुपलब्धायां ज्ञाते च निलये रिपोः ॥ ३
मतिमान् शास्त्रवित्प्राज्ञः पण्डितश्चासि राघव ।
त्यजेमां पापिकां बुद्धिं कृतात्मेवार्थदूषणीम् ॥ ४
समुद्रं लङ्घयित्वा तु महानक्रसमाकुलम् ।
लङ्कामारोहयिष्यामो हनिष्यामश्च ते रिपुम् ॥ ५
निरुत्साहस्य दीनस्य शोकपर्याकुलात्मनः ।
सर्वार्था व्यवसीदन्ति व्यसनं चाधिगच्छति ॥ ६
इमे शूरास्समर्थाश्च सर्वे नो हरियूथपाः ।
त्वत्प्रियार्थं कृतोत्साहाः प्रवेष्टुमपि पावकम् ॥ ७
एषां हर्षेण जानामि तर्कश्चास्मिन् दृढो मम ।
विक्रमेण समानेष्ये सीतां हत्वा यथा रिपुम् ॥ ८
रावणं पापकर्माणं तथा त्वं कर्तुमर्हसि ।
सेतुरत्र यथा बध्येद्यथा पश्येम तां पुरीम् ॥ ९
तस्य राक्षसराजस्य तथा त्वं कुरु राघव ।
दृष्ट्वा तां तु पुरीं लङ्कां त्रिकूटशिखरे स्थिताम् ॥ १०
हतं च रावणं युद्धे दर्शनादवधारय ।
अबद्ध्वा सागरे सेतुं घोरे तु वरुणालये ॥ ११

लङ्का न मर्दितुं शक्या सेन्द्रैरपि सुरासुरैः ।
सेतुर्बद्धस्समुद्रे च यावल्लङ्कासमीपतः ॥ १२

सर्वं तीर्णं च वै सैन्यं जितमित्युपधारय ।
इमे हि समरे शूरा हरयः कामरूपिणः ॥ १३

शक्ता लङ्कां समानेतुं समुत्पाट्य सराक्षसाम् ।
तदलं विक्लबा बुद्धी राजन् सर्वार्थनाशिनी ॥ १४

पुरुषस्य हि लोकेऽस्मिन् शोकश्शौर्यापकर्षणः ।
यत्तु कार्यं मनुष्येण शौण्डीर्यमवलम्बता ॥ १५

अस्मिन्काले महाप्राज्ञ सत्त्वमातिष्ठ तेजसा ।
शूराणां हि मनुष्याणां त्वद्विधानां महात्मनाम् ॥ १६

विनष्टे वा प्रणष्टे वा शोकस्सर्वार्थनाशनः ।
त्वं तु बुद्धिमतां श्रेष्ठ सर्वशास्त्रार्थकोविदः ॥ १७

मद्विधैस्सचिवैस्सार्धमरिं जेतुमिहार्हसि ।
न हि पश्याम्यहं कंचित्त्रिषु लोकेषु राघव ! ॥ १८

गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ।
वानरेषु समासक्तं न ते कार्यं विपत्स्यते ॥ १९

अचिराद्द्रक्ष्यसे सीतां तीर्त्वा सागरमक्षयम् ।
तदलं शोकमालम्ब्य क्रोधमालम्ब भूपते ॥ २०

निश्चेष्टाः क्षत्रिया मन्दास्सर्वे चण्डस्य बिभ्यति ।
लङ्घनार्थं च घोरस्य समुद्रस्य नदीपतेः ॥ २१

सहास्माभिरिहोपेतस्सूक्ष्मबुद्धिर्विचारय ।
लङ्घितं तस्य तैस्सैन्यं जितमित्युपधारय ॥ २२

इमे हि हरयश्शूरास्समरे कामरूपिणः ।
तानरीन्विधमिष्यन्ति शिलापादपवृष्टिभिः ॥ २३

कथंचित्सन्तरिष्यामस्ते वयं वरुणालयम् ।
हतमित्येव तं मन्ये युद्धे समितिनन्दन ॥ २४

किमुक्त्वा बहुधा चापि सर्वथा विजयी भवान् ।
निमित्तानि च पश्यामि मनो मे संप्रहृष्यति ॥ २५

इति श्रीमद्युद्धकाण्डे द्वितीयस्सर्गः ॥

## ॥ तृतीयस्सर्गः ॥

सुग्रीवस्य वचश्श्रुत्वा हेतुमत्परमार्थवित् ।
प्रतिजग्राह काकुत्स्थो हनूमन्तमथाब्रवीत् ॥ १

तपसा सेतुबन्धेन सागरोच्छोषणेन वा ।
सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लङ्घने ॥ २

कतिदुर्गाणि दुर्गाया लङ्काया ब्रूहि तानि मे ।
ज्ञातुमिच्छामि तत्सर्वं दर्शनादिव वानर ॥ ३

बलस्य परिमाणं च द्वारदुर्गक्रियामपि ।
गुप्तिकर्म च लङ्काया रक्षसां सदनानि च ॥ ४

यथासुखं यथावच्च लङ्कायामसि दृष्टवान् ।
सर्वमाचक्ष्व तत्त्वेन सर्वथा कुशलो ह्यसि ॥ ५

श्रुत्वा रामस्य वचनं हनूमान्मारुतात्मजः ।
वाक्यं वाक्यविदां श्रेष्ठो रामं पुनरथाब्रवीत् ॥ ६

श्रूयतां सर्वमाख्यास्ये दुर्गकर्मविधानतः ।
गुप्ता पुरी यथा लङ्का रक्षिता च यथा बलैः ॥ ७

राक्षसाश्च यथा स्निग्धा रावणस्य च तेजसा ।
परां समृद्धिं लङ्कायास्सागरस्य च भीमताम् ॥ ८

विभागं च बलौघस्य निर्देशं वाहनस्य च ।
एवमुक्त्वा हरिश्रेष्ठः कथयामास तत्त्वतः ॥ ९

हृष्टप्रमुदिता लङ्का मत्तद्विपसमाकुला ।
महती रथसंपूर्णा रक्षोगणसमाकुला ॥ १०

वाजिभिश्च सुसंपूर्णा सा पुरी दुर्गमा परैः ।
दृढबद्धकवाटानि महापरिघवन्ति च ॥ ११

द्वाराणि विपुलान्यस्याश्चत्वारि सुमहान्ति च ।
तत्रेषूपलयन्त्राणि बलवन्ति महान्ति च ॥ १२

आगतं परसैन्यं तु तत्र तैः प्रतिहन्यते ।
द्वारेषु संस्कृता भीमाः कालायसमयाश्शिताः ॥ १३

शतशो रचिता वीरैश्शतघ्न्यो रक्षसां गणैः ।
सौवर्णश्च महांस्तस्याः प्राकारो दुष्प्रधर्षणः ॥ १४

मणिविद्रुमवैडूर्यमुक्ताविरचितान्तरः ।
सर्वतश्च महाभीमाश्शीततोयवहाश्शुभाः ॥ १५

अगाधा ग्राहवत्यश्च परिखा मीनसेविताः ।
द्वारेषु तासां चत्वारस्संक्रमाः परमायताः ॥ १६

यन्त्रैरुपेता बहुभिर्महद्भिर्गृहपङ्क्तिभिः ।
त्रायन्ते संक्रमास्तत्र परसैन्यागमे सति ॥ १७

यन्त्रैस्तैरवकीर्यन्ते परिखासु समन्ततः ।
एकस्त्वकंप्यो बलवान् संक्रमस्सुमहान्दृढः ॥ १८

काञ्चनैर्बहुभिस्स्तम्भैर्वेदिकाभिश्च शोभितः ।
स्वयं प्रकृतिमापन्नो युयुत्सु राम रावणः । १९

उत्थितश्चाप्रमत्तश्च बलानामनुदर्शने ।
लङ्का पुनर्निरालम्बा देवदुर्गा भयावहा ॥ २०

नादेयं पार्वतं वान्यं कृत्रिमं च चतुर्विधम् ।
स्थिता पारे समुद्रस्य दूरपारस्य राघव ॥ २१

नौपथोऽपि च नास्त्यत्र निरादेशश्च सर्वतः ।
शैलाग्रे रचिता दुर्गा सा पूर्देवपुरोपमा ॥ २२

वाजिवारणसंपूर्णा लङ्का परमदुर्जया ।
परिघाश्च शतघ्न्यश्च यन्त्राणि विविधानि च ॥ २३

शोभयन्ति पुरीं लङ्कां रावणस्य दुरात्मनः ।
अयुतं रक्षसामत्र पूर्वद्वारं समाश्रितम् ॥ २४

शूलहस्ता दुराधर्षास्सर्वे खङ्गाग्रयोधिनः ।
नियुतं रक्षसामत्र दक्षिणं द्वारमाश्रितम् ॥ २५

चतुरङ्गेण सैन्येन योधास्तत्राप्यनुत्तमाः ।
प्रयुतं रक्षसामत्र पश्चिमद्वारमाश्रितम् ॥ २६

चर्मखङ्गधरास्सर्वे तथा सर्वास्त्रकोविदाः ।
न्यर्बुदं रक्षसामत्राप्युत्तरद्वारमाश्रितम् ॥ २७

रथिनश्चाश्ववाहाश्च कुलपुत्रास्सुपूजिताः ।
शतशोऽथ सहस्राणि मध्यमं स्कन्धमाश्रिताः ॥ २८

यातुधाना दुराधर्षास्साग्रकोटिश्च रक्षसाम् ।
ते मया संक्रमा भग्नाः परिखाश्चावपूरिताः ॥ २९

दग्धा च नगरी लङ्का प्राकाराश्चावसादिताः ।
बलैकदेशः क्षपितो राक्षसानां महात्मनाम् ॥ ३०

येन केन च मार्गेण तराम वरुणालयम् ।
हतेति नगरी लङ्का वानरैरवधार्यताम् ॥ ३१

अङ्गदो द्विविदो मैन्दो जाम्बवान्पनसो नलः ।
नीलस्सेनापतिश्चैव बलशेषेण किं तव ॥ ३२

प्लवमाना हि गत्वा तां रावणस्य महापुरीम् ।
सपर्वतवनां भित्त्वा सखातां सप्रतोरणाम् ॥ ३३

सप्राकारां सभवनामानयिष्यन्ति राघव ।
एवमाज्ञापय क्षिप्रं बलानां सर्वसंग्रहम् ॥ ३४

मुहूर्तेन तु युक्तेन प्रस्थानमभिरोचय ।

इति श्रीमद्युद्धकाण्डे तृतीयस्सर्गः ॥

---

## ॥ चतुर्थस्सर्गः ॥

श्रुत्वा हनुमतो वाक्यं यथावदनुपूर्वशः ।
ततोऽब्रवीन्महातेजा रामस्सत्यपराक्रमः ॥ १

यां निवेदयसे लङ्कां पुरीं भीमस्य रक्षसः ।
क्षिप्रमेनां मथिष्यामि सत्यमेतद्ब्रवीमि ते ॥ २

अस्मिन्मुहूर्ते सुग्रीव प्रयाणमभिरोचये ।
युक्तो मुहूर्तो विजयः प्राप्तो मध्यं दिवाकरः ॥ ३

अस्मिन्मुहूर्ते विजये प्राप्ते मध्यं दिवाकरे ।
सीतां हृत्वा तु मे जातु कासौ यास्यति यास्यतः ॥ ४

सीता श्रुत्वाऽभियानं मे आशामेष्यति जीविते ।
जीवितान्तेऽमृतं स्पृष्ट्वा पीत्वा विषमिवातुरः ॥ ५

उत्तरा फल्गुनीह्यद्य श्वस्तु हस्तेन योक्ष्यते ।
अभिप्रयाम सुग्रीव सर्वानीकसमावृताः ॥ ६

निमित्तानि च धन्यानि यानि प्रादुर्भवन्ति च ।
निहत्य रावणं सीता मानयिष्यामि जानकीम् ॥ ७

उपरिष्टाद्धि नयनं स्फुरमाणमिदं मम ।
विजयं समनुप्राप्तं शंसतीव मनोरथम् ॥ ८

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
उवाच रामो धर्मात्मा पुनरप्यर्थकोविदः ॥ ९

अग्रे यातु बलस्यास्य नीलो मार्गमवेक्षितुम् ।
वृतश्शतसहस्रेण वानराणां तरस्विनाम् ॥ १०

फलमूलवता नील शीतकाननवारिणा ।
पथा मधुमता चाऽऽशु सेनां सेनापते नय ॥ ११

दूषयेयुर्दुरात्मानः पथि मूलफलोदकम् ।
राक्षसाः परिरक्षेथास्तेभ्यस्त्वं नित्यमुद्यता ॥ १२

निम्नेषु वनदुर्गेषु वनेषु च वनौकसः ।
अभिप्लुत्याभिपश्येयुः परेषां निहितं बलम् ॥ १३

यच्च फल्गु बलं किंचित्तदत्रैवोपयुज्यताम् ।
एतद्धि कृत्यं घोरं नो विक्रमेण प्रयुज्यताम् ॥ १४

सागरौघनिभं भीममग्रानीकं महाबलाः ।
कपिसिंहाः प्रकर्षन्तु शतशोऽथ सहस्रशः ॥ १५

गजश्च गिरिसङ्काशो गवयश्च महाबलः ।
गवाक्षश्चाग्रतो यान्तु गवां दृप्ता इवर्षभाः ॥ १६

यातु वानरवाहिन्या वानरः प्लवतां वरः ।
पालयन्दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १७

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
यातु वानरवाहिन्यास्सव्यं पार्श्वमधिष्ठितः ॥ १८

यास्यामि बलमध्येऽहं बलौघमभिहर्षयन् ।
अधिरुह्य हनूमन्तमैरावतमिवेश्वरः ॥ १९

अङ्गदेनैष संयातु लक्ष्मणश्चान्तकोपमः ।
सार्वभौमेन भूतेशो द्रविणाधिपतिर्यथा ॥ २०

जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ।
ऋक्षराजो महासत्वः कुक्षिं रक्षन्तु ते त्रयः ॥ २१

राघवस्य वचः श्रुत्वा सुग्रीवो वाहिनीपतिः ।
व्यादिदेश महावीर्यान्वानरान्वानरर्षभः ॥ २२

ते वानरगणास्सर्वे समुत्पत्य युयुत्सवः ।
गुहाभ्यश्शिखरेभ्यश्च आशु पुप्लुविरे तदा ॥ २३

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ २४

शतैश्शतसहस्रैश्च कोटीभिरयुतैरपि ।
वारणाभैश्च हरिभिर्ययौ परिवृतस्तदा ॥ २५

तं यान्तमनुयाति स्म महती हरिवाहिनी ।
हृष्टाः प्रमुदितास्सर्वे सुग्रीवेणाभिपालिताः ॥ २६

आप्लुवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
क्ष्वेलन्तो निनदन्तस्ते जग्मुर्वै दक्षिणां दिशम् ॥ २७
भक्षयन्तस्सुगन्धीनि मधूनि च फलानि च ।
उद्वहन्तो महावृक्षान्मञ्जरीपुञ्जधारिणः ॥ २८
अन्योन्यं सहसा दृप्ता निर्वहन्ति क्षिपन्ति च ।
पतन्तश्चाक्षिपन्त्यन्ये पातयन्त्यपरे परान् ॥ २९
रावणो नो निहन्तव्यस्सर्वे च रजनीचराः ।
इति गर्जन्ति हरयो राघवस्य समीपतः ॥ ३०
पुरस्तादृषभो वीरो नीलः कुमुद एव च ।
पन्थानं शोधयन्ति स्म वानरैर्बहुभिस्सह ॥ ३१
मध्ये तु राजा सुग्रीवो रामो लक्ष्मण एव च ।
बहुभिर्बलिभिर्भीमैर्वृतारशत्रुनिबर्हणाः ॥ ३२
हरिश्शतवलिर्वीरः कोटीभिर्दशभिर्वृतः ।
सर्वामेको ह्यवष्टभ्य ररक्ष हरिवाहिनीम् ॥ ३३
कोटीशतपरीवारः केसरी पनसो गजः ।
अर्कश्चातिबलः पार्श्वमेकं तस्याभिरक्षति ॥ ३४
सुषेणो जाम्बवांश्चैव ऋक्षैश्च बहुभिर्वृतौ ।
सुग्रीवं पुरतः कृत्वा जघनं संररक्षतुः ॥ ३५
तेषां सेनापतिर्वीरो नीलो वानरपुङ्गवः ।
सम्पतन्पततां श्रेष्ठस्तद्बलं पर्यपालयत् ॥ ३६
दरीमुखः प्रजङ्घश्च रम्भोऽथ रभसः कपिः ।
सर्वतश्च ययुर्वीरान्त्वरयन्तः प्लवङ्गमान् ॥ ३७

एवं ते हरिशार्दूला गच्छन्तो बलदर्पिताः ।
अपश्यंस्ते गिरिश्रेष्ठं सह्यं द्रुमलतायुतम् ॥ ३८

सरांसि च सुफुल्लानि तटाकानि वनानि च ।
रामस्य शासनं ज्ञात्वा भीमकोपस्य भीतवत् ॥ ३९

वर्जयन्नगराभ्याशांस्तथा जनपदानपि ।
सागरौघनिभं भीमं तद्वानरबलं महत् ॥ ४०

उत्ससर्प महाघोषं भीमवेग इवार्णवः ।
तस्य दाशरथेः पार्श्वे शूरास्ते कपिकुञ्जराः ॥ ४१

तूर्णमापुप्लुवुस्सर्वे सदश्वा इव चोदिताः ।
कपिभ्यामुह्यमानौ तौ शुशुभाते नरोत्तमौ ॥
महद्भ्यामिव संस्पृष्टौ ग्रहाभ्यां चन्द्रभास्करौ ॥ ४२

ततो वानरराजेन लक्ष्मणेन च पूजितः ।
जगाम रामो धर्मात्मा ससैन्यो दक्षिणां दिशम् ॥ ४३

तमङ्गदगतो रामं लक्ष्मणश्शुभया गिरा ।
उवाच परिपूर्णार्थः स्मृतिमान् प्रतिभानवान् ॥ ४४

हृतामवाप्य वैदेहीं क्षिप्रं हत्वा च रावणम् ।
समृद्धार्थस्समृद्धार्थामयोध्यां प्रतियास्यसि ॥ ४५

महान्ति च निमित्तानि दिवि भूमौ च राघव ।
शुभानि तव पश्यामि सर्वाण्येवार्थसिद्धये ॥ ४६

अनुवाति शुभो वायुस्सेनां मृदुहितस्सुखः ।
पूर्णवल्गुस्वराश्चेमे प्रवदन्ति मृगद्विजाः ॥ ४७

प्रसन्नाश्च दिशस्सर्वा विमलश्च दिवाकरः ।
उशनाश्च प्रसन्नार्चिरनु त्वां भार्गवो गतः ॥ ४८

ब्रह्मराशिर्विशुद्धश्च शुद्धाश्च परमर्षयः ।
अर्चिष्मन्तः प्रकाशन्ते ध्रुवं सर्वे प्रदक्षिणम् ॥ ४९

त्रिशङ्कुर्विमलो भाति राजर्षिस्सपुरोहितः ।
पितामहवरोऽस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५०

विमले च प्रकाशेते विशाखे निरुपप्लवे ।
नक्षत्रवरमस्माकमिक्ष्वाकूणां महात्मनाम् ॥ ५१

नैर्ऋतं नैर्ऋतानां च नक्षत्रमभिपीड्यते ।
मूलो मूलवता स्पृष्टो धूप्यते धूमकेतुना ॥ ५२

सर्वं चैतद्विनाशाय राक्षसानामुपस्थितम् ।
काले कालगृहीतानां नक्षत्रं ग्रहपीडितम् ॥ ५३

प्रसन्नास्सुरसाश्चापो वनानि फलवन्ति च ।
प्रवान्त्यभ्यधिकं गन्धान्यथर्तुकुसुमा द्रुमाः ॥ ५४

व्यूढानि कपिसैन्यानि प्रकाशन्तेऽधिकं प्रभो ।
देवानामिव सैन्यानि संग्रामे तारकामये ॥ ५५

एवमार्य समीक्ष्यैतान्प्रीतो भवितुमर्हसि ।
इति भ्रातरमाश्वास्य हृष्टस्सौमित्रिरब्रवीत् ॥ ५६

अथावृत्य महीं कृत्स्नां जगाम महती चमूः ।
ऋक्षवानरशार्दूलैर्नखदंष्ट्रायुधैर्वृता ॥ ५७

कराग्रैश्चरणाग्रैश्च वानरैरुत्थितं रजः ।
भीममन्तर्दधे लोकं निवार्य सवितुः प्रभाम् ॥ ५८

सपर्वतवनाकाशां दक्षिणां हरिवाहिनी ।
छादयन्ती ययौ भीमा द्यामिवाम्बुदसन्ततिः ॥ ५९

उत्तरन्त्यां च सेनायां सततं बहुयोजनम् ।
नदीस्रोतांसि सर्वाणि सस्यन्दुर्विपरीतवत् ॥ ६०

सरांसि विमलाम्भांसि द्रुमाकीर्णांश्च पर्वतान् ।
समान्भूमिप्रदेशांश्च वनानि फलवन्ति च ॥ ६१

मध्येन च समन्ताच्च तिर्यक्चाधश्च साऽविशत् ।
समावृत्य महीं कृत्स्नां जगाम महती चमूः ॥ ६२

ते हृष्टमनसस्सर्वे जग्मुर्मारुतरंहसः ।
हरयो राघवस्यार्थे समारोपितविक्रमाः ॥ ६३

हर्षवीर्यबलोद्रेकान् दर्शयन्तः परस्परम् ।
यौवनोत्सेकजान् दर्पान्विविधांश्चक्रुरध्वनि ॥ ६४

तत्र केचिद्द्रुतं जग्मुरुत्पेतुश्च तथाऽपरे ।
केचित्किलिकिलां चक्रुर्वानरा वनगोचराः ॥ ६५

प्रास्फोटयंश्च पुच्छानि सन्निजघ्नुः पदान्यपि ।
भुजान्विक्षिप्य शैलांश्च द्रुमानन्ये बभञ्जिरे ॥ ६६

आरोहन्तश्च शृङ्गाणि गिरीणां गिरिगोचराः ।
महानादान्विमुञ्चन्ति क्ष्वेलामन्ये प्रचक्रिरे ॥ ६७

ऊरुवेगैश्च ममृदुर्लताजालान्यनेकशः ।
जृम्भमाणाश्च विक्रान्ता विचिक्रीडुश्शिलाद्रुमैः ॥ ६८

शतैश्शतसहस्रैश्च कोटिभिश्च सहस्रशः ।
वानराणां सुघोराणां श्रीमत्परिवृता मही ॥ ६९

सा स्म याति दिवारात्रं महती हरिवाहिनी ।
हृष्टा प्रमुदिता सेना सुग्रीवेणाभिरक्षिता ॥ ७०

वानरास्त्वरितं यान्ति सर्वे युद्धाभिनन्दिनः ।
प्रमोक्षयिषवस्सीतां मुहूर्तं क्वापि नासत ॥ ७१

ततः पादपसम्बाधं नानामृगसमायुतम्
सह्यपर्वतमासेदुर्मलयं च महीधरम् ॥ ७२

काननानि विचित्राणि नदीः प्रस्रवणानि च ।
पश्यन्नतिययौ रामस्सह्यस्य मलयस्य च ॥ ७३

वकुलांस्तिलकांश्चूतानशोकान् सिन्धुवारकान् ।
करवीरांश्च तिनिशान् भञ्जन्ति स्म प्लवङ्गमाः ॥ ७४

अङ्कोलांश्च करञ्जांश्च प्लक्षन्यग्रोधतिन्दुकान् ।
जम्बूकामलकान्नीपान्भञ्जन्ति स्म प्लवङ्गमाः ॥ ७५

प्रस्तरेषु च रम्येषु विविधाः काननद्रुमाः ।
वायुवेगप्रचलिताः पुष्पैरवकिरन्ति तान् ॥ ७६

मारुतस्सुखसंस्पर्शो वाति चन्दनशीतलः ।
षट्पदैरनुकूजद्भिर्वनेषु मधुगन्धिषु ॥ ७७

अधिकं शैलराजस्तु धातुभिस्सुविभूषितः ।
धातुभ्यः प्रसृतो रेणुर्वायुवेगविघट्टितः ॥ ७८

सुमहद्वानरानीकं छादयामास सर्वतः ।
गिरिप्रस्थेषु रम्येषु सर्वतस्संप्रपुष्पिताः ॥ ७९

केतक्यस्सिन्धुवाराश्च वासन्त्यश्च मनोरमाः ।
माधव्यो गन्धपूर्णाश्च कुन्दगुल्माश्च पुष्पिताः ॥ ८०

चिरिबिल्वा मधूकाश्च वंजुलाः प्रियकास्तथा ।
स्फूर्जकास्तिलकाश्चैव नागवृक्षाश्च पुष्पिताः ॥ ८१

चूताः पाटलयश्चैव कोविदाराश्च पुष्पिताः ।
मुचुलिन्दार्जुनाश्चैव शिंशुपाः कुटजास्तथा ॥ ८२

धवाश्शाल्मलयश्चैव रक्ताः कुरवकास्तथा ।
हिन्तालास्तिनिशाश्चैव चूर्णका नीपकास्तथा ॥ ८३

नीलाशोकाश्च वरणा अङ्कोलाः पद्मकास्तथा ।
प्लवमानैः प्लवङ्गैस्तु सर्वे पर्याकुलीकृताः ॥ ८४

वाप्यस्तस्मिन्गिरौ शीताः पल्वलानि तथैव च ।
चक्रवाकानुचरिताः कारण्डवनिषेविताः ॥ ८५

प्लवैः क्रौञ्चैश्च सङ्कीर्णा वराहमृगसेविताः ।
ऋक्षैस्तरक्षुभिस्सिंहैश्शार्दूलैश्च भयावहैः ॥ ८६

व्यालैश्च बहुभिर्भीमैस्सेव्यमानास्समन्ततः ।
पद्मैस्सौगन्धिकैः फुल्लैः कुमुदैश्चोत्पलैस्तथा ॥ ८७

वारिजैर्विविधैः पुष्पै रम्यास्तत्र जलाशयाः ।
तस्य सानुषु कूजन्ति नानाद्विजगणास्तथा ॥ ८८

स्नात्वा पीत्वोदकान्यत्र जले क्रीडन्ति वानराः ।
अन्योन्यं प्लावयन्ति स्म शैलमारुह्य वानराः ॥ ८९

फलान्यमृतगन्धीनि मूलानि कुसुमानि च ।
बुभुजुर्वानरास्तत्र पादपानां मदोत्कटाः ॥ ९०

द्रोणमात्रप्रमाणानि लम्बमानानि वानराः ।
ययुः पिबन्तो हृष्टास्ते मधूनि मधुपिङ्गलाः ॥ ९१

पादपानवभञ्जन्तो विकर्षन्तस्तथा लताः ।
विधमन्तो गिरिवरान्प्रययुः प्लवगर्षभाः ॥ ९२

वृक्षेभ्योऽन्ये तु कवयो नर्दन्तो मधुदर्पिताः ।
अन्ये वृक्षान्प्रपद्यन्ते प्रपतन्त्यपि चापरे ॥ ९३

बभूव वसुधा तैस्तु संपूर्णा हरियूथपैः ।
यथाकलमकेदारैः पक्वैरिव वसुन्धरा ॥ ९४

महेन्द्रमथ सम्प्राप्य रामो राजीवलोचनः ।
अध्यारोहन्महाबाहुश्शिखरं द्रुमभूषितम् ॥ ९५

ततश्शिखरमारुह्य रामो दशरथात्मजः ।
कूर्ममीनसमाकीर्णमपश्यत्सलिलाकरम् ॥ ९६

ते सह्यं समतिक्रम्य मलयं च महागिरिम् ।
आसेदुरानुपूर्व्येण समुद्रं भीमनिस्वनम् ॥ ९७

अवरुह्य जगामाशु वेलावनमनुत्तमम् ।
रामो रमयतां श्रेष्ठस्ससुग्रीवस्सलक्ष्मणः ॥ ९८

अथ धौतोपलतलां तोयौघैस्सहसोत्थितैः ।
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ९९

एते वयमनुप्राप्तास्सुग्रीव वरुणालयम् ।
इहेदानीं विचिन्ता सा या नः पूर्वं समुत्थिता ॥ १००

अतः परमतीरोऽयं सागरस्सरितां पतिः ।
न चाऽयमनुपायेन शक्यस्तरितुमर्णवः ॥ १०१

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिति ।
यथेदं वानरबलं परं पारमवाप्नुयात् ॥ १०२

इतीव स महाबाहुस्सीताहरणकर्शितः ।
रामस्सागरमासाद्य वासमाज्ञापयत्तदा ॥ १०३

सर्वास्सेना निवेश्यन्तां वेलायां हरिपुङ्गव ।
संप्राप्तो मन्त्रकालो नः सागरस्यास्य लङ्घने ॥ १०४

स्वां स्वां सेनां समुत्सृज्य माच कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानराश्शूरा ज्ञेयं छन्नं भयं च नः ॥ १०५

रामस्य वचनं श्रुत्वा सुग्रीवस्सहलक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ १०६

विरराज समीपस्थं सागरस्य तु तद्बलम् ।
मधुपाण्डुजलः श्रीमान् द्वितीय इव सागरः ॥ १०७

वेलावनमुपागम्य ततस्ते हरिपुङ्गवाः ।
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ॥ १०८

तेषां निविशमानानां सैन्यसन्नाहनिस्वनः ।
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ॥ १०९

सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रेधा निविष्टा महती रामस्यार्थपराऽभवत् ॥ ११०

सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ १११

दूरपारमसम्बाधं रक्षोगणनिषेवितम् ।
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ ११२

चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये ।
हसन्तमिव फेनाघैर्नृत्यन्तमिव चोर्मिभिः ॥ ११३

चन्द्रोदयसमुद्धूतं प्रतिचन्द्रसमाकुलम् ।
पिनष्टीव तरङ्गाग्रैरर्णवः फेनचन्दनम् ॥ ११४

तदादाय करैरिन्दुर्लिंपतीव दिगङ्गनाः ।
चण्डानिलमहाग्राहैः कीर्णं तिमितिमिङ्गिलैः ॥ ११५
दीप्तभोगैरिवाकीर्णं भुजङ्गैर्वरुणालयम् ।
अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ॥ ११६
सुदुर्गं दुर्गमार्गं तमगाधमसुरालयम् ।
मकरैर्नागभोगैश्च विगाढा वातलोलिताः ॥ ११७
उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ।
अग्निचूर्णमिवाविद्धं भास्वराम्बु महोरगम् ॥ ११८
सुरारिविषयं घोरं पातालविषमं सदा ।
सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् ॥ ११९
सागरं चाम्बरं चेति निर्विशेषमदृश्यत ।
संपृक्तं नभसाप्यम्भस्संपृक्तं च नभोऽम्भसा ॥ १२०
तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ।
समुत्पतितमेघस्य वीचिमालाकुलस्य च ॥ १२१
विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ।
अन्योन्यैराहतास्सक्तास्सस्वनुर्भीमनिस्वनाः ॥ १२२
ऊर्मयस्सिन्धुराजस्य महाभेर्य इवाहवे ।
रत्नौघजलसन्नादं विषक्तामिव वायुना ॥ १२३
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ।
ददृशुस्ते महोत्साहा वाताहतजलाशयम् ॥ १२४
अनिलोद्धतमाकाशे प्रवल्गन्तमिवोर्मिभिः ।
ततो विस्मयमापन्ना ददृशुर्हरयस्तदा ॥ १२५
भ्रान्तोर्मिजलसन्नादं प्रलोलमिव सागरम् ।

इति श्रीमद्युद्धकाण्डे चतुर्थस्सर्गः ॥

## ॥ पञ्चमस्सर्गः ॥

सा तु नीलेन विधिवत्स्वारक्षा सुसमाहिता ।
सागरस्योत्तरे तीरे साधु सेना निवेशिता ॥ १
मैन्दश्च द्विविदश्चोभौ तत्र वानरपुङ्गवौ ।
विचेरतुश्च तां सेनां रक्षार्थं सर्वतो दिशम् ॥ २
निविष्टायां तु सेनायां तीरे नदनदीपतेः ।
पार्श्वस्थं लक्ष्मणं दृष्ट्वा रामो वचनमब्रवीत् ॥ ३
शोकश्च किल कालेन गच्छता ह्यपगच्छति ।
मम चापश्यतः कान्तामहन्यहनि वर्धते ॥ ४
न मे दुःखं प्रिया दूरे न मे दुःखं हृतेति वा ।
एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते ॥ ५
वाहि वात यतः कान्ता तां स्पृष्ट्वा मामपि स्पृश ।
त्वयि मे गात्रसंस्पर्शश्चन्द्रे दृष्टिसमागमः ॥ ६
तन्मे दहति गात्राणि विषं पीतमिवाशये ।
हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥ ७
तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।
रात्रिन्दिवं शरीरं मे दह्यते मदनाग्निना ॥ ८
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना ।
कथंचित्प्रज्वलन्कामस्स मां सुप्तं जले दहेत् ॥ ९
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १०
केदारस्येव केदारस्सोदकस्य निरूदकः ।
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११

कदानु खलु सुश्रोणीं शतपत्रायतेक्षणाम् ।
विजित्य शत्रून्द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२

कदानु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम् ।
ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १३

तस्यास्तु संहतौ पीनौ स्तनौ तालफलोपमौ ।
कदानु खलु सोत्कम्पौ श्लिष्यन्त्या मां भजिष्यतः ॥ १४

सा नूनमसितापाङ्गी रक्षोमध्यगता सती ।
मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५

कथं जनकराजस्य दुहिता सा मम प्रिया ।
राक्षसीमध्यगा शेते स्नुषा दशरथस्य च ॥ १६

कदा विक्षोभ्य रक्षांसि सा विधूयोत्पतिष्यति ।
विधूय जलदान्नीलान् शशिरेखा शरत्स्विव ॥ १७

स्वभावतनुका नूनं शोकेनानशनेन च ।
भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १८

कदानु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १९

कदानु खलु मां साध्वी सीता सुरसुतोपमा ।
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं पयः ॥ २०

कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् ।
सहसा विप्रमोक्ष्यामि वासश्शुक्लेतरं यथा ॥ २१

एवं विलपतस्तस्य तत्र रामस्य धीमतः ।
दिनक्षयान्मन्दरुचिर्भास्करोऽस्तमुपागमत् ॥ २२

आश्वासितो लक्ष्मणेन रामस्सन्ध्यामुपासत ।
स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २३

इति श्रीमद्युद्धकाण्डे पञ्चमस्सर्गः ॥

---

## ॥ षष्ठस्सर्गः ॥

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ॥ १

अब्रवीद्राक्षसान् सर्वान् ह्रिया किंचिदवाङ्मुखः ।
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ॥ २

तेन वानरमात्रेण दृष्टा सीता च जानकी ।
प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः ॥ ३

आविला च पुरी लङ्का सर्वा हनुमता कृता ।
किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् ॥ ४

उच्यतां नस्समर्थं च यत्कृतं सुकृतं भवेत् ।
मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ॥ ५

तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ।
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ॥ ६

तेषां तु समवेतानां गुणदोषौ वदाम्यहम् ।
मन्त्रिभिर्हितसंयुक्तैस्समर्थैर्मन्त्रनिर्णये ॥ ७

मित्रैर्वाऽपि समानार्थैर्बान्धवैरपि वा हितैः ।
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् ॥ ८

दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ।
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ॥ ९
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ।
गुणदोषावनिश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ॥ १०
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ।
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ॥ ११
एवं मन्त्रा हि विज्ञेया उत्तमाधममध्यमाः ।
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ॥ १२
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ।
बह्व्योऽपि मतयो भूत्वा मन्त्रिणामर्थनिर्णये ॥ १३
पुनर्यत्रैकतां प्राप्तास्स मन्त्रो मध्यमः स्मृतः ।
अन्योन्यं मतिमास्थाय यत्र सम्प्रतिभाष्यते ॥ १४
नचैकमत्ये श्रेयोऽस्ति मन्त्रस्सोधम उच्यते ।
तस्मात्सुमन्त्रितं साधु भवन्तो मतिमत्तमाः ॥ १५
कार्यं संप्रतिपद्यन्तामेतत्कृत्यं मतं मम ।
वानराणां हि वीराणां सहस्रैः परिवारितः ॥ १६
रामोऽभ्येति पुरीं लङ्कामस्माकमुपरोधकः ।
तरिष्यति च सुव्यक्तं राघवस्सागरं सुखम् ॥ १७
तरसा युक्तरूपेण सानुजस्सबलानुगः ।
समुद्रमुच्छोषयति वीर्येणान्यत्करोति वा ॥ १८
अस्मिन्नेवं गते कार्ये विरुद्धे वानरैस्सह ।
हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १९

इति श्रीमद्युद्धकाण्डे षष्ठस्सर्गः ॥

॥ सप्तमस्सर्गः ॥

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ।
ऊचुः प्राञ्जलयस्सर्वे रावणं राक्षसेश्वरम् ॥ १
द्विषत्पक्षमविज्ञाय नीतिबाह्यास्त्वबुद्धयः ।
राजन् परिघशक्त्यृष्टिशूलपट्टससङ्कुलम् ॥ २
सुमहन्नो बलं कस्माद्विषादं भजते भवान् ।
त्वया भोगवतीं गत्वा निर्जिताः पन्नगा युधि ॥ ३
कैलासशिखरावासी यक्षैर्बहुभिरावृतः ।
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ४
स महेश्वरसख्येन श्लाघ्यमानस्त्वया विभो ।
निर्जितस्समरे रोषाल्लोकपालो महाबलः ॥ ५
विनिहत्य च यक्षौघान्विक्षोभ्य च विगृह्य च ।
त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ६
मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता ।
दुहिता तव भार्यार्थे दत्ता राक्षसपुङ्गव ॥ ७
दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः ।
विगृह्य वशमानीतः कुम्भीनस्यास्सुखावहः ॥ ८
निर्जितास्ते महाबाहो नागा गत्वा रसातलम् ।
वासुकिस्तक्षकश्शङ्खो जटी च वशमाहृताः ॥ ९
अक्षया बलवन्तश्च शूरा लब्धवराः पुनः ।
त्वया संवत्सरं युद्धा समरे दानवा विभो ॥ १०
स्वबलं समुपाश्रित्य सीतावशमरिन्दम ।
मायाश्चाधिगतास्तत्र बहवो राक्षसाधिप ॥ ११

शूराश्च बलवन्तश्च वरुणस्य सुता रणे ।
निर्जितास्ते महाबाहो चतुर्विधबलानुगाः ॥ १२

मृत्युदण्डमहाग्राहं शाल्मलिद्रुममण्डितम् ।
कालपाशमहावीचिं यमकिङ्करपन्नगम् ॥ १३

अवगाह्य त्वया राजन्यमस्य बलसागरम् ।
जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ॥ १४

सुयुद्धेन च ते सर्वे लोकास्तत्र विलोलिताः ।
क्षत्रियैर्बहुभिर्वीरैश्शक्रतुल्यपराक्रमैः ॥ १५

आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ।
तेषां वीर्यगुणोत्साहैर्न समो राघवो रणे ॥ १६

प्रसह्य ते त्वया राजन् ताः परमदुर्जयाः ।
तिष्ठ वा किं महाराज श्रमेण तव वानरान् ॥ १७

अयमेको महाबाहुरिन्द्रजित्क्षपयिष्यति ।
अनेन हि महाराज माहेश्वरमनुत्तमम् ॥ १८

इष्ट्वा यज्ञं वरो लब्धो लोके परमदुर्लभः ।
शक्तितोमरमीनं च विनिकीर्णान्त्रशैवलम् ॥ १९

गजकच्छपसम्बाधमश्वमण्डूकसङ्कुलम् ।
रुद्रादित्यमहाग्राहं मरुद्वसुमहोरगम् ॥ २०

रथाश्वगजतोयौघं पदातिपुलिनं महत् ।
अनेन हि समासाद्य देवानां बलसागरम् ॥ २१

गृहीतो दैवतपतिर्लङ्कां चापि प्रवेशितः ।
पितामहनियोगाच्च मुक्तश्शम्बरवृत्रहा ॥ २२

गतस्त्रिविष्टपं राजन् सर्वदेवनमस्कृतः ।
तमेव त्वं महाराज विसृजेन्द्रजितं सुतम् ॥ २३

यावद्वानरसेनां तां सरामां नयति क्षयम् ।
राजन्नापदयुक्तेयमागता प्राकृताज्जनात् ॥ २४
हृदि नैव त्वया कार्या त्वं वधिष्यसि राघवम् ॥

इति श्रीमद्युद्धकाण्डे सप्तमस्सर्गः ॥

---

## ॥ अष्टमस्सर्गः ॥

ततो नीलाम्बुदनिभः प्रहस्तो नाम राक्षसः ।
अब्रवीत् प्राञ्जलिर्वाक्यं शूरस्सेनापतिस्तदा ॥ १

देवदानवगन्धर्वाः पिशाचपतगोरगाः ।
न त्वां धर्षयितुं शक्ताः किं पुनर्वानरा रणे ॥ २

सर्वे प्रमत्ता विश्वस्ता वञ्चिताः स्म हनूमता ।
न हि मे जीवतो गच्छेज्जीवन् स वनगोचरः ॥ ३

सर्वां सागरपर्यन्तां सशैलवनकाननाम् ।
करोम्यवानरां भूमिमाज्ञापयतु मां भवान् ॥ ४

रक्षां चैव विधास्यामि वानराद्रजनीचर ।
नागमिष्यति ते दुःखं किंचिदात्मापराधजम् ॥ ५

अब्रवीच्च सुसंक्रुद्धो दुर्मुखो नाम राक्षसः ।
इदं न क्षमणीयं हि सर्वेषां नः प्रधर्षणम् ॥ ६

अयं परिभवो भूयः पुरस्यान्तःपुरस्य च ।
श्रीमतो राक्षसेन्द्रस्य वानरेण प्रधर्षणम् ॥ ७

अस्मिन्मुहूर्ते हत्वैको निवर्तिष्यामि वानरान् ।
प्रविष्टान् सागरं भीममम्बरं वा रसातलम् ॥ ८

ततोऽब्रवीत्सुसंक्रुद्धो वज्रदंष्ट्रो महाबलः ।
प्रगृह्य परिघं घोरं मांसशोणितदूषितम् ॥ ९

किं वो हनुमता कार्यं कृपणेन तपस्विना ।
रामे तिष्ठति दुर्धर्षे ससुग्रीवे सलक्ष्मणे ॥ १०

अद्य रामं ससुग्रीवं परिघेण सलक्ष्मणम् ।
आगमिष्यामि हत्वैको विक्षोभ्य हरिवाहिनीम् ॥ ११

इदं ममापरं वाक्यं शृणु राजन् यदिच्छसि ।
उपायकुशलो ह्येव जयेच्छत्रूनतन्द्रितः ॥ १२

कामरूपधराश्शूरास्सुभीमा भीमदर्शनाः ।
राक्षसा वै सहस्राणि राक्षसाधिपनिश्चिताः ॥ १३

काकुत्स्थमुपसङ्क्रम्य बिभ्रतो मानुषं वपुः ।
सर्वेह्यसम्भ्रमा भूत्वा ब्रुवन्तु रघुसत्तमम् ॥ १४

प्रेषिता भरतेन स्म भ्रात्रा तव यवीयसा ।
स हि सेनां समुत्थाप्य क्षिप्रमेवोपयास्यति ॥ १५

ततो वयमितस्तूर्णं शूलशक्तिगदाधराः ।
चापबाणासिहस्ताश्च त्वरितास्तत्र यामह ॥ १६

आकाशे गणशः स्थित्वा हत्वा तां हरिवाहिनीम् ।
अश्मशस्त्रमहावृष्ट्या प्रापयाम यमक्षयम् ॥ १७

एवं चेदुपसर्पेतामनयं रामलक्ष्मणौ ।
अवश्यमपनीतेन जहतामेव जीवितम् ॥ १८

कौम्भकर्णिस्ततो वीरो निकुम्भो नाम वीर्यवान् ।
अब्रवीत् परमक्रुद्धो रावणं लोकरावणम् ॥ १९

सर्वे भवन्तस्तिष्ठन्तु महाराजेन सङ्गताः ।
अहमेको हनिष्यामि राघवं सहलक्ष्मणम् ॥ २०

सुग्रीवं च हनूमन्तं सर्वानेव च वानरान् ।
ततो वज्रहनुर्नाम राक्षसः पर्वतोपमः ॥ २१

क्रुद्धः परिलिहन्वक्त्रं जिह्वया वाक्यमब्रवीत् ।
स्वैरं कुर्वन्तु कार्याणि भवन्तो विगतज्वराः ॥ २२

एकोऽहं भक्षयिष्यामि तान् सर्वान् हरियूथपान् ।
स्वस्थाः क्रीडन्तु निश्चिन्ताः पिबन्तो मधुवारुणीम् ॥ २३

अहमेको वधिष्यामि सुग्रीवं सहलक्ष्मणम् ।
अङ्गदं च हनूमन्तं रामं च रणकुञ्जरम् ॥ २४

इति श्रीमद्युद्धकाण्डे अष्टमस्सर्गः ॥

---

## ॥ नवमस्सर्गः ॥

ततो निकुम्भो रभसस्सूर्यशत्रुर्महाबलः ।
सुप्तघ्नो यज्ञहा रक्षो महापार्श्वो महोदरः ॥ १

अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ।
इन्द्रजिच्च महातेजा बलवान् रावणात्मजः ॥ २

प्रहस्तोऽथ विरूपाक्षो वज्रदंष्ट्रो महाबलः ।
धूम्राक्षश्चातिकायश्च दुर्मुखश्चैव राक्षसः ॥ ३

परिघान् पट्टसान् प्रासान् शक्तिशूलपरश्वथान् ।
चापानि च सबाणानि खड्गांश्च विपुलान् शितान् ॥ ४

प्रगृह्य परमक्रुद्धास्समुत्पत्य च राक्षसाः ।
अब्रुवन् रावणं सर्वे प्रदीप्ता इव तेजसा ॥ ५

अद्य रामं वधिष्यामस्सुग्रीवं च सलक्ष्मणम् ।
कृपणं च हनूमन्तं लङ्का येन प्रधर्षिता ॥ ६

तान् गृहीतायुधान् सर्वान् वारयित्वा विभीषणः ।
अब्रवीत् प्राञ्जलिर्वाक्यं पुनः प्रत्युपवेश्य तान् ॥ ७

अप्युपायैस्त्रिभिस्तात योऽर्थः प्राप्तुं न शक्यते ।
तस्य विक्रमकालांस्तान्युक्तानाहुर्मनीषिणः ॥ ८

प्रमत्तेष्वभियुक्तेषु दैवेन प्रहृतेषु च ।
विक्रमास्तात सिध्यन्ति परीक्ष्य विधिना कृताः ॥ ९

अप्रमत्तं कथं तं तु विजिगीषुं बले स्थितम् ।
जितरोषं दुराधर्षं प्रधर्षयितुमिच्छथ ॥ १०

समुद्रं लङ्घयित्वा तु घोरं नदनदीपतिम् ।
कृतं हनुमता कर्म दुष्करं तर्कयेत वा ॥ ११

बलान्यपरिमेयानि वीर्याणि च निशाचराः ।
परेषां सहसाऽवज्ञा न कर्तव्या कथंचन ॥ १२

किंच राक्षसराजस्य रामेणापकृतं पुरा ।
आजहार जनस्थानाद्यस्य भार्यां यशस्विनः ॥ १३

खरो यद्यतिवृत्तस्तु रामेण निहतो रणे ।
अवश्यं प्राणिनां प्राणा रक्षितव्या यथाबलम् ॥ १४

अयशस्यमनायुष्यं परदाराभिमर्शनम् ।
अर्थक्षयकरं घोरं पापस्य च पुनर्भवम् ॥ १५

एतन्निमित्तं वैदेही भयं नस्सुमहद्भवेत् ।
आहृता सा परित्याज्या कलहार्थे कृतेन किम् ॥ १६
न नः क्षमं वीर्यवता तेन धर्मानुवर्तिना ।
वैरं निरर्थकं कर्तुं दीयतामस्य मैथिली ॥ १७
यावन्न सगजां साश्वां बहुरत्नसमाकुलाम् ।
पुरीं दारयते बाणैर्दीयतामस्य मैथिली ॥ १८
यावत्सुघोरा महती दुर्धर्षा हरिवाहिनी ।
नावस्कन्दति नो लङ्कां तावत् सीता प्रदीयताम् ॥ १९
विनश्येद्धि पुरी लङ्का शूरास्सर्वे च राक्षसाः ।
रामस्य दयिता पत्नी स्वयं न यदि दीयते ॥ २०
प्रसादये त्वां बन्धुत्वात् कुरुष्व वचनं मम ।
हितं पथ्यमहं ब्रूमि दीयतामस्य मैथिली ॥ २१
पुरा शरत्सूर्यमरीचिसन्निभान्नवाग्रपुङ्खान् सुदृढान्नृपात्मजः ।
सृजत्यमोघान्विशिखान्वधाय ते प्रदीयतां दाशरथाय मैथिली ॥ २२
त्यजस्व कोपं सुखधर्मनाशनं भजस्व धर्मं रतिकीर्तिवर्धनम् ।
प्रसीद जीवेम सपुत्रबान्धवाः प्रदीयतां दाशरथाय मैथिली ॥ २३
विभीषणवचश्श्रुत्वा रावणो राक्षसेश्वरः ।
विसर्जयित्वा तान् सर्वान् प्रविवेश स्वकं गृहम् ॥ २४

इति श्रीमद्युद्धकाण्डे नवमस्सर्गः ॥

---

## ॥ दशमस्सर्गः ॥

ततः प्रत्युषसि प्राप्ते प्राप्तधर्मार्थनिश्चयः ।
राक्षसाधिपतेर्वेश्म भीमकर्मा विभीषणः ॥ १

शैलाग्रचयसङ्काशं शैलशृङ्गमिवोन्नतम् ।
सुविभक्तमहाकक्ष्यं महाजनपरिग्रहम् ॥ २

मतिमद्भिर्महामात्रैरनुरक्तैरधिष्ठितम् ।
राक्षसैश्चाप्तपर्याप्तैस्सर्वतः परिरक्षितम् ॥ ३

मत्तमातङ्गनिश्वासैर्व्याकुलीकृतमारुतम् ।
शङ्खघोषमहाघोषं तूर्यनादानुनादितम् ॥ ४

प्रमदाजनसम्बाधं प्रजल्पितमहापथम् ।
तप्तकाञ्चननिर्यूहं भूषणोत्तमभूषितम् ॥ ५

गन्धर्वाणामिवाऽऽवासमालयं मरुतामिव ।
रत्नसञ्चयसम्बाधं भवनं भोगिनामिव ॥ ६

तं महाभ्रमिवाऽऽदित्यस्तेजोविस्तृतरश्मिमान् ।
अग्रजस्यालयं वीरः प्रविवेश महाद्युतिः ॥ ७

पुण्यान्पुण्याहघोषांश्च वेदविद्भिरुदाहृतान् ।
शुश्राव सुमहातेजा भ्रातुर्विजयसंश्रितान् ॥ ८

पूजितान् दधिपात्रैश्च सर्पिर्भिस्सुमनोक्षतैः ।
मन्त्रवेदविदो विप्रान् ददर्श सुमहाबलः ॥ ९

स पूज्यमानो रक्षोभिर्दीप्यमानस्स्वतेजसा ।
आसनस्थं महाबाहुर्ववन्दे धनदानुजम् ॥ १०

स राजदृष्टिसम्पन्नमासनं हेमभूषितम् ।
जगाम समुदाचारं प्रयुज्याचारकोविदः ॥ ११

स रावणं महात्मानं विजने मन्त्रिसन्निधौ ।
उवाच हितमत्यर्थं वचनं हेतुनिश्चितम् ॥ १२

प्रसाद्य भ्रातरं ज्येष्ठं सान्त्वेनोपस्थितक्रमः ।
देशकालार्थसंवादी दृष्टलोकपरावरः ॥ १३

यदा प्रभृति वैदेही संप्राप्तेमां पुरीं तव ।
तदा प्रभृति दृश्यन्ते निमित्तान्यशुभानि नः ॥ १४

सस्फुलिङ्गस्सधूमार्चिस्सधूमकलुषोदयः ।
मन्त्रसन्धुक्षितोऽप्यग्निर्न सम्यगभिवर्धते ॥ १५

अग्निष्ठेष्वग्निशालासु तथा ब्रह्मस्थलीषु च ।
सरीसृपाणि दृश्यन्ते हव्येषु च पिपीलिकाः ॥ १६

गवां पयांसि स्कन्नानि विमदा वीरकुञ्जराः ।
दीनमश्वाः प्रहेषन्ते नवग्रासाभिनन्दिनः ॥ १७

खरोष्ट्राश्वतरा राजन् भिन्नरोमास्स्रवन्ति नः ।
न स्वभावेऽवतिष्ठन्ति विधानैरपि चिन्तिताः ॥ १८

वायसास्सङ्घशः क्रूरा व्याहरन्ति समन्ततः ।
समवेताश्च दृश्यन्ते विमानाग्रेषु सङ्घशः ॥ १९

गृध्राश्च परिलीयन्ते पुरीमुपरि पिण्डिताः ।
उपपन्नाश्च सन्ध्ये द्वे व्याहरन्त्यशिवं शिवाः ॥ २०

क्रव्यादानां मृगाणां च पुरद्वारेषु सङ्घशः ।
श्रूयन्ते विपुला घोषास्सविस्फूर्जथुनिस्स्वनाः ॥ २१

तदेवं प्रस्तुते कार्ये प्रायश्चित्तमिदं क्षमम् ।
रोचते यदि वैदेही राघवाय प्रदीयताम् ॥ २२

इदं च यदि वा मोहाल्लोभाद्वा व्याहृतं मया ।
तत्रापि च महाराज न दोषं कर्तुमर्हसि ॥ २३

अयं च दोषस्सर्वस्य जनस्यास्योपलक्ष्यते ।
रक्षसां राक्षसीनां च पुरस्यान्तःपुरस्य च ॥ २४

श्रावणे चास्य मन्त्रस्य निवृत्तास्सर्वमन्त्रिणः ।
अवश्यं च मया वाच्यं यद्दृष्टमपि वा श्रुतम् ॥ २५

सम्प्रधार्य यथान्यायं तद्भवान् कर्तुमर्हति ।
इति स्म मन्त्रिणां मध्ये भ्राता भ्रातरमूचिवान् ॥ २६

रावणं राक्षसश्रेष्ठं तथ्यमेतद्विभीषणः ।
हितं महार्थं मृदु हेतुसंहितं व्यतीतकालायतिसंप्रतिक्षमम् ।
निशम्य तद्वाक्यमुपस्थितज्वरः प्रसङ्गवानुत्तरमेतदब्रवीत् ॥ २७

भयं न पश्यामि कुतश्चिदप्यहं न राघवः प्राप्स्यति जातु मैथिलीम् ।
सुरैस्सहेन्द्रैरपि सङ्गतः कथं ममाग्रतः स्थास्यति लक्ष्मणाग्रजः ॥ २८

इतीदमुक्त्वा सुरसैन्यशासनो महाबलस्संयति चण्डविक्रमः ।
दशाननो भ्रातरमाप्तवादिनं विसर्जयामास तदा विभीषणम् ॥ २९

इति श्रीमद्युद्धकाण्डे दशमस्सर्गः ॥

---

## ॥ एकादशस्सर्गः ॥

स बभूव कृशो राजा मैथिलीकाममोहितः ।
असम्मानाच्च सुहृदां पापः पापेन कर्मणा ॥ १

अतीतसमये काले तस्मिन्वै युधि रावणः ।
अमात्यैश्च सुहृद्भिश्च प्राप्तकालममन्यत ॥ २

सहेमजालविततं मणिविद्रुमभूषितम् ।
उपगम्य विनीताश्वमारुरोह महारथम् ॥ ३

तमास्थाय रथश्रेष्ठं महामेघसमस्वनम् ।
प्रययौ राक्षसश्रेष्ठो दशग्रीवस्सभां प्रति ॥ ४

असिचर्मधरा योधास्सर्वायुधधरास्तथा ।
राक्षसा राक्षसेन्द्रस्य पुरस्तात्संप्रतस्थिरे ॥ ५

नानाविकृतवेषाश्च नानाभूषणभूषिताः ।
पार्श्वतः पृष्ठतश्चैनं परिवार्य ययुस्ततः ॥ ६

रथैश्चातिरथाश्शीघ्रं मत्तैश्च वरवारणैः ।
अनूत्पेतुर्दशग्रीवमाक्रीडद्भिश्च वाजिभिः ॥ ७

गदापरिघहस्ताश्च शक्तितोमरपाणयः ।
परश्वधधराश्चान्ये तथाऽन्ये शूलपाणयः ॥ ८

ततस्तूर्यसहस्राणां सञ्जज्ञे निस्वनो महान् ।
तुमुलश्शङ्खशब्दश्च सभां गच्छति रावणे ॥ ९

स नेमिघोषेण महान् सहसाऽभिविनादयन् ।
राजमार्गं श्रिया जुष्टं प्रतिपेदे महारथः ॥ १०

विमलं चातपत्राणां प्रगृहीतमशोभत ।
पाण्डुरं राक्षसेन्द्रस्य पूर्णस्ताराधिपो यथा ॥ ११

हेममञ्जरिगर्भे च शुद्धस्फटिकविग्रहे ।
चामरव्यजने चास्य रेजतुस्सव्यदक्षिणे ॥ १२

ते कृताञ्जलयस्सर्वे रथस्थं पृथिवीस्थिताः ।
राक्षसा राक्षसश्रेष्ठं शिरोभिस्तं ववन्दिरे ॥ १३

राक्षसैः स्तूयमानस्सन् जयाशीर्भिररिन्दमः ।
आससाद महातेजास्सभां सुविहितां शुभाम् ॥ १४

सुवर्णरजतस्थूणां विशुद्धस्फटिकान्तराम् ।
विराजमानो वपुषा रुक्मपट्टोत्तरच्छदाम् ॥ १५

तां पिशाचशतैष्षड्भिरभिगुप्तां सदा शुभाम् ।
प्रविवेश महातेजास्सुकृतां विश्वकर्मणा ॥ १६

तस्यां तु वैडूर्यमयं प्रियकाजिनसंवृतम् ।
महत्सोपाश्रयं भेजे रावणः परमासनम् ॥ १७

ततश्शशासेश्वरवद्दूतान् लघुपराक्रमान् ।
समानयत मे क्षिप्रमिहैतान् राक्षसानिति ॥ १८

कृत्यमस्ति महज्जातं सामर्थ्यमिह नो भवेत् ।
राक्षसास्तद्वचश्श्रुत्वा लङ्कायां परिचक्रमुः ॥ १९

अनुगेहमवस्थाय विहारशयनेषु च ।
उद्यानेषु च रक्षांसि चोदयन्तो ह्यभीतवत् ॥ २०

ते रथान् रुचिरानेके दृप्तानेके पृथग्वयान् ।
नागानन्येऽधिरुरुहुर्जग्मुश्चैके पदातयः ॥ २१

सा पुरी परमाकीर्णा रथकुञ्जरवाजिभिः ।
संपतद्भिर्विरुरुचे गरुत्मद्भिरिवाम्बरम् ॥ २२

ते वाहनान्यवस्थाप्य यानानि विविधानि च ।
सभां पद्भिः प्रविविशुस्सिंहा गिरिगुहामिव ॥ २३

राज्ञः पादौ गृहीत्वा तु राज्ञा ते प्रतिपूजिताः ।
पीठेष्वन्ये बृसीष्वन्ये भूमौ केचिदुपाविशन् ॥ २४

ते समेत्य सभायां वै राक्षसा राजशासनात् ।
यथार्हमुपतस्थुस्ते रावणं राक्षसाधिपम् ॥ २५

मन्त्रिणश्च यथामुख्या निश्चयार्थेषु पण्डिताः ।
अमात्याश्च गुणोपेतास्सर्वज्ञा बुद्धिदर्शनाः ॥ २६

समेयुस्तत्र शतशश्शूराश्च बहवस्तदा ।
सभायां हेमवर्णायां सर्वार्थस्य सुखाय वै ॥ २७

रम्यायां राक्षसेन्द्रस्य समेयुस्तत्र सङ्घशः ॥
ततो महात्मा विपुलं सुयुग्यं वरं रथं हेमविचित्रिताङ्गम् ।
शुभं समास्थाय ययौ यशस्वी विभीषणस्संसदमग्रजस्य ॥ २८

स पूर्वजायावरजश्शशंस नामाथ पश्चाच्चरणौ ववन्दे ।
शुकः प्रहस्तश्च तथैव तेभ्यो ददौ यथार्हं पृथगासनानि ॥ २९

सुवर्णनानामणिभूषणानां सुवाससां संसदि राक्षसानाम् ।
तेषां परार्ध्यागरुचन्दनानां स्रजश्च गन्धाः प्रववुस्समन्तात् ॥ ३०

न चुक्रुशुर्नानृतमाह कश्चित् सभासदो नापि जजल्पुरुच्चैः ।
संसिद्धार्थास्सर्व एवोग्रवीर्या भर्तुस्सर्वे ददृशुश्चाननं ते ॥ ३१

स रावणश्शस्त्रभृतां मनस्विनां महाबलानां समितौ मनस्वी ।
तस्यां सभायां प्रभया चकाशे मध्ये वसूनामिव वज्रहस्तः ॥ ३२

इति श्रीमद्युद्धकाण्डे एकादशस्सर्गः ॥

---

## ॥ द्वादशस्सर्गः ॥

स तां परिषदं कृत्स्नां समीक्ष्य समितिञ्जयः ।
प्रचोदयामास तदा प्रहस्तं वाहिनीपतिम् ॥ १

सेनापते यथा ते स्युः कृतविद्याश्चतुर्विधाः ।
योधानधिकरक्षायां तथा व्यादेष्टुमर्हसि ॥ २

स प्रहस्तः प्रणीतात्मा चिकीर्षन् राजशासनम् ।
विनिक्षिपद्बलं सर्वं बहिरन्तश्च मन्दिरे ॥ ३

ततो विनिक्षिप्य बलं पृथङ्नगरगुप्तये ।
प्रहस्तः प्रमुखे राज्ञो निषसाद जगाद च ॥ ४

निहितं बहिरन्तश्च बलं बलवतस्तव ।
कुरुष्वाविमनाः क्षिप्रं यदभिप्रेतमस्तु ते ॥ ५

प्रहस्तस्य वचः श्रुत्वा राजा राज्यहिते रतः ।
सुखेप्सुस्सुहृदां मध्ये व्याजहार स रावणः ॥ ६

प्रियाप्रिये सुखं दुःखं लाभालाभौ हिताहिते ।
धर्मकामार्थकृच्छ्रेषु यूयमर्हथ वेदितुम् ॥ ७

सर्वकृत्यानि युष्माभिस्समारब्धानि सर्वथा ।
मन्त्रकर्मनियुक्तानि न जातु विफलानि मे ॥ ८

ससोमग्रहनक्षत्रैर्मरुद्भिरिव वासवः ।
भवद्भिरहमत्यर्थं वृतश्श्रियमवाप्नुयाम् ॥ ९

अहं तु खलु सर्वान्वस्समर्थयितुमुद्यतः ।
कुम्भकर्णस्य तु स्वप्नान्नेममर्थमचोदयम् ॥ १०

अयं हि सुप्तष्षण्मासान् कुम्भकर्णो महाबलः ।
सर्वशस्त्रभृतां मुख्यस्स इदानीं समुत्थितः ॥ ११

इयं च दण्डकारण्याद्रामस्य महिषी मया ।
रक्षोभिश्चरिताद्देशादानीता जनकात्मजा ॥ १२

सा मे न शय्यामारोढुमिच्छत्यलसगामिनी ।
त्रिषु लोकेषु चान्या मे न सीतासदृशी मता ॥ १३

तनुमध्या पृथुश्रोणी शारदेन्दुनिभानना ।
हेमबिम्बनिभा रम्या मायेव मयनिर्मिता ॥ १४

सुलोहिततलौ श्लक्ष्णौ चरणौ सुप्रतिष्ठितौ ।
दृष्ट्वा ताम्रनखौ तस्या दीप्यते मे शरीरजः ॥ १५

हुताग्नेरर्चिसङ्काशामेनां सौरीमिव प्रभाम् ।
उन्नसं वदनं वल्गु विपुलं चारुलोचनम् ॥ १६

पश्यंस्तथाऽवशस्तस्याः कामस्य वशमेयिवान् ।
क्रोधहर्षसमानेन दुर्वर्णकरणेन च ॥ १७

शोकसन्तापनित्येन कामेन कलुषीकृतः ।
सा तु संवत्सरं कालं मामयाचत भामिनी ॥ १८

प्रतीक्षमाणा भर्तारं राममायतलोचना ।
तन्मया चारुनेत्रायाः प्रतिज्ञातं वचश्शुभम् ॥ १९

श्रान्तोऽहं सततं कामाद्यातो हय इवाध्वनि ।
कथं सागरमक्षोभ्यमुत्तरन्ति वनौकसः ॥ २०

बहुसत्त्वसमाकीर्णं तौ वा दशरथात्मजौ ।
अथवा कपिनैकेन कृतं नः कदनं महत् ॥ २१

दुर्ज्ञेयाः कार्यगतयो ब्रूत यस्य यथामति ।
मानुषान्मे भयं नास्ति तथापि तु विमृश्यताम् ॥ २२

तदा देवासुरे युद्धे युष्माभिस्सहितोऽजयम् ।
ते मे भवन्तश्च तथा सुग्रीवप्रमुखान् हरीन् ॥ २३

परे पारे समुद्रस्य पुरस्कृत्य नृपात्मजौ ।
सीतायाः पदवीं प्राप्तौ संप्राप्तौ वरुणालयम् ॥ २४

अदेया च यथा सीता वध्यौ दशरथात्मजौ ।
भवद्भिर्मन्त्र्यतां मन्त्रस्सुनीतं चाभिधीयताम् ॥ २५

न हि शक्तिं प्रपश्यामि जगत्यन्यस्य कस्यचित् ।
सागरं वानरस्तीर्त्वा निश्चयेन जयो मम ॥ २६

तस्य कामपरीतस्य निशम्य परिदेवितम् ।
कुम्भकर्णः प्रचुक्रोध वचनं चेदमब्रवीत् ॥ २७

संप्रधार्यैव तत्कार्यं करणीयं त्वया विभो ।
संप्रधार्य सहामात्यैः पूर्वमेव यथातथम् ॥ २८

यदा तु रामस्य सलक्ष्मणस्य प्रसह्य सीता खलु सा इहाऽऽहृता ।
सकृत्समीक्ष्यैव सुनिश्चितं तदा भजेत चित्तं यमुनेव यामुनम् ॥ २९

सर्वमेतन्महाराज कृतमप्रतिमं तव ।
विधीयेत सहास्माभिरादावेवास्य कर्मणः ॥ ३०

न्यायेन राजकार्याणि यः करोति दशानन ।
न स सन्तप्यते पश्चान्निश्चितार्थमतिर्नृपः ॥ ३१

अनुपायेन कर्माणि विपरीतानि यानि च ।
क्रियमाणानि दुष्यन्ति हवींष्यप्रयतेष्विव ॥ ३२

यः पश्चात्पूर्वकार्याणि कर्माण्यभिचिकीर्षति ।
पूर्वं चापरकार्याणि न स वेद नयानयौ ॥ ३३

चपलस्य तु कृत्येषु प्रसमीक्ष्याधिकं बलम् ।
क्षिप्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ॥ ३४

त्वयेदं महदारब्धं कार्यमप्रतिचिन्तितम् ।
दिष्ट्या त्वां नावधीद्रामो विषमिश्रमिवाऽऽमिषम् ॥ ३५

तस्मात्त्वया समारब्धं कर्म ह्यप्रतिमं परैः ।
अहं समीकरिष्यामि हत्वा शत्रूंस्तवानघ ॥ ३६

अहमुत्सादयिष्यामि शत्रूंस्तव विशां पते ।
यदि शक्रविवस्वन्तौ यदि पावकमारुतौ ॥ ३७

तावहं योधयिष्यामि कुबेरवरुणावपि ।
गिरिमात्रशरीरस्य महापरिघयोधिनः ॥ ३८

नर्दतस्तीक्ष्णदंष्ट्रस्य बिभियाद्वै पुरन्दरः ।
पुनर्मां स द्वितीयेन शरेण निहनिष्यति ॥ ३९

ततोऽहं तस्य पास्यामि रुधिरं काममाश्वस ॥
वधेन वै दाशरथेस्सुखावहं जयं तवाऽऽहर्तुमहं यतिष्ये ।
हत्वा च रामं सहलक्ष्मणेन खादामि सर्वान् हरियूथमुख्यान् ॥ ४०

रमस्व कामं पिब चाग्र्यवारुणीं कुरुष्व कार्याणि हितानि विज्वरः ।
मया तु रामे गमिते यमक्षयं चिराय सीता वशगा भविष्यति ॥ ४१

इति श्रीमद्युद्धकाण्डे द्वादशस्सर्गः ॥

---

## ॥ त्रयोदशस्सर्गः ॥

रावणं क्रुद्धमाज्ञाय महापार्श्वो महाबलः ।
मुहूर्तमनुसंचिन्त्य प्राञ्जलिर्वाक्यमब्रवीत् ॥ १

यः खल्वपि वनं प्राप्य मृगव्यालसमाकुलम् ।
न पिबेन्मधु संप्राप्तं स नरो बालिशो भवेत् ॥ २

ईश्वरस्येश्वरः कोऽस्ति तव शत्रुनिबर्हण ।
रमस्व सह वैदेह्या शत्रूनाक्रम्य मूर्धसु ॥ ३

बलात् कुक्कुटवृत्तेन वर्तस्व सुमहाबल।
आक्रम्याऽऽक्रम्य सीतां वै तां भुङ्क्ष्व च रमस्व च ॥ ४

लब्धकामस्य ते पश्चादागमिष्यति यद्भयम्।
प्राप्तमप्राप्तकालं वा सर्वं प्रतिसहिष्यसि ॥ ५

कुम्भकर्णस्सहास्माभिरिन्द्रजिच्च महाबलः।
प्रतिषेधयितुं शक्तौ सवज्रमपि वज्रिणम् ॥ ६

उपप्रदानं सान्त्वं वा भेदं वा कुशलैः कृतम्।
समतिक्रम्य दण्डेन सिद्धिमर्थेषु रोचय ॥ ७

इह प्राप्तान् वयं सर्वान् शत्रूंस्तव महाबल।
वशे शस्त्रप्रतापेन करिष्यामो न संशयः ॥ ८

एवमुक्तस्तदा राजा महापार्श्वेन रावणः।
तस्य संपूजयन्वाक्यमिदं वचनमब्रवीत् ॥ ९

महापार्श्व निबोध त्वं रहस्यं किंचिदात्मनः।
चिरवृत्तं तदाख्यास्ये यदवाप्तं मया पुरा ॥ १०

पितामहस्य भवनं गच्छन्तीं पुञ्जिकस्थलाम्।
चञ्चूर्यमाणामद्राक्षमाकाशेऽग्निशिखामिव ॥ ११

सा प्रसह्य मया भुक्ता कृता विवसना ततः।
स्वयंभुभवनं प्राप्ता लोलिता नलिनी यथा ॥ १२

तस्य तच्च तदा मन्ये ज्ञातमासीन्महात्मनः।
अथ संकुपितो देवो मामिदं वाक्यमब्रवीत् ॥ १३

अद्यप्रभृति यामन्यां बलान्नारीं गमिष्यसि।
तदा ते शतधा मूर्धा फलिष्यति न संशयः ॥ १४

इत्यहं तस्य शापस्य भीतः प्रसभमेव ताम् ।
नारोपये बलात् सीतां वैदेहीं शयने शुभे ॥ १५
सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
नैतद्दाशरथिर्वेद ह्यासादयति तेन माम् ॥ १६
यस्तु सिंहमिवाऽऽसीनं सुप्तं गिरिगुहाशये ।
क्रुद्धं मृत्युमिवासीनं प्रबोधयितुमिच्छति ॥ १७
न मत्तो निशितान् बाणान् द्विजिह्वानिव पन्नगान् ।
रामः पश्यति संग्रामे तेन मामभिगच्छति ॥ १८
क्षिप्रं वज्रोपमैर्बाणैश्शतधा कार्मुकच्युतैः ।
राममादीपयिष्यामि उल्काभिरिव कुञ्जरम् ॥ १९
तच्चास्य बलमादास्ये बलेन महता वृतः ।
उदयन् सविता काले नक्षत्राणामिव प्रभाम् ॥ २०
न वासवेनापि सहस्रचक्षुषा युधास्मि शक्यो वरुणेन वा पुनः ।
मया त्वियं बाहुबलेन निर्जिता पुरी पुरा वैश्रवणेन पालिता ॥ २१

इति श्रीमद्युद्धकाण्डे त्रयोदशस्सर्गः ॥

---

## ॥ चतुर्दशस्सर्गः ॥

निशाचरेन्द्रस्य निशम्य वाक्यं स कुम्भकर्णस्य च गर्जितानि ।
विभीषणो राक्षसराजमुख्यमुवाच वाक्यं हितमर्थयुक्तम् ॥ १
वृतो हि बाह्वन्तरभोगराशिश्चिन्ताविषस्सुस्मिततीक्ष्णदंष्ट्रः ।
पञ्चाङ्गुलीपञ्चशिरोतिकायस्सीतामहाहिस्तव केन राजन् ॥ २

यावन्न लङ्कां समभिद्रवन्ति वलीमुखाः पर्वतकूटमात्राः ।
दंष्ट्रायुधाश्चैव नखायुधाश्च प्रदीयतां दाशरथाय मैथिली ॥ ३

यावन्न गृह्णन्ति शिरांसि बाणा रामेरिता राक्षसपुङ्गवानाम् ।
वज्रोपमा वायुसमानवेगाः प्रदीयतां दाशरथाय मैथिली ॥ ४

भित्त्वा न तावत्प्रविशन्ति कायं प्राणान्तकास्तेऽशनितुल्यवेगाः ।
शिताश्शरा राघवविप्रमुक्ताः प्रहस्त तेनैव विकत्थसे त्वम् ॥ ५

न कुम्भकर्णेन्द्रजितौ स राजा तथा महापार्श्वमहोदरौ वा ।
निकुम्भकुम्भौ च तथाऽतिकायः स्थातुं न शक्ता युधि राघवस्य ॥ ६

जीवंस्तु रामस्य न मोक्ष्यसे त्वं गुप्तस्सवित्राप्यथवा मरुद्भिः ।
न वासवस्याङ्कगतो न मृत्योर्नभो न पातालमनुप्रविष्टः ॥ ७

निशम्य वाक्यं तु विभीषणस्य ततः प्रहस्तो वचनं बभाषे ।
न नो भयं विद्म न दैवतेभ्यो न दानवेभ्यो ह्यथवा कुतश्चित् ॥ ८

न यक्षगन्धर्वमहोरगेभ्यो भयं न संख्ये पतगोत्तमेभ्यः ।
कथंनु रामाद्भविता भयं नो नरेन्द्रपुत्रात्समरे कदाचित् ॥ ९

प्रहस्तवाक्यं त्वहितं निशम्य विभीषणो राजहितानुकाङ्क्षी ।
ततो महात्मा वचनं बभाषे धर्मार्थकामेषु निविष्टबुद्धिः ॥ १०

प्रहस्त राजा च महोदरश्च त्वं कुम्भकर्णश्च यथार्थजातम् ।
ब्रवीथ रामं प्रति तन्न शक्यं यथागतिस्स्वर्गमधर्मबुद्धेः ॥ ११

वधस्तु रामस्य मया त्वया वा प्रहस्त सर्वैरपि राक्षसैर्वा ।
कथं भवेदर्थविशारदस्य महार्णवं तर्तुमिवाप्लवस्य ॥ १२

धर्मप्रधानस्य महारथस्य इक्ष्वाकुवंशप्रभवस्य राज्ञः ।
प्रहस्त देवाश्च तथाविधस्य कृत्येषु शक्तस्य भवन्ति मूढाः ॥ १३

तीक्ष्णा नता यत्तव कङ्कपत्रा दुरासदा राघवविप्रमुक्ताः ।
भित्वा शरीरं प्रविशन्ति बाणाः प्रहस्त तेनैव विकत्थसे त्वम् ॥ १४
स रावणो नातिबलस्त्रिशीर्षो न कुम्भकर्णोऽस्य सुतो निकुम्भः ।
न चेन्द्रजिद्दाशरथिं प्रसोढुं त्वं वा रणे शक्रसमं समर्थः ॥ १५
देवान्तको वापि नरान्तको वा तथातिकायोऽतिरथो महात्मा ।
अकम्पनश्चाद्रिसमानसारः स्थातुं न शक्ता युधि राघवस्य ॥ १६
अयं हि राजा व्यसनाभिभूतो मित्रैरमित्रप्रतिमैर्भवद्भिः ।
अन्वास्यते राक्षसनाशनार्थे तीक्ष्णः प्रकृत्या ह्यसमीक्ष्यकारी ॥ १७
अनन्तभोगेन सहस्रमूर्ध्ना नागेन भीमेन महाबलेन ।
बलात्परिक्षिप्तमिमं भवन्तो राजानमुत्क्षिप्य विमोचयन्तु ॥ १८
यावद्धि केशग्रहणं सुहृद्भिस्समेत्य सर्वैः परिपूर्णकामैः ।
निगृह्य राजा परिरक्षितव्यो भूतैर्यथा भीमबलैर्गृहीतः ॥ १९
संहारिणा राघवसागरेण प्रच्छाद्यमानस्तरसा भवद्भिः ।
युक्तस्त्वयं तारयितुं समेत्य काकुत्स्थपातालमुखे पतन् सः ॥ २०
इदं पुरस्यास्य सराक्षसस्य राज्ञश्च पथ्यं ससुहृज्जनस्य ।
सम्यग्घि वाक्यं स्वमतं ब्रवीमि नरेन्द्रपुत्राय ददाम पत्नीम् ॥ २१
परस्य वीर्यं स्वबलं च बुद्ध्वा स्थानं क्षयं चैव तथैव वृद्धिम् ।
तथा स्वपक्षेऽप्यनुमृश्य बुद्ध्या वदेत्क्षमं स्वामिहितं च मन्त्री ॥ २२

इति श्रीमद्युद्धकाण्डे चतुर्दशस्सर्गः ॥

---

## ॥ पञ्चदशस्सर्गः ॥

बृहस्पतेस्तुल्यमतेर्वचस्तन्निशम्य यत्नेन विभीषणस्य ।
ततो महात्मा वचनं बभाषे तत्रेन्द्रजिन्नैर्ऋतयोधमुख्यः ॥ १

किं नाम ते तात कनिष्ठवाक्यमनर्थकं चैव सुभीतवच्च ।
अस्मिन्कुले योऽपि भवेन्न जातस्सोऽपीदृशं नैव वदेन्न कुर्यात् ॥ २

सत्त्वेन वीर्येण पराक्रमेण शौर्येण धैर्येण च तेजसा च ।
एकः कुलेऽस्मिन् पुरुषो विमुक्तो विभीषणस्तात कनिष्ठ एषः ॥ ३

किंनाम तौ राक्षसराजपुत्रावस्माकमेकेन हि राक्षसेन ।
सुप्राकृतेनापि रणे निहन्तुं शक्यौ कुतो भीषयसे स्म भीरो ॥ ४

त्रिलोकनाथो ननु देवराजश्शक्रो मया भूमितले निविष्टः ।
भयार्दिताश्चापि दिशः प्रपन्नास्सर्वे तथा देवगणास्समग्राः ॥ ५

ऐरावतो विस्वरमुन्नदन् स निपातितो भूमितले मया तु ।
विकृष्य दन्तौ तु मया प्रसह्य वित्रासिता देवगणास्समग्राः ॥ ६

सोऽहं सुराणामपि दर्पहन्ता दैत्योत्तमानामपि शोकदाता ।
कथं नरेन्द्रात्मजयोर्न शक्तो मनुष्ययोः प्राकृतयोस्सुवीर्यः ॥ ७

अथेन्द्रकल्पस्य दुरासदस्य महौजसस्तद्वचनं निशम्य ।
ततो महार्थं वचनं बभाषे विभीषणश्शस्त्रभृतां वरिष्ठः ॥ ८

न तात मन्त्रे तव निश्चयोऽस्ति बालस्त्वमद्याप्यविपक्वबुद्धिः ।
तस्मात्त्वया ह्यात्मविनाशनाय वचोऽर्थहीनं बहु विप्रलप्तम् ॥ ९

पुत्रप्रवादेन तु रावणस्य त्वमिन्द्रजिन्मित्रमुखोऽसि शत्रुः ।
यस्येदृशं राघवतो विनाशं निशम्य मोहादनुमन्यसे त्वम् ॥ १०

त्वमेव वध्यश्च सुदुर्मतिश्च सचापि वध्यो य इहाऽऽनयत्त्वाम् ।
बालं दृढं साहसिकं च योऽद्य प्रावेशयन् मन्त्रकृतां समीपम् ॥ ११

मूढः प्रगल्भो विनयोपपन्नस्तीक्ष्णस्वभावोऽल्पमतिर्दुरात्मा ।
मूर्खस्त्वमत्यर्थसुदुर्मतिश्च त्वमिन्द्रजिद्बालतया ब्रवीषि ॥ १२

को ब्रह्मदण्डप्रतिमप्रकाशानर्चिष्मतः कालनिकाशरूपान् ।
सहेत बाणान् यमदण्डकल्पान् समक्षमुक्तान् युधि राघवेण ॥ १३

धनानि रत्नानि विभूषणानि वासांसि दिव्यानि मणींश्च चित्रान् ।
सीतां च रामाय निवेद्य देवीं वसेम राजन्निह वीतशोकाः ॥ १४

इति श्रीमद्युद्धकाण्डे पञ्चदशस्सर्गः ॥

---

॥ षोडशस्सर्गः ॥

सुनिविष्टं हितं वाक्यमुक्तवन्तं विभीषणम् ।
अब्रवीत् परुषं वाक्यं रावणः कालचोदितः ॥ १

वसेत्सह सपत्नेन क्रुद्धेनाऽऽशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ २

जानामि शीलं ज्ञातीनां सर्वलोकेषु राक्षस ।
हृष्यन्ति व्यसनेष्वेते ज्ञातीनां ज्ञातयस्सदा ॥ ३

प्रधानं साधनं वैद्यं धर्मशीलं च राक्षस ।
ज्ञातयो ह्यवमन्यन्ते शूरं परिभवन्ति च ॥ ४

नित्यमन्योन्यसंहृष्टा व्यसनेष्वाततायिनः ।
प्रच्छन्नहृदया घोरा ज्ञातयस्तु भयावहाः ॥ ५

श्रूयन्ते हस्तिभिर्गीताश्श्लोकाः पद्मवने क्वचित् ।
पाशहस्तान्नरान् दृष्ट्वा शृणु तान् गदतो मम ॥ ६

नाग्निर्नान्यानि शस्त्राणि न नः पाशा भयावहाः ।
घोरास्स्वार्थप्रयुक्तास्तु ज्ञातयो नो भयावहाः ॥ ६

उपायमेते वक्ष्यन्ति ग्रहणे नात्र संशयः ।
कृत्स्नाद्भयाज्ज्ञातिभयं सुकष्टं विदितं वचः ॥ ८

विद्यते गोषु संपन्नं विद्यते ब्राह्मणे दमः ।
विद्यते स्त्रीषु चापल्यं विद्यते ज्ञातितो भयम् ॥ ९

ततो नेष्टमिदं सौम्य यदहं लोकसत्कृतः ।
ऐश्वर्यमभिजातश्च रिपूणां मूर्ध्नि च स्थितः ॥ १०

यथा पुष्करपर्णेषु पतितास्तोयबिन्दवः ।
न श्लेषमुपगच्छन्ति तथाऽनार्येषु सङ्गतम् ॥ ११

यथा मधुकरस्तर्षाद्रसं विन्दन्न विद्यते ।
तथा त्वमपि तत्रैव तथाऽनार्येषु सौहृदम् ॥ १२

यथा पूर्वं गजस्स्नात्वा गृह्य हस्तेन वै रजः ।
दूषयत्यात्मनो देहं तथाऽनार्येषु सङ्गतम् ॥ १३

यथा शरदि मेघानां सिञ्चितामपि गर्जताम् ।
न भवत्यम्बुसंक्लेदस्तथाऽनार्येषु सौहृदम् ॥ १४

अन्यस्त्वेवंविधं ब्रूयाद्वाक्यमेतन्निशाचर ।
अस्मिन्मुहूर्ते न भवेत्त्वां तु धिक्कुलपांसनम् ॥ १५

इत्युक्तः परुषं वाक्यं न्यायवादी विभीषणः ।
उत्पपात गदापाणिश्चतुर्भिस्सह राक्षसैः ॥ १६

अब्रवीच्च तदा वाक्यं जातक्रोधो विभीषणः ।
अन्तरिक्षगतश्श्रीमान् भ्रातरं राक्षसाधिपम् ॥ १७

स त्वं भ्राताऽसि मे राजन् ब्रूहि मां यद्यदिच्छसि ।
ज्येष्ठो मान्यः पितृसमो न च धर्मपथे स्थितः ॥ १८

इदं तु परुषं वाक्यं न क्षमाम्यनृतं तव ।
सुनीतं हितकामेन वाक्यमुक्तं दशानन ॥ १९

न गृह्णन्त्यकृतात्मानः कालस्य वशमागताः ।
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ॥ २०

अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ।
बद्धं कालस्य पाशेन सर्वभूतापहारिणा ॥ २१

न नश्यन्तमुपेक्षेयं प्रदीप्तं शरणं यथा ।
दीप्तपावनसङ्काशैश्शितैः काञ्चनभूषणैः ॥ २२

न त्वामिच्छाम्यहं द्रष्टुं रामेण निहितं शरैः ।
शूराश्च बलवन्तश्च कृतास्त्राश्च रणाजिरे ॥ २३

कालाभिपन्नास्सीदन्ति यथा वालुकसेतवः ।
तन्मर्षयतु यच्चोक्तं गुरुत्वाद्धितमिच्छता ॥ २४

आत्मानं सर्वथा रक्ष पुरीं चेमां सराक्षसाम् ।
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥ २५

निवार्यमाणस्य मया हितैषिणा न रोचते ते वचनं निशाचर ।
परेतकल्पा हि गतायुषो नरा हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥ २६

इति श्रीमद्युद्धकाण्डे षोडशस्सर्गः ॥

---

## ॥ सप्तदशस्सर्गः ॥

इत्युक्त्वा परुषं वाक्यं रावणं रावणानुजः ।
आजगाम मुहूर्तेन यत्र रामस्सलक्ष्मणः ॥ १

तं मेरुशिखराकारं दीप्तामिव शतह्रदाम् ।
गगनस्थं महीस्थास्ते ददृशुस्सर्ववानराः ॥ २

तमात्मपञ्चमं दृष्ट्वा सुग्रीवो वाहिनीपतिः ।
वानरैस्सह दुर्धर्षश्चिन्तयामास बुद्धिमान् ॥ ३

चिन्तयित्वा मुहूर्तं तु वानरांस्तानुवाच ह ।
हनूमत्प्रमुखान् सर्वानिदं वचनमुत्तमम् ॥ ४

एष सर्वायुधोपेतश्चतुर्भिस्सह राक्षसैः ।
राक्षसोऽभ्येति पश्यध्वमस्मान् हन्तुं न संशयः ॥ ५

सुग्रीवस्य वचश्श्रुत्वा सर्वे ते वानरोत्तमाः ।
सालानुद्यम्य शैलांश्च इदं वचनमब्रुवन् ॥ ६

शीघ्रं व्यादिश नो राजन् वधायैषां दुरात्मनाम् ।
निपतन्तु हताश्चैते धरण्यामल्पतेजसः ॥ ७

तेषां सम्भाषमाणानामन्योन्यं स विभीषणः ।
उत्तरं तीरमासाद्य खस्थ एव व्यतिष्ठत ॥ ८

उवाच च महाप्राज्ञस्स्वरेण महता महान् ।
सुग्रीवं तांश्च संप्रेक्ष्य सर्वान् वानरयूथपान् ॥ ९

रावणो नाम दुर्वृत्तो राक्षसो राक्षसेश्वरः ।
तस्याहमनुजो भ्राता विभीषण इति श्रुतः ॥ १०

तेन सीता जनस्थानाद्धृता हत्वा जटायुषम् ।
रुद्धा च विवशा दीना राक्षसीभिस्सुरक्षिता ॥ ११

तमहं हेतुभिर्वाक्यैर्विविधैश्च न्यदर्शयम् ।
'साधु निर्यात्यतां सीता रामा' येति पुनःपुनः ॥ १२

स च न प्रतिजग्राह रावणः कालचोदितः ।
उच्यमानं हितं वाक्यं विपरीतइवौषधम् ॥ १३

सोऽहं परुषितस्तेन दासवच्चावमानितः ।
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ १४

सर्वलोकशरण्याय राघवाय महात्मने ।
निवेदयत मां क्षिप्रं विभीषणमुपस्थितम् ॥ १५

एतत्तु वचनं श्रुत्वा सुग्रीवो लघुविक्रमः ।
लक्ष्मणस्याग्रतो रामं संरब्धमिदमब्रवीत् ॥ १६

रावणस्यानुजो भ्राता विभीषण इति श्रुतः ।
चतुर्भिस्सह रक्षोभिर्भवन्तं शरणं गतः ॥ १७

मन्त्रे व्यूहे नये चारे युक्तो भवितुमर्हसि ।
वानराणां च भद्रं ते परेषां च परन्तप ॥ १८

अन्तर्धानगता ह्येते राक्षसाः कामरूपिणः ।
शूराश्च निकृतिज्ञाश्च तेषु जातु न विश्वसेत् ॥ १९

प्रणिधी राक्षसेन्द्रस्य रावणस्य भवेदयम् ।
अनुप्रविश्य सोऽस्मासु भेदं कुर्यान्न संशयः ॥ २०

अथवा स्वयमेवैष छिद्रमासाद्य बुद्धिमान् ।
अनुप्रविश्य विश्वस्ते कदाचित्प्रहरेदपि ॥ २१

मित्राटवीबलं चैव मौलं भृत्यबलं तथा ।
सर्वमेतद्बलं ग्राह्यं वर्जयित्वा द्विषद्बलम् ॥ २२

प्रकृत्या राक्षसेन्द्रस्य भ्राताऽमित्रस्य ते प्रभो ।
आगतश्च रिपोः पक्षात्कथमस्मिन् हि विश्वसेत् ॥ २३

रावणेन प्रणिहितं तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥ २४

राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमुपागतः ।
प्रहर्तुं मायया छन्नो विश्वस्ते त्वयि राघव ॥ २५

प्रविष्टश्शत्रुसैन्यं हि प्राज्ञश्शत्रुरतर्कितः ।
निहन्यादन्तरं लब्ध्वा उलूक इव वायसान् ॥ २६

वध्यतामेष तीव्रेण दण्डेन सचिवैस्सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥ २७

एवमुक्त्वा तु तं रामं संरब्धो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ २८

सुग्रीवस्य तु तद्वाक्यं श्रुत्वा रामो महायशाः ।
समीपस्थानुवाचेदं हनूमत्प्रमुखान् हरीन् ॥ २९

यदुक्तं कपिराजेन रावणावरजं प्रति ।
वाक्यं हेतुमदर्थ्यं च भवद्भिरपि तच्छ्रुतम् ॥ ३०

सुहृदा ह्यर्थकृच्छ्रेषु युक्तं बुद्धिमता सता ।
समर्थेनापि निर्देष्टुं शाश्वतीं भूतिमिच्छता ॥ ३१

इत्येवं परिपृष्टास्ते स्वं स्वं मतमतन्द्रिताः ।
सोपचारं तदा राममूचुर्हितचिकीर्षवः ॥ ३२

अज्ञातं नास्ति ते किंचित्त्रिषु लोकेषु राघव ।
आत्मानं सूचयन् राम पृच्छस्यस्मान् सुहृत्तया ॥ ३३

त्वं हि सत्यव्रतश्शूरो धार्मिको दृढविक्रमः ।
परीक्ष्यकारी स्मृतिमान्निसृष्टात्मा सुहृत्सु च ॥ ३४

तस्मादेकैकशस्तावद्ब्रुवन्तु सचिवास्तव ।
हेतुतो मतिसम्पन्नास्समर्थाश्च पुनः पुनः ॥ ३५

इत्युक्ते राघवायाथ मतिमानङ्गदोऽग्रतः ।
विभीषणपरीक्षार्थमुवाच वचनं हरिः ॥ ३६

शत्रोस्सकाशात्संप्राप्तस्सर्वथा शङ्क्य एव हि ।
विश्वासयोग्यस्सहसा न कर्तव्यो विभीषणः ॥ ३७

छादयित्वाऽऽत्मभावं हि चरन्ति शठबुद्धयः ।
प्रहरन्ति च रन्ध्रेषु सोऽनर्थस्सुमहान् भवेत् ॥ ३८

अर्थानर्थौ विनिश्चित्य व्यवसायं भजेत ह ।
गुणतस्संग्रहं कुर्याद्दोषतस्तु विवर्जयेत् ॥ ३९

यदि दोषो महांस्तस्मिंस्त्यज्यतामविशङ्कितम् ।
गुणान्वापि बहून् ज्ञात्वा संग्रहः क्रियतां नृप ॥ ४०

शरभस्त्वथ निश्चित्य सार्थ्यं वचनमब्रवीत् ।
क्षिप्रमस्मिन्नरव्याघ्र चारः प्रतिविधीयताम् ॥ ४१

प्रणिधाय हि चारेण यथावत्सूक्ष्मबुद्धिना ।
परीक्ष्य च ततः कार्यो यथान्यायं परिग्रहः ॥ ४२

जाम्बवांस्त्वथ संप्रेक्ष्य शास्त्रबुद्ध्या विचक्षणः ।
वाक्यं विज्ञापयामास गुणवद्दोषवर्जितम् ॥ ४३

बद्धवैराच्च पापाच्च राक्षसेन्द्राद्विभीषणः ।
अदेशकाले संप्राप्तस्सर्वथा शङ्क्यतामयम् ॥ ४४

ततो मैन्दस्तु संप्रेक्ष्य नयापनयकोविदः ।
वाक्यं वचनसम्पन्नो बभाषे हेतुमत्तरम् ॥ ४५

वचनं नाम तस्यैष रावणस्य विभीषणः ।
पृच्छ्यतां मधुरेणायं शनैर्नरवरेश्वर ॥ ४६

भावमस्य तु विज्ञाय तत्त्वतस्त्वं करिष्यसि ।
यदि दुष्टो न दुष्टो वा बुद्धिपूर्वं नरर्षभ ॥ ४७

अथ संस्कारसम्पन्नो हनूमान् सचिवोत्तमः ।
उवाच वचनं श्लक्ष्णमर्थवन्मधुरं लघु ॥ ४८

न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् ।
अतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ॥ ४९

न वादान्नापि सङ्घर्षान्नाधिक्यान्न च कामतः ।
वक्ष्यामि वचनं राजन् यथार्थं राम गौरवात् ॥ ५०

अर्थानर्थनिमित्तं हि यदुक्तं सचिवैस्तव ।
तत्र दोषं प्रपश्यामि क्रिया न ह्युपपद्यते ॥ ५१

ऋते नियोगात्सामर्थ्यमवबोद्धुं न शक्यते ।
सहसा विनियोगो हि दोषवान् प्रतिभाति मे ॥ ५२

चारप्रणिहितं युक्तं यदुक्तं सचिवैस्तव ।
अर्थस्यासम्भवात्तत्र कारणं नोपयुज्यते ॥ ५३

अदेशकाले संप्राप्त इत्ययं यद्विभीषणः ।
विवक्षा तत्र मेऽस्तीयं तां निबोध यथामति ॥ ५४

स एष देशः कालश्च भवतीति यथा तथा ।
पुरुषात्पुरुषं प्राप्य तथा दोषगुणावपि ॥ ५५

दौरात्म्यं रावणे दृष्ट्वा विक्रमं च तथा त्वयि ।
युक्तमागमनं तस्य सदृशं तस्य बुद्धितः ॥ ५६

अज्ञातरूपैः पुरुषैस्स राजन् पृच्छ्यतामिति ।
यदुक्तमत्र मे प्रेक्षा काचिदस्ति समीक्षिता ॥ ५७

पृच्छ्यमानो विशङ्केत सहसा बुद्धिमान् वचः ।
तत्र मित्रं प्रदुष्येत मिथ्या पृष्टं सुखागतम् ॥ ५८

अशक्यस्सहसा राजन् भावो बोद्धुं परस्य वै ।
अन्तस्स्वभावैर्गीतैस्तैर्नैपुण्यं पश्यता भृशम् ॥ ५९

नत्वस्य ब्रुवतो जातु लक्ष्यते दुष्टभावता ।
प्रसन्नं वदनं चापि तस्मान्मे नास्ति संशयः ॥ ६०

अशङ्कितमतिस्स्वस्थो न शठः परिसर्पति ।
न चास्य दुष्टवाक्चापि तस्मान्नास्तीह संशयः ॥ ६१

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम् ।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् ॥ ६२

देशकालोपपन्नं च कार्यं कार्यविदां वर ।
स्वफलं कुरुते क्षिप्रं प्रयोगेणाभिसंहितम् ॥ ६३

उद्योगं तव संप्रेक्ष्य मिथ्यावृत्तं च रावणम् ।
वालिनश्च वधं श्रुत्वा सुग्रीवं चाभिषेचितम् ॥ ६४

राज्यं प्रार्थयमानश्च बुद्धिपूर्वमिहागतः ।
एतावत्तु पुरस्कृत्य युज्यते त्वस्य संग्रहः ॥ ६५

यथाशक्ति मयोक्तं तु राक्षसस्यार्जवं प्रति ।
त्वं प्रमाणं तु शेषस्य श्रुत्वा बुद्धिमतां वर ॥ ६६

इति श्रीमद्युद्धकाण्डे सप्तदशस्सर्गः ॥

---

## ॥ अष्टादशस्सर्गः ॥

अथ रामः प्रसन्नात्मा श्रुत्वा वायुसुतस्य ह ।
प्रत्यभाषत दुर्धर्षः श्रुतवानात्मनि स्थितम् ॥ १

" ममापि तु विवक्षाऽस्ति काचित्प्रति विभीषणम् ।
श्रोतुमिच्छामि तत्सर्वं भवद्भिश्श्रेयसि स्थितैः ॥ २

मित्रभावेन संप्राप्तं न त्यजेयं कथंचन ।
दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥ ३

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च ।
ततश्शुभतरं वाक्यमुवाच हरिपुङ्गवः ॥ ४

"सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ।
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ॥ ५

को नाम स भवेत्तस्य यमेष न परित्यजेत् ।"
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च ॥ ६

ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम् ।
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः ॥ ७

"अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च ।
न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः ॥ ८

अस्ति सूक्ष्मतरं किंचिद्यदत्र प्रतिभाति मे ।
प्रत्यक्षं लौकिकं वापि विद्यते सर्वराजसु ॥ ९

अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः ।
व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः ॥ १०

अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान् ।
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः ॥ ११

यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च ।
तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु ॥ १२

न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः ।
पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः ॥ १३

अन्यथाश्च प्रहृष्टास्ते न भविष्यन्ति सङ्गताः ।
प्रणादश्च महानेष ततोऽस्य भयमागतम् ॥ १४

इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः ।
न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ॥ १५

मद्विधा वा पितुः पुत्रास्सुहृदो वा भवद्विधाः । ”
एवमुक्तस्तु रामेण सुग्रीवस्सहलक्ष्मणः ॥ १६

उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ।
“ रावणेन प्रणिहितं तमवेहि विभीषणम् ॥ १७

तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ।
राक्षसो जिह्मया बुद्ध्या सन्दिष्टोऽयमिहागतः ॥ १८

प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ ।
लक्ष्मणे वा महाबाहो स वध्यस्सचिवैस्सह ॥ १९

रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः । ”
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ॥ २०

वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ।
सुग्रीवस्य तु तद्वाक्यं रामश्श्रुत्वा विमृश्य च ॥ २१

ततश्शुभतरं वाक्यमुवाच हरिपुङ्गवम् ।
सुदुष्टो वाप्यदुष्टो वा किमेष रजनीचरः ॥ २२

सूक्ष्ममप्यहितं कर्तुं ममाशक्तः कथंचन ।
पिशाचान् दानवान्यक्षान् पृथिव्यां चैव राक्षसान् ॥ २३

अङ्गुल्यग्रेण तान् हन्यामिच्छन् हरिगणेश्वर ।
श्रूयते हि कपोतेन शत्रुश्शरणमागतः ॥ २४

अर्चितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ।
स हि तं प्रतिजग्राह भार्याहर्तारमागतम् ॥ २५

कपोतो वानरश्रेष्ठ किंपुनर्मद्विधो जनः ।
ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ॥ २६

शृणु गाथां पुरा गीतां धर्मिष्ठां सत्यवादिना ।
बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ॥ २७

न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ।
आर्तो वा यदि वा दृप्तः परेषां शरणागतः ॥ २८

अरिः प्राणान् परित्यज्य रक्षितव्यः कृतात्मना ।
स चेद्भयाद्वा मोहाद्वा कामाद्वापि न रक्षति ॥ २९

स्वया शक्त्या यथा सत्त्वं तत्पापं लोकगर्हितम् ।
विनष्टः पश्यतस्तस्या रक्षिणश्शरणागतः ॥ ३०

आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ।
एवं दोषो महानत्र प्रपन्नानामरक्षणे ॥ ३१

अस्वर्ग्यं चायशस्यं च बलवीर्यविनाशनम् ।
करिष्यामि यथार्थं तु कण्डोर्वचनमुत्तमम् ॥ ३२

धर्मिष्ठं च यशस्यं च स्वर्ग्यं स्यात्तु फलोदये ।
सकृदेव प्रपन्नाय तवास्मीति च याचते ॥ ३३

अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ।
आनयैनं हरिश्रेष्ठ दत्तमस्याभयं मया ॥ ३४

विभीषणो वा सुग्रीव यदि वा रावणस्स्वयम् ॥"
रामस्य तु वचश्श्रुत्वा सुग्रीवः प्लवगेश्वरः ॥ ३५

प्रत्यभाषत काकुत्स्थ सौहार्देन प्रचोदितः ।
किमत्र चित्रं धर्मज्ञ लोकनाथ सुखावह ॥ ३६

यत्त्वमार्यं प्रभाषेथास्सत्त्ववान् सत्पथे स्थितः ।
मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् ॥ ३७

अनुमानाच्च भावाच्च सर्वतस्सुपरीक्षितः ।
तस्मात् क्षिप्रं सहास्माभिस्तुल्यो भवतु राघव ॥ ३८

विभीषणो महाप्राज्ञस्सखित्वं चाभ्युपैतु नः । ”
ततस्तु सुग्रीववचो निशम्य तद्धरीश्वरेणाभिहितं नरेश्वरः ।
विभीषणेनाशु जगाम सङ्गमं पतत्त्रिराजेन यथा पुरन्दरः ॥ ३९

इति श्रीमद्युद्धकाण्डे अष्टादशस्सर्गः ॥

---

## ॥ एकोनविंशस्सर्गः ॥

राघवेणाभये दत्ते सन्नतो रावणानुजः ।
विभीषणो महाप्राज्ञो भूमिं समवलोकयन् ॥ १

खात्पपातावनीं हृष्टो भक्तैरनुचरैस्सह ।
स तु रामस्य धर्मात्मा निपपात विभीषणः ॥ २

पादयोश्शरणान्वेषी चतुर्भिस्सह राक्षसैः ।
अब्रवीच्च तदा रामं वाक्यं तत्र विभीषणः ॥ ३

धर्मयुक्तं च युक्तं च सांप्रतं संप्रहर्षणम् ।
“ अनुजो रावणस्याहं तेन चाप्यवमानितः ॥ ४

भवन्तं सर्वभूतानां शरण्यं शरणागतः ।
परित्यक्ता मया लङ्का मित्राणि च धनानि च ॥ ५

भवद्गतं मे राज्यं च जीवितं च सुखानि च।"
तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ॥ ६
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ।
"आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ॥" ७
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ ८
"अवध्यस्सर्वभूतानां गन्धर्वोरगरक्षसाम्।
राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥ ९
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ।
कुम्भकर्णो महातेजाश्शक्रप्रतिबलो युधि ॥ १०
राम सेनापतिस्तस्य प्रहस्तो यदि वा श्रुतः ।
कैलासे येन संग्रामे माणिभद्रः पराजितः ॥ ११
बद्धगोधाङ्गुलित्राणः अवध्यकवचो युधि ।
धनुरादाय तिष्ठन् स अदृश्यो भवतीन्द्रजित् ॥ १२
संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्धानगतश्शत्रूनिन्द्रजिद्धन्ति राघव ॥ १३
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ।
अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥ १४
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ।
मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥ १५
स तैस्तु सहितो राजा लोकपालानयोधयत् ।
सह देवैस्तु ते भग्ना रावणेन महात्मना ॥" १६

विभीषणवचः श्रुत्वा रामो दृढपराक्रमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥ १७

" यानि कर्मापदानानि रावणस्य विभीषण ।
आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ॥ १८

अहं हत्वा दशग्रीवं सप्रहस्तं सबान्धवम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ १९

रसातलं वा प्रविशेत् पातालं वापि रावणः ।
पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ॥ २०

अहत्वा रावणं संख्ये सपुत्रजनबान्धवम् ।
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिश्शपे ॥ २१

श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसा वन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ॥ २२

" राक्षसानां वधे साह्यं लङ्कायाश्च प्रधर्षणे ।
करिष्यामि यथाप्राणं प्रवेक्ष्यामि च वाहिनीम् ॥" २३

इति ब्रुवाणं रामस्तु परिष्वज्य विभीषणम् ।
अब्रवील्लक्ष्मणं प्रीतस्समुद्राज्जलमानय ॥ २४

तेन चेमं महाप्राज्ञमभिषिञ्च विभीषणम् ।
राजानं रक्षसां क्षिप्रं प्रसन्ने मयि मानद ॥ २५

एवमुक्तस्तु सौमित्रिरभ्यषिञ्चद्विभीषणम् ।
मध्ये वानरमुख्यानां राजानं रामशासनात् ॥ २६

तं प्रसादं तु रामस्य दृष्ट्वा सद्यः प्लवङ्गमाः ।
प्रचुक्रुशुर्महात्मानस्साधुसाध्विति चाब्रुवन् ॥ २७

अथाब्रवीद्धनूमांश्च सुग्रीवश्च विभीषणम् ।
"कथं सागरमक्षोभ्यं तराम वरुणालयम् ॥ २८

सैन्यैः परिवृतास्सर्वे वानराणां महौजसाम् ।
उपायं नाधिगच्छामो यथा नदनदीपतिम् ॥ २९

तराम तरसा सर्वे ससैन्या वरुणालयम् ।"
एवमुक्तस्तु धर्मज्ञः प्रत्युवाच विभीषणः ॥ ३०

"समुद्रं राघवो राजा शरणं गन्तुमर्हति ।
खानितस्सगरेणायमप्रमेयो महोदधिः ॥ ३१

कर्तुमर्हति रामस्य ज्ञातेः कार्यं महामतिः ।"
एवं विभीषणेनोक्तो राक्षसेन विपश्चिता ॥ ३२

आजगामाथ सुग्रीवो यत्र रामस्सलक्ष्मणः ।
ततश्चाख्यातुमारेभे विभीषणवचश्शुभम् ॥ ३३

सुग्रीवो विपुलग्रीवस्सागरस्योपवेशनम् ।
प्रकृत्या धर्मशीलस्य राघवस्याप्यरोचत ॥ ३४

स लक्ष्मणं महातेजास्सुग्रीवं च हरीश्वरम् ।
सत्क्रियार्थं क्रियादक्षः स्मितपूर्वमुवाच ह ॥ ३५

"विभीषणस्य मन्त्रोऽयं मम लक्ष्मण रोचते ।
ब्रूहि त्वं सहसुग्रीवस्तवापि यदि रोचते ॥ ३६

सुग्रीवः पण्डितो नित्यं भवान्मन्त्रविचक्षणः ।
उभाभ्यां संप्रधार्यार्थं रोचते यत्तदुच्यताम् ॥" ३७

एवमुक्तौ तु तौ वीरौ उभौ सुग्रीवलक्ष्मणौ ।
समुदाचारसंयुक्तमिदं वचनमूचतुः ॥ ३८

"किमर्थं नौ नरव्याघ्र न रोचिष्यति राघव ।
विभीषणेन यच्चोक्तमस्मिन्काले सुखावहम् ॥ ३९
अबद्ध्वा सागरे सेतुं घोरेऽस्मिन् वरुणालये ।
लङ्का नासादितुं शक्या सेन्द्रैरपि सुरासुरैः ॥ ४०
विभीषणस्य शूरस्य यथार्थं क्रियतां वचः ।
अलं कालात्ययं कृत्वा समुद्रोऽयं नियुज्यताम् ॥ ४१
यथा सैन्येन गच्छाम पुरीं रावणपालिताम् ।"
एवमुक्तः कुशास्तीर्णे तीरे नदनदीपतेः ॥ ४२
संविवेश तदा रामो वेद्यामिव हुताशनः ।

इति श्रीमद्युद्धकाण्डे एकोनविंशस्सर्गः ॥

---

## ॥ त्रिंशस्सर्गः ॥

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ॥ १
चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतो व्यग्रं प्रतिगम्य स राक्षसः ॥ २
प्रविश्य लङ्कां वेगेन रावणं वाक्यमब्रवीत् ।
"एष वानरऋक्षौघो लङ्कां समभिवर्तते ॥ ३
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ।
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ॥ ४
उत्तमायुधसम्पन्नौ सीतायाः पदमागतौ ।
एतौ सागरमासाद्य सन्निविष्टौ महाद्युती ॥ ५

बलमाकाशमावृत्य सर्वतो दशयोजनम् ।
तत्त्वभूतं महाराज क्षिप्रं वेदितुमर्हसि ॥ ६
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् ।
उपप्रदानं सान्त्वं वा भेदो वाऽत्र प्रयुज्यताम् ॥ ७
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसाधिपः ।
उवाच सहसाव्यग्रस्संप्रधार्यार्थमात्मनः ॥ ८
शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् । "
सुग्रीवं ब्रूहि गत्वा त्वं राजानं वचनान्मम ॥ ९
यथा सन्देशमक्लीबं श्लक्ष्णया परया गिरा ।
त्वं वै महाराजकुले प्रसूतो महाबलश्चर्क्षरजस्सुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थस्तथाहि मे भ्रातृसमो हरीश ॥ १०
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् ॥ ११
न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन ।
देवैरपि सगन्धर्वैः किंपुनर्नरवानरैः ॥ " १२
स तथा राक्षसेन्द्रेण सन्दिष्टो रजनीचरः ॥
शुको विहङ्गमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ॥ १३
स गत्वा दूरमध्वानमुपर्युपरि सागरम् ।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ १४
सर्वमुक्तं यथादिष्टं रावणेन दुरात्मना ।
तं प्रापयन्तं वचनं तूर्णमाप्लुत्य वानराः ॥ १५

प्रापद्यन्तं दिवं क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ।
स तैः प्लवङ्गैः प्रसभं निगृहीतो निशाचरः ॥ १६
गगनाद्भूतले चाशु परिगृह्य निपातितः ।
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ॥ १७
न दूतान् घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ।
यस्तु हित्वा मतं भर्तुस्स्वमतं संप्रभाषते ॥ १८
अनुक्तवादी दूतस्सन् स दूतो वाधमर्हति ।
शुकस्य वचनं श्रुत्वा रामस्सपरिदेवितम् ॥ १९
उवाच मावधिष्टेति घ्नतश्शाखामृगर्षभान् ।
स च पत्रलघुर्भूत्वा हरिभिर्दर्शितेऽभये ॥ २०
अन्तरिक्षस्थितो भूत्वा पुनर्वचनमब्रवीत् ।
"सुग्रीव सत्त्वसम्पन्न महाबलपराक्रम ॥ २१
किं मया खलु वक्तव्यो रावणो लोकरावणः ॥ २२
स एवमुक्तः प्लवगाधिपस्तदा प्लवङ्गमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य चारं शुकं तूर्णमदीनसत्त्वः ॥ २३
"न मेऽसि मित्रं न तथानुकम्प्यो न चोपकर्तासि न मे प्रियोसि ।
अरिश्च रामस्य सहानुबन्धस्समेऽसि वालीव वधार्ह वध्यः ॥ २४
निहन्म्यहं त्वां ससुतं सबन्धुं सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन क्षिप्रं करिष्यामि समेत्य भस्म ॥ २५
न मोक्ष्यसे रावण राघवस्य सुरैस्सहेन्द्रैरपि गूढगुप्तः ।
अन्तर्हितस्सूर्यपथं गतो वा तथैव पातालमनुप्रविष्टः ॥ २६
तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् ।
त्रातारमनुपश्यामि न गन्धर्वं न चासुरम् ॥ २७

अवधीयें जरावृद्धमक्षमं किं जटायुषम् ।
किंनु ते रामसान्निध्ये सकाशे लक्ष्मणस्य वा ॥ २८
हृता सीता विशालाक्षी या त्वं गृह्य न बुध्यसे ।
महाबलं महात्मानं दुर्धर्षममरैरपि ॥ २९
न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति ।”
ततोऽब्रवीद्वालिसुतस्त्वङ्गदो हरिसत्तमः ॥ ३०
“नायं दूतो महाराज चारिकः प्रतिभाति मे ।
तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता ॥ ३१
गृह्यतां मागमल्लङ्कामेतद्धि मम रोचते ।
ततो राज्ञा समादिष्टास्समुत्प्लुत्य वलीमुखाः ॥ ३२
जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ।
शुकस्तु वानरैश्चण्डैस्तत्र तैस्संप्रपीडितः ॥ ३३
व्याक्रोशत महात्मानं रामं दशरथात्मजम् ।
लुप्येते मे बलात्पक्षौ भिद्येते च तथाऽक्षिणी ॥ ३४
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ।
एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ॥ ३५
सर्वं त्वमुपपद्येथा जह्यां चेद्यदि जीवितम् ।”
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ॥ ३६
वानरानब्रवीद्रामो मुच्यतां दूत आगतः ।

इति श्रीमद्युद्धकाण्डे विंशस्सर्गः ॥

---

## ॥ एकविंशस्सर्गः ॥

ततस्सागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ॥ १

बाहुं भुजगभोगाभमुपधायारिसूदनः ।
जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ॥ २

वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः ।
भुजैः परमनारीणामभिमृष्टमनेकधा ॥ ३

चन्दनागरुभिश्चैव पुरस्तादधिवासितम् ।
बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ॥ ४

शयने चोत्तमाङ्गेन सीतायाश्शोभितं पुरा ।
तक्षकस्येव सम्भोगं गङ्गाजलनिषेवितम् ॥ ५

संयुगे युगसङ्काशं शत्रूणां शोकवर्धनम् ।
सुहृदानन्दनं दीर्घं नागरान्तव्यपाश्रयम् ॥ ६

अस्यता च पुनस्सव्यं ज्याघातविगतत्वचम् ।
दक्षिणो दक्षिणं बाहुं महापरिघसन्निभम् ॥ ७

गोसहस्रप्रदातारमुपधाय महद्भुजम् ।
अद्य मे मरणं वाथ तरणं सागरस्य वा ॥ ८

इति रामो मतिं कृत्वा महाबाहुर्महोदधिम् ।
अधिशिश्ये स विधिवत्प्रयतो नियतो मुनिः ॥ ९

तस्य रामस्य सुप्तस्य कुशास्तीर्णे महीतले ।
नियमादप्रमत्तस्य निशास्तिस्रोऽतचक्रमुः ॥ १०

स त्रिरात्रोषितस्तत्र नयज्ञो धर्मवत्सलः ।
उपासत तदा रामस्सागरं सरितां पतिम् ॥ ११

न च दर्शयते मन्दस्तदा रामस्य सागरः ।
प्रयतेनापि रामेण यथार्हमभिपूजितः ॥ १२

समुद्रस्य ततः क्रुद्धो रामो रक्तान्तलोचनः ।
समीपस्थमुवाचेदं लक्ष्मणं शुभलक्षणम् ॥ १३

"अवलेपस्समुद्रस्य न दर्शयति यत्स्वयम् ।
प्रशमश्च क्षमा चैव आर्जवं प्रियवादिता ॥ १४

असामर्थ्यं फलन्त्येते निर्गुणेषु सतां गुणाः ।
आत्मप्रशंसिनं दुष्टं धृष्टं विपरिधावकम् ॥ १५

सर्वत्रोत्सृष्टदण्डं च लोकस्सत्कुरुते नरम् ।
न साम्ना शक्यते कीर्तिर्न साम्ना शक्यते यशः ॥ १६

प्राप्तं लक्ष्मण लोकेऽस्मिन् जयो वा रणमूर्धनि ।
अद्य मद्बाणनिर्भिन्नैर्मकरैर्मकरालयम् ॥ १७

निरुद्धतोयं सौमित्रे प्लवद्भिः पश्य सर्वतः ।
महाभोगानि मत्स्यानां करिणां च करानिह ॥ १८

भोगिनां पश्य नागानां मया छिन्नानि लक्ष्मण ।
सशङ्खशुक्तिकाजालं समीनमकरं शरैः ॥ १९

अद्य युद्धेन महता समुद्रं परिशोषये ।
क्षमया हि समायुक्तं मामयं मकरालयः ॥ २०

असमर्थं विजानाति धिक् क्षमामीदृशे जने ।
न दर्शयति साम्ना मे सागरो रूपमात्मनः ॥ २१

चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ २२

अद्याक्षोभ्यमपि क्रुद्धः क्षोभयिष्यामि सागरम् ।
वेलासु कृतमर्यादं सहसोर्मिसमाकुलम् ॥ २३

निर्मर्यादं करिष्यामि सायकैर्वरुणालयम् ।
महार्णवं क्षोभयिष्ये महादानवसङ्कुलम् ॥ " २४

एवमुक्त्वा धनुष्पाणिः क्रोधविष्फारितेक्षणः ।
बभूव रामो दुर्धर्षो युगान्ताग्निरिव ज्वलन् ॥ २५

सम्पीड्य च धनुर्घोरं कम्पयित्वा शरैर्जगत् ।
मुमोच विशिखानुग्रान् वज्रानिव शतक्रतुः ॥ २६

ते ज्वलन्तो महावेगास्तेजसा सायकोत्तमाः ।
प्रविशन्ति समुद्रस्य सलिलं त्रस्तपन्नगम् ॥ २७

तोयवेगस्समुद्रस्य सनक्रमकरो महान् ।
संबभूव महाघोरस्समारुतरवस्तदा ॥ २८

महोर्मिमालाविततश्शङ्खशुक्तिसमावृतः ।
स धूमपरिवृत्तोर्मिस्सहसाऽऽसीन्महोदधिः ॥ २९

व्यथिताः पन्नगाश्चासन्दीप्तास्या दीप्तलोचनाः ।
दानवाश्च महावीर्याः पातालतलवासिनः ॥ ३०

ऊर्मयस्सिन्धुराजस्य सनक्रमकरास्तदा ।
विन्ध्यमन्दरसङ्काशास्समुत्पेतुस्सहस्रशः ॥ ३१

आघूर्णिततरङ्गौघस्सम्भ्रान्तोरगराक्षसः ।
उद्वर्तितमहाग्राहस्संवृत्तसलिलाशयः ॥ ३२

ततस्तु तं राघवमुग्रवेगं प्रकर्षमाणं धनुरप्रमेयम् ।
सौमित्रिरुत्पत्य समुच्छ्वसन्तं मामेति चोक्त्वा धनुराललम्बे ॥ ३३

("एतद्विनाऽपि ह्युदधेस्तवाद्य सम्पत्स्यते वीरतमस्य कार्यम् ।
भवद्विधाः कोपवशं न यान्ति दीर्घं भवान् पश्यतु साधुवृत्तम् ॥" ३४
अन्तर्हितैश्चैव तथाऽन्तरिक्षे ब्रह्मर्षिभिश्चैव सुरर्षिभिश्च ।
शब्दः कृतः कष्टमिति ब्रुवद्भिः 'मामे' तिचोक्तं महता स्वरेण ॥)

इति श्रीमद्युद्धकाण्डे एकविंशस्सर्गः ॥

---

## ॥ द्वाविंशस्सर्गः ॥

अथोवाच रघुश्रेष्ठस्सागरं दारुणं वचः ।
"अद्य त्वां शोषयिष्यामि सपातालं महार्णव ॥ १

शरनिर्दग्धतोयस्य परिशुष्कस्य सागर ।
मया शोषितसत्त्वस्य पांसुरुत्पद्यते महान् ॥ २

मत्कार्मुकविसृष्टेन शरवर्षेण सागर ।
पारं तेऽद्य गमिष्यन्ति पद्भिरेव प्लवङ्गमाः ॥ ३

विचिन्वन्नाभिजानासि पौरुषं नापि विक्रमम् ।
दानवालयसन्तापं मत्तो नाधिगमिष्यसि ॥" ४

ब्राह्मेणास्त्रेण संयोज्य ब्रह्मदण्डनिभं शरम् ।
संयोज्य धनुषि श्रेष्ठे विचकर्ष महाबलः ॥ ५

तस्मिन्विकृष्टे सहसा राघवेण शरासने ।
रोदसी सम्पफालेव पर्वताश्च चकम्पिरे ॥ ६

तमश्च लोकमावव्रे दिशश्च न चकाशिरे ।
परिचुक्षुभिरे चाशु सरांसि सरितस्तथा ॥ ७

तिर्यक्च सहनक्षत्रैस्सङ्गतौ चन्द्रभास्करौ ।
भास्करांशुभिरादीप्तं तमसा च समावृतम् ॥ ८

प्रचकाशे तदाकाशमुल्काशतविदीपितम् ।
अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ॥ ९

पुस्फुरुश्च घना दिव्याः दिवि मारुतपङ्क्तयः ।
बभञ्ज च तदा वृक्षान् जलदानुद्वहन्नपि ॥ १०

आरुजंश्चैव शैलाग्रान् शिखराणि प्रभञ्जनः ।
दिविस्पृशो महामेघास्सङ्गतास्समहास्वनाः ॥ ११

मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ।
यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेस्समम् ॥ १२

अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् ।
शिश्यिरे चापि भूतानि सन्त्रस्तान्युद्विजन्ति च ॥ १३

संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात् ।
सहभूतैस्सुतोयोर्मिस्सनागस्सहराक्षसः ॥ १४

सहसाऽभूत्ततो वेगाद्भीमवेगो महोदधिः ।
योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् ॥ १५

तं तदा समतिक्रान्तं नातिचक्राम राघवः ।
समुद्धतममित्रघ्नो रामो नदनदीपतिम् ॥ १६

ततो मध्यात्समुद्रस्य सागरस्स्वयमुत्थितः ।
उदयन् हि महाशैलान्मेरोरिव दिवाकरः ॥ १७

पन्नगैस्सहदीप्तास्यैस्समुद्रः प्रत्यदृश्यत ।
स्निग्धवैडूर्यसङ्काशो जाम्बूनदविभूषितः ॥ १८

रक्तमाल्याम्बरधरः पद्मपत्रनिभेक्षणः ।
सर्वपुष्पमयीं दिव्यां शिरसा धारयन् स्रजम् ॥ १९

जातरूपमयैश्चैव तपनीयविभूषितैः ।
आत्मजानां च रत्नानां भूषितो भूषणोत्तमैः ॥ २०

धातुभिर्मण्डितश्शैलो विविधैर्हिमवानिव ।
एकावलीमध्यगतं तरलं पाटलप्रभम् ॥ २१

विपुलेनोरसा बिभ्रत्कौस्तुभस्य सहोदरम् ।
आघूर्णिततरङ्गौघः कालिकानिलसङ्कुलः ॥ २२

उद्वर्तितमहाग्राहस्संभ्रान्तोरगराक्षसः ।
(देवतानां सुरूपाभिर्नानारूपाभिरीश्वरः ।
गङ्गासिन्धुप्रधानाभिरापगाभिस्समावृतः ॥)
सागरस्समुपक्रम्य पूर्वमामन्त्र्य वीर्यवान् ॥ २३

अब्रवीत् प्राञ्जलिर्वाक्यं राघवं शरपाणिनम् ।
"पृथिवी वायुराकाशमापो ज्योतिश्च राघव ॥ २४
स्वभावे सौम्य तिष्ठन्ति शाश्वतं मार्गमाश्रिताः ।
तत्स्वभावो ममाप्येष यदगाधोऽहमप्लवः ॥ २५

विकारस्तु भवेद्गाध एतत्ते प्रवदाम्यहम् ।
न कामान्न च लोभाद्वा न भयात् पार्थिवात्मज ॥ २६

ग्राहनक्राकुलजलं स्तम्भयेयं कथंचन ।
विधास्ये राम येनापि विषहिष्येऽप्यहं तथा ॥ २७

ग्राहा न प्रहरिष्यन्ति यावत्सेना तरिष्यति ।
हरीणां तरणे राम करिष्यामि यथास्थलम् ॥" २८

तमब्रवीत्तदा राम "उद्यतो हि नदीपते ।
अमोघोऽयं महाबाणः कस्मिन्देशे निपात्यताम् ॥" २९

रामस्य वचनं श्रुत्वा तं च दृष्ट्वा महाशरम् ।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ३०

"उत्तरेणावकाशोऽस्ति कश्चित्पुण्यतमो मम ।
द्रुमकुल्य इति ख्यातो लोके ख्यातो यथा भवान् ॥ ३१

उग्रदर्शनकर्माणो बहवस्तत्र दस्यवः ।
आभीरप्रमुखाः पापाः पिबन्ति सलिलं मम ॥ ३२

तैस्तु संस्पर्शनं पापैर्न सहे पापकर्मभिः ।
अमोघः क्रियतां राम तत्र तेषु शरोत्तमः ॥" ३३

तस्य तद्वचनं श्रुत्वा सागरस्य स राघवः ।
मुमोच तं शरं दीप्तं वीरस्सागरदर्शनात् ॥ ३४

तेन तन्मरुकान्तारं पृथिव्यां खलु विश्रुतम् ।
निपातितश्शरो यत्र दीप्ताशनिसमप्रभः ॥ ३५

ननाद च तदा तत्र वसुधा शल्यपीडिता ।
तस्माद्व्रणमुखात्तोयमुत्पपात रसातलात् ॥ ३६

स बभूव तदा कूपो व्रण इत्यभिविश्रुतः ।
सततं चोत्थितं तोयं समुद्रस्येव दृश्यते ॥ ३७

अवदारणशब्दश्च दारुणस्समपद्यत ।
तस्माद्बाणनिपातेन त्वपः कुक्षिष्वशोषयत् ॥ ३८

विख्यातं त्रिषु लोकेषु मरुकान्तारमेव तत् ।
शोषयित्वा ततः कुक्षिं रामो दशरथात्मजः ॥ ३९

वरं तस्मै ददौ विद्वान् मरवेऽमरविक्रमः ।
पशव्यश्चाल्परोगश्च फलमूलरसायुतः ॥ ४०

बहुस्नेहो बहुक्षीरस्सुगन्धिर्विविधौषधः ।
एवमेतैर्गुणैर्युक्तो बहुभिस्सततं मरुः ॥ ४१

रामस्य वरदानाच्च शिवः पन्था बभूव ह ।
तस्मिन् दग्धे तदा कुक्षौ समुद्रस्सरितां पतिः ॥ ४२

राघवं सर्वशास्त्रज्ञमिदं वचनमब्रवीत् ।
"अयं सौम्य नलो नाम तनुजो विश्वकर्मणः ॥ ४३

पित्रा दत्तवरः श्रीमान् प्रतिमो विश्वकर्मणा ।
एष सेतुं महोत्साहः करोतु मयि वानरः ॥ ४४

तमहं धारयिष्यामि तथा ह्येष यथा पिता । "
एवमुक्त्वोदधिर्नष्टस्समुत्थाय नलस्तदा ॥ ४५

अब्रवीद्वानरश्रेष्ठो वाक्यं रामं महाबलः ।
"अहं सेतुं करिष्यामि विस्तीर्णे वरुणालये ॥ ४६

पितुस्सामर्थ्यमास्थाय तत्वमाह महोदधिः ।
दण्ड एव वरो लोके पुरुषस्येति मे मतः ॥ ४७

धिक्क्षमामकृतज्ञेषु सान्त्वं दानमथापि वा ।
अयं हि सागरो भीमस्सेतुकर्मदिदृक्षया ॥ ४८

ददौ दण्डभयाद्गाध राघवाय महोदधिः ।
मम मातुर्वरो दत्तो मन्दरे विश्वकर्मणा ॥ ४९

औरसस्तस्य पुत्रोऽहं सदृशो विश्वकर्मणा ।
स्मारितोऽस्म्यहमेतेन तत्त्वमाह महोदधिः ॥ ५०

न चाप्यहमनुक्तो वै प्रब्रूयामात्मनो गुणान् ।
समर्थश्चाप्यहं सेतुं कर्तुं वै वरुणालये ॥ ५१

काममद्यैव बध्नन्तु सेतुं वानरपुङ्गवाः । ”
ततो विसृष्टा रामेण सर्वतो हरियूथपाः ॥ ५२

अभिपेतुर्महारण्यं हृष्टाश्शतसहस्रशः ।
ते नगान्नगसङ्काशाश्शाखामृगगणर्षभाः ॥ ५३

बभञ्जुर्वानरास्तत्र प्रचकर्षुश्च सागरम् ।
ते सालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः ॥ ५४

कुटजैरर्जुनैस्तालैस्तिलकैस्तिनिशैरपि ।
बिल्वैश्च सप्तपर्णैश्च कर्णिकारैस्सुपुष्पितैः ॥ ५५

चूतैश्चाशोकवृक्षैश्च सागरं समपूरयन् ।
समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः ॥ ५६

इन्द्रकेतूनिवोद्यम्य प्रजह्रुर्हरयस्तरून् ।
तालान् दाडिमगुल्मांश्च नारिकेलान्विभीतकान् ॥ ५७

बकुलान् खदिरान्निम्बान् समाजह्रुस्समन्ततः ।
हस्तिमात्रान्महाकायाः पाषाणांश्च महाबलाः ॥ ५८

पर्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ।
प्रक्षिप्यमाणैरचलैस्सहसा जलमुद्धतम् ॥ ५९

समुत्पतितमाकाशमपासर्पत्ततस्ततः ।
समुद्रं क्षोभयामासुर्वानराश्च समन्ततः ॥ ६०

सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम् ।
दण्डानन्ये प्रगृह्णन्ति विचिन्वन्ति तथा परे ॥ ६१

दशयोजनविस्तारं शतयोजनमायतम् ।
नलश्चक्रे महासेतुं मध्ये नदनदीपतेः ॥ ६२

स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः ।
वानराश्शतशस्तत्र रामस्याज्ञापुरस्सराः ॥ ६३

मेघाभैः पर्वताग्रैश्च तृणैः काष्ठैर्बबन्धिरे ।
पुष्पिताग्रैश्च तरुभिस्सेतुं बध्नन्ति वानराः ॥ ६४

पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च ।
दृश्यन्ते परिधावन्तो गृह्य वारणसन्निभाः ॥ ६५

शिलानां क्षिप्यमाणानां शैलानां च निपात्यताम् ।
बभूव तुमुलश्शब्दस्तदा तस्मिन्महोदधौ ॥ ६६

कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
प्रहृष्टैर्गजसङ्काशैस्त्वरमाणैः प्लवङ्गमैः ॥ ६७

द्वितीयेन तथा चाह्ना योजनानि तु विंशतिः ।
कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥ ६८

अह्ना तृतीयेन तथा योजनानि कृतानि च ।
त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥ ६९

चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च ।
योजनानि महावेगैः कृतानि त्वरितैस्तु तैः ॥ ७०

पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ।
योजनानि त्रयोविंशत्सुवेलमाधिकृत्य वै ॥ ७१

स वानरवरः श्रीमान् विश्वकर्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥ ७२

स नलेन कृतस्सेतुस्सागरे मकरालये ।
शुशुभे सुभगः श्रीमान् स्वातीपथ इवाम्बरे ॥ ७३

ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥ ७४

दशयोजनविस्तीर्णं शतयोजनमायतम् ।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥ ७५

आप्लुवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
तदचिन्त्यमसह्यं च अद्भुतं रोमहर्षणम् ॥ ७६

ददृशुस्सर्वभूतानि सागरे सेतुबन्धनम् ।
तानि कोटिसहस्राणि वानराणां महौजसाम् ॥ ७७

बध्नन्तस्सागरे सेतुं जग्मुः पारं महोदधेः ।
विशालस्सुकृतः श्रीमान् सुभूमिस्सुसमाहितः ॥ ७८

अशोभत महासेतुस्सीमन्त इव सागरे ।
ततः पारं समुद्रस्य गदापाणिर्विभीषणः ॥ ७९

परेषामभिघातार्थमतिष्ठत्सचिवैस्सह ।
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ॥ ८०

" हनूमन्तं त्वमारोह अङ्गदं चापि लक्ष्मणः ।
अयं हि विपुलो वीर सागरो मकरालयः ॥ ८१

वैहायसौ युवामेतौ वानरौ तारयिष्यतः ।
अग्रतस्तस्य सैन्यस्य श्रीमान्रामस्सलक्ष्मणः ॥ ८२

जगाम धन्वी धर्मात्मा सुग्रीवेण समन्वितः ।
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः ॥ ८३

सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ।
केचिद्वैहायसगताः सुपर्णा इव पुप्लुवुः ॥ ८४

घोषेण महता तस्य सिन्धोर्घोषं समुच्छ्रितम् ।
भीममन्तर्दधे भीमा तरन्ती हरिवाहिनी ॥ ८५

वानराणां हि सा तीर्णा वाहिनी नलसेतुना ।
तीरे निविविशे राज्ञा बहुमूलफलोदके ॥ ८६

तदद्भुतं राघवकर्म दुष्करं समीक्ष्य देवास्सहसिद्धचारणैः ।
उपेत्य रामं सहसा महर्षिभिस्समभ्यषिञ्चन् सुशुभैर्जलैः पृथक् ॥ ८७

जयस्व शत्रून्नरदेव मेदिनीं ससागरां पालय शश्वतीस्समाः । ”
इतीव रामं नरदेवसत्कृतं शुभैर्वचोभिर्विविधैरपूजयन् ॥ ८८

इति श्रीमद्युद्धकाण्डे द्वाविंशस्सर्गः ॥

---

## ॥ त्रयोविंशस्सर्गः ॥

निमित्तानि निमित्तज्ञो दृष्ट्वा लक्ष्मणपूर्वजः ।
सौमित्रिं सम्परिष्वज्य इदं वचनमब्रवीत् ॥ १

“ परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २

लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ।
निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३

वाताश्च कलुषा वान्ति कम्पते च वसुन्धरा ।
पर्वताग्राणि वेपन्ते पतन्ति च महीरुहाः ॥ ४

मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५

रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा ।
ज्वलतः प्रपतत्येतदादित्यादग्निमण्डलम् ॥ ६
दीना दीनस्वराः क्रूरास्सर्वतो मृगपक्षिणः ।
प्रत्यादित्यं विनर्दन्ति जनयन्तो महद्भयम् ॥ ७
रजन्यामप्रकाशस्तु सन्तापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो लोकक्षय इवोदितः ॥ ८
ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषस्सुलोहितः ।
आदित्ये विमले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ ९
रजसा महता चापि नक्षत्राणि हतानि च ।
युगान्तमिव लोकानां पश्य शंसन्ति लक्ष्मण ॥ १०
काकाश्श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवान्नादान्नदन्ति सुमहाभयान् ॥ ११
शैलैश्शूलैश्च खड्गैश्च विसृष्टैः कपिराक्षसैः ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ॥ १२
क्षिप्रमद्यैव दुर्धर्षां पुरीं रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥" १३
इत्येवमुक्त्वा धर्मात्मा धन्वी संग्रामहर्षणः ।
प्रतस्थे पुरतो रामो लङ्कामभिमुखो विभुः ॥ १४
सविभीषणसुग्रीवास्ततस्ते वानरर्षभाः ।
प्रतस्थिरे विनर्दन्तो निश्चिता द्विषतां वधे ॥ १५
राघवस्य प्रियार्थं तु धृतानां वीर्यशालिनाम् ।
हरीणां कर्मचेष्टाभिस्तुतोष रघुपुङ्गवः ॥ १६

इति श्रीमद्युद्धकाण्डे त्रयोविंशस्सर्गः ॥

---

## ॥ चतुर्विंशस्सर्गः ॥

सा वीरसमिती राज्ञा विरराज व्यवस्थिता ।
शशिना शुभनक्षत्रा पौर्णमासीव शारदी ॥ १

प्रचचाल च वेगेन त्रस्ता चैव वसुन्धरा ।
पीड्यमाना बलौघेन तेन सागरवर्चसा ॥ २

ततश्शुश्रुवुराकृष्टं लङ्कायां काननौकसः ।
भेरीमृदङ्गसंघुष्टं तुमुलं रोमहर्षणम् ॥ ३

बभूवुस्तेन घोषेण संहृष्टा हरियूथपाः ।
अमृष्यमाणास्तं घोषं विनेदुर्घोषवत्तरम् ॥ ४

राक्षसास्तु प्लवङ्गानां शुश्रुवुश्चापि गर्जितम् ।
नर्दतामिव दृप्तानां मेघानामम्बरे स्वनम् ॥ ५

दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम मनसा सीतां दूयमानेन चेतसा ॥ ६

" अत्र सा मृगशावाक्षी रावणेनोपरुध्यते ।
अभिभूता ग्रहेणेव लोहिताङ्गेन रोहिणी ॥ " ७

दीर्घमुष्णं च निश्वस्य समुद्वीक्ष्य च लक्ष्मणम् ।
उवाच वचनं वीरस्तत्कालहितमात्मनः ॥ ८

" आलिखन्तीमिवाकाशमुत्थितां पश्य लक्ष्मण ।
मनसेव कृतां लङ्कां नगाग्रे विश्वकर्मणा ॥ ९

विमानैर्बहुभिर्लङ्का सङ्कीर्णा भुवि राजते ।
विष्णोः पदमिवाकाशं छादितं पाण्डुरैर्घनैः ॥ १०

पुष्पितैश्शोभिता लङ्का वनैश्चैत्ररथोपमैः ।
नानापतगसंघुष्टैः फलपुष्पोपगैश्शुभैः ॥ ११

पश्य मत्तविहङ्गानि प्रलीनभ्रमराणि च ।
कोकिलाकुलषण्डानि दोधवीति शिवोऽनिलः ॥" १२

इति दाशरथी रामो लक्ष्मणं समभाषत ।
बलं च तद्वै विभजन् शास्त्रदृष्टेन कर्मणा ॥ १३

शशास कपिसेनायां बलमादाय वीर्यवान् ।
"अङ्गदस्सह नीलेन तिष्ठेदुरसि दुर्जयः ॥ १४

तिष्ठेद्वानरवाहिन्या वानरौघसमावृतः ।
आश्रित्य दक्षिणं पार्श्वमृषभो वानरर्षभः ॥ १५

गन्धहस्तीव दुर्धर्षस्तरस्वी गन्धमादनः ।
तिष्ठेद्वानरवाहिन्यास्सव्यं पार्श्वं समाश्रितः ॥ १६

मूर्ध्नि स्थास्याम्यहं युक्तो लक्ष्मणेन समन्वितः ।
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ १७

ऋक्षमुख्या महात्मानः कुक्षिं रक्षन्तु ते त्रयः ।
जघनं कपिसेनायाः कपिराजोऽभिरक्षतु ॥" १८

पश्चार्धमिव लोकस्य प्रचेतास्तेजसावृतः ।
सुविभक्तमहाव्यूहा महावानररक्षिता ॥ १९

अनीकिनी सा विबभौ यथा द्यौस्साभ्रसंप्लवा ।
प्रगृह्य गिरिशृङ्गाणि महतश्च महीरुहान् ॥ २०

आसेदुर्वानरा लङ्कां विमर्दयिषवो रणे ।
शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा ॥" २१

इति स्म दधिरे सर्वे मनांसि हरिसत्तमाः ।
ततो रामो महातेजाः सुग्रीवमिदमब्रवीत् ॥ २२

"सुविभक्तानि सैन्यानि शुक एष विमुच्यताम् ।"
रामस्य वचनं श्रुत्वा वानरेन्द्रो महाबलः ॥ २३

मोचयामास तं दूतं शुकं रामस्य शासनात् ।
मोचितो रामवाक्येन वानरैश्चाभिपीडितः ॥ २४

शुकः परमसन्त्रस्तो रक्षोधिपमुपागमत् ।
रावणः प्रहसन्नेव शुकं वाक्यमभाषत ॥ २५

"किमिमौ ते सितौ पक्षौ लूनपक्षश्च दृश्यसे ।
कच्चिन्नानेकचित्तानां तेषां त्वं वशमागतः ? ॥" २६

ततस्स भयसंविग्नस्तथा राज्ञाऽभिचोदितः ।
वचनं प्रत्युवाचेदं राक्षसाधिपमुत्तमम् ॥ २७

"सागरस्योत्तरे तीरेऽब्रुवं ते वचनं तथा ।
यथा सन्देशमक्लिष्टं सान्त्वयन् श्लक्ष्णया गिरा ॥ २८

क्रुद्धैस्तैरहमुत्प्लुत्य दृष्टमात्रैः प्लवङ्गमैः ।
गृहीतोऽस्म्यपि चारब्धा हन्तुं लोप्तुं च मुष्टिभिः ॥ २९

नैव सम्भाषितुं शक्यास्संप्रश्नोऽत्र न लभ्यते ।
प्रकृत्या कोपनास्तीक्ष्णा वानरा राक्षसाधिप ॥ ३०

स च हन्ता विराधस्य कबन्धस्य खरस्य च ।
सुग्रीवसहितो रामस्सीतायाः पदमागतः ॥ ३१

स कृत्वा सागरे सेतुं तीर्त्वा च लवणोदधिम् ।
एष रक्षांसि निर्धूय धन्वी तिष्ठति राघवः ॥ ३२

ऋक्षवानरमुख्यानामनीकानि सहस्रशः ।
गिरिमेघनिकाशानां छादयन्ति वसुन्धराम् ॥ ३३

राक्षसानां बलौघस्य वानरेन्द्रबलस्य च ।
नैतयोर्विद्यते सन्धिर्देवदानवयोरिव ॥ ३४

पुराप्राकारमायान्ति क्षिप्रमेकतरं कुरु ।
सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥" ३५

शुकस्य वचनं श्रुत्वा रावणो वाक्यमब्रवीत् ।
रोषसंरक्तनयनो निर्दहन्निव चक्षुषा ॥ ३६

"यदि मां प्रतियुध्येरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रयच्छामि सर्वलोकभयादपि ॥ ३७

कदा नामाभिधावन्ति राघवं मामकाश्शराः ।
वसन्ते पुष्पितं मत्ता भ्रमरा इव पादपम् ॥ ३८

कदा तूणीशयैर्दीप्तैर्गणशः कार्मुकच्युतैः ।
शरैरादीपयाम्येनमुल्काभिरिव कुञ्जरम् ॥ ३९

तच्चास्य बलमादास्ये बलेन महता वृतः ।
ज्योतिषामिव सर्वेषां प्रभामुद्यन् दिवाकरः ॥ ४०

सागरस्येव मे वेगो मारुतस्येव मे गतिः ।
न हि दाशरथिर्वेद तेन मां योद्धुमिच्छति ॥ ४१

न मे तूणीशयान्बाणान् सविषानिव पन्नगान् ।
रामः पश्यति संग्रामे तेन मां योद्धुमिच्छति ॥ ४२

न जानाति पुरा वीर्यं मम युद्धे स राघवः ।
मम चापमयीं वीणां शरकोणैः प्रवादिताम् ॥ ४३

ज्याशब्दतुमुलां घोरामार्तभीतमहास्वनाम् ।
नाराचतलसन्नादां तां ममाहितवाहिनीम् ॥ ४४

अवगाह्य महारङ्गं वादयिष्याम्यहं रणे ।
न वासवेनापि सहस्रचक्षुषा यथास्मि शक्यो वरुणेन वा स्वयम् ।
यमेन वा धर्षयितुं शराग्निना महाहवे वैश्रवणेन वा पुनः ॥ ४५

इति श्रीमद्युद्धकाण्डे चतुर्विंशस्सर्गः ॥

---

## ॥ पञ्चविंशस्सर्गः ॥

सबले सागरं तीर्थे रामे दशरथात्मजे ।
आमात्यौ रावणश्श्रीमानब्रवीच्छुकसारणौ ॥ १

" समग्रं सागरं तीर्णं दुस्तरं वानरं बलम् ।
अभूतपूर्वं रामेण सागरे सेतुबन्धनम् ॥ २

सागरे सेतुबन्धं तु न श्रद्दध्यां कथंचन ।
अवश्यं चापि संख्येयं तन्मया वानरं बलम् ॥ ३

भवन्तौ वानरं सैन्यं प्रविश्यानुपलक्षितौ ।
परिमाणं च वीर्यं च ये च मुख्याः प्लवङ्गमाः ॥ ४

मन्त्रिणो ये च रामस्य सुग्रीवस्य च सम्मताः ।
ये पूर्वमभिवर्तन्ते ये च शूराः प्लवङ्गमाः ॥ ५

स च सेतुर्यथा बद्धस्सागरे सलिलार्णवे ।
निवेशं यद्यथा तेषां वानराणां महात्मनाम् ॥ ६

रामस्य व्यवसायं च वीर्यं प्रहरणानि च ।
लक्ष्मणस्य च वीर्यं च तत्त्वतो ज्ञातुमर्हथः ॥ ७

कश्च सेनापतिस्तेषां वानराणां महौजसाम् ।
एतत् ज्ञात्वा यथा तत्त्वं शीघ्रमागन्तुमर्हथः ॥" ८

इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ।
हरिरूपधरौ वीरौ प्रविष्टौ वानरं बलम् ॥ ९

ततस्तद्वानरं सैन्यमचिन्त्यं रोमहर्षणम् ।
संख्यातुं नाध्यगच्छेतां तदा तौ शुकसारणौ ॥ १०

संस्थितं पर्वताग्रेषु निर्दरेषु गुहासु च ।
समुद्रस्य च तीरेषु वनेषूपवनेषु च ॥ ११

तरमाणं च तीर्णं च तर्तुकामं च सर्वशः ।
निविष्टं निविशच्चैव भीमनादं महाबलम् ॥ १२

तद्बलार्णवमक्षोभ्यं ददृशाते निशाचरौ ।
तौ ददर्श महातेजाः प्रच्छन्नौ च विभीषणः ॥ १३

आचचक्षेऽथ रामाय गृहीत्वा शुकसारणौ ।
"तस्येमौ राक्षसेन्द्रस्य मन्त्रिणौ शुकसारणौ ॥ १४

लङ्कायास्समनुप्राप्तौ चारौ परपुरञ्जय ।"
तौ दृष्ट्वा व्यथितौ रामं निराशौ जीविते तदा ॥ १५

कृताञ्जलिपुटौ भीतौ वचनं चेदमूचतुः ।
आवामिहागतौ सौम्य रावणप्रहिताबुभौ ॥ १६

परिज्ञातुं बलं कृत्स्नं तवेद रघुनन्दन ।"
तयोस्तद्वचनं श्रुत्वा रामो दशरथात्मजः ॥ १७

अब्रवीत्प्रहसन्वाक्यं सर्वभूतहिते रतः ।
"यदि दृष्टं बलं कृत्स्नं वयं वा सुपरीक्षिताः ॥ १८

यथोक्तं वा कृतं कार्यं छन्दतः प्रतिगम्यताम् ।
अथ किंचिददृष्टं वा भूयस्तद्द्रष्टुमर्हथः ॥ १९

विभीषणो वा कार्त्स्न्येन भूयस्सन्दर्शयिष्यति ।
न चेदं ग्रहणं प्राप्य भेत्तव्यं जीवितं प्रति ॥" २०

"न्यस्तशस्त्रौ गृहीतौ वा न दूतौ वधमर्हतः ।
पृच्छमानौ विमुञ्चैतौ चारौ रात्रिचरावुभौ ॥ २१

शत्रुपक्षस्य सततं विभीषणविकर्षणौ ।"
"प्रविश्य नगरीं लङ्कां भवद्भ्यां धनदानुजः ॥ २२

वक्तव्यो रक्षसां राजा यथोक्तं वचनं मम ।
यद्बलं च समाश्रित्य सीतां मे हृतवानसि ॥ २३

तद्दर्शय यथाकामं ससैन्यस्सहबान्धवः ।
श्वः काल्ये नगरीं लङ्कां सप्राकारां सतोरणाम् ॥ २४

राक्षसं च बलं पश्य शरैर्विध्वंसितं मया ।
क्रोधं भीममहं मोक्ष्ये ससैन्ये त्वयि रावण ॥ २५

श्वः काल्ये वज्रवान्वज्रं दानवेष्विव वासवः ।"
इति प्रतिसमादिष्टौ राक्षसौ शुकसारणौ ॥ २६

जयेति प्रतिनन्द्यैतौ राघवं धर्मवत्सलम् ।
आगम्य नगरीं लङ्कामब्रूतां राक्षसाधिपम् ॥ २७

"विभीषणगृहीतौ तु वधार्हौ राक्षसेश्वर ।
दृष्ट्वा धर्मात्मना मुक्तौ रामेणामिततेजसा ॥ २८

एकस्थानगता यत्र चत्वारः पुरुषर्षभाः ।
लोकपालोपमाश्शूराः कृतास्त्रा दृढविक्रमाः ॥ २९

रामो दाशरथिः श्रीमान् लक्ष्मणश्च विभीषणः ।
सुग्रीवश्च महातेजा महेन्द्रसमविक्रमः ॥ ३०

एते शक्ताः पुरीं लङ्कां सप्राकारां सतोरणाम् ।
उत्पाट्य संक्रामयितुं सर्वे तिष्ठन्तु वानराः ॥ ३१
यादृशं तस्य रामस्य रूपं प्रहरणानि च ।
वधिष्यति पुरीं लङ्कामेकस्तिष्ठन्तु ते त्रयः ॥ ३२
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ।
बभूव दुर्धर्षतरा सेन्द्रैरपि सुरासुरैः ॥ ३३
(व्यक्तस्सेतुस्तथा बद्धः दशयोजनविस्तृतः ।
शतयोजनमायामस्तीर्णा सेना च सागरम् ॥
निविष्टो दक्षिणे तीरे रामस्स च नदीपतेः ।
तीर्णस्य तरमाणस्य बलस्यान्तो न विद्यते ॥)
प्रहृष्टरूपा ध्वजिनी वनौकसां महात्मनां संप्रति योद्धुमिच्छताम् ।
अलं विरोधेन शमो विधीयतां प्रदीयतां दाशरथाय मैथिली ॥" ३४

इति श्रीमद्युद्धकाण्डे पञ्चविंशस्सर्गः ॥

---

॥ षड्विंशस्सर्गः ॥

तद्वचः पथ्यमक्लीबं सारणेनाभिभाषितम् ।
निशम्य रावणो राजा प्रत्यभाषत सारणम् ॥ १
"यदि मामभियुञ्जीरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥ २
त्वं तु सौम्य परित्रस्तो हरिभिर्निर्जितो भृशम् ।
प्रतिप्रदानमद्यैव सीतायास्साधु मन्यसे ॥ ३
को हि नाम सपत्नो मां समरे जेतुमर्हति ।"
इत्युक्त्वा परुषं वाक्यं रावणो राक्षसाधिपः ॥ ४

आरुरोह ततः श्रीमान् प्रासादं हिमपाण्डरम् ।
बहुतालसमुत्सेधं रावणोऽथ दिदृक्षया ॥ ५

ताभ्यां चराभ्यां सहितो रावणः क्रोधमूर्छितः ।
पश्यमानस्समुद्रं च पर्वतांश्च वनानि च ॥ ६

ददर्श पृथिवीदेशं सुसम्पूर्णं प्लवङ्गमैः ।
तदपारमसंख्येयं वानराणां महद्बलम् ॥ ७

आलोक्य रावणो राजा परिपप्रच्छ सारणम् ।
"एषां वानरमुख्यानां के शूराः के महाबलाः ? ॥ ८

के पूर्वमभिवर्तन्ते महोत्साहास्समन्ततः ।
केषां शृणोति सुग्रीवः के वा यूथपयूथपाः ॥ ९

सारणाचक्ष्व तत्त्वेन के प्रधानाः प्लवङ्गमाः ।"
सारणो राक्षसेन्द्रस्य वचनं परिपृच्छतः ॥ १०

आचचक्षेऽथ मुख्यज्ञो मुख्यांस्तांस्तु वनौकसः ।
"एष योऽभिमुखो लङ्कां नर्दंस्तिष्ठति वानरः ॥ ११

यूथपानां सहस्राणां शतेन परिवारितः ।
यस्य घोषेण महता सप्राकारा सतोरणा ॥ १२

लङ्का प्रवेपते सर्वा सशैलवनकानना ।
सर्वशाखामृगेन्द्रस्य सुग्रीवस्य महात्मनः ॥ १३

बलाग्रे तिष्ठते वीरो नीलो नामैष यूथपः ।
बाहू प्रगृह्य यः पद्भ्यां महीं गच्छति वीर्यवान् ॥ १४

लङ्कामभिमुखः क्रोधादभीक्ष्णं च विजृम्भते ।
गिरिशृङ्गप्रतीकाशः पद्मकिञ्जल्कसन्निभः ॥ १५

स्फोटयत्यभिसंरब्धो लाङ्गूलं च पुनः पुनः ।
यस्य लाङ्गूलशब्देन स्वनन्ति प्रदिशो दश ॥ १६

एष वानरराजेन सुग्रीवेणाभिषेचितः ।
यौवराज्येऽङ्गदो नाम त्वामाह्वयति संयुगे ॥ १७

वालिनस्सदृशः पुत्रस्सुग्रीवस्य सदा प्रियः ।
राघवार्थे पराक्रान्तश्शक्रार्थे वरुणो यथा ॥ १८

एतस्य सा मतिस्सर्वा यद्दृष्टा जनकात्मजा ।
हनूमता वेगवता राघवस्य हितैषिणा ॥ १९

बहूनि वानरेन्द्राणामेष यूथानि वीर्यवान् ।
परिगृह्याभियाति त्वां स्वेनानीकेन दुर्जयः ॥ २०

अनु वालिसुतस्यापि बलेन महताऽऽवृतः ।
वीरस्तिष्ठति संग्रामे सेतुहेतुरयं नलः ॥ २१

ये तु विष्टभ्य गात्राणि क्ष्वेलयन्ति नदन्ति च ।
उत्थाय च विजृम्भन्ते क्रोधेन हरिपुङ्गवाः ॥ २२

एते दुष्प्रसहा घोराश्चण्डाश्चण्डपराक्रमाः ।
अष्टौ शतसहस्राणि दशकोटिशतानि च ॥ २३

य एनमनुगच्छन्ति वीराश्चन्दनवासिनः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४

श्वेतो रजतसङ्काशश्चपलो भीमविक्रमः ।
बुद्धिमान् वानरो वीरस्त्रिषु लोकेषु विश्रुतः ॥ २५

तूर्णं सुग्रीवमागम्य पुनर्गच्छति सत्वरः ।
विभजन्वानरीं सेनामनीकानि प्रहर्षयन् ॥ २६

यः पुरा गोमतीतीरे रम्यं पर्येति पर्वतम् ।
नाम्ना सङ्कोचनो नाम नानानगयुतो गिरिः ॥ २७

तत्र राज्यं प्रशास्त्येष कुमुदो नाम यूथपः ।
योऽसौ शतसहस्राणां सहस्रं परिकर्षति ॥ २८

यस्य वाला बहुव्यामा दीर्घा लाङ्गूलमाश्रिताः ।
ताम्राः पीतास्सिताश्वेताः प्रकीर्णा घोरकर्मणः ॥ २९

अदीनो रोषणश्चण्डस्संग्राममभिकाङ्क्षति ।
एषोऽप्याशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ ३०

यस्त्वेष सिंहसङ्काशः कपिलो दीर्घलोचनः ।
निभृतः प्रेक्षते लङ्कां दिधक्षन्निव चक्षुषा ॥ ३१

विन्ध्यं कृष्णगिरिं सह्यं पर्वतं च सुदर्शनम् ।
राजन्! सततमध्यास्ते रम्भो नामैष यूथपः ॥ ३२

शतं शतसहस्राणां त्रिंशच्च हरिपुङ्गवाः ।
यमेते वानराश्शूराश्चण्डाश्चण्डपराक्रमाः ॥ ३३

परिवार्यानुगच्छन्ति लङ्कां मर्दितुमोजसा ।
यस्तु कर्णौ विवृणुते जृम्भते च पुनः पुनः ॥ ३४

न च संविजते मृत्योर्नच युद्धाद्विधावति ।
प्रकम्पते च रोषेण तिर्यक्च पुनरीक्षते ॥ ३५

पश्यन् लाङ्गूलमपि च क्ष्वेलते च महाबलः ।
महाजवो वीतभयो रम्यं साल्वेयपर्वतम् ॥ ३६

राजन्! सततमध्यास्ते शरभो नाम यूथपः ।
एतस्य बलिनस्सर्वे विहारा नाम यूथपाः ॥ ३७

राजन् शतसहस्राणि चत्वारिंशत्तथैव च ।
यस्तु मेघ इवाकाशं महानावृत्य तिष्ठति ॥ ३८
मध्ये वानरवीराणां सुराणामिव वासवः ।
भेरीणामिव सन्नादो यस्यैष श्रूयते महान् ॥ ३९
घोषश्शाखामृगेन्द्राणां संग्राममभिकाङ्क्षताम् ।
एष पर्वतमध्यास्ते पारियात्रमनुत्तमम् ॥ ४०
युद्धे दुष्प्रसहो नित्यं पनसो नाम यूथपः ।
एनं शतसहस्राणां शतार्धं पर्युपासते ॥ ४१
यूथपा यूथपश्रेष्ठमेषां यूथानि भगशः ।
यस्तु भीमां प्रवल्गन्तीं चमूं तिष्ठति शोभयन् ॥ ४२
स्थितां तीरे समुद्रस्य द्वितीय इव सागरः ।
एष दर्दरसङ्काशो विनतो नाम यूथपः ॥ ४३
पिबंश्चरति पर्णासां नदीनामुत्तमां नदीम् ।
षष्टिश्शतसहस्राणि बलमस्य प्लवङ्गमाः ॥ ४४
त्वामाह्वयति युद्धाय क्रोधनो नाम यूथपः ।
विक्रान्ता बलवन्तश्च यथा यूथानि भागशः ॥ ४५
यस्तु गैरिकवर्णाभं वपुः पुष्यति वानरः ।
अवमत्य सदा सर्वान् वानरान्बलदर्पितान् ॥ ४६
गवयो नाम तेजस्वी त्वां क्रोधादभिवर्तते ।
एवं शतसहस्राणि सप्ततिः पर्युपासते ॥ ४७
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ।
एते दुष्प्रसहा घोरा बलिनः कामरूपिणः ॥
यूथपा यूथपश्रेष्ठा येषां यूथानि भगशः ॥ ४८

इति श्रीमद्युद्धकाण्डे षड्विंशस्सर्गः ॥

## ॥ सप्तविंशस्सर्गः ॥

"तांस्तु तेऽहं प्रवक्ष्यामि प्रेक्षमाणस्य यूथपान् ।
राघवार्थे पराक्रान्ता ये न रक्षन्ति जीवितम् ॥ १

स्निग्धा यस्य बहुव्यामा वाला लाङ्गूलमाश्रिताः ।
ताम्राः पीतास्सिताश्श्वेताः प्रकीर्णा घोरकर्मणः ॥ २

प्रगृहीताः प्रकाशन्ते सूर्यस्येव मरीचयः ।
पृथिव्या चानुकृष्यन्ते हरो नामैष यूथपः ॥ ३

यं पृष्ठतोऽनुगच्छन्ति शतशोऽथ सहस्रशः ।
द्रुमानुद्यम्य सहसा लङ्कारोहणतत्पराः ॥ ४

यूथपा हरिराजस्य किंकरास्समुपस्थिताः ।
नीलानिव महामेघांस्तिष्ठतो यांस्तु पश्यसि ॥ ५

असिताञ्जनसङ्काशान् युद्धे सत्यपराक्रमान् ।
असंख्येयाननिर्देश्यान् परं पारमिवोदधेः ॥ ६

पर्वतेषु च ये केचिद्विषमेषु नदीषु च ।
एते त्वामभिवर्तन्ते राजन्नृक्षास्सुदारुणाः ॥ ७

एषां मध्ये स्थितो राजन् भीमाक्षो भीमदर्शनः ।
पर्जन्य इव जीमूतैस्समन्तात्परिवारितः ॥ ८

ऋक्षवन्तं गिरिश्रेष्ठमध्यास्ते नर्मदां पिबन् ।
सर्वर्क्षाणामधिपतिर्धूम्रो नामैष यूथपः ॥ ९

यवीयानस्य तु भ्राता पश्यैनं पर्वतोपमम् ।
भ्रात्रा समानो रूपेण विशिष्टस्तु पराक्रमैः ॥ १०

स एष जाम्बवान्नाम महायूथपयूथपः ।
प्रक्रान्तो गुरुवर्ती च संप्रहारेष्वमर्षणः ॥ ११

एतेन सार्धं सुमहत्कृतं शक्रस्य धीमता ।
दैवासुरे जाम्बवता लब्धाश्च बहवो वराः ॥ १२

आरुह्य पर्वताग्रेभ्यो महाभ्रविपुलाश्शिलाः ।
मुञ्चन्ति विपुलाकारा न मृत्योरुद्विजन्ति च ॥ १३

राक्षसानां च सदृशाः पिशाचानां च रोमशाः ।
एतस्य सैन्या बहवो विचरन्त्यग्नितेजसः ॥ १४

यं त्वेनमभिसंरब्धं प्लवमानमिव स्थितम् ।
प्रेक्षन्ते वानरास्सर्वे स्थिता यूथपयूथपम् ॥ १५

एष राजन् ! सहस्राक्षं पर्युपास्ते हरीश्वरः ।
बलेन बलसम्पन्नो दम्भो नामैष यूथपः ॥ १६

यः स्थितं योजने शैलं गच्छन् पार्श्वेन सेवते ।
ऊर्ध्वं तथैव कायेन गतः प्राप्नोति योजनम् ॥ १७

यस्मान्न परमं रूपं चतुष्पादेषु विद्यते ।
श्रुतस्सन्नादनो नाम वानराणां पितामहः ॥ १८

येन युद्धं पुरा दत्तं रणे शक्रस्य धीमता ।
पराजयश्च न प्राप्तस्सोऽयं यूथपयूथपः ॥ १९

यस्य विक्रममाणस्य शक्रस्येव पराक्रमः ।
एष गन्धर्वकन्यायामुत्पन्नः कृष्णवर्त्मनः ॥ २०

तदा दैवासुरे युद्धे साह्यार्थं त्रिदिवौकसाम् ।
यस्य वैश्रवणो राजा जम्बूमुपनिषेवते ॥ २१

यो राजा पर्वतेन्द्राणां बहुकिन्नरसेविनाम् ।
विहारसुखदो नित्यं भ्रातुस्ते राक्षसाधिप ॥ २२

तत्रैष वसति श्रीमान् बलवान् वानरर्षभः ।
युद्धेष्वकत्थनो नित्यं क्रोधनो नाम यूथपः ॥ २३

वृतः कोटिसहस्रेण हरीणां समुपस्थितः ।
एषैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ॥ २४

यो गङ्गामनुपर्येति त्रासयन् हस्तियूथपान् ।
हस्तिनां वानराणां च पूर्ववैरमनुस्मरन् ॥ २५

एष यूथपतिर्नेता गच्छन् गिरिगुहाशयः ।
गजान्योधयते वन्यान् गिरींश्चैव महीरुहान् ॥ २६

हरीणां वाहिनीमुख्यो नदीं हैमवतीमनु ।
उशीरबीजमाश्रित्य पर्वतं मन्दरोपमम् ॥ २७

रमते वानरश्रेष्ठो दिवि शक्र इव स्वयम् ।
एवं शतसहस्राणां सहस्रमनुवर्तते ॥ २८

वीर्यविक्रमदृप्तानां नर्दतां बलशालिनाम् ।
स एष नेता चैतेषां वानराणां महात्मनाम् ॥ २९

स एष दुर्धरो राजन् प्रमाथी नाम यूथपः ।
वातेनेवोद्धतं मेघं यमेनमनुपश्यसि ॥ ३०

अनीकमभिसंरब्धं वानराणां तरस्विनाम् ।
उद्धूतमरुणाभासं पवनेन समन्ततः ॥ ३१

विवर्तमानं बहुधा यत्रैतद्बहुलं रजः ।
एतेऽसितमुखा घोरा गोलाङ्गूला महाबलाः ॥ ३२

शतं शतसहस्राणि दृष्ट्वा वै सेतुबन्धनम् ।
गोलाङ्गूलं महावेगं गवाक्षं नाम यूथपम् ॥ ३३

परिवार्याभिवर्तन्ते लङ्कां मर्दितुमोजसा ।
भ्रमराचरिता यत्र सर्वकामफलद्रुमाः ॥ ३४
यं सूर्यस्तुल्यवर्णाभमनुपर्येति पर्वतम् ।
यस्य भासा सदा भान्ति तद्वर्णा मृगपक्षिणः ॥ ३५
यस्य प्रस्थं महात्मानो न त्यजन्ति महर्षयः ।
सर्वकामफला वृक्षास्सदा फलसमन्विताः ॥ ३६
मधूनि च महार्हाणि यस्मिन् पर्वतसत्तमे ।
तत्रैव रमते राजन्! रम्ये काञ्चनपर्वते ॥ ३७
मुख्यो वानरमुख्यानां केसरी नाम यूथपः ।
षष्टिर्गिरिसहस्राणां रम्याः काञ्चनपर्वताः ॥ ३८
तेषां मध्ये गिरिवरस्त्वमिवानघ रक्षसाम् ।
तत्रैते कपिलाश्श्वेतास्ताम्रास्या मधुपिङ्गलाः ॥ ३९
निवसन्त्युत्तमगिरौ तीक्ष्णदंष्ट्रा नखायुधाः ।
सिंहा इव चतुर्दंष्ट्रा व्याघ्रा इव दुरासदाः ॥ ४०
सर्वे वैश्वानरसमा ज्वलिताशीविषोपमाः ।
सुदीर्घाञ्चितलाङ्गूला मत्तमातङ्गसान्निभाः ॥ ४१
महापर्वतसङ्काशा महाजीमूतनिस्वनाः ।
वृत्तपिङ्गलरक्ताक्षा भीमभीमगतिस्वराः ॥ ४२
मर्दयन्तीव ते सर्वे तस्थुर्लङ्कां समीक्ष्य ते ।
एष चैषामधिपतिर्मध्ये तिष्ठति वीर्यवान् ॥ ४३
जयार्थी नित्यमादित्यमुपतिष्ठति बुद्धिमान् ।
नाम्ना पृथिव्यां विख्यातो राजन् शतवलीति यः ॥ ४४

दृष्ट्वैवाशंसते लङ्कां स्वेनानीकेन मर्दितुम् ।
विक्रान्तो बलवान् शूरः पौरुषे स्वे व्यवस्थितः ॥ ४५
रामप्रियार्थं प्राणानां दयां न कुरुते हरिः ।
गजो गवाक्षो गवयो नलो नीलश्च वानरः ॥ ४६
एकैक एव यूथानां कोटीभिर्दशभिर्वृतः ।
तथाऽन्ये वानरश्रेष्ठा विन्ध्यपर्वतवासिनः ॥ ४७
न शक्यन्ते बहुत्वात्तु संख्यातुं लघुविक्रमाः ।
सर्वे महाराज महाप्रभावास्सर्वे महाशैलनिकाशकायाः ।
सर्वे समर्थाः पृथिवीं क्षणेन कर्तुं प्रविध्वस्तविकीर्णशैलाम् ॥ ४८

इति श्रीमद्युद्धकाण्डे सप्तविंशस्सर्गः ॥

---

## ॥ अष्टाविंशस्सर्गः ॥

सारणस्य वचः श्रुत्वा रावणं राक्षसाधिपम् ।
बलमादिश्य तत्सर्वं शुको वाक्यमथाब्रवीत् ॥ १
" स्थितान् पश्यसि यानेतान्मत्तानिव महाद्विपान् ।
न्यग्रोधानिव गाङ्गेयान् सालान् हैमवतानिव ॥ २
एते दुष्प्रसहा राजन् बलिनः कामरूपिणः ।
दैत्यदानवसङ्काशा युद्धे देवपराक्रमाः ॥ ३
एषां कोटिसहस्राणि नव पञ्च च सप्त च ।
तथा शङ्खसहस्राणि तथा बृन्दशतानि च ॥ ४
एते सुग्रीवसचिवाः किष्किन्धानिलयास्सदा ।
हरयो देवगन्धर्वैरुत्पन्नाः कामरूपिणः ॥ ५

यौ तौ पश्यसि तिष्ठन्तौ कुमारौ देवरूपिणौ ।
मैन्दश्च द्विविदश्चोभौ ताभ्यां नास्ति समो युधि ॥ ६

ब्रह्मणा समनुज्ञातावमृतप्राशिनावुभौ ।
आशंसेते युधा लङ्कामेतौ मर्दितुमोजसा ॥ ७

यावेतावेतयोः पार्श्वे स्थितौ पर्वतसन्निभौ ।
सुमुखोऽसुमुखश्चैव मृत्युपुत्रौ पितुस्समौ ॥ ८

प्रेक्षन्तौ नगरीं लङ्कां कोटीभि र्दशभिर्वृतौ ।
यं तु पश्यसि तिष्ठन्तं प्रभिन्नमिव कुञ्जरम् ॥ ९

यो बलात् क्षोभयेत्क्रुद्धस्समुद्रमपि वानरः ।
एषोऽभिगन्ता लङ्काया वैदेह्यास्तव च प्रभो ॥ १०

एवं पश्य पुरा दृष्टं वानरं पुनरागतम् ।
ज्येष्ठः केसरिणः पुत्रो वातात्मज इति श्रुतः ॥ ११

हनूमानिति विख्यातो लङ्घितो येन सागरः ।
कामरूपी हरिश्रेष्ठो बलरूपसमन्वितः ॥ १२

अनिवार्यगतिश्चैव यथा सततगः प्रभुः ।
उद्यन्तं भास्करं दृष्ट्वा बालः किल पिपासितः ॥ १३

त्रियोजनसहस्रं तु अध्वानमवतीर्य हि ।
'आदित्यमाहरिष्यामि न मे क्षुत्प्रतियास्यति ॥' १४

इति संचिन्त्य मनसा पुरैष बलदर्पितः ।
अनाधृष्यतमं देवमपि देवर्षिदानवैः ॥ १५

अनासाद्यैव पतितो भास्करोदयने गिरौ ।
पतितस्य कपेरस्य हनुरेका शिलातले ॥ १६

किंचिद्भिन्ना दृढहनोर्हनूमानेष तेन वै ।
सत्यमागमयोगेन ममैष विदितो हरिः ॥ १७

नास्य शक्यं बलं रूपं प्रभावो वाऽपि भाषितुम् ।
एष आशंसते लङ्कामेको मर्दितुमोजसा ॥ १८

यश्चैषोऽनन्तरश्शूरश्श्यामः पद्मनिभेक्षणः ।
इक्ष्वाकूणामतिरथो लोके विख्यातपौरुषः ॥ १९

यस्मिन्न चलते धर्मो यो धर्मं नातिवर्तते ।
यो ब्राह्ममस्त्रं वेदांश्च वेद वेदविदां वरः ॥ २०

यो भिन्द्याद्गगनं बाणैः पर्वतांश्चापि दारयेत् ।
यस्य मृत्योरिव क्रोधश्शक्रस्येव पराक्रमः ॥ २१

यस्य भार्या जनस्थानात् सीता चापहृता त्वया ।
स एष रामस्त्वां योद्धुं राजन् समभिवर्तते ॥ २२

यस्यैष दक्षिणे पार्श्वे शुद्धजाम्बूनदप्रभः ।
विशालवक्षास्ताम्राक्षो नीलकुञ्चितमूर्धजः ॥ २३

एषोऽस्य लक्ष्मणो नाम भ्राता प्राणसमः प्रियः ।
नये युद्धे च कुशलस्सर्वशास्त्रविशारदः ॥ २४

अमर्षी दुर्जयो जेता विक्रान्तो बुद्धिमान्बली ।
रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः ॥ २५

न ह्येष राघवस्यार्थे जीवितं परिरक्षति ।
एषैवाशंसते युद्धे निहन्तुं सर्वराक्षसान् ॥ २६

यस्तु सव्यमसौ पक्षं रामस्याश्रित्य तिष्ठति ।
रक्षोगणपरिक्षिप्तो राजा ह्येष विभीषणः ॥ २७

श्रीमता राजराजेन लङ्कायामभिषेचितः ।
त्वामेव प्रतिसंरब्धो युद्धायैषोऽभिवर्तते ॥ २८

यं तु पश्यसि तिष्ठन्तं मध्ये गिरिमिवाचलम् ।
सर्वशाखामृगेन्द्राणां भर्तारमपराजितम् ॥ २९

तेजसा यशसा बुद्ध्या ज्ञानेनाभिजनेन च ।
यः कपीनतिबभ्राज हिमवानिव पर्वतान् ॥ ३०

किष्किन्धां यस्समध्यास्ते गुहां सगहनद्रुमाम् ।
दुर्गां पर्वतदुर्गस्थां प्रधानैस्सहयूथपैः ॥ ३१

यस्यैषा काञ्चनी माला शोभते शतपुष्करा ।
कान्ता देवमनुष्याणां यस्यां लक्ष्मीः प्रतिष्ठिता ॥ ३२

एतां च मालां तारां च कपिराज्यं च शाश्वतम् ।
सुग्रीवो वालिनं हत्वा रामेण प्रतिपादितः ॥ ३३

शतं शतसहस्राणां कोटिमाहुर्मनीषिणः ।
शतं कोटिसहस्राणां शङ्ख इत्यभिधीयते ॥ ३४

शतं शङ्खसहस्राणां महाशङ्ख इति स्मृतः ।
महाशङ्खसहस्राणां शतं बृन्दमिहोच्यते ॥ ३५

शतं बृन्दसहस्राणां महाबृन्दमिति स्मृतम् ।
महाबृन्दसहस्राणां शतं पद्ममिहोच्यते ॥ ३६

शतं पद्मसहस्राणां महापद्ममिति स्मृतम् ।
महापद्मसहस्राणां शतं खर्वमिहोच्यते ॥ ३७

शतं खर्वसहस्राणां महाखर्वमिहोच्यते ।
महाखर्वसहस्राणां समुद्रमभिधीयते ॥ ३८

शतं समुद्रसाहस्रमोघ इत्यभिधीयते ।
शतमोघसहस्राणां महौघ इति विश्रुतः ॥ ३९

एवं कोटिसहस्राणां शङ्खानां च शतेन च ।
महाशङ्खसहस्रेण तथा बृन्दशतेन च ॥ ४०

महाबृन्दसहस्रेण तथा पद्मशतेन च ।
महापद्मसहस्रेण तथा खर्वशतेन च ॥ ४१

समुद्रेण शतेनैव महौघेन तथैव च ।
एष कोटिमहौघेन समुद्रसदृशेन च ॥ ४२

विभीषणेन सचिवै राक्षसैः परिवारितः ।
सुग्रीवो वानरेन्द्रस्त्वां युद्धार्थमभिवर्तते ॥ ४३

महाबलवृतो नित्यं महाबलपराक्रमः ।
इमां महाराज समीक्ष्य वाहिनीमुपस्थितां प्रज्वलितग्रहोपमाम् ।
ततः प्रयत्नः परमो विधीयतां यथा जयस्स्यान्नपरैः पराजयः ॥"

इति श्रीमद्युद्धकाण्डे अष्टाविंशस्सर्गः ॥

---

## ॥ एकोनत्रिंशस्सर्गः ॥

शुकेन तु समाख्यातांस्तान्दृष्ट्वा हरियूथपान् ।
समीपस्थं च रामस्य भ्रातरं स्वं विभीषणम् ॥ १

लक्ष्मणं च महावीर्यं भुजं रामस्य दक्षिणम् ।
सर्ववानरराजं च सुग्रीवं भीमविक्रमम ॥ २

( गजं गवाक्षं गवयं मैन्दं द्विविदमेव च ।
अङ्गदं चैव बलिनं वज्रहस्तात्मजात्मजम् ॥

हनूमन्तं च विक्रान्तं जाम्बवन्तं च दुर्जयम् ।
सुषेणं कुमुदं नीलं नलं च प्लवगर्षभम् ॥ )

किंचिदाविग्नहृदयो जातक्रोधश्च रावणः ।
भर्त्सयामास तौ वीरौ कथांते शुकसारणौ ॥ ३

अधोमुखौ तौ प्रणतावब्रवीच्छुकसारणौ ।
रोषगद्गदया वाचा संरब्धः परुषं वचः ॥ ४

" न तावत्सदृशं नाम सचिवैरुपजीविभिः ।
विप्रियं नृपतेर्वक्तुं निग्रहे प्रग्रहे प्रभोः ॥ ५

रिपूणां प्रतिकूलानां युद्धार्थमभिवर्तताम् ।
उभाभ्यां सदृशं नाम वक्तुमप्रस्तवे स्तवम् ॥ ६

आचार्या गुरवो वृद्धा वृथा वां पर्युपासिताः ।
सारं यद्राजशास्त्राणामनुजीव्यं न गृह्यते ॥ ७

गृहीतो वा न विज्ञातो भारो ज्ञानस्य वोह्यते ।
ईदृशैस्सचिवैर्युक्तो मूर्खैर्दिष्ट्या धराम्यहम् ॥ ८

किंतु मृत्योर्भयं नास्ति वक्तुं मां परुषं वचः ।
यस्य मे शासतो जिह्वा प्रयच्छति शुभाशुभम् ॥ ९

अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।
राजदोषपरामृष्टास्तिष्ठन्ते नापराधिनः ॥' १०

हन्यामहं त्विमौ पापौ शत्रुपक्षप्रशंसकौ ।
यदि पूर्वोपकारैस्तु न क्रोधो मृदुतां व्रजेत् ॥ ११

अपध्वंसत गच्छध्वं सन्निकर्षादितो मम ।
नाहि वां हन्तुमिच्छामि स्मराम्युपकृतानि वाम् ॥ १२

हतावेव कृतघ्नौ तौ मयि स्नेहपराङ्मुखौ । ”
एवमुक्तौ तु सव्रीडौ तावुभौ शुकसारणौ ॥ १३

रावणं जयशब्देन प्रतिनन्द्याभिनिस्सृतौ ।
अब्रवीत् स दशग्रीवस्समीपस्थं महोदरम् ॥ १४

“ उपस्थापय मे शीघ्रं चारान्नीतिविशारदान् । ”
महोदरस्तथोक्तस्तु शीघ्रमाज्ञापयच्चरान् ॥ १५

ततश्चाराससन्त्वरिताः प्राप्ताः पार्थिवशासनात् ।
उपस्थिताः प्राञ्जलयो वर्धयित्वा जयाशिषा ॥ १६

तानब्रवीत्ततो वाक्यं रावणो राक्षसाधिपः ।
चारान्प्रत्यायितान् शूरान् भक्तान्विगतसाध्वसान् ॥ १७

“ इतो गच्छत रामस्य व्यवसायं परीक्षथ ।
मन्त्रिष्वभ्यन्तरार्थेऽस्य प्रीत्या तेन समागताः ॥ १८

कथं स्वपिति जागर्ति किमद्य च करिष्यति ।
विज्ञाय निपुणं सर्वमागन्तव्यमशेषतः ॥ १९

चारेण विदितश्शत्रुः पण्डितैर्वसुधाधिपैः ।
युद्धे स्वल्पेन यत्नेन समासाद्य निरस्यते ॥ ” २०

चारास्तु ते तथेत्युक्त्वा प्रहृष्टा राक्षसेश्वरम् ।
शार्दूलमग्रतः कृत्वा ततश्चक्रुः प्रदक्षिणम् ॥ २१

ततस्ते तं महात्मानं चारा राक्षससत्तमम् ।
कृत्वा प्रदक्षिणं जग्मुर्यत्र रामस्सलक्ष्मणः ॥ २२

तं सुवेलस्य शैलस्य समीपे रामलक्ष्मणौ ।
प्रच्छन्ना ददृशुर्गत्वा ससुग्रीवविभीषणौ ॥ २३

प्रेक्षमाणाश्चमूं तां तु बभूवुर्भयविक्लबाः ।
ते तु धर्मात्मना दृष्टा राक्षसेन्द्रेण राक्षसाः ॥ २४

विभीषणेन तत्रस्था निगृहीता यदृच्छया ।
शार्दूलो ग्राहितस्त्वेकः पापोऽयमिति राक्षसः ॥ २५

मोचितस्सोऽपि रामेण वध्यमानः प्लवङ्गमैः ।
आनृशंस्येन रामस्य मोचिता राक्षसाः परे ॥ २६

वानरैरर्दितास्ते तु विक्रान्तैर्लघुविक्रमैः ।
पुनर्लङ्कामनुप्राप्ताः श्वसन्तो नष्टचेतसः ॥ २७

ततो दशग्रीवमुपस्थितास्तु ते चारा बहिर्नित्यचरा निशाचराः ।
गिरेस्सुवेलस्य समीपवासिनं न्यवेदयन् भीमबलं महाबलाः ॥ २८

इति श्रीमद्युद्धकाण्डे एकोनत्रिंशस्सर्गः॥

---

## ॥ त्रिंशस्सर्गः ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १

चाराणां रावणश्श्रुत्वा प्राप्तं रामं महाबलम् ।
जातोद्वेगोऽभवत्किञ्चिच्छार्दूलं वाक्यमब्रवीत् ॥ २

"अयथावच्च ते वर्णो दीनश्चासि निशाचर ।
नासि कच्चिदमित्राणां क्रुद्धानां वशमागतः ? ॥" ३

इति तेनानुशिष्टस्तु वाचं मन्दमुदीरयत् ।
तदा राक्षसशार्दूलं शार्दूलो भयविह्वलः ॥ ४

"न ते चारयितुं शक्या राजन् वानरपुङ्गवाः ।
विक्रान्ता बलवन्तश्च राघवेण च रक्षिताः ॥ ५

नापि सम्भाषितुं शक्यास्संप्रश्नोऽत्र न लभ्यते ।
सर्वतो रक्ष्यते पन्था वानरैः पर्वतोपमैः ॥ ६

प्रविष्टमात्रे ज्ञातोऽहं बले तस्मिन्नचारिते ।
बलाद्गृहीतो रक्षोभिर्बहुधाऽस्मि विचालितः ॥ ७

जानुभिर्मुष्टिभिर्दन्तैस्तलैश्चाभिहतो भृशम् ।
परिणीतोऽस्मि हरिभिर्बलवद्भिरमर्षणैः ॥ ८

परिणीय च सर्वत्र नीतोऽहं रामसंसदम् ।
रुधिरादिग्धसर्वाङ्गो विह्वलश्चलितेन्द्रियः ॥ ९

हरिभिर्वध्यमानश्च याचमानः कृताञ्जलिः ।
राघवेण परित्रातो 'जीवा' मीति यदृच्छया ॥ १०

एष शैलैश्शिलाभिश्च पूरयित्वा महार्णवम् ।
द्वारमाश्रित्य लङ्काया रामस्तिष्ठति सायुधः ॥ ११

गरुडव्यूहमास्थाय सर्वतो हरिभिर्वृतः ।
मां विसृज्य महातेजा लङ्कामेवाभिवर्तते ॥ १२

पुरा प्राकारमायाति क्षिप्रमेकतरं कुरु ।
सीतां वास्मै प्रयच्छाशु सुयुद्धं वा प्रदीयताम् ॥" १३

मनसा तं तदा प्रेक्ष्य तच्छ्रुत्वा राक्षसाधिपः ।
शार्दूलं सुमहद्वाक्यमथोवाच स रावणः ॥ १४

" यदि मां प्रतियुध्येरन् देवगन्धर्वदानवाः ।
नैव सीतां प्रदास्यामि सर्वलोकभयादपि ॥" १५

एवमुक्त्वा महातेजा रावणः पुनरब्रवीत् ।
चारिता भवता सेना केऽत्र शूराः प्लवङ्गमाः ॥ १६

कीदृशाः किं प्रभास्सौम्य वानरा ये दुरासदाः ।
कस्य पुत्राश्च पौत्राश्च तत्त्वमाख्याहि राक्षस ॥ १७

तथाऽत्र प्रतिपत्स्यामि ज्ञात्वा तेषां बलाबलम् ।
अवश्यं बलसंख्यानं कर्तव्यं युद्धमिच्छताम् ॥ १८

अथैवमुक्तश्शार्दूलो रावणेनोत्तमश्चरः ।
इदं वचनमारेभे वक्तुं रावणसन्निधौ ॥ १९

"अथर्क्षरजसः पुत्रो युधि राजा सुदुर्जयः ।
गद्गदस्याथ पुत्रोऽसौ जाम्बवानिति विश्रुतः ॥ २०

गद्गदस्यैव पुत्रोऽन्यो गुरुपुत्रश्शतक्रतोः ।
कदनं यस्य पुत्रेण कृतमेकेन रक्षसाम् ॥ २१

सुषेणश्चापि धर्मात्मा पुत्रो धर्मस्य वीर्यवान् ।
सौम्यस्सोमात्मजश्चात्र राजन् दधिमुखः कपिः ॥ २२

सुमुखो दुर्मुखश्चात्र वेगदर्शी च वानरः ।
मृत्युर्वानररूपेण नूनं सृष्टस्स्वयम्भुवा ॥ २३

पुत्रो हुतवहस्याथ नीलस्सेनापतिस्स्वयम् ।
अनिलस्य तु पुत्रोऽत्र हनूमानिति विश्रुतः ॥ २४

नप्ता शक्रस्य दुर्धर्षो बलवानङ्गदो युवा ।
मैन्दश्च द्विविदश्चोभौ बलिनावश्विसम्भवौ ॥ २५

पुत्रा वैवस्वतस्यात्र पञ्चकालान्तकोपमाः ।
गजो गवाक्षो गवयश्शरभो गन्धमादनः ॥ २६

दशवानरकोट्यश्च शूराणां युद्धकाङ्क्षिणाम् ।
श्रीमतां देवपुत्राणां शेषं नाख्यातुमुत्सहे ॥ २७

पुत्रो दशरथस्यैष सिंहसंहननो युवा ।
दूषणो निहतो येन खरश्च त्रिशिरास्तथा ॥ २८

नास्ति रामस्य सदृशो विक्रमे भुवि कश्चन ।
विराधो निहतो येन कबन्धश्चान्तकोपमः ॥ २९

वक्तुं न शक्तो रामस्य नरः कश्चिद्गुणान्क्षितौ ।
जनस्थानगता येन यावन्तो राक्षसा हताः ॥ ३०

लक्ष्मणश्चात्र धर्मात्मा मातङ्गानामिवर्षभः ।
यस्य बाणपथं प्राप्य न जीवेदपि वासवः ॥ ३१

श्वेतो ज्योतिर्मुखश्चात्र भास्करस्यात्मसम्भवौ ।
वरुणस्य च पुत्रोऽन्यो हेमकूटः प्लवङ्गमः ॥ ३२

विश्वकर्मसुतो वीरो नलः प्लवगसत्तमः ।
विक्रान्तो बलवानत्र वसुपुत्रस्सुदुर्धरः ॥ ३३

राक्षसानां वरिष्ठश्च तव भ्राता विभीषणः ।
परिगृह्य पुरीं लङ्कां राघवस्य हिते रतः ॥ ३४

इति सर्वं समाख्यातं तवेदं वानरं बलम् ।
सुवेलेऽधिष्ठितं शैले शेषकार्ये भवान् गतिः ॥ ३५

इति श्रीमद्युद्धकाण्डे त्रिंशस्सर्गः ॥

---

## ॥ एकत्रिंशस्सर्गः ॥

ततस्तमक्षोभ्यबलं लङ्काधिपतये चराः ।
सुवेले राघवं शैले निविष्टं प्रत्यवेदयन् ॥ १

चाराणां रावणः श्रुत्वा प्राप्तं रामं महाबलम् ।
"जातोद्वेगोऽभवत्किंचित् सचिवानिदमब्रवीत् ॥" २

मन्त्रिणश्शीघ्रमायान्तु सर्वे वै सुसमाहिताः ।
अयं नो मन्त्रकालो हि संप्राप्त इति राक्षसाः ॥ ३

तस्य तद्वचनं श्रुत्वा मन्त्रिणोऽभ्यागमन् द्रुतम् ।
ततस्स मन्त्रयामास सचिवै राक्षसैस्सह ॥ ४

मन्त्रयित्वा स दुर्धर्षः क्षमं यत्समनन्तरम् ।
विसर्जयित्वा सचिवान् प्रविवेश स्वमालयम् ॥ ५

ततो राक्षसमाहूय विद्युज्जिह्वं महाबलम् ।
मायाविदं महामायः प्राविशद्यत्र मैथिली ॥ ६

विद्युज्जिह्वं च मायाज्ञमब्रवीद्राक्षसाधिपः ।
"मोहयिष्यावहे सीतां मायया जनकात्मजाम् ॥ ७

शिरो मायामयं गृह्य राघवस्य निशाचर ।
त्वं मां समुपतिष्ठस्व महच्च सशरं धनुः ॥" ८

एवमुक्तस्तथेत्याह विद्युज्जिह्वो निशाचरः ।
तस्य तुष्टोऽभवद्राजा प्रददौ च विभूषणम् ॥ ९

अशोकवनिकायां तु सीतादर्शनलालसः ।
नैर्ऋतानामधिपतिस्संविवेश महाबलः ॥ १०

ततो दीनामदैन्यार्हां ददर्श धनदानुजः ।
अधोमुखीं शोकपरामुपविष्टां महीतले ॥ ११

भर्तारमेव ध्यायन्तीमशोकवनिकां गताम् ।
उपास्यमानां घोराभी राक्षसीभिरितस्ततः ॥ १२

उपसृत्य ततस्सीतां प्रहर्षं नाम कीर्तयन् ।
इदं च वचनं धृष्टमुवाच जनकात्मजाम् ॥ १३

सन्निकृष्यमाना मया भद्रे यमुपाश्रित्य वल्गसे ।
खरहन्ता स ते भर्ता राघवस्समरे हतः ॥ १४

छिन्नं ते सर्वतो मूलं दर्पस्ते निहतो मया ।
व्यसनेनात्मनस्सीते मम भार्या भविष्यसि ॥ १५

विसृजेमां मतिं मूढे किं मृतेन करिष्यसि ।
भवस्व भद्रे भार्याणां सर्वासामीश्वरी मम ॥ १६

अल्पपुण्ये ! निवृत्तार्थे ! मूढे ! पण्डितमानिनि ! ।
शृणु भर्तृवधं सीते ! घोरं वृत्रवधं यथा ॥ १७

समायातस्समुद्रान्तं मां हन्तुं किल राघवः ।
वानरेन्द्रप्रणीतेन बलेन महता वृतः ॥ १८

सन्निविष्टस्समुद्रस्य पीड्य तीरमथोत्तरम् ।
बलेन महता रामो व्रजत्यस्तं दिवाकरे ॥ १९

अथाध्वनि परिश्रान्तमर्धरात्रे स्थितं बलम् ।
सुखसुप्तं समासाद्य चरितं प्रथमं चरैः ॥ २०

तत्प्रहस्तप्रणीतेन बलेन महता मम ।
बलमस्य हतं रात्रौ यत्र रामस्सलक्ष्मणः ॥ २१

पट्टसान्परिघांश्चक्रान् दण्डान्खण्डान्महायसान् ।
बाणजालानि शूलानि भास्वरान् कूटमुद्गरान् ॥ २२

यष्टीश्च तोमरान् शक्तीश्चक्राणि मुसलानि च ।
उद्यम्योद्यम्य रक्षोभिर्वानरेषु निपातिताः ॥ २३

अथ सुप्तस्य रामस्य प्रहस्तेन प्रमाथिना ।
असक्तं कृतहस्तेन शिरश्छिन्नं महासिना ॥ २४

विभीषणस्समुत्पत्य निगृहीतो यदृच्छया ।
दिशः प्रव्राजितस्सर्वैर्लक्ष्मणः प्लवगैस्सह ॥ २५

सुग्रीवो ग्रीवया सीते ! भग्नया प्लवगाधिपः ।
निरस्तहनुकश्शेते हनूमान्राक्षसैर्हतः ॥ २६

जाम्बवानथ जानुभ्यामुत्पतन्निहतो युधि ।
पट्टसैर्बहुभिश्छिन्नो निकृत्तः पादपो यथा ॥ २७

मैन्दश्च द्विविदश्चोभौ निहतौ वानरर्षभौ ।
निश्वसन्तौ रुदन्तौ च रुधिरेण समुक्षितौ ॥ २८

असिना व्यायतौ छिन्नौ मध्येह्यारिनिषूदनौ ।
अनुतिष्ठति मेदिन्यां पनसः पनसो यथा ॥ २९

नाराचैर्बहुभिश्छिन्नश्शेते दर्यां दरीमुखः ।
कुमुदस्तु महातेजा निष्कूजस्सायकैः कृतः ॥ ३०

अङ्गदो बहुभिश्छिन्नश्शरैरासाद्य राक्षसैः ।
पतितो रुधिरोद्गारी क्षितौ निपतिताङ्गदः ॥ ३१

हरयो मथिता नागै रथजातैस्तथा परे ।
शायिता मृदिताश्चाश्वैर्वायुवेगैरिवाम्बुदाः ॥ ३२

प्रहृताश्चापरे त्रस्ता हन्यमाना जघन्यतः ।
अभिद्रुतास्तु रक्षोभिस्सिंहैरिव महाद्विपाः ॥ ३३

सागरे पतिताः केचित्केचिद्गगनमाश्रिताः ।
ऋक्षा वृक्षानुपारूढा वानरीं वृत्तिमाश्रिताः ॥ ३४

सागरस्य च तीरेषु शैलेषु च वनेषु च ।
पिङ्गलास्ते विरूपाक्षैर्बहुभिर्बहवो हताः ॥ ३५

एवं तव हतो भर्ता ससैन्यो मम सेनया ।
क्षतजार्द्रं रजोध्वस्तमिदं चास्याहृतं शिरः ॥ " ३६

ततः परमदुर्धर्षो रावणो राक्षसेश्वरः ।
सीतायामुपशृण्वन्त्यां राक्षसीमिदमब्रवीत् ॥ ३७

" राक्षसं क्रूरकर्माणं विद्युज्जिह्वं त्वमानय ।
येन तद्राघवशिरस्संग्रामात्स्वयमाहृतम् ॥ " ३८

विद्युज्जिह्वस्ततो गृह्य शिरस्तत्सशरासनम् ।
प्रणामं शिरसा कृत्वा रावणस्याग्रतः स्थितः ॥ ३९

तमब्रवीत्ततो राजा रावणो राक्षसं स्थितम् ।
विद्युज्जिह्वं महाजिह्वं समीपपरिवर्तिनम् ॥ ४०

" अग्रतः कुरु सीतायाश्शीघ्रं दाशरथेश्शिरः ।
अवस्थां पश्चिमां भर्तुः कृपणा साधु पश्यतु ॥ " ४१

एवमुक्तं तु तद्रक्षश्शिरस्तत्प्रियदर्शनम् ।
उपनिक्षिप्य सीतायाः क्षिप्रमन्तरधीयत ॥ ४२

रावणश्चापि चिक्षेप भास्वरं कार्मुकं महत् ।
त्रिषु लोकेषु विख्यातं सीतामिदमुवाच ह ॥ ४३

" इदं तु तव रामस्य कार्मुकं ज्यासमायुतम् ।
इह प्रहस्तेनानीतं हत्वा तं निशि मानुषम् ॥ " ४४

स विद्युज्जिह्वेन सहैव तच्छिरो धनुश्च भूमौ विनिकीर्य रावणः ।
विदेहराजस्य सुतां यशस्विनीं ततोऽब्रवीत्तां " भव मे वशानुगा ॥ "

इति श्रीमद्युद्धकाण्डे एकत्रिंशस्सर्गः ॥

---

## ॥ द्वात्रिंशस्सर्गः ॥

सा सीता तच्छिरो दृष्ट्वा तच्च कार्मुकमुत्तमम् ।
सुग्रीवप्रीतिसंसर्गमाख्यातं च हनूमता ॥ १

नयने मुखवर्णं च भर्तुस्तत्सदृशं मुखम् ।
केशान् केशान्तदेशं च तं च चूडामणिं शुभम् ॥ २

एतैस्सर्वैरभिज्ञानैरभिज्ञाय सुदुःखिता ।
विजगर्हे च कैकेयीं क्रोशन्ती कुररी यथा ॥ ३

"सकामा भव कैकेयि! हतोऽयं कुलनन्दनः ।
कुलमुत्सादितं सर्वं त्वया कलहशीलया ॥ ४

आर्येण किं ते कैकेयि! कृतं रामेण विप्रियम् ।
यन्मया चीरवसनस्त्वया प्रस्थापितो वनम् ॥" ५

एवमुक्त्वा तु वैदेही वेपमाना तपस्विनी ।
जगाम जगतीं बाला छिन्ना तु कदली यथा ॥ ६

सा मुहूर्तात्समाश्वास्य प्रतिलभ्य च चेतनाम् ।
तच्छिरस्समुपाघ्राय विललापायतेक्षणा ॥ ७

"हा हताऽस्मि महाबाहो! वीरव्रतमनुव्रता ।
इमां ते पश्चिमावस्थां गताऽस्मि विधवा कृता ॥ ८

प्रथमं मरणं नार्या भर्तुर्वैगुण्यमुच्यते ।
सुवृत्त! साधुवृत्तायास्संवृत्तस्त्वं ममाग्रतः ॥ ९

दुःखाद्दुःखं प्रपन्नाया मग्नायाश्शोकसागरे ।
यो हि मामुद्यतस्त्रातुं सोऽपि त्वं विनिपातितः ॥ १०

सा श्वश्रूर्मम कौसल्या त्वया पुत्रेण राघव ।
वत्सेनेव यथा धेनुर्विवत्सा वत्सला कृता ॥ ११

आदिष्टं दीर्घमायुस्ते यैरचिन्त्यपराक्रम ।
अनृतं वचनं तेषामल्पायुरसि राघव ॥ १२

अथवा नश्यति प्रज्ञा प्राज्ञस्यापि सतस्तव ।
पचत्येनं यथा कालो भूतानां प्रभवो ह्ययम् ॥ १३

अदृष्टं मृत्युमापन्नः कस्मात्त्वं नयशास्त्रवित् ।
व्यसनानामुपायज्ञः कुशलो ह्यसि वर्जने ॥ १४

तथा त्वं संपरिष्वज्य रौद्रयाऽतिनृशंसया ।
कालरात्र्या मयाच्छिद्य हृतः कमललोचन ॥ १५

उपशेषे महाबाहो मां विहाय तपस्विनीम् ।
प्रियामिव समाश्लिष्य पृथिवीं पुरुषर्षभ ॥ १६

अर्चितं सततं यत्तद्गन्धमाल्यैर्मया तव ।
इदं ते मत्प्रियं वीर धनुः काञ्चनभूषणम् ॥ १७

पित्रा दशरथेन त्वं श्वशुरेण ममानघ ।
सर्वैश्च पितृभिस्सार्धं नूनं स्वर्गे समागतः ॥ १८

दिवि नक्षत्रभूतस्त्वं महत्कर्मकृतां प्रियम् ।
पुण्यं राजर्षिवंशं त्वमात्मनस्समुपेक्षसे ॥ १९

किं मां न प्रेक्षसे राजन्! किं मां न प्रतिभाषसे ।
बालां बाल्येन संप्राप्तां भार्यां मां सहचारिणीम् ॥ २०

संश्रुतं गृह्णता पाणिं चरिष्यामीति यत्त्वया ।
स्मर तन्मम काकुत्स्थ! नय मामपि दुःखिताम् ॥ २१

कस्मान्मामपहाय त्वं गतो गतिमतां वर ।
अस्माल्लोकादमुं लोकं त्यक्त्वा मामपि दुःखिताम् ॥ २२

कल्याणैरुचितं यत्तत्परिष्वक्तं मयैव तु ।
क्रव्यादैस्तच्छरीरं ते नूनं विपरिकृष्यते ॥ २३

अग्निष्टोमादिभिर्यज्ञैरिष्टवानाप्तदक्षिणैः ।
अग्निहोत्रेण संस्कारं केन त्वं तु न लप्स्यसे ॥ २४

प्रव्रज्यामुपपन्नानां त्रयाणामेकमागतम् ।
परिप्रक्ष्यति कौसल्या लक्ष्मणं शोकलालसा ॥ २५

स तस्याः परिपृच्छन्त्या वधं मित्रबलस्य ते ।
तव चाख्यास्यते नूनं निशायां राक्षसैर्वधम् ॥ २६

सा त्वां सुप्तं हतं श्रुत्वा मां च रक्षोगृहं गताम् ।
हृदयेन विदीर्णेन न भविष्यति राघव ॥ २७

मम हेतोरनार्याया ह्यनर्हः पार्थिवात्मजः ।
रामस्सागरमुत्तीर्य सत्त्ववान् गोष्पदे हतः ॥ २८

अहं दाशरथेनोढा मोहात्स्वकुलपांसनी ।
आर्यपुत्त्रस्य रामस्य भार्या मृत्युरजायत ॥ २९

नूनमन्यां मया जातिं वारितं दानमुत्तमम् ।
याऽहमद्येह शोचामि भार्या सर्वातिथेरपि ॥ ३०

साधु पातय मां क्षिप्रं रामस्योपरि रावण ।
समानय पतिं पत्न्या कुरु कल्याणमुत्तमम् ॥ ३१

शिरसा मे शिरश्चास्य कायं कायेन योजय ।
रावणानुगमिष्यामि गतिं भर्तुर्महात्मनः ॥ ३२

इति सा दुःखसन्तप्ता विललापायतेक्षणा ।
भर्तुश्शिरो धनुस्तत्र समीक्ष्य च पुनः पुनः ॥ ३३

एवं लालप्यमानायां सीतायां तत्र राक्षसः ।
अभिचक्राम भर्तारमनीकस्थः कृताञ्जलिः ॥ ३४
'विजयस्वार्यपुत्रे'ति सोऽभिवाद्य प्रसाद्य च ।
न्यवेदयदनुप्राप्तं प्रहस्तं वाहिनीपतिम् ॥ ३५
"अमात्यैस्सहितस्सर्वैः प्रहस्तस्समुपस्थितः ।
तेन दर्शनकामेन वयं प्रस्थापिताः प्रभो ॥ ३६
नूनमस्ति महाराज ! राजभावात्क्षमान्वितम् ।
किंचिदात्ययिकं कार्यं तेषां त्वं दर्शनं कुरु ॥" ३७
एतच्छ्रुत्वा दशग्रीवो राक्षसप्रतिवेदितम् ।
अशोकवनिकां त्यक्त्वा मन्त्रिणां दर्शनं ययौ ॥ ३८
स तु सर्वं समर्थ्यैव मन्त्रिभिः कृत्यमात्मनः ।
सभां प्रविश्य विदधे विदित्वा रामविक्रमम् ॥ ३९
अन्तर्धानं तु तच्छीर्षं तच्च कार्मुकमुत्तमम् ।
जगाम रावणस्यैव निर्याणसमनन्तरम् ॥ ४०
राक्षसेन्द्रस्तु तैस्सार्धं मन्त्रिभिर्भीमविक्रमैः ।
समर्थयामास तदा रामकार्यविनिश्चयम् ॥ ४१
अविदूरस्थितान् सर्वान् बलाध्यक्षान् हितैषिणः ।
अब्रवीत् कालसदृशो रावणो राक्षसाधिपः ॥ ४२
"शीघ्रं भेरीनिनादेन स्फुटकोणाहतेन मे ।
समानयध्वं सैन्यानि वक्तव्यं च न कारणम् ॥" ४३
ततस्तथेति प्रतिगृह्य तद्वचो बलाधिपास्ते महदात्मनो बलम् ।
समानयंश्चैव समागमं च ते न्यवेदयन्भर्तरि युद्धकाङ्क्षिणि ॥ ४४

इति श्रीमद्युद्धकाण्डे द्वात्रिंशस्सर्गः ॥

## ॥ त्रयस्त्रिंशस्सर्गः ॥

सीतां तु मोहितां दृष्ट्वा सरमा नाम राक्षसी ।
आससादाथ वैदेहीं प्रियां प्रणयिनीं सखीम् ॥ १

मोहितां राक्षसेन्द्रेण सीतां परमदुःखिताम् ।
आश्वासयामास तदा सरमा मृदुभाषिणी ॥ २

सा हि तत्र कृता मित्रं सीतया रक्ष्यमाणया ।
रक्षन्ती रावणादिष्टा सानुक्रोशा दृढव्रता ॥ ३

सा ददर्श ततस्सीतां सरमा नष्टचेतनाम् ।
उपावृत्योत्थितां ध्वस्तां बडबामिव पांसुलाम् ॥ ४

तां समाश्वासयामास सखीस्नेहेन सुव्रता ।
समाश्वसिहि वैदेहि माभूत्ते मनसो व्यथा ॥ ५

उक्ता यद्रावणेन त्वं प्रत्युक्तश्च स्वयं त्वया ।
सखीस्नेहेन तद्भीरु मया सर्वं प्रतिश्रुतम् ॥ ६

लीनया गहने शून्ये भयमुत्सृज्य रावणात् ।
तव हेतोर्विशालाक्षि न हि मे जीवितं प्रियम् ॥ ७

स संभ्रान्तश्च निष्क्रान्तो यत्कृते राक्षसाधिपः ।
तच्च मे विदितं सर्वमभिनिष्क्रम्य मैथिलि ॥ ८

न शक्यं सौप्तिकं कर्तुं रामस्य विदितात्मनः ।
वधश्च पुरुषव्याघ्रे तस्मिन्नैवोपपद्यते ॥ ९

न त्वेव वानरा हन्तुं शक्याः पादपयोधिनः ।
सुरा देवर्षभेणेव रामेण हि सुरक्षिताः ॥ १०

दीर्घवृत्तभुजश्श्रीमान् महोरस्कः प्रतापवान् ।
धन्वी संहननोपेतो धर्मात्मा भुवि विश्रुतः ॥ ११

विक्रान्तो रक्षिता नित्यमात्मनश्च परस्य च ।
लक्ष्मणेन सह भ्रात्रा कुशली नयशास्त्रवित् ॥ १२

हन्ता परबलौघानामचिन्त्यबलपौरुषः ।
न हतो राघवश्श्रीमान् सीते ! शत्रुनिबर्हणः ॥ १३

अयुक्तबुद्धिकृत्येन सर्वभूतविरोधिना ।
इयं प्रयुक्ता रौद्रेण माया मायाविदा त्वयि ॥ १४

शोकस्ते विगतस्सर्वः कल्याणं त्वामुपस्थितम् ।
ध्रुवं त्वां भजते लक्ष्मीः प्रियं प्रीतिकरं शृणु ॥ १५

उत्तीर्य सागरं रामस्सह वानरसेनया ।
सन्निविष्टस्समुद्रस्य तीरमासाद्य दक्षिणम् ॥ १६

दृष्टो मे परिपूर्णार्थः काकुत्स्थस्सहलक्ष्मणः
स हि तैस्सागरान्तस्थैर्बलैस्तिष्ठति रक्षितः ॥ १७

अनेन प्रेषिता ये च राक्षसा लघुविक्रमाः ।
राघवस्तीर्ण इत्येव प्रवृत्तिस्तैरिहाहृता ॥ १८

स तां श्रुत्वा विशालाक्षि प्रवृत्तिं राक्षसाधिपः ।
एष मन्त्रयते सर्वैस्सचिवैस्सह रावणः ॥" १९

इति ब्रुवाणा सरमा राक्षसी सीतया सह ।
सर्वोद्योगेन सैन्यानां शब्दं शुश्राव भैरवम् ॥ २०

दण्डनिर्घातवादिन्याश्श्रुत्वा भेर्या महास्वनम् ।
उवाच सरमा सीतामिदं मधुरभाषिणी ॥ २१

"सन्नाहजननी ह्येषा भैरवा भीरु भेरिका ।
भेरीनादं च गम्भीरं शृणु तोयदनिस्स्वनम् ॥ २२

कल्प्यन्ते मत्तमातङ्गा युज्यन्ते रथवाजिनः ।
हृष्यन्ते तुरगारूढाः प्रासहस्तास्सहस्रशः ॥ २३

तत्र तत्र च सन्नद्धास्सम्पतन्ति पदातयः ।
आपूर्यन्ते राजमार्गास्सैन्यैरद्भुतदर्शनैः ॥ २४

वेगवद्भिर्नदद्भिश्च तोयौघैरिव सागरः ।
शस्त्राणां च प्रसन्नानां चर्मणां वर्मणां तथा ॥ २५

रथवाजिगजानां च भूषितानां च रक्षसाम् ।
प्रभां विसृजतां पश्य नानावर्णां समुत्थिताम् ॥ २६

वनं निर्दहतो घर्मे यथारूपं विभावसोः ।
घण्टानां शृणु निर्घोषं रथानां शृणु निस्वनम् ॥ २७

हयानां हेषमाणानां शृणु तूर्यध्वनिं यथा ।
उद्यतायुधहस्तानां राक्षसेन्द्रानुयायिनाम् ॥ २८

संभ्रमो रक्षसामेष तुमुलो रोमहर्षणः ।
श्रीस्त्वां भजति शोकघ्नी रक्षसां भयमागतम् ॥ २९

रामः कमलपत्राक्षो दैत्यानामिव वासवः ।
विनिर्जित्य जितक्रोधस्त्वामचिन्त्यपराक्रमः ॥ ३०

रावणं समरे हत्वा भर्ता त्वाऽधिगमिष्यति ।
विक्रमिष्यति रक्षस्सु भर्ता ते सहलक्ष्मणः ॥ ३१

यथा शत्रुषु शत्रुघ्नो विष्णुना सह वासवः ।
आगतस्य हि रामस्य क्षिप्रमङ्कगतां सतीम् ॥ ३२

अहं द्रक्ष्यामि सिद्धार्थां त्वां शत्रौ विनिपातिते ।
अश्रूण्यानन्दजानि त्वं वर्तयिष्यसि शोभने ॥ ३३

समागम्य परिष्वज्य तस्योरसि महोरसः ।
अचिरान्मोक्ष्यते सीते देवि ते जघनं गताम् ॥ ३४

धृतामेतान्बहून्मासान् वेणीं रामो महाबलः ।
तस्य दृष्ट्वा मुखं देवि पूर्णचन्द्रमिवोदितम् ॥ ३५

मोक्ष्यसे शोकजं वारि निर्मोकमिव पन्नगी ।
रावणं समरे हत्वा न चिराद्देवि मैथिलि ॥ ३६

त्वया समग्रः प्रियया सुखार्हो लप्स्यते सुखम् ।
समागता त्वं वीर्येण मोदिष्यसि महात्मना ॥ ३७

सुवर्षेण समायुक्ता यथा सस्येन मेदिनी ॥
गिरिवरमभितोऽनुवर्तमानो हय इव मण्डलमाशु यः करोति ।
तमिह शरणमभ्युपेहि देवं दिवसकरं प्रभवो ह्ययं प्रजानाम् ॥ ३८

इति श्रीमद्युद्धकाण्डे त्रयस्त्रिंशस्सर्गः ॥

---

## ॥ चतुस्त्रिंशस्सर्गः ॥

अथ तां जातसन्तापां तेन वाक्येन मोहिताम् ।
सरमाऽऽह्लादयामास पृथिवीं द्यौरिवाम्भसा ॥ १

ततस्तस्या हितं सख्याश्चिकीर्षन्ती सखी वचः ।
उवाच काले कालज्ञा स्मितपूर्वाभिभाषिणी ॥ २

“ उत्सहेयमहं गत्वा तद्वाक्यमसितेक्षणे ।
निवेद्य कुशलं रामे प्रतिच्छन्ना निवर्तितुम् ॥ ३

न हि मे क्रममाणाया निरालम्बे विहायसि ।
समर्थो गतिमन्वेतुं पवनो गरुडोऽपि वा ॥ ” ४

एवं ब्रुवाणां तां सीता सरमां पुनरब्रवीत् ।
मधुरं श्लक्ष्णया वाचा पूर्वं शोकाभिपन्नया ॥ ५

" समर्था गगनं गन्तुमपि वा त्वं रसातलम् ।
अवगच्छाम्यकर्तव्यं कर्तव्यं ते मदन्तरे ॥ ६

मत्प्रियं यदि कर्तव्यं यदि बुद्धिः स्थिरा तव ।
ज्ञातुमिच्छामि तं गत्वा किं करोतीति रावणः ॥ ७

स हि मायाबलः क्रूरो रावणश्शत्रुरावणः ।
मां मोहयति दुष्टात्मा पीतमात्रेव वारुणी ॥ ८

तर्जापयति मां नित्यं भर्त्सापयति चासकृत् ।
राक्षसीभिस्सुघोराभिर्या मां रक्षन्ति नित्यशः ॥ ९

उद्विग्ना शङ्किता चास्मि न स्वस्थं च मनो मम ।
तद्भयाच्चाहमुद्विग्ना अशोकवनिकां गता ॥ १०

यदि नाम कथा तस्य निश्चितं वाऽपि यद्भवेत् ।
निवेदयेथास्सर्वं तत्परो मे स्यादनुग्रहः ॥ " ११

सा त्वेवं ब्रुवतीं सीतां सरमा वल्गुभाषिणी ।
उवाच वदनं तस्यास्स्पृशन्ती बाष्पविक्लबम् ॥ १२

" एष ते यद्यभिप्रायस्तदागच्छामि जानकि ।
गृह्य शत्रोरभिप्रायमुपावृत्तां च पश्य माम् ॥ १३

एवमुक्त्वा ततो गत्वा समीपं तस्य रक्षसः ।
शुश्राव कथितं तस्य रावणस्य समन्त्रिणः ॥ १४

सा श्रुत्वा निश्चयं तस्य निश्चयज्ञा दुरात्मनः ।
पुनरेवागमत्क्षिप्रमशोकवनिकां तदा ॥ १५

सा प्रविष्टा पुनस्तत्र ददर्श जनकात्मजाम् ।
प्रतीक्षमाणां स्वामेव भ्रष्टपद्मामिव श्रियम् ॥ १६

तां तु सीता पुनः प्राप्तां सरमां वल्गुभाषिणीम् ।
परिष्वज्य च सुस्निग्धं ददौ च स्वयमासनम् ॥ १७

"इहासीना सुखं सर्वमाख्याहि मम तत्त्वतः ।
क्रूरस्य निश्चयं तस्य रावणस्य दुरात्मनः ॥" १८

एवमुक्ता तु सरमा सीतया वेपमानया ।
कथितं सर्वमाचष्टे रावणस्य समन्त्रिणः ॥ १९

जनन्या राक्षसेन्द्रो वै त्वन्मोक्षार्थं बृहद्वचः ।
अविद्धेव च वैदेहि मन्त्रिवृद्धेन बोधितः ॥ २०

"दीयतामभिसत्कृत्य मनुजेन्द्राय मैथिली ।
निदर्शनं ते पर्याप्तं जनस्थाने यदद्भुतम् ॥ २१

लङ्घनं च समुद्रस्य दर्शनं च हनूमतः ।
वधं च रक्षसां युद्धे कः कुर्यान्मानुषो भुवि ॥ २२

एवं स मन्त्रिवृद्धैश्चाविद्धेन बहुभाषितः ।
न त्वामुत्सहते मोक्तुमर्थमर्थपरो यथा ॥ २३

नोत्सहत्यमृतो मोक्तुं युद्धे त्वामिति मैथिली ।
सामात्यस्य नृशंसस्य निश्चयो ह्येष वर्तते ॥ २४

तदेषा निश्चिता बुद्धिर्मृत्युलोभादुपस्थिता ।
भयान्न शक्तस्त्वां मोक्तुमनिरस्तस्तु संयुगे ॥ २५

राक्षसानां च सर्वेषमात्मनश्च वधेन हि ।
निहत्य रावणं संख्ये सर्वथा निशितैश्शरैः ॥ २६

प्रतिनेष्यति रामस्त्वामयोध्यामसितेक्षणे ।
एतस्मिन्नन्तरे शब्दो भेरीशङ्खसमाकुलः ॥ २७

श्रुतो वानरसैन्यानां कम्पयन् धरणीतलम् ।
श्रुत्वा तु तद्वानरसैन्यशब्दं लङ्कागता राक्षसराजभृत्याः ।
नष्टौजसो दैन्यपरीतचेष्टाः श्रेयो न पश्यन्ति नृपस्य दोषैः ॥ २८

इति श्रीमद्युद्धकाण्डे चतुस्त्रिंशस्सर्गः ॥

---

## ॥ पञ्चत्रिंशस्सर्गः ॥

तेन शङ्खविमिश्रेण भेरीशब्देन राघवः ।
उपयाति महाबाहू रामः परपुरञ्जयः ॥ १

तं निनादं निशम्याथ रावणो राक्षसेश्वरः ।
मुहूर्तं ध्यानमास्थाय सचिवानभ्युदैक्षत ॥ २

अथ तान् सचिवांस्तत्र सर्वानाभाष्य रावणः ।
सभां सन्नादयन् सर्वामित्युवाच महाबलः ॥ ३

जगत्सन्तापनः क्रूरो गर्हयन् राक्षसेश्वरः ।
"तरणं सागरस्यापि विक्रमं बलसंचयम् ॥ ४

यदुक्तवन्तो रामस्य भवन्तस्तन्मया श्रुतम् ।
भवतश्चाप्यहं वेद्मि युद्धे सत्यपराक्रमान् ॥ ५

तूष्णीकानीक्षतोऽन्योन्यं विदित्वा रामविक्रमम् ।"
ततस्तु सुमहाप्राज्ञो माल्यवान्नाम राक्षसः ॥ ६

रावणस्य वचः श्रुत्वा मातुः पैतामहोऽब्रवीत् ।
विद्यास्वभिविनीतो यो राजा राजन्! नयानुगः ॥ ७

स शास्ति चिरमैश्वर्यमरींश्च कुरुते वशे ।
सन्दधानो हि कालेन विगृह्णंश्चारिभिस्सह ॥ ८

स्वपक्षवर्धनं कुर्वन् महदैश्वर्यमश्नुते ।
हीयमानेन कर्तव्यो राज्ञा सन्धिस्समेन च ॥ ९

न शत्रुमवमन्येत ज्यायान्कुर्वीत विग्रहम् ।
तन्मह्यं रोचते सन्धिस्सह रामेण रावण ॥ १०

यदर्थमभियुक्ताः स्म सीता तस्मै प्रदीयताम् ।
यस्य देवर्षयस्सर्वे गन्धर्वाश्च जयैषिणः ॥ ११

विरोधं मागमस्तेन सन्धिस्ते तेन रोचताम् ।
असृजद्भगवान्पक्षौ द्वावेव हि पितामहः ॥ १२

सुराणामसुराणां च धर्माधर्मौ तदाश्रयौ ।
धर्मो हि श्रूयते पक्षो ह्यमराणां महात्मनाम् ॥ १३

अधर्मो रक्षसां पक्षो ह्यसुराणां च रावण ।
धर्मो वै ग्रसतेऽधर्मं ततः कृतमभूद्युगम् ॥ १४

अधर्मो ग्रसते धर्मं ततस्तिष्यः प्रवर्तते ।
तत्त्वया चरता लोकान् धर्मो विनिहतो महान् ॥ १५

अधर्मः प्रगृहीतश्च तेनास्मद्बलिनः परे ।
स प्रमादाद्विवृद्धस्ते अधर्मो ग्रसते हि नः ॥ १६

विवर्धयति पक्षं च सुराणां सुरभावनः ।
विषयेषु प्रसक्तेन यत्किंचित्कारणात्त्वया ॥ १७

ऋषीणामग्निकल्पानामुद्वेगो जनितो महान् ।
तेषां प्रभावो दुर्धर्षः प्रदीप्त इव पावकः ॥ १८

तपसा भावितात्मानो धर्मस्यानुग्रहे रताः ।
मुख्यैर्यज्ञैर्यजन्त्येते नित्यं तैस्तैर्द्विजातयः ॥ १९

जुह्वत्यग्नींश्च विधिवद्वेदांश्चोच्चैरधीयते ।
अभिभूय च रक्षांसि ब्रह्मघोषानुदीरयन् ॥ २०

दिशोऽपि विद्रुतास्सर्वे स्तनयित्नुरिवोष्णगे ।
ऋषीणामग्निकल्पानामग्निहोत्रसमुत्थितः ॥ २१

आदत्ते रक्षसां तेजो धूमो व्याप्य दिशो दश ।
तेषु तेषु च देशेषु पुण्येष्वेव दृढव्रतैः ॥ २२

चर्यमाणं तपस्तीव्रं सन्तापयति राक्षसान् ।
देवदानवयक्षेभ्यो गृहीतश्च वरस्त्वया ॥ २३

मानुषा वानरा ऋक्षा गोलाङ्गूला महाबलाः ।
बलवन्त इहागम्य गर्जन्ति दृढविक्रमाः ॥ २४

उत्पातान्विविधान् दृष्ट्वा घोरान्बहुविधांस्तथा ।
विनाशमनुपश्यामि सर्वेषां रक्षसामहम् ॥ २५

खराभिस्तनिता घोरा मेघाः प्रतिभयंकराः ।
शोणितेनाभिवर्षन्ति लङ्कामुष्णेन सर्वतः ॥ २६

रुदतां वाहनानां च प्रपतन्त्यास्रबिन्दवः ।
ध्वजा ध्वस्ता विवर्णाश्च न प्रभान्ति यथापुरम् ॥ २७

व्याला गोमायवो गृध्रा वाश्यन्ति च सुभैरवम् ।
प्रविश्य लङ्कामनिशं समवायांश्च कुर्वते ॥ २८

कालिकाः पाण्डुरैर्दन्तैः प्रहसन्त्यग्रतः स्थिताः ।
स्त्रियस्स्वप्नेषु मुष्णन्त्यो गृहाणि प्रतिभाष्य च ॥ २९

गृहाणां बलिकर्माणि श्वानः पर्युपभुञ्जते ।
खरा गोषु प्रजायन्ते मूषिका नकुलैस्सह ॥ ३०

मार्जारा द्वीपिभिस्सार्धं सूकराश्शुनकैस्सह ।
किन्नरा राक्षसैश्चापि समीयुर्मानुषैस्सह ॥ ३१

पाण्डुरा रक्तपादाश्च विहङ्गाः कालचोदिताः ।
राक्षसानां विनाशाय कपोता विचरन्ति च ॥ ३२

वीचीकूचीति वाश्यन्त्यश्शारिका वेश्मसु स्थिताः ।
पतन्ति ग्रथिताश्चापि निर्जिताः कलहैषिणः ॥ ३३

पक्षिणश्च मृगास्सर्वे प्रत्यादित्यं रुदन्ति च ।
करालो विकटो मुण्डः परुषः कृष्णपिङ्गलः ॥ ३४

कालो गृहाणि सर्वेषां कालेकालेऽन्ववेक्षते ।
एतान्यन्यानि दुष्टानि निमित्तान्युत्पतन्ति च ॥ ३५

(विष्णुं मन्यामहे देवं मानुषं देहमाश्रितम् ।
न हि मानुषमात्रोऽसौ राघवो दृढविक्रमः ॥ ३६

येन बद्धस्समुद्रस्य स सेतुः परमाद्भुतः ।
कुरुष्व नरराजेन संधिं रामेण रावण ॥)
ज्ञात्वा प्रधार्य कर्माणि क्रियतामायतिक्षमम् ॥"

इदं वचस्तत्र निशम्य माल्यवान् परीक्ष्य रक्षोधिपतेर्मनः पुनः ।
अनुत्तमेषूत्तमपौरुषो बली बभूव तूष्णीं समवेक्ष्य रावणम् ॥ ३७

इति श्रीमद्युद्धकाण्डे पञ्चत्रिंशस्सर्गः ॥

---

॥ षट्त्रिंशस्सर्गः ॥

तत्तु माल्यवतो वाक्यं हितमुक्तं दशाननः ।
न मर्षयति दुष्टात्मा कालस्य वशमागतः ॥ १
स बद्ध्वा भ्रुकुटीं वक्त्रे क्रोधस्य वशमागतः ।
अमर्षात्परिवृत्ताक्षो माल्यवन्तमथाब्रवीत् ॥ २
"हितबुद्ध्या यदहितं वचः परुषमुच्यते ।
परपक्षं प्रविश्यैव नैतच्छ्रोत्रं गतं मम ॥ ३
मानुषं कृपणं राममेकं शाखामृगाश्रयम् ।
समर्थं मन्यसे केन त्यक्तं पित्रा वनालयम् ॥ ४
रक्षसामीश्वरं मां च देवतानां भयंकरम् ।
हीनं मां मन्यसे केन ह्यहीनं सर्वविक्रमैः ॥ ५
वीरद्वेषेण वा शङ्के पक्षपातेन वा रिपोः ।
त्वयाऽहं परुषाण्युक्तः परप्रोत्साहनेन वा ॥ ६
प्रभवन्तं पदस्थं हि परुषं कोऽभिभाषते ।
पण्डितश्शास्त्रतत्त्वज्ञो विना प्रोत्साहनाद्रिपोः ॥ ७
आनीय च वनात्सीतां पद्महीनामिव श्रियम् ।
किमर्थं प्रतिदास्यामि राघवस्य भयादहम् ॥ ८
वृतं वानरकोटीभिस्ससुग्रीवं सलक्ष्मणम् ।
पश्य कैश्चिदहोभिस्त्वं राघवं निहतं मया ॥ ९
द्वन्द्वे यस्य न तिष्ठन्ति दैवतान्यपि संयुगे ।
स कस्माद्रावणो युद्धे भयमाहारयिष्यति ॥ १०
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् ।
एष मे सहजो दोषस्स्वभावो दुरतिक्रमः ॥ ११

यदि तावत्समुद्रे तु सेतुर्बद्धो यदृच्छया ।
रामेण विस्मयः कोऽत्र येन ते भयमागतम् ॥ १२

स तु तीर्त्वाऽर्णवं रामस्सह वानरसेनया ।
प्रतिजानामि ते सत्यं न जीवन्प्रतियास्यति ॥" १३

एवं ब्रुवाणं संरब्धं रुष्टं विज्ञाय रावणम् ।
व्रीलितो माल्यवान्वाक्यं नोत्तरं प्रत्यपद्यत ॥ १४

जयाशिषा च राजानं वर्धयित्वा यथोचितम् ।
माल्यवानभ्यनुज्ञातो जगाम स्वं निवेशनम् ॥ १५

रावणस्तु सहामात्यो मन्त्रयित्वा विमृश्य च ।
लङ्कायामतुलां गुप्तिं कारयामास राक्षसः ॥ १६

स व्यादिदेश पूर्वस्यां प्रहस्तं द्वारि राक्षसम् ।
दक्षिणस्यां महावीर्यौ महापार्श्वमहोरौ ॥ १७

पश्चिमायामथो द्वारि पुत्त्रमिन्द्रजितं तथा ।
व्यादिदेश महामायं बहुभी राक्षसैर्वृतम् ॥ १८

उत्तरस्यां पुरद्वारि व्यादिश्य शुकसारणौ ।
'स्वयं चात्र भविष्यामि' मन्त्रिणस्तानुवाच ह ॥ १९

राक्षसं तु विरूपाक्षं महावीर्यपराक्रमम् ।
मध्यमेऽस्थापयद्गुल्मे बहुभिस्सह राक्षसैः ॥ २०

एवं विधानं लङ्कायाः कृत्वा राक्षसपुङ्गवः ।
कृतकृत्यमिवात्मानं मन्यते कालचोदितः ॥ २१

विसर्जयामास ततस्समन्त्रिणो विधानमाज्ञाप्य पुरस्य पुष्कलम् ।
जयाशिषा मन्त्रिगणेन पूजितो विवेश चान्तःपुरमृद्धिमन्महत् ॥ २२

इति श्रीमद्युद्धकाण्डे षट्त्रिंशस्सर्गः ॥

## ॥ सप्तत्रिंशस्सर्गः ॥

नरवानरराजौ तौ स च वायुसुतः कपिः ।
जाम्बवानृक्षराजश्च राक्षसश्च विभीषणः ॥ १
अङ्गदो वालिपुत्त्रश्च सौमित्रिश्शरभः कपिः ।
सुषेणस्सहदायादो मैन्दो द्विविद एव च ॥ २
गजो गवाक्षः कुमुदो नलोऽथ पनसस्तथा ।
अमित्रविषयं प्राप्तास्समवेतास्समर्थयन् ॥ ३
"इयं सा लक्ष्यते लङ्का पुरी रावणपालिता ।
सासुरोरगगन्धर्वैरमरैरपि दुर्जया ॥ ४
कार्यसिद्धिं पुरस्कृत्य मन्त्रयध्वं विनिर्णये ।
नित्यं सन्निहितो ह्यत्र रावणो राक्षसाधिपः ॥" ५
तथा तेषु ब्रुवाणेषु रावणावरजोऽब्रवीत् ।
वाक्यमग्राम्यपदवत्पुष्कलार्थं विभीषणः ॥ ६
" अनलश्शरभश्चैव सम्पातिः प्रघसस्तथा ।
गत्वा लङ्कां ममामात्याः पुरीं पुनरिहागताः ॥ ७
भूत्वा शकुनयस्सर्वे प्रविष्टाश्च रिपोर्बलम् ।
विधानं विहितं यच्च तद्दृष्ट्वा समुपस्थिताः ॥ ८
संविधानं यथाऽऽहुस्ते रावणस्य दुरात्मनः ।
राम ! तद्ब्रुवतस्सर्वं यथातत्त्वेन मे शृणु ॥ ९
पूर्वं प्रहस्तस्सबलो द्वारमासाद्य तिष्ठति ।
दक्षिणं च महावीर्यौ महापार्श्वमहोदरौ ॥ १०
इन्द्रजित्पश्चिमद्वारं राक्षसैर्बहुभिर्वृतः ।
पट्टसासिधनुष्मद्भिश्शूलमुद्गरपाणिभिः ॥ ११

नानाप्रहरणैश्शूरैरावृतो रावणात्मजः ।
राक्षसानां सहस्रैस्तु बहुभिश्शस्त्रपाणिभिः ॥ १२

युक्तः परमसंविग्नो राक्षसैर्बहुभिर्वृतः ।
उत्तरं नगरद्वारं रावणस्स्वयमास्थितः ॥ १३

विरूपाक्षस्तु महता शूलखड्गधनुष्मता ।
बलेन राक्षसैस्सार्धं मध्यमं गुल्ममास्थितः ॥ १४

एतानेवं विधान्गुल्मान् लङ्कायां समुदीक्ष्य ते ।
मामकास्सचिवास्सर्वे पुनश्शीघ्रमिहाऽऽगताः ॥ १५

गजानां च सहस्रं च रथानामयुतं पुरे ।
हयानामयुते द्वे च साग्रकोटी च रक्षसाम् ॥ १६

विक्रान्ता बलवन्तश्च संयुगेष्वाततायिनः ।
इष्टा राक्षसराजस्य नित्यमेते निशाचराः ॥ १७

एकैकस्यात्र युद्धार्थे राक्षसस्य विशांपते ।
परिवारस्सहस्राणां सहस्रमुपतिष्ठते ॥" १८

एतां प्रवृत्तिं लङ्कायां मन्त्रिप्रोक्तां विभीषणः ।
एवमुक्त्वा महाबाहू राक्षसांस्तानदर्शयत् ॥ १९

लङ्कायां सचिवैस्सर्वां रामाय प्रत्यवेदयत् ।
रामं कमलपत्राक्षमिदमुत्तरमब्रवीत् ॥ २०

रावणावरजः श्रीमान् रामप्रियचिकीर्षया ।
"कुबेरं तु यदा राम! रावणः प्रत्ययुध्यत ॥ २१

षष्टिश्शतसहस्राणि तदा निर्यान्ति राक्षसाः ।
पराक्रमेण वीर्येण तेजसा सत्त्वगौरवात् ॥ २२

सदृशा येऽत्र दर्पेण रावणस्य दुरात्मनः ।
अत्र मन्युर्न कर्तव्यो रोषये त्वां न भीषये ॥ २३

समर्थो ह्यसि वीर्येण सुराणामपि निग्रहे ।
तद्भवांश्चतुरङ्गेण बलेन महता वृतः ॥ २४

व्यूह्येदं वानरानीकं निर्मथिष्यसि रावणम् ।"
रावणावरजे वाक्यमेवं ब्रुवति राघवः ॥ २५

शत्रूणां प्रतिघातार्थमिदं वचनमब्रवीत् ।
"पूर्वद्वारे तु लङ्काया नीलो वानरपुङ्गवः ॥ २६

प्रहस्तप्रतियोद्धा स्याद्वानरैर्बहुभिर्वृतः ।
अङ्गदो वालिपुत्रस्तु बलेन महता वृतः ॥ २७

दक्षिणे बाधतां द्वारे महापार्श्वमहोदरौ ।
हनूमान् पश्चिमद्वारं निपीड्य पवनात्मजः ॥ २८

प्रविशत्वप्रमेयात्मा बहुभिः कपिभिर्वृतः ।
दैत्यदानवसङ्घानामृषीणां च महात्मनाम् ॥ २९

विप्रकारप्रियः क्षुद्रो वरदानबलान्वितः ।
परिक्रामति यस्सर्वान् लोकान् सन्तापयन् प्रजाः ॥ ३०

तस्याहं राक्षसेन्द्रस्य स्वयमेव वधे धृतः ।
उत्तरं नगरद्वारमहं सौमित्रिणा सह ॥ ३१

निपीड्याभिप्रवेक्ष्यामि सबलो यत्र रावणः ।
वानरेन्द्रश्च बलवान् ऋक्षराजश्च वीर्यवान् ॥ ३२

राक्षसेन्द्रानुजश्चैव गुल्मो भवतु मध्यमः ।
न चैव मानुषं रूपं कार्यं हरिभिराहवे ॥ ३३

एषा भवतु संज्ञा नो युद्धेऽस्मिन् वानरे बले ।
वानरा एव नश्चिह्नं स्वजनेऽस्मिन् भविष्यति ॥ ३४
वयं तु मानुषेणैव सप्त योत्स्यामहे परान् ।
अहमेष सह भ्रात्रा लक्ष्मणेन महौजसा ॥ ३५
आत्मना पञ्चमश्चायं सखा मम विभीषणः ।"
स रामः कृत्यसिद्ध्यर्थमेवमुक्त्वा विभीषणम् ॥ ३६
सुवेलारोहणे बुद्धिश्चकार मतिमान् मतिम् ।
रमणीयतरं दृष्ट्वा सुवेलस्य गिरेस्तटम् ॥ ३७
ततस्तु रामो महता बलेन प्रच्छाद्य सर्वां पृथिवीं महात्मा ।
प्रहृष्टरूपोऽभिजगाम लङ्कां कृत्वा मतिं सोऽरिवधे महात्मा ॥ ३८

इति श्रीमद्युद्धकाण्डे सप्तत्रिंशस्सर्गः ॥

---

## ॥ अष्टत्रिंशस्सर्गः ॥

स तु कृत्वा सुवेलस्य मतिमारोहणं प्रति ।
लक्ष्मणानुगतो रामस्सुग्रीवमिदमब्रवीत् ॥ १
विभीषणं च धर्मज्ञमनुरक्तं निशाचरम् ।
मन्त्रज्ञं च विधिज्ञं च श्लक्ष्णया परया गिरा ॥ २
"सुवेलं साधु शैलेन्द्रमिमं धातुशतैश्चितम् ।
अध्यारोहामहे सर्वे वत्स्यामोऽत्र निशामिमाम् ॥ ३
लङ्कां चालोकयिष्यामो निलयं तस्य रक्षसः ।
येन मे मरणान्ताय हृता भार्या दुरात्मना ॥ ४
येन धर्मो न विज्ञातो न तद्वृत्तं कुलं तथा ।
राक्षस्या नीचया बुद्ध्या येन तद्गर्हितं कृतम् ॥ ५

तस्मिन्मे वर्तते रोषः कीर्तिते राक्षसाधमे ।
यस्यापराधान्नीचस्य वधं द्रक्ष्यामि रक्षसाम् ॥ ६

एको हि कुरुते पापं कालपाशवशं गतः ।
नीचेनात्मापचारेण कुलं तेन विनश्यति ॥" ७

एवं सम्मन्त्रयन्नेव सक्रोधो रावणं प्रति ।
रामस्सुवेलं वासाय चित्रसानुमुपारुहत् ॥ ८

पृष्ठतो लक्ष्मणश्चैनमन्वगच्छत्समाहितः ।
सशरं चापमुद्यम्य सुमहद्विक्रमे रतः ॥ ९

अन्वारुरोह सुग्रीवस्सामात्यस्सविभीषणः ।
हनूमानङ्गदो नीलो मैन्दो द्विविद एव च ॥ १०

गजो गवाक्षो गवयश्शरभो गन्धमादनः ।
पनसः कुमुदश्चैव हरो रम्भश्च यूथपः ॥ ११

जाम्बवांश्च सुषेणश्च ऋषभश्च महामतिः ।
दुर्मुखश्च महातेजास्तथा शतवलिः कपिः ॥ १२

एते चान्ये च बहवो वानराश्शीघ्रगामिनः ।
ते वायुवेगप्रवणास्तं गिरिं गिरिचारिणः ॥ १३

अध्यारोहन्त शतशस्सुवेलं यत्र राघवः ।
ते त्वदीर्घेण कालेन गिरिमारुह्य सर्वतः ॥ १४

ददृशुश्शिखरे तस्य विषक्तामिव खे पुरीम् ।
तां शुभां प्रवरद्वारां प्राकारपरिशोभिताम् ॥ १५

लङ्कां राक्षससम्पूर्णां ददृशुर्हरियूथपाः ।
प्राकारचयसंस्थैश्च तथा नीलैर्निशाचरैः ॥ १६

दद्दृशुस्ते हरिश्रेष्ठाः प्राकारमपरं कृतम् ।
ते दृष्ट्वा वानरास्सर्वे राक्षसान् युद्धकाङ्क्षिणः ॥ १७

मुमुचुर्विविधान्नादांस्तत्र रामस्य पश्यतः ।
ततोऽस्तमगमत्सूर्यस्सन्ध्यया प्रतिरञ्जितः ॥ १८

पूर्णचन्द्रप्रदीप्ता च क्षपा समभिवर्तते ॥
ततस्स रामो हरिवाहिनीपतिर्विभीषणेन प्रतिनन्द्य सत्कृतः ।
सलक्ष्मणो यूथपयूथसंवृतस्सुवेलपृष्ठे न्यवसद्यथासुखम् ॥ १९

इति श्रीमद्युद्धकाण्डे अष्टत्रिंशस्सर्गः ॥

---

## ॥ एकोनचत्वारिंशस्सर्गः ॥

तां रात्रिमुषितास्तत्र सुवेले हरिपुङ्गवाः ।
लङ्कायां दद्दृशुर्वीरा वनान्युपवनानि च ॥ १

समसौम्यानि रम्याणि विशालान्यायतानि च ।
दृष्टिरम्याणि ते दृष्ट्वा बभूवुर्जातविस्मयाः ॥ २

चम्पकाशोकपुन्नागसालतालसमाकुला ।
तमालवनसंछन्ना नागमालासमावृता ॥ ३
हिन्तालैरर्जुनैर्नीपैस्सप्तपर्णैश्च पुष्पितैः ।
तिलकैः कर्णिकारैश्च पाटलैश्च समन्ततः ॥ ४

शुशुभे पुष्पिताग्रैश्च लतापरिगतैर्द्रुमैः ।
लङ्का बहुविधैर्दिव्यैर्यथेन्द्रस्यामरावती ॥ ५

विचित्रकुसुमोपेतैरक्तकोमलपल्लवैः ।
शाद्वलैश्च तथा नीपैश्चित्राभिर्वनराजिभिः ॥ ६

गन्धाढ्यान्यभिरम्याणि पुष्पाणि च फलानि च।
धारयन्त्यगमास्तत्र भूषणानीव मानवाः ॥ ७

तच्चैत्ररथसङ्काशं मनोज्ञं नन्दनोपमम् ।
वनं सर्वर्तुकं रम्यं शुशुभे षट्पदायुतम् ॥ ८

नत्यूहकोयष्टिभकैर्नृत्यमानैश्च बर्हिभिः ।
रुतं परभृतानां च शुश्रुवुर्वननिर्झरे ॥ ९

नित्यमत्तविहङ्गानि भ्रमराचरितानि च ।
कोकिलाकुलषण्डाणि विहगाभिरुतानि च ॥ १०

भृङ्गराजाभिगीतानि भ्रमरैस्सेवितानि च ।
कोणालकविघुष्टानि सारसाभिरुतानि च ॥ ११

विविशुस्ते ततस्तानि वनान्युपवनानि च।
हृष्टाः प्रमुदिता वीरा हरयः कामरूपिणः ॥ १२

तेषां प्रविशतां तत्र वानराणां महौजसाम् ।
पुष्पसंसर्गसुरभिर्ववौ घ्राणसुखोऽनिलः ॥ १३

अन्ये तु हरिवीराणां यूथान्निष्क्रम्य यूथपाः।
सुग्रीवेणाभ्यनुज्ञाता लङ्कां जग्मुः पताकिनीम् ॥ १४

वित्रासयन्तो विहगांस्त्रासयन्तो मृगद्विपान् ।
कम्पयन्तश्च तां लङ्कां नादैस्ते नदतां वराः ॥ १५

कुर्वन्तस्ते महावेगा महीं चरणपीडिताम् ।
रजश्च सहसैवोर्ध्वं जगाम चरणोत्थितम् ॥ १६

ऋक्षास्सिंहा वराहाश्च महिषा वारणा मृगाः ।
तेन शब्देन वित्रस्ता जग्मुर्भीता दिशो दश ॥ १७

शिखरं तत्त्रिकूटस्य प्रांशु चैकं दिविस्पृशम् ।
समन्तात्पुष्पसंछन्नं महारजतसन्निभम् ॥ १८

शतयोजनविस्तीर्णं विमलं चारुदर्शनम् ।
श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ १९

मनसाऽपि दुरारोहं किंपुनः कर्मणा जनैः ।
निविष्टा तत्र शिखरे लङ्का रावणपालिता ॥ २०

शतयोजनविस्तीर्णा त्रिंशद्योजनमायता ।
सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसन्निभैः ॥ २१

काञ्चनेन च सालेन राजतेन च शोभिता ।
प्रासादैश्च विमानैश्च लङ्का परमभूषिता ॥ २२

घनैरिवाऽऽतपापाये मध्यमं वैष्णवं पदम् ।
यस्यां स्तम्भसहस्रेण प्रासादस्समलंकृतः ॥ २३

कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ।
चैत्यस्सराक्षसेन्द्रस्य बभूव पुरभूषणम् ॥ २४

शतेन रक्षसां नित्यं यस्समग्रेण रक्ष्यते ।
मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् ॥ २५

नाना धातुविचित्रैश्च उद्यानैरुपशोभिताम् ।
नानाविहगसंघुष्टां नानामृगनिषेविताम् ॥ २६

नानाकाननसन्तानां नानाराक्षससेविताम् ।
तां समृद्धां समृद्धार्थां लक्ष्मीवान् लक्ष्मणाग्रजः ॥ २७

रावणस्य पुरीं रामो ददर्श सहवानरैः ।
तां महागृहसम्बाधां दृष्ट्वा लक्ष्मणपूर्वजः ॥ २८

नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ॥
तां रत्नपूर्णां बहुसंविधानां प्रासादमालाभिरलंकृतां च ।
पुरीं महायन्त्रकवाटमुख्यां ददर्श रामो महता बलेन ॥ २९

इति श्रीमद्युद्धकाण्डे एकोनचत्वारिंशस्सर्गः ॥

---

## ॥ चत्वारिंशस्सर्गः ॥

ततो रामस्सुवेलाग्रं योजनद्वयमण्डलम् ।
आरुरोह ससुग्रीवो हरियूथपसंवृतः ॥ १

स्थित्वा मुहूर्तं तत्रैव दिशो दश विलोकयन् ।
त्रिकूटशिखरे रम्यां निर्मितां विश्वकर्मणा ॥ २

ददर्श लङ्कां सुन्यस्तां रम्यकाननशोभिताम् ।
तस्यां गोपुरशृङ्गस्थं राक्षसेन्द्रं दुरासदम् ॥ ३

श्वेतचामरपर्यन्तं विजयच्छत्रशोभितम् ।
रक्तचन्दनसंलिप्तं रत्नाभरणभूषितम् ॥ ४

नीलजीमूतसङ्काशं हेमसंछादिताम्बरम् ।
ऐरावतविषाणाग्रैरुत्कृष्टकिणवक्षसम् ॥ ५

शशलोहितरागेण संवीतं रक्तवाससा ।
सन्ध्यातपेन संवीतं मेघराशिमिवाम्बरे ॥ ६

पश्यतां वानरेन्द्राणां राघवस्यापि पश्यतः ।
दर्शनाद्राक्षसेन्द्रस्य सुग्रीवस्सहसोत्थितः ॥ ७

क्रोधवेगेन संयुक्तस्सत्त्वेन च बलेन च ।
अचलाग्रादथोत्थाय पुप्लुवे गोपुरस्थले ॥ ८

स्थित्वा मुहूर्तं संप्रेक्ष्य निर्भयेनान्तरात्मना ।
तृणीकृत्य च तद्रक्षस्सोऽब्रवीत्परुषं वचः ॥ ९

"लोकनाथस्य रामस्य सखा दासोऽस्मि राक्षस ।
न मया मोक्ष्यसेऽद्य त्वं पार्थिवेन्द्रस्य तेजसा ॥" १०

इत्युक्त्वा सहसोत्पत्य पुप्लुवे तस्य चोपरि ।
आकृष्य मुकुटं चित्रं पातयित्वाऽपतद्भुवि ॥ ११

समीक्ष्य तूर्णमायान्तमाबभाषे निशाचरः ।
"सुग्रीवस्त्वं परोक्षं मे हीनग्रीवो भविष्यसि ॥" १२

इत्युक्त्वोत्थाय तं क्षिप्रं बाहुभ्यामाक्षिपत्तले ।
कन्तुवत्तं समुत्थाय बाहुभ्यामाक्षिपद्धरिः ॥ १३

परस्परं स्वेदविदिग्धगात्रौ परस्परं शोणितदिग्धदेहौ ।
परस्परं श्लिष्टनिरुद्धचेष्टौ परस्परं शाल्मलिकिंशुकौ यथा ॥ १४

मुष्टिप्रहारैश्च तलप्रहारैररत्निघातैश्च कराग्रघातैः ।
तौ चक्रतुर्युद्धमसह्यरूपं महाबलौ वानरराक्षसेन्द्रौ ॥ १५

कृत्वा नियुद्धं भृशमुग्रवेगौ कालं चिरं गोपुरवेदिमध्ये ।
उत्क्षिप्य चाक्षिप्य विनम्य देहौ पादक्रमाद्गोपुरवेदिलग्नौ ॥ १६

अन्योन्यमाविध्य विलग्नदेहौ तौ पेततुस्सालनिखातमध्ये ।
उत्पेततुर्भूतलमस्पृशन्तौ स्थित्वा मुहूर्तं त्वभिनिःश्वसन्तौ ॥ १७

आलिङ्ग्य चावल्य च बाहुयोक्त्रैस्संयोजयामासतुराहवे तौ ।
संरम्भशिक्षाबलसंप्रयुक्तौ संचेरतुस्संप्रति युद्धमार्गैः ॥ १८

शार्दूलसिंहाविव जातदर्पौ गजेन्द्रपोताविव संप्रयुक्तौ ।
संहत्य चापीड्य च तावुरोभ्यां निपेततुर्वै युगपद्धरण्याम् ॥ १९

उद्यम्य चान्योन्यमधिक्षिपन्तौ संचक्रमाते बहुयुद्धमार्गैः ।
व्यायामशिक्षाबलसंप्रयुक्तौ क्लमं न तौ जग्मतुराशु वीरौ ॥ २०

बाहूत्तमैर्वारणवारणाभैर्निवारयन्तौ परिवारणाभौ ।
चिरेण कालेन तु संप्रयुक्तौ संचेरतुर्मण्डलमार्गमाशु ॥ २१

तौ परस्परमासाद्य यत्तावन्योन्यसूदने ।
मार्जाराविव भक्ष्यार्थे वितस्थाते मुहुर्मुहुः ॥ २२

मण्डलानि विचित्राणि स्थानानि विविधानि च ।
गोमूत्रिकाणि चित्राणि गतप्रत्यागतानि च ॥ २३

तिरश्चीनगतान्येव तथा वक्रगतानि च ।
परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ २४

अभिद्रवणमाप्लावमास्थानं च सविग्रहम् ।
परावृत्तमपावृत्तमवद्रुतमवप्लुतम् ॥ २५

उपन्यस्तमपन्यस्तं युद्धमार्गविशारदौ ।
तौ संचेरतुरन्योन्यं वानरेन्द्रश्च रावणः ॥ २६

(तं तु यत्तं समुत्थाय बाहुभ्यामक्षिपद्धरिः । )
एतस्मिन्नन्तरे रक्षो मायाबलमथाऽऽत्मनः ॥ २७

आरब्धुमुपसंपेदे ज्ञात्वा तं वानराधिपः ।
उत्पपात तदाऽऽकाशं जितकाशी जितक्लमः ॥ २८

रावणः स्थित एवात्र हरिराजेन वंचितः ।

अथ हरिवरनाथः प्राप्य संग्रामकीर्तिं
निशिचरपतिमाजौ योजयित्वा श्रमेण ।
गगनमतिविशालं लङ्घयित्वाऽर्कसूनु-
र्हरिवरगणमध्ये रामपार्श्वं जगाम ॥ २९

इति स सवितृसूनुस्तत्र तत्कर्म कृत्वा
पवनगतिरनीकं प्राविशत्संप्रहृष्टः ।
रघुवरनृपसूनोर्वर्धयन्युद्धहर्षं
तरुमृगगणमुख्यैः पूज्यमानो हरीन्द्रः ॥ ३०

इति श्रीमद्युद्धकाण्डे चत्वारिंशस्सर्गः ॥

---

## ॥ एकचत्वारिंशस्सर्गः ॥

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
सुग्रीवं संपरिष्वज्य तदा वचनमब्रवीत् ॥ १

"असम्मन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।
एवं साहसकर्माणि न कुर्वन्ति जनेश्वराः ॥ २

संशये स्थाप्य मां चेदं बलं च सविभीषणम् ।
कष्टं कृतमिदं वीर! साहसं साहसप्रिय! ॥ ३

इदानीं माकृथा वीर! एवंविधमचिन्तितम् ।
त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ॥ ४

भरतेन महाबाहो! लक्ष्मणेन यवीयसा ।
शत्रुघ्नेन च शत्रुघ्न! स्वशरीरेण वा पुनः ॥ ५

त्वयि चानागते पूर्वमिति मे निश्चिता मतिः ।
जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम! ॥ ६

हत्वाऽहं रावणं युद्धे सपुत्त्रबलवाहनम् ।
अभिषिच्य च लङ्कायां विभीषणमथापि च ॥ ७

भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ।"
तमेवं वादिनं रामं सुग्रीवः प्रत्यभाषत ॥ ८

"तव भार्यापहर्तारं दृष्ट्वा राघव! रावणम्।
मर्षयामि कथं वीर! जानन्पौरुषमात्मनः॥" ९

इत्येवं वादिनं वीरमभिनन्द्य सराघवः।
लक्ष्मणं लक्ष्मिसम्पन्नमिदं वचनमब्रवीत्॥ १०

"परिगृह्योदकं शीतं वनानि फलवन्ति च।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण॥ ११

लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम्।
निबर्हणं प्रवीराणामृक्षवानररक्षसाम्॥ १२

वाताश्च परुषा वान्ति कम्पते च वसुन्धरा।
पर्वताग्राणि वेपन्ते पतन्ति धरणीरुहाः॥ १३

मेघाः क्रव्यादसङ्काशाः परुषाः परुषस्वनाः।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः॥ १४

रक्तचन्दनसङ्काशा सन्ध्या परमदारुणा।
ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम्॥ १५

आदित्यमभिवाश्यन्ति जनयन्तो महद्भयम्।
दीना दीनस्वरा घोरा नप्रशस्ता मृगद्विजाः॥ १६

रजन्यामप्रकाशश्च सन्तापयति चन्द्रमाः।
कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये॥ १७

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषस्सुलोहितः।
आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते॥ १८

दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते।
युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति॥ १९

काकाश्श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥ २०

क्षिप्रमद्य दुराधर्षां लङ्कां रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥" २१

इत्येवं संवदन्वीरो लक्ष्मणं लक्ष्मणाग्रजः ।
तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ २२

अवतीर्य च धर्मात्मा तस्माच्छैलात्सराघवः ।
परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ २३

सन्नह्य तु ससुग्रीवः कपिराजबलं महत् ।
कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ २४

ततः काले महाबाहुर्बलेन महता वृतः ।
प्रस्थितः पुरतो धन्वी लङ्कामभिमुखः पुरीम् ॥ २५

तं विभीषणसुग्रीवौ हनूमान् जाम्बवान्नलः ।
ऋक्षराजस्तथा नीलो लक्ष्मणश्चान्वयुस्तदा ॥ २६

ततः पश्चात्सुमहती पृतनर्क्षवनौकसाम् ।
प्रच्छाद्य महतीं भूमिमनुयाति स्म राघवम् ॥ २७

शैलशृङ्गाणि शतशः प्रवृद्धांश्च महीरुहान् ।
जगृहुः कुञ्जरप्रख्या वानराः परवारणाः ॥ २८

तौ त्वदीर्घेण कालेन भ्रातरौ रामलक्ष्मणौ ।
रावणस्य पुरीं लङ्कामासेदतुररिन्दमौ ॥ २९

पताकमालिनीं रम्यामुद्यानवरशोभिताम् ।
चित्रवप्रां सुदुष्प्रापामुच्चैः प्राकारतोरणाम् ॥ ३०

तां सुरैरपि दुर्धर्षां रामवाक्यप्रचोदिताः ।
यथा निवेशं सम्पीड्य न्यविशन्त वनौकसः ॥ ३१

लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ।
रामस्सहानुजो धन्वी जुगोप च रुरोध च ॥ ३२

लङ्कामुपनिविष्टश्च रामो दशरथात्मजः ।
लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ ३३

उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः ।
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ ३४

रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ।
सायुधैराक्षसैर्भीमैरभिगुप्तं समन्ततः ॥ ३५

लघूनां त्रासजननं पातालमिव दानवैः ।
विन्यस्तानि च योधानां बहूनि विविधानि च ॥ ३६

ददर्शाऽऽयुधजालानि तत्रैव कवचानि च ।
पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ॥ ३७

अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान् ।
अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ॥ ३८

ऋषभेण गवाक्षेण गजेन गवयेन च ।
हनूमान्पश्चिमद्वारं ररक्ष बलवान्कपिः ॥ ३९

प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च संगतः ।
मध्यमे च स्वयं गुल्मे सुग्रीवस्समतिष्ठत ॥ ४०

सहस्रैर्हरिश्रेष्ठैस्सुपर्णश्वसनोपमैः ।
वानराणां तु षट्त्रिंशत्कोट्यः प्रख्यातयूथपाः ॥ ४१

निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ।
शासनेन तु रामस्य लक्ष्मणस्सविभीषणः ॥ ४२

द्वारेद्वारे हरीणां तु कोटिं कोटिं न्यवेशयत् ।
पश्चिमेन तु रामस्य सुग्रीवस्सहजाम्बवान् ॥ ४३

अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ।
ते तु वानरशार्दूलाश्शार्दूला इव दंष्ट्रिणः ॥ ४४

गृहीत्वा द्रुमशैलाग्रान् हृष्टा युद्धाय तस्थिरे ।
सर्वे विकृतलाङ्गूलास्सर्वे दंष्ट्रानखायुधाः ॥ ४५

सर्वे विकृतचित्राङ्गास्सर्वे च विकृताननाः ।
दशनागबलाः केचित् केचिद्दशगुणोत्तराः ॥ ४६

केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ।
सन्ति चौघबलाः केचित् केचिच्छतगुणोत्तराः ॥ ४७

अप्रमेयबलाश्चान्ये तत्रासन्हरियूथपाः ।
अद्भुतश्च विचित्रश्च तेषामासीत्समागमः ॥ ४८

तत्र वानरसैन्यानां शलभानामिवोद्यमः ।
परिपूर्णमिवाऽऽकाशं संछन्नेव च मेदिनी ॥ ४९

लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः ।
शतं शतसहस्राणां पृथगृक्षवनौकसाम् ॥ ५०

लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ।
आवृतस्सगिरिस्सर्वैस्तैस्समन्तात् प्लवङ्गमैः ॥ ५१

अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ।
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ॥ ५२

संवृता सर्वतो लङ्का दुष्प्रवेशाऽपि वायुना ।
राक्षसा विस्मयं जग्मुस्सहसाऽभिनिपीडिताः ॥ ५३

वानरैर्मेघसङ्काशैश्शक्रतुल्यपराक्रमैः ।
महान् शब्दोऽभवत्तत्र बलौघस्याभिवर्ततः ॥ ५४

सागरस्येव भिन्नस्य यथा स्यात्सलिलस्वनः ।
तेन शब्देन महता सप्राकारा सतोरणा ॥ ५५

लङ्का प्रचलिता सर्वा सशैलवनकानना ।
रामलक्ष्मणगुप्ता सा सुग्रीवेण च वाहिनी ॥ ५६

बभूव दुर्धर्षतरा सर्वैरपि सुरासुरैः ।
राघवस्सन्निवेश्यैव सैन्यं स्वं रक्षसां वधे ॥ ५७

सम्मन्त्र्य मन्त्रिभिस्सार्धं निश्चित्य च पुनः पुनः ।
आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ॥ ५८

विभीषणस्यानुमते राजधर्ममनुस्मरन् ।
अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ५९

"गत्वा सौम्य दशग्रीव ब्रूहि मद्वचनात्कपे ।
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥" ६०

भ्रष्टश्रीक ! गतैश्वर्य ! मुमूर्षो ! नष्टचेतन !
ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ६१

नागानामथ यक्षाणां राज्ञां च रजनीचर ।
यच्च पापं कृतं मोहादवलिप्तेन राक्षस ! ॥ ६२

नूनमद्य गतो दर्पस्स्वयम्भुवरदानजः ।
यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः ॥ ६३

दण्डं धारयमाणस्तु लङ्काद्वारे ह्यवस्थितः ।
पदवीं देवतानां च महर्षीणां च राक्षस! ॥ ६४
राजर्षीणां च सर्वेषां गमिष्यसि मया हतः ।
बलेन येन वै सीतां मायया राक्षसाधम! ॥ ६५
यामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय ।
अराक्षसमिमं लोकं कर्ताऽस्मि निशितैश्शरैः ॥ ६६
न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ।
धर्मात्मा रक्षसां श्रेष्ठस्सम्प्राप्तोऽयं विभीषणः ॥ ६७
लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ।
न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ॥ ६८
शक्यं मूर्खसहायेन पापेनाविदितात्मना ।
युध्यस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस! ॥ ६९
मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि ।
यद्वा विशसि लोकांस्त्रीन् पक्षिभूतो मनोजवः ॥ ७०
मम चक्षुष्पथं प्राप्य न जीवन् प्रतियास्यसि ।
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदैहिकम् ॥ ७१
सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ।"
इत्युक्तस्स तु तारेयो रामेणाक्लिष्टकर्मणा ॥ ७२
जगामाऽऽकाशमाविश्य मूर्तिमानिव हव्यवाट् ।
सोऽतिपत्य मुहूर्तेन श्रीमाद्रावणमन्दिरम् ॥ ७३
ददर्शाऽऽसीनमव्यग्रं रावणं सचिवैस्सह ।
ततस्तस्याविदूरे स निपत्य हरिपुङ्गवः ॥ ७४

दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ।
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ॥ ७५

सामात्यं श्रावयामास निवेद्यात्मानमात्मना ।
"दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ॥ ७६

वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ।
आह त्वां राघवो रामः कौसल्यानन्दवर्धनः ॥ ७७

निष्पत्य प्रतियुध्यस्व नृशंस ! पुरुषो भव ।
हन्तास्मि त्वां सहामात्यं सपुत्त्रज्ञातिबान्धवम् ॥ ७८

निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ ७९

शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ।
विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ॥ ८०

न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ।"
इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुङ्गवे ॥ ८१

अमर्षवशमापन्नो निशाचरगणेश्वरः ।
ततस्स रोषताम्राक्षश्शशास सचिवांस्तदा ॥ ८२

"गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ।"
रावणस्य वचश्श्रुत्वा दीप्ताग्निसमतेजसः ॥ ८३

जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ।
ग्राहयामास तारेयस्स्वयमात्मानमात्मवान् ॥ ८४

बलं दर्शयितुं वीरो यातुधानगणे तदा ।
स तान् बाहुद्वये सक्तानादाय पतगानिव ॥ ८५

प्रासादं शैलसङ्काशमुत्पपाताङ्गदस्तदा ।
तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः ॥ ८६

भूमौ निपतितास्सर्वे राक्षसेन्द्रस्य पश्यतः ।
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् ॥ ८७

ददर्श राक्षसेन्द्रस्य वालिपुत्रः प्रतापवान् ।
तत्पफाल पदाक्रान्तं दशग्रीवस्य पश्यतः ॥ ८८

पुरा हिमवतश्शृङ्गं वज्रिणेव विदारितम् ।
भङ्क्त्वा प्रासादशिखरं नाम विश्राव्य चात्मनः ॥ ८९

विनद्य सुमहानादमुत्पपात विहायसम् ।
व्यथयन्राक्षसान् सर्वान् हर्षयंश्चापि वानरान् ॥ ९०

स वानराणां मध्ये तु रामपार्श्वमुपागतः ।
रावणस्तु परं चक्रे क्रोधं प्रासादधर्षणात् ॥ ९१

विनाशं चात्मनः पश्यन्निश्वासपरमोऽभवत् ।
रामस्तु बहुभिर्हृष्टैर्निनदद्भिः प्लवङ्गमैः ॥ ९२

वृतो रिपुवधाकाङ्क्षी युद्धायैवाभ्यवर्तत ।
सुषेणस्तु महावीर्यो गिरिकूटोपमो हरिः ॥ ९३

बहुभिस्संवृतस्तत्र वानरैः कामरूपिभिः ।
चतुर्द्वाराणि सर्वाणि सुग्रीववचनात्कपिः ॥ ९४

पर्यक्रामत दुर्धर्षो नक्षत्राणीव चन्द्रमाः ।
तेषामक्षौहिणिशतं समवेक्ष्य वनौकसाम् ॥ ९५

लङ्कामुपनिविष्टानां सागरं चातिवर्तताम् ।
राक्षसा विस्मयं जग्मुस्त्रासं जग्मुस्तथापरे ॥ ९६

अपरे समरोद्धर्षाद्धर्षमेव प्रपेदिरे ।
कृत्स्नं हि कपिभिर्व्याप्तं प्राकारपरिखान्तरम् ॥ १७
ददृशू राक्षसा दीनाः प्राकारं वानरीकृतम् ।
हाहाकारं प्रकुर्वन्ति राक्षसा भयमोहिताः ॥ १८
तस्मिन्महाभीषणके प्रवृत्ते कोलाहले राक्षसराजधान्याम् ।
प्रगृह्य रक्षांसि महायुधानि युगान्तवाता इव संविचेरुः ॥ १९

इति श्रीमद्युद्धकाण्डे एकचत्वारिंशस्सर्गः ॥

---

## ॥ द्विचत्वारिंशस्सर्गः ॥

ततस्ते राक्षसास्तत्र गत्वा रावणमन्दिरम् ।
न्यवेदयन् पुरीं रुद्धां रामेण सहवानरैः ॥ १
रुद्धां तु नगरीं श्रुत्वा जातक्रोधो निशाचरः ।
विधानं द्विगुणं कृत्वा प्रासादं सोऽध्यरोहत ॥ २
स ददर्शावृतां लङ्कां सशैलवनकाननाम् ।
असंख्येयैर्हरिगणैस्सर्वतो युद्धकाङ्क्षिभिः ॥ ३
स दृष्ट्वा वानरैस्सर्वां वसुधां कबलीकृताम् ।
'कथं क्षपयितव्यास्स्यु' रिति चिन्तापरोऽभवत् ॥ ४
स चिन्तयित्वा सुचिरं धैर्यमालम्ब्य रावणः ।
राघवं हरियूथांश्च ददर्शाऽऽयतलोचनः ॥ ५
राघवस्सहसैन्येन मुदितो नाम पुप्लुवे ।
लङ्कां ददर्श गुप्तां वै सर्वतो राक्षसैर्वृताम् ॥ ६
दृष्ट्वा दाशरथिर्लङ्कां चित्रध्वजपताकिनीम् ।
जगाम सहसा सीतां दूयमानेन चेतसा ॥ ७

अत्र सा मृगशावाक्षी मत्कृते जनकात्मजा ।
पीड्यते शोकसन्तप्ता कृशा स्थण्डिलशायिनी ॥ ८

पीड्यमानां स धर्मात्मा वैदेहीमनुचिन्तयन् ।
क्षिप्रमाज्ञापयामास वानरान् द्विषतां वधे ॥ ९

एवमुक्ते तु वचने रामेणाक्लिष्टकर्मणा ।
सङ्घर्षमाणाः प्लवगास्सिंहनादैरनादयन् ॥ १०

"शिखरैर्विकिरामैनां लङ्कां मुष्टिभिरेव वा" ।
इति स्म दधिरे सर्वे मनांसि हरियूथपाः ॥ ११

उद्यम्य गिरिशृङ्गाणि शिखराणि महान्ति च ।
तरूंश्चोत्पाट्य विविधांस्तिष्ठन्ति हरियूथपाः ॥ १२

प्रेक्षतो राक्षसेन्द्रस्य तान्यनीकानि भागशः ।
राघवप्रियकामार्थं लङ्कामारुरुहुस्तदा ॥ १३

ते ताम्रवक्त्रा हेमाभा रामार्थे त्यक्तजीविताः ।
लङ्कामेवाभ्यवर्तन्त सालतालशिलायुधाः ॥ १४

ते द्रुमैः पर्वताग्रैश्च मुष्टिभिश्च प्लवङ्गमाः ।
प्राकाराग्राण्यसंख्यानि ममन्थुस्तोरणानि च ॥ १५

परिखाः पूरयन्ति स्म प्रसन्नसलिलायुताः ।
पांसुभिः पर्वताग्रैश्च तृणैः काष्ठैश्च वानराः ॥ १६

ततस्सहस्रयूथाश्च कोटियूथाश्च वानराः ।
कोटीशतयुताश्चान्ये लङ्कामारुरुहुस्तदा ॥ १७

काञ्चनानि प्रमृद्नन्तस्तोरणानि प्लवङ्गमाः ।
कैलासशिखराभाणि गोपुराणि प्रमथ्य च ॥ १८

आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
लङ्कां तामभिधावन्ति महावारणसन्निभाः ॥ १९

"जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥" २०

इत्येवं घोषयन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
अभ्यधावन्त लङ्कायाः प्राकारं कामरूपिणः ॥ २१

वीरबाहुस्सुबाहुश्च नलश्च वनगोचरः ।
निपीड्योपनिविष्टास्ते प्राकारं हरियूथपाः ॥ २२

एतस्मिन्नन्तरे चक्रुः स्कन्धावारनिवेशनम् ।
पूर्वद्वारं तु कुमुदः कोटिभिर्दशभिर्वृतः ॥ २३

आवृत्य बलवांस्तस्थौ हरिभिर्जितकाशिभिः ।
साहाय्यार्थं तु तस्यैव निविष्टः प्रघसो हरिः ॥ २४

पनसश्च महाबाहुर्वानरैर्बहुभिर्वृतः ।
दक्षिणद्वारमागम्य वीरश्शतबलिः कपिः ॥ २५

आवृत्य बलवांस्तस्थौ विंशत्या कोटिभिर्वृतः ।
सुषेणः पश्चिमद्वारं गतस्तारापिता हरिः ॥ २६

आवृत्य बलवांस्तस्थौ षष्टिकोटिभिरावृतः ।
उत्तरद्वारमासाद्य रामस्सौमित्रिणा सह ॥ २७

आवृत्य बलवांस्तस्थौ सुग्रीवश्च हरीश्वरः ।
गोलाङ्गूलो महाकायो गवाक्षो भीमदर्शनः ॥ २८

वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ।
ऋक्षाणां भीमवेगानां धूम्रश्शत्रुनिबर्हणः ॥ २९

वृतः कोट्या महावीर्यस्तस्थौ रामस्य पार्श्वतः ।
सन्नद्धस्तु महावीर्यो गदापाणिर्विभीषणः ॥ ३०

वृतो यत्तैस्तु सचिवैस्तस्थौ तत्र महाबलः ।
गजो गवाक्षो गवयश्शरभो गन्धमादनः ॥ ३१

समन्तात्परिधावन्तो ररक्षुर्हरिवाहिनीम् ।
ततः कोपपरीतात्मा रावणो राक्षसेश्वरः ॥ ३२

निर्याणं सर्वसैन्यानां द्रुतमाज्ञापयत्तदा ।
एतच्छ्रुत्वा ततो वाक्यं रावणस्य मुखोद्गतम् ॥ ३३

सहसा भीमनिर्घोषमुद्घुष्टं रजनीचरैः ।
ततः प्रचोदिता भेर्यश्चन्द्रपाण्डुरपुष्कराः ॥ ३४

हेमकोणाहता भीमा राक्षसानां समन्ततः ।
विनेदुश्च महाघोषाश्शङ्खाश्शतसहस्रशः ॥ ३५

राक्षसानां सुघोराणां मुखमारुतपूरिताः ।
ते बभुश्शुभनीलाङ्गास्सशङ्खा रजनीचराः ॥ ३६

विद्युन्मण्डलसन्नद्धास्सबलाका इवाम्बुदाः ।
निष्पतन्ति ततस्सैन्या हृष्टा रावणचोदिताः ॥ ३७

समये पूर्यमाणस्य वेगा इव महोदधेः ।
ततो वानरसैन्येन मुक्तो नादस्समन्ततः ॥ ३८

मलयः पूरितो येन ससानुप्रस्थकन्दरः ।
शङ्खदुन्दुभिसंघुष्टस्सिंहनादस्तरस्विनाम् ॥ ३९

पृथिवीं चान्तरिक्षं च सागरं चैव नादयन् ।
गजानां बृंहितैस्सार्धं हयानां हेषितैरपि ॥ ४०

रथानां नेमिघोषैश्च रक्षसां वदनस्वनैः ।
एतस्मिन्नन्तरे घोरस्संग्रामस्समवर्तत ॥ ४१

रक्षसां वानराणां च यथा देवासुरे पुरा ।
ते गदाभिः प्रदीप्ताभिश्शक्तिशूलपरश्वधैः ॥ ४२

निजघ्नुर्वानरान् घोराः कथयन्तस्स्वविक्रमान् ।
'राजा जयति सुग्रीव' इति शब्दो महानभूत् ॥ ४३

राजन्! जयजये'त्युक्त्वा स्वस्वनामकथां ततः ।
तथा वृक्षैर्महाकायाः पर्वताग्रैश्च वानराः ॥ ४४

निजघ्नुस्तानि रक्षांसि नखैर्दन्तैश्च वेगिताः ।
राक्षसास्त्वपरे भीमाः प्राकारस्था महीगतान् ॥ ४५

भिण्डिवालैश्च खड्गैश्च शूलैश्चैव व्यदारयन् ।
वानराश्चापि संक्रुद्धाः प्राकारस्थान्महीगताः ॥ ४६

राक्षसान् पातयामासुस्समाप्लुत्य प्लवङ्गमाः ।
स संप्रहारस्तुमुलो मांसशोणितकर्दमः ॥ ४७

रक्षसां वानराणां च सम्बभूवाद्भुतोपमः ।

इति श्रीमद्युद्धकाण्डे द्विचत्वारिंशस्सर्गः ॥

---

## ॥ त्रिचत्वारिंशस्सर्गः ॥

युध्यतां तु ततस्तेषां वानराणां महात्मनाम् ।
रक्षसां सम्बभूवाथ बलकोपस्सुदारुणः ॥ १

ते हयैः काञ्चनापीडैर्ध्वजैश्चाग्निशिखोपमैः ।
रथैश्चादित्यसङ्काशैः कवचैश्च मनोरमैः ॥ २

निर्ययू राक्षसव्याघ्रा नादयन्तो दिशो दश ।
राक्षसा भीमकर्माणो रावणस्य जयैषिणः ॥ ३

वानराणामपि चमूर्बृहती जयमिच्छताम् ।
अभ्यधावत तां सेनां रक्षसां कामरूपिणाम् ॥ ४

एतस्मिन्नन्तरे तेषामन्योन्यमभिधावताम् ।
रक्षसां वानराणां च द्वन्द्वयुद्धमवर्तत ॥ ५

अङ्गदेनेन्द्रजित्सार्धं वालिपुत्त्रेण राक्षसः ।
अयुध्यत महातेजास्त्र्यम्बकेन यथाऽन्तकः ॥ ६

प्रजङ्घेन च सम्पातिर्नित्यं दुर्मर्षणो रणे ।
जम्बुमालिनमारब्धो हनूमानपि वानरः ॥ ७

सङ्गतस्सुमहाक्रोधो राक्षसो रावणानुजः ।
समरे तीक्ष्णवेगेन मित्रघ्नेन विभीषणः ॥ ८

तपनेन गजस्सार्धं राक्षसेन महाबलः ।
निकुम्भेन महातेजा नीलोऽपि समयुध्यत ॥ ९

वानरेन्द्रस्तु सुग्रीवः प्रघसेन समागतः ।
सङ्गतस्समरे श्रीमान् विरूपाक्षेण लक्ष्मणः ॥ १०

अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ।
सुप्तघ्नो यज्ञकूपश्च रामेण सहसङ्गताः ॥ ११

वज्रमुष्टिस्तु मैन्देन द्विविदेनाशनिप्रभः ।
राक्षसाभ्यां सुघोराभ्यां कपिमुख्यौ समागतौ ॥ १२

वीरः प्रतपनो घोरो राक्षसो रणदुर्धरः ।
समरे तीक्ष्णवेगेन नलेन समयुध्यत ॥ १३

धर्मस्य पुत्त्रो बलवान् सुषेण इति विश्रुतः ।
स विद्युन्मालिना सार्धमयुध्यत महाकपिः ॥ १४

वानराश्चापरे भीमा राक्षसैरपरैस्सह ।
द्वन्द्वं समीयुर्बहुधा युद्धाय बहुभिस्सह ॥ १५

तत्राऽऽसीत्सुमहद्युद्धे तुमुलं रोमहर्षणम् ।
रक्षसां वानराणां च वीराणां जयमिच्छताम् ॥ १६

हरिराक्षसदेहेभ्यः प्रभूताः केशशाद्वलाः ।
शरीरसङ्घाटवहाः प्रसस्रुश्शोणितापगाः ॥ १७

आजघानेन्द्रजित्क्रुद्धो वज्रेणेव शतक्रतुः ।
अङ्गदं गदया वीरं शत्रुसैन्यविदारणम् ॥ १८

तस्य काञ्चनचित्राङ्गं रथं साश्वं ससारथिम् ।
जघान समरे श्रीमानङ्गदो वेगवान्कपिः ॥ १९

सम्पातिस्तु त्रिभिर्बाणैः प्रजङ्घेन समाहतः ।
निजघानाश्वकर्णेन प्रजङ्घं रणमूर्धनि ॥ २०

जम्बुमाली रथस्थस्तु रथशक्त्या महाबलः ।
बिभेद समरे क्रुद्धो हनूमन्तं स्तनान्तरे ॥ २१

तस्य तं रथमास्थाय हनूमान्मारुतात्मजः ।
प्रममाथ तलेनाशु सह तेनैव रक्षसा ॥ २२

नदन् प्रतपनो घोरो नलं सोऽप्यन्वधावत ।
नलः प्रतपनस्याशु पातयामास चक्षुषी ॥ २३

भिन्नगात्रश्शरैस्तीक्ष्णैः क्षिप्रहस्तेन रक्षसा ।
ग्रसन्तमिव सैन्यानि प्रघसं वानराधिपः ॥ २४

सुग्रीवस्सप्तपर्णेन निर्बिभेद जघान च ।
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च राक्षसः ॥ २५

सुप्तघ्नो यज्ञकोपश्च रामं निर्बिभिदुश्शरैः ।
तेषां चतुर्णां रामस्तु शिरांसि निशितैश्शरैः ॥ २६

क्रुद्धश्चतुर्भिश्चिच्छेद घोरैरग्निशिखोपमैः ।
वज्रमुष्टिस्तु मैन्देन मुष्टिना निहतो रणे ॥ २७

पपात सरथस्साश्वः पुराट्ट इव भूतले ।
निकुम्भस्तु रणे नीलं नीलाञ्जनचयप्रभम् ॥ २८

निर्बिभेद शरैस्तीक्ष्णैः करैर्मेघमिवांशुमान् ।
पुनश्शरशतेनाथ क्षिप्रहस्तो निशाचरः ॥ २९

बिभेद समरे नीलं निकुम्भः प्रजहास च ।
तस्यैव रथचक्रेण नीलो विष्णुरिवाहवे ॥ ३०

शिरश्चिच्छेद समरे निकुम्भस्य च सारथेः ।
वज्राशनिसमस्पर्शो द्विविदोऽप्यशनिप्रभम् ॥ ३१

जघान गिरिशृङ्गेण मिषतां सर्वरक्षसाम् ।
द्विविदं वानरेन्द्रं तु नगयोधिनमाहवे ॥ ३२

शरैरशनिसङ्काशैस्स विव्याधाशनिप्रभः ।
स शरैरतिविद्धाङ्गो द्विविदः क्रोधमूर्छितः ॥ ३३

सालेन सरथं साश्वं निजघानाशनिप्रभम् ।
विद्युन्माली रथस्थस्तु शरैः काञ्चनभूषणैः ॥ ३४

सुषेणं ताडयामास ननाद च मुहुर्मुहुः ।
तं रथस्थमथो दृष्ट्वा सुषेणो वानरोत्तमः ॥ ३५

गिरिशृङ्गेण महता रथमाशु न्यपातयत् ।
लाघवेन तु संयुक्तो विद्युन्माली निशाचरः ॥ ३६
अपक्रम्य रथात्तूर्णं गदापाणिः क्षितौ स्थितः ।
ततः क्रोधसमाविष्टस्सुषेणो हरिपुङ्गवः ॥ ३७
शिलां सुमहतीं गृह्य निशाचरमभिद्रवत् ।
तमापतन्तं गदया विद्युन्माली निशाचरः ॥ ३८
वक्षस्यभिजघानाशु सुषेणं हरिसत्तमम् ।
गदाप्रहारं तं घोरमचिन्त्य प्लवगोत्तमः ॥ ३९
तां शिलां पातयामास तस्योरसि महामृधे ।
शिलाप्रहाराभिहतो विद्युन्माली निशाचरः ॥ ४०
निष्पिष्टहृदयो भूमौ गतासुर्निपपात ह ।
एवं तैर्वानरैश्शूरैश्शूरास्ते रजनीचराः ॥ ४१
द्वन्द्वे विमृदितास्तत्र दैत्या इव दिवौकसैः ।
भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टसैः ॥ ४२
अपविद्धैश्च भिन्नैश्च रथैस्सांग्रामिकैर्हयैः ।
निहतैः कुञ्जरैर्मत्तैस्तथा वानरराक्षसैः ॥ ४३
चक्राक्षयुगदण्डैश्च भग्नैर्धरणिसंश्रितैः ।
बभूवायोधनं घोरं गोमायुगणसंकुलम् ॥ ४४
कबन्धानि समुत्पेतुर्दिक्षु वानररक्षसाम् ।
विमर्दे तुमुले तस्मिन् देवासुररणोपमे ॥ ४५
विदार्यमाणा हरिपुङ्गवैस्तदा निशाचराश्शोणितदिग्धगात्राः ।
पुनस्सुयुद्धं तरसा समास्थिता दिवाकरस्यास्तमयाभिकाङ्क्षिणः ॥ ४६

इति श्रीमद्युद्धकाण्डे त्रिचत्वारिंशस्सर्गः ॥

## ॥ चतुश्चत्वारिंशस्सर्गः ॥

युध्यतामेव तेषां तु तदा वानररक्षसाम् ।
रविरस्तं गतो रात्रिः प्रवृत्ता प्राणहारिणी ॥ १
अन्योन्यं बद्धवैराणां घोराणां जयमिच्छताम् ।
संप्रवृत्तं निशायुद्धं तदा वानररक्षसाम् ॥ २
'राक्षसोऽसी' ति हरयो 'हरिश्चासी' ति राक्षसाः ।
अन्योन्यं समरे जघ्नुस्तस्मिंस्तमसि दारुणे ॥ ३
'जहि दारय चैही' ति कथं विद्रवसी' ति च ।
एवं सुतुमुलश्शब्दस्तस्मिंस्तमसि शुश्रुवे ॥ ४
कालाः काञ्चनसन्नाहास्तस्मिंस्तमसि राक्षसाः ।
संप्रादृश्यन्त शैलेन्द्रा दीप्तौषधिवना इव ॥ ५
तस्मिंस्तमसि दुष्पारे राक्षसाः क्रोधमूर्छिताः ।
परिपेतुर्महावेगा भक्षयन्तः प्लवङ्गमान् ॥ ६
ते हयान् काञ्चनापीडान् ध्वजांश्चाग्निशिखोपमान् ।
आप्लुत्य दशनैस्तीक्ष्णैर्भीमकोपा व्यदारयन् ॥ ७
वानरा बलिनो युद्धे क्षोभयन्राक्षसीं चमूम् ।
कुञ्जरान्कुञ्जरारोहान् पताकाध्वजिनो रथान् ॥ ८
चकर्षुश्च ददंशुश्च दशनैः क्रोधमूर्छिताः ।
लक्ष्मणश्चापि रामश्च शरैराशीविषोपमैः ॥ ९
दृश्यादृश्यानि रक्षांसि प्रवराणि निजघ्नतुः ।
तुरङ्गखुरविध्वस्तं रथनेमिसमुत्थितम् ॥ १०

रुरोध कर्णनेत्राणि युध्यतां धरणीरजः ।
वर्तमाने महाघोरे संग्रामे रोमहर्षणे ॥ ११
रुधिरोदा महाघोरा नद्यस्तत्र प्रसुस्रुवुः ।
ततो भेरीमृदङ्गानां पणवानां च निस्वनः ॥ १२
शङ्खवेणुस्वनोन्मिश्रस्संबभूवाद्भुतोपमः ।
हतानां स्तनमानानां राक्षसानां च निस्वनः ॥ १३
शस्तानां वानराणां च संबभूवातिदारुणः ।
हतैर्वानरवीरैश्च शक्तिशूलपरश्वथैः ॥ १४
निहतैः पर्वताग्रैश्च राक्षसैः कामरूपिभिः ।
शस्त्रपुष्पोपहारा च तत्रासीद्युद्धमेदिनी ॥ १५
दुर्ज्ञेया दुर्निवेशा च शोणितास्रावकर्दमा ।
सा बभूव निशा घोरा हरिराक्षसहारिणी ॥ १६
कालरात्रीव भूतानां सर्वेषां दुरतिक्रमा ।
ततस्ते राक्षसास्तत्र तस्मिंस्तमसि दारुणे ॥ १७
राममेवाभ्यवर्तन्त संसृष्टाश्शरवृष्टिभिः ।
तेषामापततां शब्दः क्रुद्धानामपि गर्जताम् ॥ १८
उद्धर्त इव सप्तानां समुद्राणां प्रशुश्रुवे ।
तेषां रामश्शरैष्षड्भिष्षड्जघान निशाचरान् ॥ १९
निमेषान्तरमात्रेण शितैरग्निशिखोपमैः ।
यमशत्रुश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ २०
वज्रदंष्ट्रो महाकायस्तौ चोभौ शुकसारणौ ।
ते तु रामेण बाणौघैस्सर्वे मर्मसु ताडिताः ॥ २१

युद्धादपसृतास्तत्र सावशेषायुषोऽभवन् ।
तत्र काञ्चनचित्राङ्गैश्शरैरग्निशिखोपमैः ॥ २२

दिशश्चकार विमलाः प्रदिशश्च महाबलः ।
ये त्वन्ये राक्षसा भीमा रामस्याभिमुखे स्थिताः ॥ २३

तेऽपि नष्टास्समासाद्य पतङ्गा इव पावकम् ।
सुवर्णपुङ्खैर्विशिखैस्संपतद्भिस्सहस्रशः ॥ २४

बभूव रजनी चित्रा खद्योतैरिव शारदी ।
राक्षसानां च निनदैर्हरीणां चापि निस्वनैः ॥ २५

सा बभूव निशा घोरा भूयो घोरतरा तदा ।
तेन शब्देन महता प्रवृद्धेन समन्ततः ॥ २६

त्रिकूटः कन्दराकीर्णः प्रत्याहरदिवाचलः ।
गोलाङ्गूला महाकायास्तमसा तुल्यवर्चसः ॥ २७

संपरिष्वज्य बाहुभ्यां भक्षयन्रजनीचरान् ।
अङ्गदस्तु रणे शत्रुं निहन्तुं समुपस्थितः ॥ २८

रावणिं निजघानाशु सारथिं च हयानपि ।
वर्तमाने तदा घोरे संग्रामे भृशदारुणे ॥ २९

इन्द्रजित्तु रथं त्यक्त्वा हताश्वो हतसारथिः ।
अङ्गदेन महाकायास्तत्रैवान्तरधीयत ॥ ३०

तत्कर्म वालिपुत्रस्य सर्वे देवास्सहर्षिभिः ।
तुष्टुवुः पूजनार्हस्य तौ चोभौ रामलक्ष्मणौ ॥ ३१

प्रभावं सर्वभूतानि विदुरिन्द्रजितो युधि ।
तेन ते तं महात्मानं तुष्टा दृष्ट्वा प्रधर्षितम् ॥ ३२

ततः प्रहृष्टाः कपयस्ससुग्रीवविभीषणाः ।
'साधु सा' ध्विति नेदुश्च दृष्ट्वा शत्रुं प्रधर्षितम् ॥ ३३
इन्द्रजित्तु तदा तेन निर्जितो भीमकर्मणा ।
संयुगे वालिपुत्रेन क्रोधं चक्रे सुदारुणम् ॥ ३४
एतस्मिन्नन्तरे रामो वानरान् वाक्यमब्रवीत् ।
"सर्वे भवन्तस्तिष्ठन्तु कपिराजेन संगताः ॥ ३५
स ब्रह्मणा दत्तवरस्त्रैलोक्यं बाधते भृशम् ।
भवतामर्थसिद्ध्यर्थं कालेन स समागतः ॥ ३६
अद्यैव क्षमितव्यं मे भवन्तो विगतज्वराः ।"
सोऽन्तर्धानगतः पापो रावणो रणकर्कशः ॥ ३७
अदृश्यो निशितान्बाणान् मुमोचाशनिवर्चसः ।
स रामं लक्ष्मणं चैव घोरैर्नागमयैश्शरैः ॥ ३८
बिभेद समरे क्रुद्धस्सर्वगात्रेषु राक्षसः ।
मायया संवृतस्तत्र मोहयन् राघवौ युधि ॥ ३९
अदृश्यस्सर्वभूतानां कूटयोधी निशाचरः ।
बबन्ध शरबन्धेन भ्रातरौ रामलक्ष्मणौ ॥ ४०
तौ तेन पुरुषव्याघ्रौ क्रुद्धेनाशीविषैश्शरैः ।
सहसा निहतौ वीरौ तदा प्रैक्षन्त वानराः ॥ ४१
प्रकाशरूपस्तु यथा न शक्तस्तौ बाधितुं राक्षसराजपुत्रः ।
मायां प्रयोक्तुं समुपाजगाम बबन्ध तौ राजसुतौ दुरात्मा ॥ ४२

इति श्रीमद्युद्धकाण्डे चतुश्चत्वारिंशस्सर्गः ॥

---

## ॥ पञ्चचत्वारिंशस्सर्गः ॥

स तस्य गतिमन्विच्छन् राजपुत्रः प्रतापवान् ।
दिदेशातिबलो रामो दश वानरयूथपान् ॥ १
द्वौ सुषेणस्य दायादौ नीलं च प्लवगर्षभम् ।
अङ्गदं वालिपुत्रं च शरभं च तरस्विनम् ॥ २
विनतं जाम्बवन्तं च सानुप्रस्थं महाबलम् ।
ऋषभं चर्षभस्कन्धमादिदेश परन्तपः ॥ ३
ते संप्रहृष्टा हरयो भीमानुद्यम्य पादपान् ।
आकाशं विविशुस्सर्वे मार्गमाणा दिशो दश ॥ ४
तेषां वेगवतां वेगमिषुभिर्वेगवत्तरैः ।
अस्त्रवित्परमास्त्रैस्तु वारयामास रावणिः ॥ ५
तं भीमवेगा हरयो नाराचैः क्षतविग्रहाः ।
अन्धकारे न ददृशुर्मेघैस्सूर्यमिवावृतम् ॥ ६
रामलक्ष्मणयोरेव सर्वदेहभिदश्शरान् ।
भृशमावेशयामास रावणस्समितिञ्जयः ॥ ७
निरन्तरशरीरौ तौ भ्रातरौ रामलक्ष्मणौ ।
क्रुद्धेनेन्द्रजिता वीरौ पन्नगैश्शरतां गतैः ॥ ८
तयोः क्षतजमार्गेण सुस्राव रुधिरं बहु ।
तावुभौ च प्रकाशेते पुष्पिताविव किंशुकौ ॥ ९
ततः पर्यन्तरक्ताक्षो भिन्नाञ्जनचयोपमः ।
रावणिर्भ्रातरौ वाक्यमन्तर्धानगतोऽब्रवीत् ॥ १०

"युध्यमानमनालक्ष्यं शक्रोऽपि त्रिदशेश्वरः ।
द्रष्टुमासादितुं वापि न शक्तः किंपुनर्युवाम् ॥ ११
प्रावृताविषुजालेन राघवौ कङ्कपत्रिणा ।
एष रोषपरीतात्मा नयामि यमसादनम् ॥" १२
एवमुक्त्वा तु धर्मज्ञो भ्रातरौ रामलक्ष्मणौ ।
निर्बिभेद शितैर्बाणैः प्रजहर्ष ननाद च ॥ १३
भिन्नाञ्जनचयश्यामो विष्फार्य विपुलं धनुः ।
भूयोभूयश्शरान्घोरान् विससर्ज महामृधे ॥ १४
ततो मर्मसु मर्मज्ञो मज्जयन्निशितान् शरान् ।
रामलक्ष्मणयोर्वीरो ननाद च मुहुर्मुहुः ॥ १५
बद्धौ तु शरबन्धेन तावुभौ रणमूर्धनि ।
निमेषान्तरमात्रेण न शेकतुरुदीक्षितुम् ॥ १६
ततो विभिन्नसर्वाङ्गौ शरशल्याचिताबुभौ ।
ध्वजाविव महेन्द्रस्य रज्जुमुक्तौ प्रकम्पितौ ॥ १७
तौ संप्रचालितौ वीरौ मर्मभेदेन कर्शितौ ।
निपेततुर्महेष्वासौ जगत्यां जगतीपती ॥ १८
तौ वीरशयने वीरौ शयानौ रुधिरोक्षितौ ।
शरवेष्टितसर्वाङ्गावार्तौ परमपीडितौ ॥ १९
न ह्यविद्धं तयोर्गात्रे बभूवाङ्गुलमन्तरम् ।
नानिर्भिन्नं न चास्तब्धमाकराग्रादजिह्मगैः ॥ २०
तौ तु क्रूरेण निहतौ रक्षसा कामरूपिणा ।
असृक्सुस्रावतुस्तीव्रं जलं प्रस्रवणाविव ॥ २१

पपात प्रथमं रामो विद्धो मर्मसु मार्गणैः ।
क्रोधादिन्द्रजिता येन पुरा शक्रो विनिर्जितः ॥ २२

रुक्मपुङ्खैः प्रसन्नाग्रैरधोगतिभिराशुगैः ।
नाराचैरर्धनाराचैर्भल्लैरञ्जलिकैरपि ॥ २३

विव्याध वत्सदन्तैश्च सिंहदंष्ट्रैः क्षुरैस्तथा ।
स वीरशयने शिश्ये विज्यमादाय कार्मुकम् ॥ २४

भिन्नमुष्टिपरीणाहं त्रिणतं रुक्मभूषितम् ।
बाणपातान्तरे रामं पतितं पुरुषर्षभम् ॥ २५

स तत्र लक्ष्मणो दृष्ट्वा निराशो जीवितेऽभवत् ।
रामं कमलपत्राक्षं शरबन्धपरिक्षतम् ॥ २६

शुशोच भ्रातरं दृष्ट्वा पतितं धरणीतले ।
हरयश्चापि तं दृष्ट्वा सन्तापं परमं गताः ॥ २७

बद्धौ तु वीरौ पतितौ शयानौ तौ वानरास्संपरिवार्य तस्थुः ।
समागता वायुसुतप्रमुख्या विषादमार्ताः परमं च जग्मुः ॥ २८

इति श्रीमद्युद्धकाण्डे पञ्चचत्वारिंशस्सर्गः ॥

---

## ॥ षट्चत्वारिंशस्सर्गः ॥

ततो द्यां पृथिवीं चैव वीक्षमाणा वनौकसः ।
ददृशुस्सन्ततौ बाणैर्भ्रातरौ रामलक्ष्मणौ ॥ १

वृष्ट्वेवोपरते देवे कृतकर्मणि राक्षसे ।
आजगामाथ तं देशं ससुग्रीवो विभीषणः ॥ २

नीलद्विविदमैन्दाश्च सुषेणकुमुदाङ्गदाः ।
तूर्णं हनुमता सार्धमन्वशोचन्त राघवौ ॥ ३

अचेष्टौ मन्दनिःश्वासौ शोणितौघपरिप्लुतौ ।
शरजालचितौ स्तब्धौ शयानौ शरतल्पयोः ॥ ४

निःश्वसन्तौ यथा सर्पौ निश्चेष्टौ मन्दविक्रमौ ।
रुधिरस्रावदिग्धाङ्गौ तापनीयाविव ध्वजौ ॥ ५

तौ वीरशयने वीरौ शयानौ मन्दचेष्टितौ ।
यूथपैस्तैः परिवृतौ बाष्पव्याकुललोचनैः ॥ ६

राघवौ पतितौ दृष्ट्वा शरजालसमावृतौ ।
बभूवुर्व्यथिताः सर्वे वानराः सविभीषणाः ॥ ७

अन्तरिक्षं निरीक्षन्तो दिशः सर्वाश्च वानराः ।
न चैनं मायया छन्नं ददृशू रावणिं रणे ॥ ८

तं तु मायाप्रतिच्छन्नं माययैव विभीषणः ।
वीक्षमाणो ददर्शाथ भ्रातुः पुत्रमवस्थितम् ॥ ९

तमप्रतिमकर्माणमप्रतिद्वन्द्वमाहवे ।
ददर्शान्तर्हितं वीरं वरदानाद्विभीषणः ॥ १०

तेजसा यशसा चैव विक्रमेण च संयुतम् ।
इन्द्रजित्त्वात्मनः कर्म तौ शयानौ समीक्ष्य च ॥ ११

उवाच परमप्रीतो हर्षयन् सर्वनैर्ऋतान् ।
" दूषणस्य च हन्तारौ खरस्य च महाबलौ ॥ १२

सादितौ मामकैर्बाणैः भ्रातरौ रामलक्ष्मणौ ।
नेमौ मोक्षयितुं शक्यावेतस्मादिषुबन्धनात् ॥ १३

सर्वैरपि समागम्य सर्षिसङ्घैः सुरासुरैः ।
यत्कृते चिन्तयानस्य शोकार्तस्य पितुर्मम ॥ १४

अस्पृष्ट्वा शयनं गात्रैस्त्रियामा याति शर्वरी ।
कृत्स्नेयं यत्कृते लङ्का नदीवर्षास्विवाऽऽकुला ॥ १५

सोऽयं मूलहरोऽनर्थस्सर्वेषां निहतो मया ।
रामस्य लक्ष्मणस्यापि सर्वेषां च वनौकसाम् ॥ १६

विक्रमा निष्फलास्सर्वे यथा शरदि तोयदाः ।"
एवमुक्त्वा तु तान्सर्वान् राक्षसान् परिपार्श्वतः ॥ १७

यूथपानपि तान् सर्वांस्ताडयामास रावणिः ।
नीलं नवभिराहत्य मैन्दं च द्विविदं तथा ॥ १८

त्रिभिस्त्रिभिरमित्रघ्नस्तताप प्रवरेषुभिः ।
जाम्बवन्तं महेष्वासो विद्ध्वा बाणेन वक्षसि ॥ १९

हनूमतो वेगवतो विससर्ज शरान्दश ।
गवाक्षं शरभं चैव द्वावप्यमिततेजसौ ॥ २०

द्वाभ्यां द्वाभ्यां महावेगो विव्याध युधि रावणिः ।
गोलाङ्गूलेश्वरं चैवं वालिपुत्त्रमथाङ्गदम् ॥ २१

विव्याथ बहुभिर्बाणैस्त्वरमाणोऽथ रावणिः ।
तान् वानरवरान् भित्वा शरैरग्निशिखोपमैः ॥ २२

ननाद बलवांस्तत्र महासत्त्वस्स रावणिः ।
तानर्दयित्वा बाणौघैस्त्रासयित्वा च वानरान् ॥ २३

प्रजहास महाबाहुर्वचनं चेदमब्रवीत् ।
"शरबन्धेन घोरेण मया बद्धौ चमूमुखे ॥ २४

सहितौ भ्रातरावेतौ निशामयत राक्षसाः ।"
एवमुक्तास्तु ते सर्वे राक्षसाः कूटयोधिनः ॥ २५

परं विस्मयमाजग्मुः कर्मणा तेन हर्षिताः ।
विनेदुश्च महानादान् सर्वतो जलदोपमाः ॥ २६

'हतो राम' इति ज्ञात्वा रावणिं समपूजयन् ।
निष्पन्दौ तु तदा दृष्ट्वा तावुभौ रामलक्ष्मणौ ॥ २७

वसुधायां निरुच्छ्वासौ हताविव्यन्वमन्यत ।
हर्षेण तु समाविष्ट इन्द्रजित्समितिंजयः ॥ २८

प्रविवेश पुरीं लङ्कां हर्षयन् सर्वराक्षसान् ।
रामलक्ष्मणयोर्दृष्ट्वा शरीरे सायकैश्चिते ॥ २९

सर्वाणि चाङ्गोपाङ्गानि सुग्रीवं भयमाविशत् ।
तमुवाच परित्रस्तं वानरेन्द्रं विभीषणः ॥ ३०

स बाष्पवदनं दीनं शोकव्याकुललोचनम् ।
"अलं त्रासेन सुग्रीव' बाष्पवेगो निगृह्यताम् ॥ ३१

एवं प्रायाणि युद्धानि विजयो नास्ति नैष्ठिकः ।
सशेषभाग्यताऽस्माकं यदि वीर! भविष्यति ॥ ३२

मोहमेतौ प्रहास्येते महात्मानौ महाबलौ ।
पर्यवस्थापयात्मानमनाथं मां च वानर ॥ ३३

सत्यधर्माभिरक्तानां नास्ति मृत्युकृतं भयम् ।"
एवमुक्त्वा ततस्तस्य जलक्लिन्नेन पाणिना ॥ ३४

सुग्रीवस्य शुभे नेत्रे प्रममार्ज विभीषणः ।
ततस्सलिलमादाय विद्यया परिजप्य च ॥ ३५

सुग्रीवनेत्रे धर्मात्मा स ममार्ज विभीषणः ।
प्रमृज्य वदनं तस्य कपिराजस्य धीमतः ॥ ३६

अब्रवीत् कालसंप्राप्तमसंभ्रममिदं वचः ।
“न कालः कपिराजेन्द्र! वैक्लब्यमनुवर्तितुम् ॥ ३७

अतिस्नेहोऽप्यकालेऽस्मिन् मरणायोपकल्पते ।
तस्मादुत्सृज्य वैक्लब्यं सर्वकार्यविनाशनम् ॥ ३८

हितं रामपुरोगाणां सैन्यानामनुचिन्त्यताम् ।
अथवा रक्ष्यतां रामो यावत्संज्ञाविपर्ययः ॥ ३९

लब्धसंज्ञौ हि काकुत्स्थौ भयं नो व्यपनेष्यतः ।
नैतत्किंचन रामस्य न च रामो मुमूर्षति ॥ ४०

न ह्येनं हास्यते लक्ष्मीर्दुर्लभा या गतायुषाम् ।
तस्मादाश्वासयाऽऽत्मानं बलं चाश्वासय स्वकम् ॥ ४१

यावत्कार्याणि सर्वाणि पुनस्संस्थापयाम्यहम् ।
एते हि फुल्लनयनास्त्रासादागतसाध्वसाः ॥ ४२

कर्णे कर्णे प्रकथिता हरयो हरिसत्तम ।
मां तु दृष्ट्वा प्रधावन्तमनीकं संप्रहर्षितुम् ॥ ४३

त्यजन्तु हरयस्त्रासं भुक्तपूर्वामिव स्रजम् ।
समाश्वास्य तु सुग्रीवं राक्षसेन्द्रो विभीषणः ॥ ४४

विद्रुतं वानरानीकं तत्समाश्वासयत्पुनः ।
इन्द्रजित्तु महामायस्सर्वसैन्यसमावृतः ॥ ४५

विवेश नगरीं लङ्कां पितरं चाभ्युपागमत् ।
तत्र रावणमासीनमभिवाद्य कृताञ्जलिः ॥ ४६

आचचक्षे प्रियं पित्रे निहतौ रामलक्ष्मणौ ।
उत्पपात ततो हृष्टः पुत्रं च परिषस्वजे ॥ ४७

रावणो रक्षसां मध्ये श्रुत्वा शत्रू निपातितौ ।
उपाघ्राय च मूर्ध्न्येनं पप्रच्छ प्रीतमानसः ॥ ४८
पृच्छते च यथावृत्तं प्रीतं सर्वं न्यवेदयत् ।
यथा तौ शरबन्धेन निश्चेष्टौ निष्प्रभौ कृतौ ॥ ४९
सहर्षवेगानुगतान्तरात्मा श्रुत्वा वचस्तस्य महारथस्य ।
जहौ ज्वरं दाशरथेस्समुत्थितं प्रहृष्य वाचाऽभिननन्द पुत्रम् ॥ ५०

इति श्रीमद्युद्धकाण्डे षट्चत्वारिंशस्सर्गः ॥

---

## ॥ सप्तचत्वारिंशस्सर्गः ॥

प्रतिप्रविष्टे लङ्कां तु कृतार्थे रावणात्मजे ।
राघवं परिवार्यार्ता ररक्षुर्वानरर्षभाः ॥ १
हनूमानङ्गदो नीलस्सुषेणः कुमुदो नलः ।
गजो गवाक्षो गवयश्शरभो गन्धमादनः ॥ २
जाम्बवानृषभस्कन्धो रम्भश्शतवलिः पृथुः ।
व्यूढानीकाश्च यत्ताश्च द्रुमानादाय सर्वतः ॥ ३
वीक्षमाणा दिशस्सर्वास्तिर्यगूर्ध्वं च वानराः ।
तृणेष्वपि च चेष्टत्सु राक्षसा इति मेनिरे ॥ ४
रावणश्चापि संहृष्टो विसृज्येन्द्रजितं सुतम् ।
आजुहाव ततस्सीता रक्षिणी राक्षसीस्तदा ॥ ५
राक्षस्यस्त्रिजटा चैव शासनात्समुपस्थिताः ।
ता उवाच ततो हृष्टो राक्षसी राक्षसाधमः ॥ ६
"हताविन्द्रजिताऽख्यात वैदेह्या रामलक्ष्मणौ ।
पुष्पकं च समारोप्य दर्शयध्वं हतौ रणे ॥ ७

यदाश्रयादवष्टब्धा नेयं मामुपतिष्ठति ।
सोऽस्या भर्ता सह भ्रात्रा निरस्तो रणमूर्धनि ॥ ८

निर्विशङ्का निरुद्विग्ना निरपेक्षा च मैथिली ।
मामुपस्थास्यते सीता सर्वाभरणभूषिता ॥ ९

अद्य कालवशं प्राप्तं रणे रामं सलक्ष्मणम् ।
अवेक्ष्य विनिवृत्ताशा नान्यां गतिमपश्यती ॥ १०

निरपेक्षा विशालाक्षी मामुपस्थास्यते स्वयम् ।"
तस्य तद्वचनं श्रुत्वा रावणस्य दुरात्मनः ॥ ११

राक्षस्यस्ता 'स्तथे' त्युक्त्वा जग्मुर्वै यत्र पुष्पकम् ।
ततः पुष्पकमादाय राक्षस्यो रावणाज्ञया ॥ १२

अशोकवनिकास्थां तां मैथिलीं समुपानयन् ।
तामादाय तु राक्षस्यो भर्तृशोकपराजिताम् ॥ १३

सीतामारोपयामासुर्विमानं पुष्पकं तदा ।
ततः पुष्पकमारोप्य सीतां त्रिजटया सह ॥ १४

जग्मुर्दर्शयितुं तस्य राक्षस्यो रामलक्ष्मणौ ।
रावणोऽकारयल्लङ्कां पताकाध्वजमालिनीम् ॥ १५

प्राघोषयत हृष्टश्च लङ्कायां राक्षसेश्वरः ।
राघवो लक्ष्मणश्चैव हताविन्द्रजिता रणे ॥ १६

विमानेनापि सीता तु गत्वा त्रिजटया सह ।
ददर्श वानराणां तु सर्वं सैन्यं निपातितम् ॥ १७

प्रहृष्टमनसश्चापि ददर्श पिशिताशनान् ।
वानरांश्चापि दुःखार्तान् रामलक्ष्मणपार्श्वतः ॥ १८

ततस्सीता ददर्शोभौ शयानौ शरतल्पयोः ।
लक्ष्मणं चापि रामं च विसंज्ञौ शरपीडितौ ॥ १९
विध्वस्तकवचौ वीरौ विप्रविद्धशरासनौ ।
सायकैश्छिन्नसर्वाङ्गौ शरस्तम्बमयौ क्षितौ ॥ २०
तौ दृष्ट्वा भ्रातरौ तत्र वीरौ सा पुरुषर्षभौ ।
शयानौ पुण्डरीकाक्षौ कुमाराविव पावकी ॥ २१
शरतल्पगतौ वीरौ तथाभूतौ नरर्षभौ ।
दुःखार्ता सुभृशं सीता सुचिरं विललाप ह ॥ २२
भर्तारमनवद्याङ्गी लक्ष्मणं चासितेक्षणा ।
प्रेक्ष्य पांसुषु वेष्टन्तौ रुरोद जनकात्मजा ॥ २३
सा बाष्पशोकाभिहता समीक्ष्य तौ भ्रातरौ देवसमप्रभावौ ।
वितर्कयन्ती निधनं तयोस्सा दुःखान्विता वाक्यमिदं जगाद ॥ २४

इति श्रीमद्युद्धकाण्डे सप्तचत्वारिंशस्सर्गः ॥

---

## ॥ अष्टचत्वारिंशस्सर्गः ॥

भर्तारं निहतं दृष्ट्वा लक्ष्मणं च महाबलम् ।
विललाप भृशं सीता करुणं शोककर्शिता ॥ १
"ऊचुर्लक्षणिनो ये मां पुत्रिण्यविधवेति च ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ २
यज्वनो महिषीं ये मामूचुः पत्नीं च सत्रिणः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ३
ऊचुस्संश्रवणे ये मां द्विजाः कार्तान्तिकाश्शुभाम् ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ४

वीरपार्थिवपत्नी त्वं ये धन्येति च मां विदुः ।
तेऽद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिनः ॥ ५

इमानि खलु पद्मानि पादयोर्यैः किल स्त्रियः ।
आधिराज्येऽभिषिच्यन्ते नरेन्द्रैः पतिभिस्सह ॥ ६

वैधव्यं यान्ति यैर्नार्यो लक्षणैर्भाग्यदुर्लभाः ।
नात्मनस्तानि पश्यामि पश्यन्ती हतलक्षणा ॥ ७

सत्यनामानि पद्मानि स्त्रीणामुक्तानि लक्षणैः ।
तान्यद्य निहते रामे वितथानि भवन्ति मे ॥ ८

केशास्सूक्ष्मास्समा नीला भ्रुवौ चासङ्गते मम ।
वृत्ते चारोमशे जङ्घे दन्ताश्चाविरला मम ॥ ९

शङ्खे नेत्रे करौ पादौ गुल्फावूरू च मे चितौ ।
अनुवृत्तनखास्स्निग्धास्समाश्चाङ्गुलयो मम ॥ १०

स्तनौ चाविरलौ पीनौ ममेमौ मग्नचूचुकौ ।
मग्ना चोत्सङ्गिनी नाभिः पार्श्वोरस्काश्च मे चिताः ॥ ११

मम वर्णो मणिनिभो मृदून्यङ्गरुहाणि च ।
प्रतिष्ठितां द्वादशभिर्मामूचुश्शुभलक्षणाम् ॥ १२

समग्रयवमच्छिद्रं पाणिपादं च वर्णवत् ।
मन्दस्मितेत्येव च मां कन्यालक्षणिनो द्विजाः ॥ १३

आधिराज्येऽभिषेको मे ब्राह्मणैः पतिना सह ।
कृतान्तकुशलैरुक्तं तत्सर्वं वितथीकृतम् ॥ १४

शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च ।
तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ ॥ १५

ननु वारुणमाग्नेयमैन्द्रं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव राघवौ प्रत्यपद्यताम् ॥ १६

अदृश्यमानेन रणे मायया वासवोपमौ ।
मम नाथावनाथाया निहतौ रामलक्ष्मणौ ॥ १७

न हि दृष्टिपथं प्राप्य राघवस्य रणे रिपुः ।
जीवन्प्रतिनिवर्तेत यद्यपि स्यान्मनोजवः ॥ १८

न कालस्यातिभारोऽस्ति कृतान्तश्च सुदुर्जयः ।
यत्र रामस्सह भ्रात्रा शेते युधि निपातितः ॥ १९

न शोचामि तथा रामं लक्ष्मणं च महाबलम् ।
नात्मानं जननीं वापि यथा श्वश्रूं तपस्विनीम् ॥ २०

साऽनुचिन्तयते नित्यं समाप्तव्रतमागतम् ।
" कदा द्रक्ष्यामि सीतां च लक्ष्मणं च सराघवम् ॥ २१

परिदेवयमानां तां राक्षसीं त्रिजटाऽब्रवीत् ।
" माविषादं कृथा देवि! भर्ताऽयं तव जीवति ॥ २२

कारणानि च पश्यामि महान्ति सदृशानि च ।
यथेमौ जीवितौ देवि! भ्रातरौ रामलक्ष्मणौ ॥ २३

न हि कोपपरीतानि हर्षपर्युत्सुकानि च ।
भवन्ति युधि योधानि मुखानि निहते पतौ ॥ २४

इदं विमानं वैदेहि! पुष्पकं नाम नामतः ।
दिव्यं त्वां धारयेन्नैवं यद्येतौ गतजीवितौ ॥ २५

हतवीरप्रधाना हि हतोत्साहा निरुद्यमा ।
सेना भ्रमति संख्येषु हतकर्णेव नौर्जले ॥ २६

इयं पुनरसंभ्रान्ता निरुद्विग्ना तरस्विनी ।
सेना रक्षति काकुत्स्थौ मया प्रीत्या निवेदितौ ॥ २७
सा त्वं भव सुविस्रब्धा अनुमानैस्सुखोदयैः ।
अहतौ पश्य काकुत्स्थौ स्नेहादेतद्ब्रवीमि ते ॥ २८
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
चारित्रसुखशीलत्वात् प्रविष्टाऽसि मनो मम ॥ २९
नेमौ शक्यौ रणे जेतुं सेन्द्रैरपि सुरासुरैः ।
तादृशं दर्शनं दृष्ट्वा मया चावेदितं तवा ॥ ३०
इदं च सुमहच्चिह्नं शनैः पश्यस्व मैथिलि ।
निस्संज्ञावप्युभावेतौ नैव लक्ष्मीर्वियुज्यते ॥ ३१
प्रायेण गतसत्त्वानां पुरुषाणां गतायुषाम् ।
दृश्यमानेषु वक्त्रेषु परं भवति वैकृतम् ॥ ३२
त्यज शोकं च मोहं च दुःखं च जनकात्मजे ।
रामलक्ष्मणयोरर्थे नाद्य शक्यमजीवितुम् ॥" ३३
श्रुत्वा तु वचनं तस्यास्सीता सुरसुतोपमा ।
कृताञ्जलिरुवाचेद 'मेवमस्त्विति' मैथिली ॥ ३४
विमानं पुष्पकं तत्तु सन्निवर्त्य मनोजवम् ।
दीना त्रिजटया सीता लङ्कामेव प्रवेशिता ॥ ३५
ततस्त्रिजटया सार्धं पुष्पकादवरुह्य सा ।
अशोकवनिकामेव राक्षसीभिः प्रवेशिता ॥ ३६
प्रविश्य सीता बहुवृक्षषण्डां तां राक्षसेन्द्रस्य विहारभूमिम् ।
संप्रेक्ष्य सञ्चिन्त्य च राजपुत्रौ परं विषादं समुपाजगाम ॥ ३७

इति श्रीमद्युद्धकाण्डे अष्टचत्वारिंशस्सर्गः ॥

## ॥ एकोनपञ्चाशस्सर्गः ॥

घोरेण शरबन्धेन बद्धौ दशरथात्मजौ ।
निःश्वसन्तौ यथा नागौ शयानौ रुधिरोक्षितौ ॥ १
सर्वे ते वानरश्रेष्ठास्ससुग्रीवा महाबलाः ।
परिवार्य महात्मानौ तस्थुश्शोकपरिप्लुताः ॥ २
एतस्मिन्नन्तरे रामः प्रत्यबुध्यत वीर्यवान् ।
स्थिरत्वात्सत्त्वयोगाच्च शरैस्सन्दानितोऽपि सन् ॥ ३
ततो दृष्ट्वा सरुधिरं विषण्णं गाढमर्पितम् ।
भ्रातरं दीनवदनं पर्यदेवयदातुरः ॥ ४
"किन्नु मे सीतया कार्यं किं कार्यं जीवितेन वा ।
शयानं योऽद्य पश्यामि भ्रातरं युधि निर्जितम् ॥ ५
शक्या सीतासमा नारी मर्त्यलोके विचिन्वता ।
न लक्ष्मणसमो भ्राता सचिवस्सांपरायिकः ॥ ६
परित्यक्ष्याम्यहं प्राणान् वानराणां तु पश्यताम् ।
यदि पञ्चत्वमापन्नस्सुमित्रानन्दवर्धनः ॥ ७
किन्नु वक्ष्यामि कौसल्यां मातरं किन्नु कैकयीम् ।
कथमम्बां सुमित्रां च पुत्रदर्शनलालसाम् ॥ ८
विवत्सां वेपमानां च क्रोशन्तीं कुररीमिव ।
कथमाश्वासयिष्यामि यदि यास्यामि तं विना ॥ ९
कथं वक्ष्यामि शत्रुघ्नं भरतं च यशस्विनम् ।
मया सह वनं यातो विना तेनाऽऽगतः पुनः ॥ १०
उपालम्भं न शक्ष्यामि सोढुं बत सुमित्रया ।
इहैव देहं त्यक्ष्यामि न हि जीवितुमुत्सहे ॥ ११

धिङ्मां दुष्कृतकर्माणमनार्यं यत्कृते ह्यसौ ।
लक्ष्मणः पतितश्शेते शरतल्पे गतासुवत् ॥ १२

" त्वं नित्यं सविषण्णं मामाश्वासयसि लक्ष्मण ! ।
गतासुर्नाद्य शक्नोषि मामार्तमभिभाषितुम् ॥ " १३

येनाद्य निहता युद्धे राक्षसा विनिपातिताः ।
तस्यामेव क्षितौ वीरस्स शेते निहतः परैः ॥ १४

शयानश्शरतल्पेऽस्मिन् स्वशोणितपरिप्लुतः ।
शरजालैश्चितो भाति भास्करोऽस्तमिव व्रजन् ॥ १५

बाणाभिहतमर्मत्वान्न शक्नोत्यभिभाषितुम् ।
रुजा चाब्रुवतोऽप्यस्य दृष्टिरागेण सूच्यते ॥ १६

यथैव मां वनं यान्तमनुयातो महाद्युतिः ।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥ १७

इष्टबन्धुजनो नित्यं मां च नित्यमनुव्रतः ।
इमामद्य गतोऽवस्थां ममानार्यस्य दुर्नयैः ॥ १८

सुरुष्टेनापि वीरेण लक्ष्मणेन न संस्मरे ।
परुषं विप्रियं वापि श्रावितं न कदाचन ॥ १९

विससर्जैकवेगेन पञ्चबाणशतानि यः ।
इष्वस्त्रेष्वधिकस्तस्मात् कार्तवीर्याच्च लक्ष्मणः ॥ २०

अस्त्रैरस्त्राणि यो हन्याच्छक्रस्यापि महात्मनः ।
सोऽयमुर्व्यां हतश्शेते महार्हशयनोचितः ॥ २१

यन्मया न कृतो राजा राक्षसानां विभीषणः ।
तच्च मिथ्या प्रलप्तं मां प्रधक्ष्यति न संशयः ॥ २२

अस्मिन्मुहूर्ते सुग्रीव ! प्रतियातुमितोऽर्हसि ।
मत्वा हीनं मया राजन् ! रावणोऽभिद्रवेद्बली ॥ २३

अङ्गदं तु पुरस्कृत्य ससैन्यस्ससुहृज्जनः ।
सागरं तर सुग्रीव ! नीलेन च नलेन च ॥ २४

कृतं हनुमता कार्यं यदन्यैर्दुष्करं रणे ।
ऋक्षराजेन तुष्यामि गोलाङ्गूलाधिपेन च ॥ २५

अङ्गदेन कृतं कर्म मैन्देन द्विविदेन च ।
युद्धं केसरिणा संख्ये घोरं सम्पातिना कृतम् ॥ २६

गवयेन गवाक्षेण शरभेण गजेन च ।
अन्यैश्च हरिभिर्युद्धं मदर्थे त्यक्तजीवितैः ॥ २७

न चातिक्रमितुं शक्यं दैवं सुग्रीव मानुषैः ।
यत्तु शक्यं वयस्येन सुहृदा च परन्तप ॥ २८

कृतं सुग्रीव ! तत्सर्वं भवता धर्मभीरुणा ।
मित्रकार्यं कृतमिदं भवद्भिर्वानरर्षभाः ॥ २९

अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ।"
शुश्रुवुस्तस्य ते सर्वे वानराः परिदेवनम् ॥ ३०

वर्तयांचक्रुरश्रूणि नेत्रैः कृष्णेतरेक्षणाः ।
ततस्सर्वाण्यनीकानि स्थापयित्वा विभीषणः ॥ ३१

आजगाम गदापाणिस्त्वरितो यत्र राघवः ।
तं दृष्ट्वा त्वरितं यान्तं नीलाञ्जनचयोपमम् ॥ ३२

वानरा दुद्रुवुस्सर्वे मन्यमानास्तु रावणिम् ।
निश्चेष्टौ विगतज्ञानौ रणवेणुसमुक्षितौ ॥ ३३

शयानौ शरतल्पस्थौ द्रष्टुमायाद्विभीषणः ॥
तं राक्षसेन्द्रात्मजशङ्कया ते निपातितौ राजसुतौ च दृष्ट्वा ।
विभीषणं विव्यथिरे च दृष्ट्वा मेघा यथा वायुहताः प्लवङ्गमाः ॥ ३४

इति श्रीमद्युद्धकाण्डे एकोनपञ्चाशस्सर्गः॥

---

## ॥ पञ्चाशस्सर्गः ॥

अथोवाच महातेजा हरिराजो महाबलः ।
"किमियं व्यथिता सेना मूढवातेव नौर्जले ॥" १

सुग्रीवस्य वचश्श्रुत्वा वालिपुत्रोऽङ्गदोऽब्रवीत् ।
'न त्वं पश्यसि रामं च लक्ष्मणं च महाबलम् ॥ २

शरजालाचितौ वीरावुभौ दशरथात्मजौ ।
शरतल्पे महात्मानौ शयानौ रुधिरोक्षितौ ॥ ३

अथाब्रवीद्वानरेन्द्रस्सुग्रीवः पुत्रमङ्गदम् ।
"नानिमित्तमिदं मन्ये भवितव्यं भयेन तु ॥ ४

विषण्णवदना ह्येते त्यक्तप्रहरणा दिशः ।
प्रपलायन्ति हरयस्त्रासादुत्फुल्ललोचनाः ॥ ५

अन्योन्यस्य न लज्जन्ते न निरीक्षन्ति पृष्ठतः ।
विप्रकर्षन्ति चान्योन्यं पतितं लङ्घयन्ति च ॥" ६

एतस्मिन्नन्तरे वीरो गदापाणिर्विभीषणः ।
सुग्रीवं वर्धयामास राघवं च निरैक्षत ॥ ७

विभीषणं तं सुग्रीवो दृष्ट्वा वानरभीषणम् ।
ऋक्षराजं समीपस्थं जाम्बवन्तमुवाच ह ॥ ८

"विभीषणोऽयं संप्राप्तो यं दृष्ट्वा वानरर्षभाः ।
विद्रवन्ति परित्रस्ता रावणात्मजशङ्कया ॥ ९

शीघ्रमेतान् सुसन्त्रस्तान् बहुधा विप्रधावितान् ।
पर्यवस्थापयाख्याहि विभीषणमुपस्थितम् ॥" १०

सुग्रीवेणैवमुक्तस्तु जाम्बवानृक्षपार्थिवः ।
वानरान् सान्त्वयामास सन्निरुध्य प्रधावतः ॥ ११

ते निवृत्ताः पुनस्सर्वे वानरास्त्यक्तसम्भ्रमाः ।
ऋक्षराजवचश्श्रुत्वा तं च दृष्ट्वा विभीषणम् ॥ १२

विभीषणस्तु रामस्य दृष्ट्वा गात्रं शरैश्चितम् ।
लक्ष्मणस्य च धर्मात्मा बभूव व्यथितेन्द्रियः ॥ १३

जलक्लिन्नेन हस्तेन तयोर्नेत्रे प्रमृज्य च ।
शोकसम्पीडितमना रुरोद विललाप च ॥ १४

इमौ तौ सत्त्वसम्पन्नौ विक्रान्तौ प्रियसंयुगौ ।
इमामवस्थां गमितौ राक्षसैः कूटयोधिभिः ॥ १५

भ्रातुः पुत्त्रेण मे तेन दुष्पुत्त्रेण दुरात्मना ।
राक्षस्या जिह्मया बुद्ध्या चालितावृजुविक्रमौ ॥ १६

शरैरिमावलं विद्धौ रुधिरेण समुक्षितौ ।
वसुधायामिमौ सुप्तौ दृश्येते शल्यकाविव ॥ १७

ययोर्वीर्यमुपाश्रित्य प्रतिष्ठा काङ्क्षिता मया ।
तावुभौ देहनाशाय प्रसुप्तौ पुरुषर्षभौ ॥ १८

जीवन्नद्य विपन्नोऽस्मि नष्टराज्यमनोरथः ।
प्राप्तप्रतिज्ञश्च रिपुस्सकामो रावणः कृतः ॥" १९

एवं विलपमानं तं परिष्वज्य विभीषणम् ।
सुग्रीवस्सत्त्वसम्पन्नो हरिराजोऽब्रवीदिदम् ॥ २०
"राज्यं प्राप्स्यसि धर्मज्ञ! लङ्कायां नात्र संशयः ।
रावणस्सहपुत्रेण सकामं नेह लप्स्यते ॥ २१
न रुजा पीडितावेतावुभौ राघवलक्ष्मणौ ।
त्यक्त्वा मोहं वधिष्येते सगणं रावणं रणे ॥" २२
तमेव सान्त्वयित्वा तु समाश्वास्य च राक्षसम् ।
सुषेणं श्वशुरं पार्श्वे सुग्रीवस्तमुवाच ह ॥ २३
"सह शूरैर्हरिगणैर्लब्धसंज्ञावरिन्दमौ ।
गच्छ त्वं भ्रातरौ गृह्य किष्किन्धां रामलक्ष्मणौ ॥ २४
अहं तु रावणं हत्वा सपुत्रं सहबान्धवम् ।
मैथिलीमानयिष्यामि शक्रो नष्टामिव श्रियम् ॥" २५
श्रुत्वैतद्वानरेन्द्रस्य सुषेणो वाक्यमब्रवीत् ।
"दैवासुरं महद्युद्धमनुभूतं सुदारुणम् ॥ २६
तदा स्म दानवा देवान् शरसंस्पर्शकोविदाः ।
निजघ्नुश्शस्त्रविदुषश्छादयन्तो मुहुर्मुहुः ॥ २७
तानार्तान्नष्टसंज्ञांश्च परासूंश्च बृहस्पतिः ।
विद्याभिर्मन्त्रयुक्ताभिरोषधीभिश्चिकित्सति ॥ २८
तान्यौषधान्यानयितुं क्षीरोदं यान्तु सागरम् ।
जवेन वानराश्शीघ्रं सम्पातिपनसादयः ॥ २९
हरयस्तु विजानन्ति पार्वतीस्ता महौषधीः ।
सञ्जीवकरणीं दिव्यां विशल्यां देवनिर्मिताम् ॥ ३०

स भूतले भीमबलाभिपिष्टस्सुरारिभिस्तैरभिहन्यमानः ।
जगाम खं वेगवदभ्युपेत्य पुनश्च रामेण समाजगाम ॥ ८९

कर्णनासाविहीनस्तु कुम्भकर्णो महाबलः ।
रराज शोणितैस्सिक्तो गिरिः प्रस्रवणैरिव ॥ ९०

शोणितार्द्रो महाकायो राक्षसो भीमविक्रमः ।
युद्धायाभिमुखो भूयो मनश्चक्रे महाबलः ॥ ९१

अमर्षाच्छोणितोद्गारी शुशुभे रावणानुजः ।
नीलाञ्जनचयप्रख्यस्ससन्ध्य इव तोयदः ॥ ९२

गते तु तस्मिन् सुरराजशत्रुः क्रोधात्प्रदुद्राव रणाय भूयः ।
अनायुधोऽस्मीति विचिन्त्य रौद्रो घोरं तदा मुद्गरमाससाद ॥ ९३

ततस्स पुर्यास्सहसा महौजा निष्क्रम्य तद्वानरसैन्यमुग्रम् ।
बभक्ष रक्षो युधि कुम्भकर्णः प्रजा युगान्ताग्निरिव प्रदीप्तः ॥ ९४

बुभुक्षितश्शोणितमांसगृध्नुः प्रविश्य तद्वानरसैन्यमुग्रम् ।
चखाद रक्षांसि हरीन्पिशाचानृक्षांश्च मोहाद्युधि कुम्भकर्णः ॥ ९५

यथैव मृत्युर्हरते युगान्ते स भक्षयामास हरींश्च मुख्यान् ।
एकं द्वौ त्रीन्बहून्क्रुद्धो वानरान् सह राक्षसैः ॥ ९६

समादायैकहस्तेन प्रचिक्षेप त्वरन्मुखे ।
संप्रस्रवंस्तदा मेदश्शोणितं च महाबलः ॥ ९७

वध्यमानो नगेन्द्राग्रैर्भक्षयामास वानरान् ।
ते भक्ष्यमाणा हरयो रामं जग्मुस्तदा गतिम् ॥ ९८

कुम्भकर्णो भृशं क्रुद्धः कपीन्खादन्प्रधावति ।
शतानि सप्त चाष्टौ च विंशत्त्रिंशत्तथैव च ॥ ९९

संपरिष्वज्य बाहुभ्यां खादन्निपरिधावति ।
तस्मिन्काले सुमित्रायाः पुत्त्रः परबलार्दनः ॥ १००
चकार लक्ष्मणः क्रुद्धो युद्धं परपुरञ्जयः ।
स कुम्भकर्णस्य शरान् शरीरे सप्तवीर्यवान् ॥ १०१
निचखानाददे चान्यान्विससर्जच लक्ष्मणः ।
(भिद्यमानस्तदा तैस्तु विव्येहे स च राक्षसः ॥
ततश्चुकोप बलवान् सुमित्रानन्दवर्धनः ॥
अथास्य कवचं शुभ्रं जाम्बूनदमयं शुभम् ।
प्रच्छादयामास शरैः सन्ध्याभ्रमिव मारुतः ॥
नीलाञ्जनचयप्रख्यैश्शरैः काञ्चनभूषणैः ।
आच्छाद्यमानश्शुशुभे मेघैस्सूर्य इवांशुमान् ॥
ततस्स राक्षसो भीमस्सुमित्रानन्दवर्धनम् ।
अवज्ञयैव प्रोवाच वाक्यं मेघौघनिस्स्वनम् ॥
“ अन्तकस्यापि क्रुद्धस्य भयदातारमाहवे ।
युध्यता मामभीतेन ख्यापिता वीरता त्वया ॥
प्रगृहीतायुधस्येव मृत्योरिव महाहवे ।
तिष्ठन्नप्यग्रतः पूज्यः को मे युद्धप्रदायकः ॥
ऐरावतगजारूढो वृतस्सर्वामरैः प्रभुः ।
नैव शक्रोऽपि समरे स्थितपूर्वः कदाचन ॥
अद्य त्वयाहं सौमित्रे ! बलेनापि पराक्रमैः ।
तोषितो गन्तुमिच्छामि त्वामनुज्ञाप्य राघवम् ॥
सत्त्ववैर्यबलौघेन तोषितोऽहं रणे त्वया ।
राममेवैकमिच्छामि हन्तुं यस्मिन् हते हतम् ॥

रामे मया चेन्निहते येऽन्ये स्थास्यन्ति संयुगे ।
तानहं योधयिष्यामि स्वबलेन प्रमाथिना ॥"
इत्युक्तवाक्यं तद्रक्षः प्रोवाच स्तुतिसंहितम् ।
इदं घोरतरं वाक्यं सौमित्रिः प्रहसन्निव ॥
" यस्त्वं शक्रादिभिर्देवैरसह्यं प्राह पौरुषम् ।
तत्सत्यं नान्यथा वीर दृष्टस्तेऽद्य पराक्रमः ॥
एष दाशरथी रामस्तिष्ठत्यद्रिरिवापरः ।"
इति श्रुत्वा ह्यनादृत्य लक्ष्मणं स निशाचरः ॥)
अतिक्रम्य च सौमित्रिं कुम्भकर्णो महाबलः ॥ १०२
राममेवाभिदुद्राव दारयन्निव मेदिनीम् ।
अथ दाशरथी रामो रौद्रमस्त्रं प्रयोजयन् ॥ १०३
कुम्भकर्णस्य हृदये ससर्ज निशितान् शरान् ।
तस्य रामेण विद्धस्य सहसाभिप्रधावतः ॥ १०४
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्चिषः ।
रामास्त्रविद्धो घोरं वै नदन्राक्षसपुङ्गवः ॥ १०५
अभ्यधावत संक्रुद्धो हरीन्विद्रावयन्रणे ।
तस्योरसि निमग्नाश्च शरा बर्हिणवाससः ॥ १०६
हस्ताच्चापि परिभ्रष्टा पपातोर्व्यां महागदा ।
आयुधानि च सर्वाणि विप्राकीर्यन्त भूतले ॥ १०७
स निरायुधमात्मानं यदा मेने महाबलः ।
मुष्टिभ्यां चरणाभ्यां च चकार कदनं महत् ॥ १०८
स बाणैरतिविद्धाङ्गः क्षतजेन समुक्षितः ।
रुधिरं प्रतिसुस्राव गिरिः प्रस्रवणं यथा ॥ १०९

स तीव्रेण च कोपेन रुधिरेण च मूर्छितः ।
वानरान्राक्षसानृक्षान् खादन्विपरिधावति ॥ ११०

अथ शृङ्गं समाविध्य भीमं भीमपराक्रमः ।
चिक्षेप राममुद्दिश्य बलवानन्तकोपमः ॥ १११

अप्राप्तमन्तरा रामस्सप्तभिस्तैरजिह्मगैः ।
शरैः काञ्चनचित्राङ्गैश्चिच्छेद पुरुषर्षभः ॥ ११२

तन्मेरुशिखराकारं द्योतमानमिव श्रिया ।
द्वे शते वानरेन्द्राणां पतमानमपातयत् ॥ ११३

तस्मिन्काले स धर्मात्मा लक्ष्मणो राममब्रवीत् ।
"कुम्भकर्णवधे युक्तो योगान्परिमृशन् बहून् ॥ ११४

नैवायं वानरान्राजन्! नापि जानाति राक्षसान् ।
मत्तश्शोणितगन्धेन स्वान्परांश्चैव खादति ॥ ११५

साध्वेनमधिरोहन्तु सर्वे ते वानरर्षभाः ।
यूथपाश्च यथा मुख्यास्तिष्ठन्त्वस्य समन्ततः ॥ ११६

अप्ययं दुर्मतिः काले गुरुभारप्रपीडितः ।
प्रपतन्राक्षसो भूमौ नान्यान्हन्यात् प्लवङ्गमान् ॥" ११७

तस्य तद्वचनं श्रुत्वा राजपुत्रस्य धीमतः ।
ते समारुरुहुर्हृष्टाः कुम्भकर्णं प्लवङ्गमाः ॥ ११८

कुम्भकर्णस्तु संक्रुद्धास्समारूढः प्लवङ्गमैः ।
व्यधूनयत्तान्वेगेन दुष्टहस्तीव हस्तिपान् ॥ ११९

तान्दृष्ट्वा निर्धुतान्रामो दुष्टोऽयमिति राक्षसः ।
समुत्पपात वेगेन धनुरुत्तममाददे ॥ १२०

क्रोधताम्रेक्षणो वीरो निर्दहन्निव चक्षुषा ।
राघवो राक्षसं रोषादभिदुद्राव वेगितः ॥ १२१
यूथपान्हर्षयन् सर्वान् कुम्भकर्णभयार्दितान् ॥ १२२
स चापमादाय भुजङ्गकल्पं दृढज्यमुग्रं तपनीयचित्रम् ।
हरीन् समाश्वास्य समुत्पपात रामो निबद्धोत्तमतूणबाणः ॥ १२३
स वानरगणैस्तैस्तु वृतः परमदुर्जयः ।
लक्ष्मणानुचरो रामस्संप्रतस्थे महाबलः ॥ १२४
स ददर्श महात्मानं किरीटिनमरिन्दमम् ।
शोणिताप्लुतसर्वाङ्गं कुम्भकर्णं महाबलम् ॥ १२५
सवान् समभिधावन्तं यथा रुष्टं दिशागजम् ।
मार्गमाणं हरीन् क्रुद्धं राक्षसैः परिवारितम् ॥ १२६
विन्ध्यमन्दरसङ्काशं काञ्चनाङ्गदभूषणम् ।
स्रवन्तं रुधिरं वक्त्राद्वर्षमेघमिवोत्थितम् ॥ १२७
जिह्वया परिलिह्यन्तं शोणितं शोणितेक्षणम् ।
मृद्नन्तं वानरानीकं कालान्तकयमोपमम् ॥ १२८
तं दृष्ट्वा राक्षसश्रेष्ठं प्रदीप्तानलवर्चसम् ।
विष्फारयामास तदा कार्मुकं पुरुषर्षभः ॥ १२९
स तस्य चापनिर्घोषात् कुपितो राक्षसर्षभः ।
अमृष्यमाणस्तं घोषमभिदुद्राव राघवम् ॥ १३०
ततस्तु वातोद्धतमेघकल्पं भुजङ्गराजोत्तमभोगबाहुम् ।
तमापतन्तं धरणीधराभमुवाच रामो युधि कुम्भकर्णम् ॥ १३१
" आगच्छ रक्षोधिप ! माविषादमवस्थितोऽहं प्रगृहीतचापः ।
अवेहि मां शक्रसपत्न ! रामं मया मुहूर्ताद्भविता विचेताः ॥ १३२

रामोऽयमिति विज्ञाय जहास विकृतस्वनम् ।
अभ्यधावत संक्रुद्धो हरीन्विद्रावयन् रणे ॥ १३३
पातयन्निव सर्वेषां हृदयानि वनौकसाम् ।
प्रहस्य विकृतं भीमं स मेघस्तनितोपमम् ॥ १३४
कुम्भकर्णो महातेजा राघवं वाक्यमब्रवीत् ।
"नाहं विराधो विज्ञेयो न कबन्धः खरो न च ॥ १३५
न वाली न च मारीचः कुम्भकर्णोऽहमागतः ।
पश्य मे मुद्गरं घोरं सर्वकालायसं महत् ॥ १३६
अनेन निर्जिता देवा दानवाश्च पुरा मया ।
विकर्णनास इति मां नावज्ञातुं त्वमर्हसि ॥ १३७
स्वल्पाऽपि हि न मे पीडा कर्णनासाविनाशनात् ।
दर्शयेक्ष्वाकुशार्दूल ! वीर्यं गात्रेषु मे लघु ॥ १३८
ततस्त्वां भक्षयिष्यामि दृष्टपौरुषविक्रमम् ॥"
स कुम्भकर्णस्य वचो निशम्य रामस्सुपुङ्खान्विससर्ज बाणान् ।
तैराहतोवज्रसमप्रवेगैर्न चुक्षुभे न व्यथते सुरारिः ॥ १३९
यैस्सायकैस्सालवरा निकृत्ता वाली हतो वानरपुङ्गवश्च ।
ते कुम्भकर्णस्य तदा शरीरे वज्रोपमा न व्यथयां प्रचक्रुः ॥ १४०
स वारिधारा इव सायकांस्तान् पिबन् शरीरेण महेन्द्रशत्रुः ।
जघान रामस्य शरप्रवेगं व्याविध्य तं मुद्गरमुग्रवेगम् ॥ १४१
ततस्तु रक्षः क्षतजानुलिप्तं वित्रासनं देवमहाचमूनाम् ।
विव्याथ तं मुद्गरमुग्रवेगं विद्रावयामास चमूं हरीणाम् ॥ १४२
वायव्यमादाय ततो वरास्त्रं रामः प्रचिक्षेप निशाचराय ।
समुद्गरं तेन जघान बाहू सकृत्तबाहुस्तुमुलं ननाद ॥ १४३

स तस्य बाहुर्गिरिशृङ्गकल्पः समुद्गरो राघवबाणकृत्तः ।
पपात तस्मिन् हरिराजसैन्ये जघान तां वानरवाहिनीं च ॥ १४४

ते वानरा भग्नहतावशेषाः पर्यन्तमाश्रित्य तदा विषण्णाः ।
प्रवेपिताङ्गा ददृशुस्सुघोरं नरेन्द्ररक्षोधिपसन्निपातम् ॥ १४५

स कुम्भकर्णोऽस्त्रनिकृत्तबाहुः महानिकृत्ताग्र इवाचलेन्द्रः ।
उत्पाटयामास करेण वृक्षं ततो विदुद्राव रणे नरेन्द्रम् ॥ १४६

स तस्य बाहुं सहसालवृक्षं समुद्यतं पन्नगभोगकल्पम् ।
ऐन्द्रास्त्रयुक्तेन जघान रामो बाणेन जाम्बूनदचित्रितेन ॥ १४७

स कुम्भकर्णस्य भुजो निकृत्तः पपात भूमौ गिरिसन्निकाशः ।
विवेष्टमानोऽभिजघान वृक्षान् शैलान् शिला वानरराक्षसांश्च॥ १४८

तं छिन्नबाहुं समवेक्ष्य रामस्समापतन्तं सहसा नदन्तम् ।
द्वावर्धचन्द्रौ निशितौ प्रगृह्य चिच्छेद पादौ युधि राक्षसस्य ॥ १४९

तौ तस्य पादौ प्रदिशो दिशश्च गिरीन्गुहांश्चैव महार्णवं च ।
लङ्कां च सेनां कपिराक्षसानां विनादयन्तौ विनिपेततुश्च ॥ १५०

निकृत्तबाहुर्विनिकृत्तपादो विदार्य वक्त्रं बडबामुखाभम् ।
दुद्राव रामं सहसाऽभिगर्जन् राहुर्यथा चन्द्रमिवान्तरिक्षे ॥ १५१

अपूरयत्तस्य मुखं शिताग्रै रामश्शरैर्हेमपिनद्धपुङ्खैः ।
स पूर्णवक्त्रो न शशाक वक्तुं चुकूज कृच्छ्रेण मुमोह चापि ॥ १५२

अथाददे सूर्यमरीचिकल्पं सब्रह्मदण्डान्तककालकल्पम् ।
अरिष्टमैन्द्रं निशितं सुपुङ्खं रामश्शरं मारुततुल्यवेगम् ॥ १५३

तं वज्रजाम्बूनदचारुपुङ्खं प्रदीप्तसूर्यज्वलनप्रकाशम् ।
महेन्द्रवज्राशनितुल्यवेगं रामः प्रचिक्षेप निशाचराय ॥ १५४

स सायको राघवबाहुचोदितो दिशस्स्वभासा दश संप्रकाशयन् ।
स धूमवैश्वानरदीप्तदर्शनो जगाम शक्राशनिवीर्यविक्रमः ॥ १५५

स तं महापर्वतकूटसन्निभं विवृत्तदंष्ट्रं चलचारुकुण्डलम् ।
चकर्त रक्षोधिपतेश्शिरस्तथा यथैव वृत्रस्य पुरा पुरन्दरः ॥ १५६

कुम्भकर्णशिरो भाति कुण्डलालंकृतं महत् ।
आदित्येऽभ्युदिते रात्रौ मध्यस्थ इव चन्द्रमाः ॥ १५७

तद्रामबाणाभिहतं पपात रक्षश्शिरः पर्वतसन्निकाशम् ।
बभञ्ज चर्यागृहगोपुराणि प्राकारमुच्चन्तमपातयच्च ॥ १५८

न्यपतत्कुम्भकर्णोऽथ स्वकायेन निपातयन् ।
प्लवङ्गमानां कोटीश्च परितस्संप्रधावताम् ॥ १५९

तच्चातिकायं हिमवत्प्रकाशं रक्षस्ततस्तोयनिधौ पपात ।
ग्राहान्वरान्मीनवरान्भुजङ्गान् ममर्द भूमिं च तदा विवेश ॥ १६०

तस्मिन् हते ब्राह्मणदेवशत्रौ महाबले संयति कुम्भकर्णे ।
चचाल भूर्भूमिधराश्च सर्वे हर्षाच्च देवास्तुमुलं प्रणेदुः ॥ १६१

ततस्तु देवर्षि महर्षि पन्नगास्सुराश्च भूतानि सुपर्णगुह्यकाः ।
सयक्षगन्धर्वगणा नभोगताः प्रहर्षिता रामपराक्रमेण ॥ १६२

ततस्तु ते तस्य वधेन भूरिणा मनस्विनो नैर्ऋतराजबान्धवाः ।
विनेदुरुच्चैर्व्यथिता रघूत्तमं हरिं समीक्ष्यैव यथा सुरार्दिताः ॥ १६३

स देवलोकस्य तमो निहत्य सूर्यो यथा राहुमुखाद्विमुक्तः ।
तथा व्यभासीद्भुवि वानरौघे निहत्य रामो युधि कुम्भकर्णम् ॥ १६४

प्रहर्षमीयुर्बहवस्तु वानराः प्रबुद्धपद्मप्रतिमैरिवाननैः ।
अपूजयन् राघवमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ १६५

स कुम्भकर्णं सुरसङ्घमर्दनं महत्सु युद्धेषु पराजितश्रमम् ।
ननन्द हत्वा भरताग्रजो रणे महासुरं वृत्रमिवामराधिपः ॥ १६६

इति श्रीमद्युद्धकाण्डे सप्तषष्टितमस्सर्गः ॥

## ॥ अष्टषष्टितमस्सर्गः ॥

कुम्भकर्णं हतं दृष्ट्वा राघवेण महात्मना ।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदयन् ॥ १

"राजन्! सकालसङ्काशस्संयुक्तः कालकर्मणा ।
विद्राव्य वानरीं सेनां भक्षयित्वा च वानरान् ॥ २

प्रतपित्वा मुहूर्तं च प्रशान्तो रामतेजसा ।
कायेनार्धप्रविष्टेन समुद्रं भीमदर्शनम् ॥ ३

निकृत्तकण्ठोरुभुजो विक्षरन् रुधिरं बहु ।
रुध्वा द्वारं शरीरेण लङ्कायाः पर्वतोपमः ॥ ४

कुम्भकर्णस्तव भ्राता काकुत्स्थशरपीडितः ।
लगण्डभूतो विकृतो दावदग्ध इव द्रुमः ॥" ५

तं श्रुत्वा निहतं संख्ये कुम्भकर्णं महाबलम् ।
रावणश्शोकसन्तप्तो मुमोह च पपात च ॥ ६

पितृव्यं निहतं श्रुत्वा देवान्तकनरान्तकौ ।
त्रिशिराश्चातिकायश्च रुरुदुश्शोकपीडिताः ॥ ७

भ्रातरं निहतं श्रुत्वा रामेणाक्लिष्टकर्मणा ।
महोदरमहापार्श्वौ शोकाक्रान्तौ बभूवतुः ॥ ८

ततः कृच्छ्रात्समासाद्य संज्ञां राक्षसपुङ्गवः ।
कुम्भकर्णवधाद्दीनो विललाप स रावणः ॥ ९

'हा वीर! रिपुदर्पघ्न! कुम्भकर्ण! महाबल!।
त्वं मां विहाय वै दैवाद्यातोऽसि यमसादनम्॥ १०

मम शल्यमनुद्धृत्य बान्धवानां महाबलः।
शत्रुसैन्यं प्रताप्यैकस्त्वं मां सन्त्यज्य गच्छसि॥ ११

इदानीं खल्वहं नास्मि यस्य मे दक्षिणो भुजः।
पतितो यं समाश्रित्य न बिभेमि सुरासुरान्॥ १२

कथमेवंविधो वीरो देवदानवदर्पहा।
कालाग्निप्रतिमो ह्यद्य राघवेण रणे हतः॥ १३

यस्य ते वज्रनिष्पेषो न कुर्याद्व्यसनं सदा।
स कथं रामबाणार्तः प्रसुप्तोऽसि महीतले॥ १४

एते देवगणास्सार्धमृषिभिर्गगने स्थिताः।
निहतं त्वां रणे दृष्ट्वा निनदन्ति प्रहर्षिताः॥ १५

ध्रुवमद्यैव संहृष्टा लब्धलक्षाः प्लवङ्गमाः।
आरोक्ष्यन्ति हि दुर्गाणि लङ्काद्वाराणि सर्वशः॥ १६

राज्येन नास्ति मे कार्यं किं करिष्यामि सीतया।
कुम्भकर्णविहीनस्य जीविते नास्ति मे रतिः॥ १७

यद्यहं भ्रातृहन्तारं न हन्मि युधि राघवम्।
ननु मे मरणं श्रेयो न चेदं व्यर्थजीवितम्॥ १८

अद्यैव तं गमिष्यामि देशं यत्रानुजो मम।
न हि भ्रातॄन् समुत्सृज्य क्षणं जीवितुमुत्सहे॥ १९

देवा हि मां हसिष्यन्ति दृष्ट्वा पूर्वापकारिणम्।
कथमिन्द्रं जयिष्यामि कुम्भकर्ण! हते त्वयि॥ २०

तदिदं मामनुप्राप्तं विभीषणवचश्शुभम् ।
यदज्ञानान्मया तस्य न गृहीतं महात्मनः ॥ २१
विभीषणवचो यावत्कुम्भकर्णप्रहस्तयोः ।
विनाशोऽयं समुत्पन्नो मां व्रीडयति दारुणः ॥ २२
तस्यायं कर्मणः प्राप्तो विपाको मम शोकदः ।
यन्मया धार्मिकश्श्रीमान् स निरस्तो विभीषणः ॥" २३
इति बहुविधमाकुलान्तरात्मा कृपणमतीव विलप्य कुम्भकर्णम् ।
न्यपतदथ दशाननो भृशार्तस्तमनुजमिन्द्ररिपुं हतं विदित्वा ॥ २४
(ततस्तु सम्पीडितकोपवह्निर्निशाचराणामधिपो महाबलः ।
तथाऽभवद्भ्रातृविनाशनार्तो मुहुर्मुहुश्चैव विनिःश्वसन् बली ॥ २५

इति श्रीमद्युद्धकाण्डे अष्टषष्टितमस्सर्गः ॥

---

## ॥ एकोनसप्ततितमस्सर्गः ॥

एवं विलपमानस्य रावणस्य दुरात्मनः ।
श्रुत्वा शोकाभितप्तस्य त्रिशिरा वाक्यमब्रवीत् ॥ १
एवमेव महावीर्यो हतो नस्तात मध्यमः ।
न तु सत्पुरुषा राजन् ! विलपन्ति यथा भवान् ॥ २
नूनं त्रिभुवनस्यापि पर्याप्तस्त्वमसि प्रभो ।
स कस्मात्प्राकृत इव शोचस्यात्मानमीदृशम् ॥ ३
ब्रह्मदत्ताऽस्ति ते शक्तिः कवचस्सायको धनुः ।
सहस्रखरसंयुक्तो रथो मेघस्वनो महान् ॥ ४
त्वयाऽसकृद्विशस्त्रेण विशस्ता देवदानवाः ।
स सर्वायुधसंपन्नो राघवं शास्तुमर्हसि ॥ ५

कामं तिष्ठ महाराज ! निर्गमिष्याम्यहं रणम् ।
उद्धरिष्यामि ते शत्रून् गरुडः पन्नगानिव ॥ ६
शम्बरो देवराजेन नरको विष्णुना यथा ।
तथाऽद्य शयिता रामो मया युधि निपातितः ॥" ७
श्रुत्वा त्रिशिरसो वाक्यं रावणो राक्षसाधिपः ।
पुनर्जातमिवात्मानं मन्यते कालचोदितः ॥ ८
श्रुत्वा त्रिशिरसो वाक्यं देवान्तकनरान्तकौ ।
अतिकायश्च तेजस्वी बभूवुर्युद्धहर्षिताः ॥ ९
ततोऽहमहमित्येव गर्जन्तो नैर्ऋतर्षभाः ।
रावणस्य सुता वीराश्शक्रतुल्यपराक्रमाः ॥ १०
अन्तरिक्षगतास्सर्वे सर्वे मायाविशारदाः ।
सर्वे त्रिदशदर्पघ्नास्सर्वे चरणदुर्जयाः ॥ ११
सर्वे सुबलसम्पन्नास्सर्वे विस्तीर्णकीर्तयः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ १२
देवैरपि सगन्धर्वैस्सकिन्नरमहोरगैः ।
सर्वेऽस्त्रविदुषो वीरास्सर्वे युद्धविशारदाः ॥ १३
सर्वे प्रवरविज्ञानास्सर्वे लब्धवरास्तथा ।
स तैस्तदा भास्करतुल्यवर्चसैः पुत्रैर्वृतश्शत्रुबलश्रमर्दनैः ।
रराज राजा मघवान्यथामरैर्वृतो महादानवदर्पनाशनैः ॥ १४
स पुत्रान् संपरिष्वज्य भूषयित्वा च भूषणैः ।
आशीर्भिश्च प्रशस्ताभिः प्रेषयामास संयुगे ॥ १५
युद्धोन्मत्तं च मत्तं च भ्रातरौ चापि रावणः ।
महापार्श्वं प्रमत्तं च भ्रातरं च महोदरम् ॥ ) १६

रक्षणार्थं कुमाराणां प्रेषयामास संयुगे ।
तेऽभिवाद्य महात्मानं रावणं रिपुरावणम् ॥ १७

कृत्वा प्रदक्षिणं चैव महाकायाः प्रतस्थिरे ।
सर्वौषधीभिर्गन्धैश्च समालभ्य महाबलाः ॥ १८

निर्जग्मुर्नैर्ऋतश्रेष्ठाष्षडेते युद्धकाङ्क्षिणः ।
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ १९

महोदरमहापार्श्वौ निर्जग्मुः कालचोदिताः ।
ततस्सुदर्शनं नाम नीलजीमूतसंनिभम् ॥ २०

ऐरावतकुले जातमारुरोह महोदरः ।
सर्वायुधसमायुक्तं तूणीभिश्च स्वलंकृतम् ॥ २१

रराज गजमास्थाय सवितेवास्तमूर्धनि ।
हयोत्तमसमायुक्तं सर्वायुधसमाकुलम् ॥ २२

आरुरोह रथश्रेष्ठं त्रिशिरा रावणात्मजः ।
त्रिशिरा रथमास्थाय विरराज धनुर्धरः ॥ २३

सविद्युदुल्कश्शैलाग्रे सेन्द्रचाप इवाम्बुदः ।
त्रिभिः किरीटैश्शुशुभे त्रिशिरास्स रथोत्तमे ॥ २४

हिमवानिव शैलेन्द्रस्त्रिभिः काञ्चनपर्वतैः ।
अतिकायोऽपि तेजस्वी राक्षसेन्द्रसुतस्तदा ॥ २५

आरुरोह रथश्रेष्ठं श्रेष्ठस्सर्वधनुष्मताम् ।
सुचक्राक्षं सुसंयुक्तं स्वनुकर्षं सुकूबरम् ॥ २६

तूणीबाणासनैर्दीप्तं प्रासासिपरिघाकुलम् ।
स काञ्चनविचित्रेण मकुटेन विराजता ॥ २७

भूषणैश्च बभौ मेरुः किरणैरिव भासयन् ।
स रराज रथे तस्मिन् राजसूनुर्महाबलः ॥ २८

वृतो नैर्ऋतशार्दूलैर्वज्रपाणिरिवामरैः ।
हयमुच्चैःश्रवःप्रख्यं श्वेतं कनकभूषणम् ॥ २९

मनोजवं महाकायमारुरोह नरान्तकः ।
गृहीत्वा प्रासमुल्काभं विरराज नरान्तकः ॥ ३०

शक्तिमादाय तेजस्वी गुहश्शिखिगतो यथा ।
देवान्तकस्समादाय परिघं वज्रभूषणम् ॥ ३१

परिगृह्य गिरिं दोर्भ्यां वपुर्विष्णोर्विडम्बयन् ।
महापार्श्वो महाकायो गदामादाय वीर्यवान् ॥ ३२

विरराज गदापाणिः कुबेर इव संयुगे ।
प्रतस्थिरे महात्मानो बलैरप्रतिमैर्वृताः ॥ ३३

सुरा इवामरावत्या बलैरप्रतिमैर्वृताः ।
तान् गजैश्च तुरङ्गैश्च रथैश्चाम्बुदनिस्वनैः ॥ ३४

अनुजग्मुर्महात्मानो राक्षसाः प्रवरायुधाः ।
ते विरेजुर्महात्मानः कुमारास्सूर्यवर्चसः ॥ ३५

किरीटिनश्श्रियाजुष्टा ग्रहा दीप्ता इवाम्बरे ।
प्रगृहीता बभौ तेषां शस्त्राणामावलिस्सिता ॥ ३६

शारदाभ्रप्रतीकाशा हंसावलिरिवाम्बरे ।
मरणं वापि निश्चित्य शत्रूणां वा पराजयम् ॥ ३७

इति कृत्वा मतिं वीरा निर्जग्मुस्संयुगार्थिनः ।
जगर्जुश्च प्रणेदुश्च चिक्षिपुश्चापि सायकान् ॥ ३८

जगृहुश्चापि ते वीरा निर्यान्तो युद्धदुर्मदाः ।
क्ष्वेलितास्फोटनिनदैश्चचाल च वसुन्धरा ॥ ३९

रक्षसां सिंहनादैश्च पुस्फोटेव तदाम्बरम् ।
तेऽभिनिष्क्रम्य मुदिता राक्षसेन्द्रा महाबलाः ॥ ४०

ददृशुर्वानरानीकं समुद्यतशिलानगम् ।
हरयोऽपि महात्मानो ददृशुर्नैर्ऋतं बलम् ॥ ४१

हस्त्यश्वरथसम्बाधं किङ्किणीशतनादितम् ।
नीलजीमूतसङ्काशं समुद्यतमहायुधम् ॥ ४२

दीप्तानलरविप्रख्यैस्सर्वतो नैर्ऋतैर्वृतम् ।
तद्दृष्ट्वा बलमायान्तं लब्धलक्षाः प्लवङ्गमाः ॥ ४३

समुद्यतमहाशैलास्संप्रणेदुर्महाबलाः ।
अमृष्यमाणा रक्षांसि प्रतिनर्दन्ति वानराः ॥ ४४

ततस्समुद्घुष्टरवं निशम्य रक्षोगणा वानरयूथपानाम् ।
अमृष्यमाणाः परहर्षमुग्रं महाबला भीमतरं विनेदुः ॥ ४५

ते राक्षसबलं घोरं प्रविश्य हरियूथपाः ।
विचेरुरुद्यतैश्शैलैर्नगाश्शिखरिणो यथा ॥ ४६

केचिदाकाशमाविश्य केचिदुर्व्यां प्लवङ्गमाः ।
रक्षस्सैन्येषु संक्रुद्धाश्चेरुर्द्रुमशिलायुधाः ॥ ४७

द्रुमांश्च विपुलस्कन्धान् गृह्य वानरपुङ्गवाः ।
तद्युद्धमभवद्घोरं रक्षो वानरसंकुलम् ॥ ४८

ते पादपशिलाश्शैलैश्चक्रुर्वृष्टिमनूपमाम् ।
बाणौघैर्वार्यमाणाश्च हरयो भीमविक्रमाः ॥ ४९

सिंहनादान्विनेदुश्च रणे वानरराक्षसाः ।
शिलाभिश्चूर्णयामासुर्यातुधानान् प्लवङ्गमाः ॥ ५०
निजघ्नुस्संयुगे क्रुद्धाः कवचाभरणावृतान् ।
केचिद्रथगतान्वीरान् गजवाजिगतानपि ॥ ५१
निजघ्नुस्सहसाऽऽप्लुत्य यातुधानान् प्लवङ्गमाः ।
शैलशृङ्गाचिताङ्गाश्च मुष्टिभिर्वान्तलोचनाः ॥ ५२
चेरुः पेतुश्च नेदुश्च तत्र राक्षसपुङ्गवाः ।
राक्षसाश्च शरैस्तीक्ष्णैर्बिभिदुः कपिकुञ्जरान् ॥ ५३
शूलमुद्गरखड्गैश्च जघ्नुः प्रासैश्च शक्तिभिः ।
अन्योन्यं पातयामासुः परस्परजयैषिणः ॥ ५४
रिपुशोणितदिग्धाङ्गास्तत्र वानरराक्षसाः ।
ततश्शैलैश्च खड्गैश्च विसृष्टैर्हरिराक्षसैः ॥ ५५
मुहूर्तेनावृता भूमिरभवच्छोणिताप्लुता ।
विकीर्णपर्वताकारै रक्षोभिररिमर्दनैः ॥ ५६
आसीद्वसुमती पूर्णा तदा युद्धमदान्वितैः ।
आक्षिप्ताः क्षिप्यमाणाश्च भग्नशूलाश्च वानरैः ॥ ५७
पुनरङ्गैस्तथा चक्रुरासन्ना युद्धमद्भुतम् ।
वानरान्वानरैरेव जघ्नुस्ते रजनीचराः ॥ ५८
राक्षसान्राक्षसैरेव जघ्नुस्ते हरियूथपाः ।
आक्षिप्य च शिलास्तेषां निजघ्नू राक्षसा हरीन् ॥ ५९
तेषां चाच्छिद्य शस्त्राणि जघ्नू रक्षांसि वानराः ।
निजघ्नुश्शैलशूलास्त्रैर्बिभिदुश्च परस्परम् ॥ ६०

सिंहनादान्विनेदुश्च रणे वानरराक्षसाः ।
छिन्नवर्मतनुत्राणा राक्षसा वानरैर्हताः ॥ ६१

रुधिरं प्रस्रुतास्तत्र रससारमिव द्रुमाः ।
रथेन च रथं चापि वारणेनैव वारणम् ॥ ६२

हयेन च हयं केचिन्निजघ्नुर्वानरा रणे ।
प्रहृष्टमनसस्सर्वे प्रगृहीतमहाशिलाः ॥ ६३

हरयो राक्षसान् जघ्नुर्द्रुमैश्च बहुशाखिभिः ।
तद्युद्धमभवद्घोरं रक्षो वानरसंकुलम् ॥ ६४

क्षुरप्रैरर्धचन्द्रैश्च भल्लैश्च निशितैश्शरैः ।
राक्षसा वानरेन्द्राणां चिच्छिदुः पादपान् शिलाः ॥ ६५

विकीर्णैः पर्वताग्रैश्च द्रुमैश्छिन्नैश्च संयुगे ।
हतैश्च कपिरक्षोभिर्दुर्गमा वसुधाऽभवत् ॥ ६६

ते वानरा गर्वितहृष्टचेष्टास्संग्राममासाद्य भयं विमुच्य ।
युद्धं तु सर्वे सहराक्षसैस्तैर्नानायुधाश्चक्रुरदीनसत्त्वाः ॥ ६७

तस्मिन्प्रवृत्ते तुमुले विमर्दे प्रहृष्यमाणेषु वलीमुखेषु ।
निपात्यमानेषु च राक्षसेषु महर्षयो देवगणाश्च नेदुः ॥ ६८

ततो हयं मारुततुल्यवेगमारुह्य शक्तिं निशितां प्रगृह्य ।
नरान्तको वानरराजसैन्यं महार्णवं मीन इवाविवेश ॥ ६९

स वानरान् सप्तशतानि वीरः प्रासेन दीप्तेन विनिर्बिभेद ।
एकः क्षणेनेन्द्ररिपुर्महात्मा जघान सैन्यं हरिपुङ्गवानाम् ॥ ७०

ददृशुश्च महात्मानं हयपृष्ठे प्रतिष्ठितम् ।
चरन्तं हरिसैन्येषु विद्याधरमहर्षयः ॥ ७१

स तस्य ददृशे मार्गो मांसशोणितकर्दमः ।
पतितैः पर्वताकारैर्वानरैरभिसंवृतः ॥ ७२

यावद्विक्रमितुं बुद्धिं चक्रुः प्लवगपुङ्गवाः ।
तावदेतावतिक्रम्य निर्बिभेद नरान्तकः ॥ ७३

ज्वलन्तं प्रासमुद्यम्य संग्रामाग्रे नरान्तकः ।
(दारयंश्च कपीन् सर्वान्निवृत्तोऽप्यनुधावतः ॥) ७४

ददाह हरिसैन्यानि वनानीव विभावसुः ।
यावदुत्पाटयामासुर्वृक्षान् शैलान् वनौकसः ॥ ७५

तावत्प्रासहता पेतुर्वज्रकृत्ता इवाचलाः ।
दिक्षु सर्वासु बलवान्विचचार नरान्तकः ॥ ७६

प्रमृद्नन् सर्वतो युद्धे प्रावृट्काले यथानिलः ।
न शेकुर्धावितुं वीरा न स्थातुं स्पन्दितुं भयात् ॥ ७७

उत्पतन्तं स्थितं यान्तं सर्वान्विव्याध वीर्यवान् ।
एकेनान्तककल्पेन प्रासेनादित्यतेजसा ॥ ७८

भिन्नानि हरिसैन्यानि निपेतुर्धरणीतले ।
वज्रनिष्पेषसदृशं प्रासस्याभिनिपातनम् ॥ ७९

न शेकुर्वानरास्सोढुं ते विनेदुर्महास्वनम् ।
पततां हरिवीराणां रूपाणि प्रचकाशिरे ॥ ८०

वज्रभिन्नाग्रकूटानां शैलानां पततामिव ।
ये तु पूर्वं महात्मानः कुम्भकर्णेन पातिताः ॥ ८१

ते स्वस्था वानरश्रेष्ठास्सुग्रीवमुपतस्थिरे ।
विप्रेक्षमाणस्सुग्रीवो ददर्श हरिवाहिनीम् ॥ ८२

नरान्तकभयत्रस्तां विद्रवन्तीमितस्ततः ।
विद्रुतां वाहिनीं दृष्ट्वा स ददर्श नरान्तकम् ॥ ८३

गृहीतप्रासमायान्तं हयपृष्ठे प्रतिष्ठितम् ।
अथोवाच महातेजास्सुग्रीवो वानराधिपः ॥ ८४

कुमारमङ्गदं वीरं शक्रतुल्यपराक्रमम् ।
"गच्छ त्वं राक्षसं वीरो योऽसौ तुरगमास्थितः ॥ ८५

क्षोभयन्तं हरिबलं क्षिप्रं प्राणैर्वियोजय ।"
स भर्तुर्वचनं श्रुत्वा निष्पपाताङ्गदस्ततः ॥ ८६

अनीकान्मेघसङ्काशान् मेघानीकानिवांशुमान् ।
शैलसङ्घातसङ्काशो हरीणामुत्तमोऽङ्गदः ॥ ८७

रराजाङ्गदसन्नद्धस्सधातुरिव पर्वतः ।
निरायुधो महातेजाः केवलं नखदंष्ट्रवान् ॥ ८८

नरान्तकमभिक्रम्य वालिपुत्रोऽब्रवीद्वचः ।
"तिष्ठ किं प्राकृतैरेभिर्हरिभिस्त्वं करिष्यसि ॥ ८९

अस्मिन्वज्रसमस्पर्शं प्रासं क्षिप ममोरसि ।"
अङ्गदस्य वचः श्रुत्वा प्रचुक्रोध नरान्तकः ॥ ९०

सन्दश्य दशनैरोष्ठं विनिःश्वस्य भुजङ्गवत् ।
अभिगम्याङ्गदं क्रुद्धो वालिपुत्रं नरान्तकः ॥ ९१

प्रासं समाविध्य तदाङ्गदाय समुज्ज्वलन्तं सहसोत्ससर्ज ।
स वालिपुत्रोरसि वज्रकल्पे बभूव भग्नो न्यपतच्च भूमौ ॥ ९२

तं प्रासमालोक्य तदा विभग्नं सुवर्णकृत्तोरगभोगकल्पम् ।
तलं समुद्यम्य स वालिपुत्रस्तुरङ्गमं तस्य जघान मूर्ध्नि ॥ ९३

निमग्नतालुस्स्फुटिताक्षितारो निष्क्रान्तजिह्वोऽचलसन्निकाशः ।
स तस्य वाजी निपपात भूमौ तलप्रहारेण विशीर्णमूर्धा ॥ १४

नरान्तकः क्रोधवशं जगाम हतं तुरङ्गं पतितं निरीक्ष्य ।
समुष्टिमुद्यम्य महाप्रभावो जघान शीर्षे युधि वालिपुत्रम् ॥ १५

अथाङ्गदो मुष्टिविभिन्नमूर्धा सुस्राव तीव्रं रुधिरं भृशोष्णम् ।
मुहुर्विजज्वाल मुमोह चापि संज्ञां समासाद्य विसिस्मिये च ॥ १६

अथाङ्गदो वज्रसमानवेगं संवर्त्य मुष्टिं गिरिशृङ्गकल्पम् ।
निपातयामास तदा महात्मा नरान्तकस्योरसि वालिपुत्रः ॥ १७

समुष्टिनिष्पिष्टविभिन्नवक्षा ज्वालावमच्छोणितदिग्धगात्रः ।
नरान्तको भूमितले पपात यथाऽचलो वज्रनिपातभग्नः ॥ १८

अथान्तरिक्षे त्रिदशोत्तमानां वनौकसां चैव महाप्रणादः ।
बभूव तस्मिन्निहतेऽग्र्यवीरे नरान्तके वालिसुतेन संख्ये ॥ १९

अथाङ्गदो राममनःप्रहर्षणं सुदुष्करं तत्कृतवान् हि विक्रमम् ।
विसिस्मिये सोऽप्यतिवीर्यविक्रमः पुनश्च युद्धे स बभूव हर्षितः ॥

इति श्रीमद्युद्धकाण्डे एकोनसप्ततितमस्सर्गः ॥

---

## ॥ सप्ततितमस्सर्गः ॥

नरान्तकं हतं दृष्ट्वा चुक्रुशुर्नैर्ऋतर्षभाः ।
देवान्तकस्त्रिमूर्धा च पौलस्त्यश्च महोदरः ॥ १

आरूढो मेघसङ्काशं वारणेन्द्रं महोदरः ।
वालिपुत्रं महावीर्यमभिदुद्राव वीर्यवान् ॥ २

भ्रातृव्यसनसन्तप्तस्तदा देवान्तको बली ।
आदाय परिघं दीप्तमङ्गदं समभिद्रवत ॥ ३

रथमादित्यसंकाशं युक्तं परमवाजिभिः ।
आस्थाय त्रिशिरा वीरो वालिपुत्रमथाभ्ययात् ॥ ४

स त्रिभिर्देवदर्पघ्नैर्नैर्ऋतेन्द्रैरभिद्रुतः ।
वृक्षमुत्पाटयामास महाविटपमङ्गदः ॥ ५

देवान्तकाय तं वीरश्चिक्षेप सहसाङ्गदः ।
महावृक्षं महाशाखं शक्रो दीप्तमिवाशनिम् ॥ ६

त्रिशिरास्तं प्रचिच्छेद शरैराशीविषोपमैः ।
स वृक्षं कृत्तमालोक्य उत्पपात तदाङ्गदः ॥ ७

स ववर्ष ततो वृक्षान् शैलांश्च कपिकुञ्जरः ।
तान्प्रचिच्छेद संक्रुद्धस्त्रिशिरा निशितैश्शरैः ॥ ८

परिघाग्रेण तान्वृक्षान् बभञ्ज च सुरान्तकः ।
त्रिशिराश्चाङ्गदं वीरमभिदुद्राव सायकैः ॥ ९

गजेन समभिद्रुत्य वालिपुत्रं महोदरः ।
जघानोरसि संक्रुद्धस्तोमरैर्वज्रसन्निभैः ॥ १०

देवान्तकश्च संक्रुद्धः परिघेण तदाङ्गदम् ।
उपगम्याभिहत्याशु व्यपचक्राम वेगवान् ॥ ११

स त्रिभिर्नैर्ऋतश्रेष्ठैर्युगपत्समभिद्रुतः ।
न विव्यथे महातेजा वालिपुत्रः प्रतापवान् ॥ १२

स वेगवान्महावेगं कृत्वा परमदुर्जयः ।
तलेन भृशमुत्पत्य जघानास्य महागजम् ॥ १३

तस्य तेन प्रहारेण नागराजस्य संयुगे ।
पेततुर्लोचने तस्य विननाद स वारणः ॥ १४

विषाणं चास्य निष्कृष्य वालिपुत्रो महाबलः ।
देवान्तकमभिप्लुत्य ताडयामास संयुगे ॥ १५
स विह्वलितसर्वाङ्गो वातोद्धूत इव द्रुमः ।
लाक्षारससवर्णं च सुस्राव रुधिरं मुखात् ॥ १६
अथाश्वास्य महातेजाः कृच्छ्राद्देवान्तको बली ।
आविध्य परिघं घोरमाजघान तदाङ्गदम् ॥ १७
परिघाभिहतश्चापि वानरेन्द्रात्मजस्तदा ।
जानुभ्यां पतितो भूमौ पुनरेवोत्पपात ह ॥ १८
तमुत्पतन्तं त्रिशिरास्त्रिभिर्बाणैरजिह्मगैः ।
घोरैर्हरिपतेः पुत्रं ललाटेऽभिजघानह ॥ १९
ततोऽङ्गदं परिक्षिप्तं त्रिभिर्नैर्ऋतपुङ्गवैः ।
हनूमानपि विज्ञाय नीलश्चापि प्रतस्थतुः ॥ २०
ततश्चिक्षेप शैलाग्रं नीलस्त्रिशिरसे तदा ।
तद्रावणसुतो धीमान् बिभेद निशितैश्शरैः ॥ २१
तद्बाणशतनिर्भिन्नं विदारितशिलातलम् ।
सविस्फुलिङ्गं सज्वालं निपपात गिरेश्शिरः ॥ २२
ततो जृम्भितमालोक्य हर्षाद्देवान्तकस्तदा ।
परिघेणाभिदुद्राव मारुतात्मजमाहवे ॥ २३
तमापतन्तमुत्प्लुत्य हनूमान्मारुतात्मजः ।
आजघान तदा मूर्ध्नि वज्रकल्पेन मुष्टिना ॥ २४
शिरसि प्रहरन्वीरस्तदा वायुसुतो बली ।
नादेनाकम्पयच्चैव राक्षसान् स महाकपिः ॥ २५

स मुष्टिनिष्पिष्टविकीर्णमूर्धा निर्वान्तदन्ताक्षिविलम्बिजिह्वः ।
देवान्तको राक्षसराजसूनुर्गतासुरुर्व्यां सहसा पपात ॥ २६

तस्मिन्हते राक्षसयोधमुख्ये महाबले संयति देवशत्रौ ।
क्रुद्धस्त्रिमूर्धा निशिताग्रमुग्रं ववर्ष नीलोरसि बाणवर्षम् ॥ २७

महोदरस्तु संक्रुद्धः कुञ्जरं पर्वतोपमम् ।
भूयस्समधिरुह्याशु मन्दरं रश्मिमानिव ॥ २८

ततो बाणमयं वर्षं नीलस्योरस्यपातयत् ।
गिरौ वर्षं तटिच्चक्रचापवानिव तोयदः ॥ २९

ततश्शरौघैरभिवर्ष्यमाणो विभिन्नगात्रः कपिसैन्यपालः ।
नीलो बभूवाथ निसृष्टगात्रो विष्टम्भितस्तेन महाबलेन ॥ ३०

ततस्तु नीलः प्रतिलभ्य संज्ञां शैलं समुत्पाट्य सवृक्षषण्डम् ।
ततस्समुत्पत्य भृशोग्रवेगो महोदरं तेन जघान मूर्ध्नि ॥ ३१

ततस्सशैलेन्द्रनिपातभग्नो महोदरस्तेन महाद्विपेन ।
विपोथितो भूमितले गतासुः पपात वज्राभिहतो यथाद्रिः ॥ ३२

पितृव्यं निहतं दृष्ट्वा त्रिशिराश्चापमाददे ।
हनूमन्तं च संक्रुद्धो विव्याध निशितैश्शरैः ॥ ३३

स वायुसूनुः कुपितश्चिक्षेप शिखरं गिरेः ।
त्रिशिरास्तच्छरैस्तीक्ष्णैर्बिभेद बहुधा बली ॥ ३४

तद्व्यर्थं शिखरं दृष्ट्वा द्रुमवर्षं महाकपिः ।
विससर्ज रणे तस्मिन् रावणस्य सुतं प्रति ॥ ३५

तमापतन्तमाकाशे द्रुमवर्षं प्रतापवान् ।
त्रिशिरा निशितैर्बाणैश्चिच्छेद च ननाद च ॥ ३६

ततो हनूमानुत्प्लुत्य हयांस्त्रिशिरसस्तदा ।
विददार नखैः क्रुद्धो नागेन्द्रं मृगराडिव ॥ ३७

अथ शक्तिं समादाय कालरात्रिमिवान्तकः ।
चिक्षेपानिलपुत्राय त्रिशिरा रावणात्मजः ॥ ३८

दिवः क्षिप्तामिवोल्कां तां शक्तिं क्षिप्तामसङ्गताम् ।
गृहीत्वा हरिशार्दूलो बभञ्ज च ननाद च ॥ ३९

तां दृष्ट्वा घोरसङ्काशां शक्तिं भग्नां हनूमता ।
प्रहृष्टा वानरगणा विनेदुर्जलदा इव ॥ ४०

ततः खड्गं समुद्यम्य त्रिशिरा राक्षसोत्तमः ।
निजघान तदा व्यूढे वायुपुत्रस्य वक्षसि ॥ ४१

खड्गप्रहाराभिहतो हनूमान्मारुतात्मजः ।
आजघान त्रिशिरसं तलेनोरसि वीर्यवान् ॥ ४२

स तलाभिहतस्तेन स्रस्तहस्तायुधो भुवि ।
निपपात महातेजास्त्रिशिरास्त्यक्तचेतनः ॥ ४३

स तस्य पततः खड्गं समाच्छिद्य महाकपिः ।
ननाद गिरिसङ्काशस्त्रासयन् सर्वनैर्ऋतान् ॥ ४४

अमृष्यमाणस्तं घोषमुत्पपात निशाचरः ।
उत्पत्य च हनूमन्तं ताडयामास मुष्टिना ॥ ४५

तेन मुष्टिप्रहारेण संचुकोप महाकपिः ।
कुपितश्च निजग्राह किरीटे राक्षसर्षभम् ॥ ४६

स तस्य शीर्षाण्यसिना शितेन किरीटजुष्टानि सकुण्डलानि ।
क्रुद्धः प्रचिच्छेद सुतोऽनिलस्य त्वष्टुस्सुतस्येव शिरांसि शक्रः ॥ ४७

तान्यायताक्षाण्यगसन्निभानि प्रदीप्तवैश्वानरलोचनानि ।
पेतुश्शिरांसीन्द्ररिपोर्धरण्यां ज्योतींषि मुक्तानि यथार्कमार्गात् ॥ ४८

तस्मिन् हते देवरिपौ त्रिशीर्षे हनूमता शक्रपराक्रमेण ।
नेदुः प्लवङ्गाः प्रचचाल भूमी रक्षांस्यथो दुद्रुविरे समन्तात् ॥ ४९

हतं त्रिशिरसं दृष्ट्वा तथैव च महोदरम् ।
हतौ प्रेक्ष्य दुराधर्षौ देवान्तकनरान्तकौ ॥ ५०

चुकोप परमामर्षी मत्तो राक्षसपुङ्गवः ।
जग्राहार्चिष्मतीं घोरां गदां सर्वायसीं शुभाम् ॥ ५१

हेमपट्टपरिक्षिप्तां मांसशोणितफेनिलाम् ।
विराजमानां वपुषा शत्रुशोणितरञ्जिताम् ॥ ५२

तेजसा संप्रदीप्ताग्रां रक्तमाल्यविभूषिताम् ।
ऐरावतमहापद्मसार्वभौमभयावहाम् ॥ ५३

गदामादाय संक्रुद्धो मत्तो राक्षसपुङ्गवः ।
हरीन् समभिदुद्राव युगान्ताग्निरिव ज्वलन् ॥ ५४

अथर्षभस्समुत्पत्य वानरो रावणानुजम् ।
मत्तानीकमुपागम्य तस्थौ तस्याग्रतो बली ॥ ५५

तं पुरस्तात् स्थितं दृष्ट्वा वानरं पर्वतोपमम् ।
आजघानोरसि क्रुद्धो गदया वज्रकल्पया ॥ ५६

स तयाऽभिहतस्तेन गदया वानरर्षभः ।
भिन्नवक्षास्समाधूतस्सुस्राव रुधिरं बहु ॥ ५७

संज्ञां प्राप्य सुचिरादृषभो वानरर्षभः ।
अभिदुद्राव वेगेन गदां तस्य महात्मनः ॥ ५८

गृहीत्वा तां महाभीमामाविध्य च पुनः पुनः ।
मत्तानीकं महात्मानं जघान रणमूर्धनि ॥ ५९

स स्वया गदया भग्नो विशीर्णदशनेक्षणः ।
निपपात ततो मत्तो वज्राहत इवाचलः ॥ ६०

विशीर्णनयने भूमौ गतसत्त्वे गतायुषि ।
पतिते राक्षसे तस्मिन् विद्रुतं राक्षसं बलम् ॥ ६१

(उन्मत्तस्तु तदा दृष्ट्वा गतासुं भ्रातरं रणे ।
चुकोप परमक्रुद्धः प्रलयाग्निसमद्युतिः ॥ ६२

ततस्समादाय गदां स वीरो वित्रासयन् वानरसैन्यमुग्रम् ।
दुद्राव वेगेन तु सैन्यमध्ये दहन्यथा वह्निरतिप्रचण्डः ॥ ६३

आपतन्तं तदा दृष्ट्वा राक्षसं भीमविक्रमम् ।
शैलमादाय दुद्राव गवाक्षः पर्वतोपमः ॥ ६४

जिघांसू राक्षसं भीमं तं शैलेन महाबलः ।
आपतन्तं तदा दृष्ट्वा उन्मत्तोऽपि महागिरिम् ॥ ६५

चिच्छेद गदया वीरश्शतधा तत्र संयुगे ।
चूर्णीकृतं गिरिं दृष्ट्वा रक्षसा कपिकुञ्जरः ॥ ६६

पपात भूमौ निस्संज्ञः सुस्राव रुधिरं बहु ।
पुनस्संज्ञामथास्थाय वानरस्स समुत्थितः ॥ ६७

तलेन ताडयामास ततस्तस्य शिरः कपिः ।
तेन प्रताडितो वीरः राक्षसः पर्वतोपमः ॥ ६८

विस्रस्तदन्तनयनः निपपात महीतले ।
सुस्राव रुधिरं सोष्णं गतासुश्च ततोऽभवत् ॥) ६९

तस्मिन् हते भ्रातरि रावणस्य तन्नैर्ऋतानां बलमर्णवाभम् ।
त्यक्तायुधं केवलजीवितार्थं दुद्राव भिन्नार्णवसन्निकाशम् ॥ ७०

इति श्रीमद्युद्धकाण्डे सप्ततितमस्सर्गः ॥

## ॥ एकसप्ततितमस्सर्गः ॥

स्वबलं व्यथितं दृष्ट्वा तुमुलं रोमहर्षणम् ।
भ्रातॄंश्च निहतान् दृष्ट्वा शक्रतुल्यपराक्रमान् ॥ १

पितृव्यौ चापि सन्दृश्य समरे सन्निषूदितौ ।
युद्धोन्मत्तं च मत्तं च भ्रातरौ राक्षसर्षभौ ॥ २

चुकोप च महातेजा ब्रह्मदत्तवरो युधि ।
अतिकायोऽद्रिसङ्काशो देवदानवदर्पहा ॥ ३

स भास्करसहस्रस्य सङ्घातमिव भास्वरम् ।
रथमास्थाय शक्रारिरभिदुद्राव वानरान् ॥ ४

स विष्फार्य महच्चापं किरीटी मृष्टकुण्डलः ।
नाम विश्रावयामास ननाद च महास्वनम् ॥ ५

तेन सिंहप्रणादेन नाम विश्रावणेन च ।
ज्याशब्देन च भीमेन त्रासयामास वानरान् ॥ ६

ते दृष्ट्वा देहमाहात्म्यं कुम्भकर्णोऽयमुत्थितः ।
भयार्ता वानरास्सर्वे संश्रयन्ते परस्परम् ॥ ७

ते तस्य रूपमालोक्य यथा विष्णोस्त्रिविक्रमे ।
भयाद्वानरयूथास्ते विद्रवन्ति ततस्ततः ॥ ८

तेऽतिकायं समासाद्य वानरा मूढचेतसः ।
शरण्यं शरणं जग्मुर्लक्ष्मणाग्रजमाहवे ॥ ९

ततोऽतिकायं काकुत्स्थो रथस्थं पर्वतोपमम् ।
ददर्श धन्विनं दूराद्गर्जन्तं कालमेघवत् ॥ १०

स तं दृष्ट्वा महात्मानं राघवस्तु विसिष्मिये ।
वानरान् सान्त्वयित्वाऽथ विभीषणमुवाच ह ॥ ११

"कोऽसौ पर्वतसङ्काशो धनुष्मान् हरिलोचनः ।
युक्ते हयसहस्रेण विशाले स्यन्दने स्थितः ॥ १२

य एष निशितैश्शूलैस्सुतीक्ष्णैः प्रासमुद्गरैः ।
अर्चिष्मद्भिर्वृतो भाति भूतैरिव महेश्वरः ॥ १३

कालजिह्वाप्रकाशाभिर्य एषोऽतिविराजते ।
आवृतो रथशक्तीभिः विद्युद्भिरिव तोयदः ॥ १४

धनूंषि चास्य सज्जानि हेमपृष्ठानि सर्वशः ।
शोभयन्ति रथश्रेष्ठं शक्रचाप इवाम्बरम् ॥ १५

क एष रक्षश्शार्दूलो रणभूमिं विराजयन् ।
अभ्येति रथिनां श्रेष्ठो रथेनादित्यतेजसा ॥ १६

ध्वजशृङ्गप्रतिष्ठेन राहुणाभिविराजते ।
सूर्यरश्मिनिभैर्बाणैर्दिशो दश विराजयन् ॥ १७

त्रिणतं मेघनिर्ह्रादं हेमपृष्ठमलंकृतम् ।
शतक्रतुधनुःप्रख्यं धनुश्चास्य विराजते ॥ १८

सध्वजस्सपताकश्च सानुकर्षो महारथः ।
चतुस्सादिसमायुक्तो मेघस्तनितनिस्वनः ॥ १९

विंशतिर्दशचाष्टौ च तूण्योऽस्य रथमास्थिताः ।
कार्मुकानि च भीमानि ज्याश्च काञ्चनपिङ्गलाः ॥ २०

द्वौ च खड्गौ रथगतौ पार्श्वस्थौ पार्श्वशोभितौ ।
चतुर्हस्तत्सरुयुतौ व्यक्तहस्तदशायतौ ॥ २१

रक्तकण्ठगुणो धीरो महापर्वतसन्निभः ।
कालः कालमहावक्त्रो मेघस्थ इव भास्करः ॥ २२

काञ्चनाङ्गदनद्धाभ्यां भुजाभ्यामेष शोभते ।
शृङ्गाभ्यामिव तुङ्गाभ्यां हिमवान् पर्वतोत्तमः ॥ २३

कुण्डलाभ्यां तु यस्यैतद्भाति वक्त्रं शुभेक्षणम् ।
पुनर्वस्वन्तरगतं पूर्णं बिम्बमिवैन्दवम् ॥ २४

आचक्ष्व मे महाबाहो ! त्वमेनं राक्षसोत्तमम् ।
यं दृष्ट्वा वानरास्सर्वे भयार्ता विद्रुता दिशः ॥" २५

स पृष्टो राजपुत्रेण रामेणामिततेजसा ।
आचचक्षे महातेजा राघवाय विभीषणः ॥ २६

दशग्रीवो महातेजा राजा वैश्रवणानुजः ।
भीमकर्मा महोत्साहो रावणो राक्षसाधिपः ॥ २७

तस्यासीद्वीर्यवान्पुत्रो रावणप्रतिमो रणे ।
वृद्धसेवी श्रुतिधरस्सर्वास्त्रविदुषां वरः ॥ २८

अश्वपृष्ठे रथे नागे खड्गे धनुषि कर्षणे ।
भेदे सान्त्वे च दाने च नये मन्त्रे च सम्मतः ॥ २९

यस्य बाहू समाश्रित्य लङ्का वसति निर्भया ।
तनयं धान्यमालिन्या अतिकायमिमं विदुः ॥ ३०

एतेनाराधितो ब्रह्मा तपसा भावितात्मना ।
अस्त्राणि चाप्यवाप्तानि रिपवश्च पराजिताः ॥ ३१

सुरासुरैरवध्यत्वं दत्तमस्मै स्वयम्भुवा ।
एतच्च कवचं दिव्यं रथश्चैषोऽर्कभास्वरः ॥ ३२

एतेन शतशो देवा दानवाश्च पराजिताः ।
रक्षितानि च रक्षांसि यक्षाश्चापि निषूदिताः ॥ ३३

वज्रं विष्टम्भितं येन बाणैरिन्द्रस्य धीमतः ।
पाशस्सलिलराजस्य रणे प्रतिहतस्तथा ॥ ३४

एषोऽतिकायो बलवान् राक्षसानामथर्षभः ।
रावणस्य सुतो धीमान् देवदानवदर्पहा ॥ ३५

तदस्मिन् क्रियतां यत्नः क्षिप्रं पुरुषपुङ्गव ।
पुरा वानरसैन्यानि क्षयं नयति सायकैः ॥ ३६

ततोऽतिकायो बलवान् प्रविश्य हरिवाहिनीम् ।
विष्फारयामास धनुर्ननाद च पुनः पुनः ॥ ३७

तं भीमवपुषं दृष्ट्वा रथस्थं रथिनां वरम् ।
अभिपेतुर्महात्मानो ये प्रधाना वनौकसः ॥ ३८

कुमुदो द्विविदो मैन्दो नीलश्शरभ एव च ।
पादपैर्गिरिशृङ्गैश्च युगपत्समभिद्रवन् ॥ ३९

तेषां वृक्षांश्च शैलांश्च शरैः काञ्चनभूषणैः ।
अतिकायो महातेजाश्चिच्छेदास्त्रविदां वरः ॥ ४०

तांश्चैव सर्वान् स हरीन् शरैस्सर्वायसैर्बली ।
विव्याधाभिमुखस्संख्ये भीमकायो निशाचरः ॥ ४१

तेऽर्दिता बाणवर्षेण भिन्नगात्राः प्लवङ्गमाः ।
न शेकुरतिकायस्य प्रतिकर्तुं महारणे ॥ ४२

तत्सैन्यं हरिवीराणां त्रासयामास राक्षसः ।
मृगयूथमिव क्रुद्धो हरिर्यौवनदर्पितः ॥ ४३

स राक्षसेन्द्रो हरिसैन्यमध्ये नायुध्यमानं निजघान कंचित् ।
उपेत्य रामं सधनुः कलापी सगर्वितं वाक्यमिदं बभाषे ॥ ४४

"रथे स्थितोऽहं शरचापपाणिर्न प्राकृतं कंचन योधयामि ।
यश्चास्ति कश्चिद्व्यवसाययुक्तो ददातु मे क्षिप्रमिहाद्य युद्धम् ॥" ४५

तत्तस्य वाक्यं ब्रुवतो निशम्य चुकोप सौमित्रिरमित्रहन्ता ।
अमृष्यमाणश्च समुत्पपात जग्राह चापं च ततः स्मयित्वा ॥ ४६

क्रुद्धस्सौमित्रिरुत्पत्य तूणादाक्षिप्य सायकम् ।
पुरस्तादतिकायस्य विचकर्ष महद्धनुः ॥ ४७

पूरयन् समहीं शैलानाकाशं सागरं दिशः ।
ज्याशब्दो लक्ष्मणस्योग्रस्त्रासयन् रजनीचरान् ॥ ४८

सौमित्रेश्चापनिर्घोषं श्रुत्वा प्रतिभयं तदा ।
विसिष्मिये महातेजा राक्षसेन्द्रात्मजो बली ॥ ४९

अथातिकायः कुपितो दृष्ट्वा लक्ष्मणमुत्थितम् ।
आदाय निशितं बाणमिदं वचनमब्रवीत् ॥ ५०

"बालस्त्वमसि सौमित्रे ! विक्रमेष्वविचक्षणः ।
गच्छ किं कालसदृशं मां योधयितुमिच्छसि ॥ ५१

नहि मद्बाहुसृष्टानामस्त्राणां हिमवानपि ।
सोढुमुत्सहते वेगमन्तरिक्षमथो मही ॥ ५२

सुखप्रसुप्तं कालाग्निं निबोधयितुमिच्छसि ।
न्यस्य चापं निवर्तस्व मा प्राणान् जहि मद्गतः ॥ ५३

अथवा त्वं प्रतिष्ठब्धो न निवर्तितुमिच्छसि ।
तिष्ठ प्राणान् परित्यज्य गमिष्यसि यमक्षयम् ॥ ५४

पश्य मे निशितान्बाणानरिदर्पनिषूदनान् ।
ईश्वरायुधसङ्काशांस्तप्तकाञ्चनभूषणान् ॥ ५५

एष ते सर्पसङ्काशो बाणः पास्यति शोणितम् ।
मृगराज इव क्रुद्धो नागराजस्य शोणितम् ॥" ५६

इत्येवमुक्त्वा संक्रुद्धश्शरं धनुषि सन्दधे ।
श्रुत्वाऽतिकायस्य वचस्सरोषं सगर्वितं संयति राजपुत्रः ।
स संचुकोपातिबलो बृहच्छ्रीरुवाच वाक्यं च ततो महार्थम् ॥ ५७

"न वाक्यमात्रेण भवान्प्रधानो न कत्थनात्सत्परुषा भवन्ति ।
मयि स्थिते धन्विनि बाणपाणौ निदर्शय स्वात्मबलं दुरात्मन् ! ॥५८

कर्मणा सूचयात्मानं न विकत्थितुमर्हसि ।
पौरुषेण तु यो युक्तस्सतु शूर इति स्मृतः ॥ ५९

सर्वायुधसमायुक्तो धन्वी त्वं रथमास्थितः ।
शरैर्वा यदिवाप्यस्त्रैर्दर्शयस्व पराक्रमम् ॥ ६०

ततश्शिरस्ते निशितैः पातयिष्याम्यहं शरैः ।
मारुतः कालसंपक्वं वृन्तात्तालफलं यथा ॥ ६१

अद्य ते मामका बाणास्तप्तकाञ्चनभूषणाः ।
पास्यन्ति रुधिरं गात्राद्बाणशल्यान्तरोत्थितम् ॥ ६२

बालोऽयमिति विज्ञाय न मावज्ञातुमर्हसि ।
बालो वा यदि वा वृद्धो मृत्युं जानीहि संयुगे ॥ ६३

बालेन विष्णुना लोकास्त्रयः क्रान्तास्त्रिभिः क्रमैः ।"
लक्ष्मणस्य वचश्श्रुत्वा हेतुमत्परमार्थवत् ॥ ६४

अतिकायः प्रचुक्रोध बाणं चोत्तममाददे ।
ततो विद्याधरा भूता देवा दैत्या महर्षयः ॥ ६५

गुह्यकाश्च महात्मानस्तद्युद्धं द्रष्टुमागमन् ।
ततोऽतिकायः कुपितश्चापमारोप्य सायकम् ॥ ६६

लक्ष्मणाय प्रचिक्षेप संक्षिपन्निव चाम्बरम् ।
तमापतन्तं निशितं शरमाशीविषोपमम् ॥ ६७

अर्धचन्द्रेण चिच्छेद लक्ष्मणः परवीरहा ।
तं निकृत्तं शरं दृष्ट्वा कृत्तभोगमिवोरगम् ॥ ६८

अतिकायो भृशं क्रुद्धः पञ्चबाणान्समाददे ।
तान् शरान् संप्रचिक्षेप लक्ष्मणाय निशाचरः ॥ ६९

तानप्राप्तान् शरैस्तीक्ष्णैश्चिच्छेद भरतानुजः ।
स तान् छित्वा शरैस्तीक्ष्णैर्लक्ष्मणः परवीरहा ॥ ७०

आददे निशितं बाणं ज्वलन्तमिव तेजसा ।
तमादाय धनुश्श्रेष्ठे योजयामास लक्ष्मणः ॥ ७१

विचकर्ष च वेगेन विससर्ज च वीर्यवान् ।
पूर्णायतविसृष्टेन शरेण नतपर्वणा ॥ ७२

ललाटे राक्षसश्रेष्ठमाजघान स वीर्यवान् ।
स ललाटे शरो मग्नस्तस्य भीमस्य रक्षसः ॥ ७३

ददृशे शोणितेनाक्तः पन्नगेन्द्र इवाचले ।
राक्षसः प्रचकम्पे च लक्ष्मणेषुप्रपीडितः ॥ ७४

रुद्रबाणहतं घोरं यथा त्रिपुरगोपुरम् ।
चिन्तयामास चाश्वास्य विमृश्य च महाबलः ॥ ७५

"साधु बाणनिपातेन श्लाघनीयोऽसि मे रिपुः ।"
विधायैवं विनम्यास्यं नियम्य च भुजावुभौ ॥ ७६

स रथोपस्थमास्थाय रथेन प्रचचार ह ।
एकं त्रीन्पञ्चसप्तेति सायकान्राक्षसर्षभः ॥ ७७

आददे सन्दधे चापि विचकर्षोत्ससर्ज च ।
ते बाणाः कालसङ्काशा राक्षसेन्द्रधनुश्च्युताः ॥ ७८

हेमपुङ्खा रविप्रख्याश्चक्रुर्दीप्तमिवाम्बरम् ।
ततस्तान्राक्षसोत्सृष्टान् शरौघान्राघवानुजः ॥ ७९

असम्भ्रान्तः प्रचिच्छेद निशितैर्बहुभिश्शरैः ।
तान् शरान्युधि संप्रेक्ष्य निकृत्तान्रावणात्मजः ॥ ८०

चुकोप त्रिदशेन्द्रारिर्जग्राह निशितं शरम् ।
स सन्धाय महातेजास्तं बाणं सहसोत्सृजत् ॥ ८१

ततस्सौमित्रिमायान्तमाजघान स्तनान्तरे ।
अतिकायेन सौमित्रिस्ताडितो युधि वक्षसि ॥ ८२

सुस्राव रुधिरं तीव्रं मदं मत्त इव द्विपः ।
न चकार तदात्मानं विशल्यं सहसा विभुः ॥ ८३

जग्राह च शरं तीक्ष्णमस्त्रेणापि च सन्दधे ।
आग्नेयेन तदाऽस्त्रेण योजयामास सायकम् ॥ ८४

स जज्वाल तदा बाणो धनुष्यस्य महात्मनः ।
अतिकायोऽपि तेजस्वी सौरमस्त्रं समादधे ॥ ८५

तेन बाणं भुजङ्गाभं हेमपुङ्खमयोजयत् ।
ततस्तं ज्वलितं घोरं लक्ष्मणश्शरमाहितम् ॥ ८६

अतिकायाय चिक्षेप कालदण्डमिवान्तकः ।
आग्नेयेनाभिसंयुक्तं दृष्ट्वा बाणं निशाचरः ॥ ८७
उत्ससर्ज तदा बाणं दीप्तं सूर्यास्त्रयोजितम् ।
तावुभावम्बरे बाणावन्योन्यमभिजघ्नतुः ॥ ८८
तेजसा संप्रदीप्ताग्रौ क्रुद्धाविव भुजङ्गमौ ।
तावन्योन्यं विनिर्दह्य पेततुर्धरणीतले ॥ ८९
निरर्चिषौ भस्मकृतौ न भ्राजेते शरोत्तमौ ।
ततोऽतिकायस्संक्रुद्धस्त्वस्त्रमैषीकमुत्सृजत् ॥ ९०
तत्प्रचिच्छेद सौमित्रिरस्त्रमैन्द्रेण वीर्यवान् ।
ऐषीकं निहतं दृष्ट्वा रुषितो रावणात्मजः ॥ ९१
याम्येनास्त्रेण संक्रुद्धो योजयामास सायकम् ।
ततस्तदस्त्रं चिक्षेप लक्ष्मणाय निशाचरः ॥ ९२
वायव्येन तदस्त्रेण निजघान स लक्ष्मणः ।
अथैनं शरधाराभिर्धाराभिरिव तोयदः ॥ ९३
अभ्यवर्षत्सुसंक्रुद्धो लक्ष्मणो रावणात्मजम् ।
तेऽतिकायं समासाद्य कवचे वज्रभूषिते ॥ ९४
भग्नाग्रशल्या सहसा पेतुर्बाणा महीतले ।
तान्मोघानभिसंप्रेक्ष्य लक्ष्मणः परवीरहा ॥ ९५
अभ्यवर्षन्महेषूणां सहस्रेण महायशाः ।
स वृष्यमाणो बाणौघैरतिकायो महाबलः ॥ ९६
अवध्यकवचस्संख्ये राक्षसो नैव विव्यथे ।
न शशाक रुजं कर्तुं युधि तस्य नरोत्तमः ॥ ९७

अथैनमभ्युपागम्य वायुर्वाक्यमुवाच ह ।
“ब्रह्मदत्तवरो ह्येष अवध्यकवचावृतः ॥ ९८

ब्राह्मेणास्त्रेण भिन्ध्येनमेष वध्यो हि नान्यथा ।
अवध्य एष ह्यन्येषामस्त्राणां कवची बली ॥” ९९

ततस्तु वायोर्वचनं निशम्य सौमित्रिरिन्द्रप्रतिमानवीर्यः ।
समाददे बाणममोघवेगं तद्ब्राह्ममस्त्रं सहसा नियोज्य ॥ १००

तस्मिन् महास्त्रे तु वियुज्यमाने सौमित्रिणा बाणवरे शिताग्रे ।
दिशश्च चन्द्रार्कमहाग्रहाश्च नभश्च तत्रास चचाल चोर्वी ॥ १०१

तं ब्रह्मणोऽस्त्रेण नियुज्य चापे शरं सुपुङ्खं यमदूतकल्पम् ।
सौमित्रिरिन्द्रारिसुतस्य तस्य ससर्ज बाणं युधि वज्रकल्पम् ॥ १०२

तं लक्ष्मणोत्सृष्टममोघवेगं समापतन्तं ज्वलनप्रकाशम् ।
सुपर्णवज्रोत्तमचित्रपुङ्खं तदाऽतिकायस्समरे ददर्श ॥ १०३

तं प्रेक्षमाणस्सहसाऽतिकायो जघान बाणैर्निशितैरनेकैः ।
स सायकस्तस्य सुपर्णवेगस्तदाऽतिकायस्य जगाम पार्श्वम् ॥ १०४

तमागतं प्रेक्ष्य तदाऽतिकायो बाणं प्रदीप्तान्तककालकल्पम् ।
जघान शक्त्यृष्टिगदाकुठारैश्शूलैर्हलैश्चाप्यविपन्नचेताः ॥ १०५

तान्यायुधान्यद्भुतविग्रहाणि मोघानि कृत्वा स शरोऽग्निदीप्तः ।
प्रगृह्य तस्यैव किरीटजुष्टं ततोऽतिकायस्य शिरो जहार ॥ १०६

तच्छिरस्सशिरस्त्राणं लक्ष्मणेषुप्रपीडितम् ।
पपात सहसा भूमौ शृङ्गं हिमवतो यथा ॥ १०७

तं तु भूमौ निपतितं दृष्ट्वा विक्षिप्तभूषणम् ।
बभूवुर्व्यथितास्सर्वे हतशेषा निशाचराः ॥ १०८

ते विषण्णमुखा दीना प्रहारजनितश्रमाः ।
विनेदुरुच्चैर्बहवस्सहसा विस्वरैस्स्वरैः ॥ १०९
ततस्ते त्वरितं याता निरपेक्षा निशाचराः ।
पुरीमभिमुखा भीता द्रवन्तो नायके हते ॥ ११०
प्रहर्षयुक्ता बहवस्तु वानराः प्रबुद्धपद्मप्रतिमाननास्तदा ।
अपूजयन् लक्ष्मणमिष्टभागिनं हते रिपौ भीमबले दुरासदे ॥ १११

इति श्रीमद्युद्धकाण्डे एकसप्ततितमस्सर्गः ॥

---

## ॥ द्विसप्ततितमस्सर्गः ॥

अतिकायं हतं श्रुत्वा लक्ष्मणेन महौजसा ।
उद्वेगमगमद्राजा वचनं चेदमब्रवीत् ॥ १
"धूम्राक्षः परमामर्षी धन्वी शस्त्रभृतां वरः ।
अकम्पनः प्रहस्तश्च कुम्भकर्णस्तथैव च ॥ २
एते महाबला वीरा राक्षसा युद्धकाङ्क्षिणः ।
जेतारः परसैन्यानां परैर्नित्यापराजिताः ॥ ३
निहतास्ते महावीर्या रामेणाक्लिष्टकर्मणा ।
राक्षसास्सुमहाकाया नानाशस्त्रविशारदाः ॥ ४
अन्ये च बहवश्शूरा महात्मानो निपातिताः ।
प्रख्यातबलवीर्येण पुत्रेणेन्द्रजिता मम ॥ ५
यौ हि तौ भ्रातरौ वीरौ बद्धौ दत्तवरैश्शरैः ।
यन्न शक्यं सुरैस्सर्वैरसुरैर्वा महाबलैः ॥ ६
मोक्तुं तद्बन्धनं घोरं यक्षगन्धर्वकिन्नरैः ।
तन्न जाने प्रभावैर्वा मायया मोहनेन वा ॥ ७

शरबन्धाद्विमुक्तौ तौ भ्रातरौ रामलक्ष्मणौ ।
ये योधा राक्षसाश्शूरा निर्गता मम शासनात् ॥ ८

ते सर्वे निहता युद्धे वानरैस्सुमहाबलैः ।
तं न पश्याम्यहं युद्धे योऽद्य रामं सलक्ष्मणम् ॥ ९

शासयेत्सबलं वीरं ससुग्रीवविभीषणम् ।
अहो नु बलवान्रामो महदस्त्रबलं च वै ॥ १०

यस्य विक्रममासाद्य राक्षसा निधनं गताः ।
तं मन्ये राघवं वीरं नारायणमनामयम् ॥ ११

तद्भयाद्धि पुरी लङ्का पिहितद्वारतोरणा ।
अप्रमत्तैश्च सर्वत्र गुप्तै रक्ष्या पुरीत्वियम् ॥ १२

अशोकवनिकायां च यत्र सीताऽभिरक्ष्यते ।
निष्कामो वा प्रवेशो वा ज्ञातव्यस्सर्वथैव नः ॥ १३

यत्र यत्र भवेद्गुल्मस्तत्र तत्र पुनः पुनः ।
सर्वतश्चापि तिष्ठध्वं स्वैस्स्वैः परिवृता बलैः ॥ १४

द्रष्टव्यं च पदं तेषां वानराणां निशाचराः ।
प्रदोषे वार्धरात्रे वा प्रत्यूषे वापि सर्वतः ॥ १५

नावज्ञा तेषु कर्तव्या वानरेषु कदाचन ।
द्विषतां बलमुद्युक्तमापतत्किं स्थितं सदा ॥ " १६

ततस्ते राक्षसास्सर्वे श्रुत्वा लङ्काधिपस्य तत् ।
वचनं सर्वमातिष्ठन् यथावत्तु महाबलाः ॥ १७

स तान् सर्वान् समादिश्य रावणो राक्षसाधिपः ।
मन्युशल्यं वहन् दीनः प्रविवेश स्वमालयम् ॥ १८

ततस्स सन्दीपितकोपवह्निर्निशाचराणामधिपो महाबलः ।
तदेव पुत्रव्यसनं विचिन्तयन् मुहुर्मुहुश्चैव तदा व्यनिश्वसत् ॥ १९

इति श्रीमद्युद्धकाण्डे द्विसप्ततितमस्सर्गः ॥

---

## ॥ त्रिसप्ततितमस्सर्गः ॥

ततो हतान् राक्षसपुङ्गवांस्तान्देवान्तकादित्रिशिरोतिकायान् ।
रक्षोगणास्तत्र हतावशिष्टास्ते रावणाय त्वरितं शशंसुः ॥ १

ततो हतांस्तान् सहसा निशम्य राजा मुमोहाश्रुपरिप्लुताक्षः ।
पुत्रक्षयं भ्रातृवधं च घोरं विचिन्त्य राजा विपुलं प्रदध्यौ ॥ २

ततस्तु राजानमुदीक्ष्य दीनं शोकार्णवे संपरिपुप्लुवानम् ।
अथर्षभो राक्षसराजसूनुस्तमिन्द्रजिद्वाक्यमिदं बभाषे ॥ ३

न तात ! मोहं प्रतिगन्तुमर्हसि यत्रेन्द्रजिज्जीवति राक्षसेन्द्र ! ।
नेन्द्रारिबाणाभिहतो हि कश्चित् प्राणान् समर्थस्समरेऽभिपातुम् ॥ ४

पश्याद्य रामं सह लक्ष्मणेन मद्बाणनिर्भिन्नविकीर्णदेहम् ।
गतायुषं भूमितले शयानं शितैश्शरैराचितसर्वगात्रम् ॥ ५

इमां प्रतिज्ञां शृणु शक्रशत्रोस्सुनिश्चितां पौरुषदैवयुक्ताम् ।
अद्यैव रामं सह लक्ष्मणेन सन्तर्पयिष्यामि शरैरमोघैः ॥ ६

अद्येन्द्रवैवस्वतविष्णुमित्रसाध्याश्विवैश्वानरचन्द्रसूर्याः ।
द्रक्ष्यन्तु मे विक्रममप्रमेयं विष्णोरिवोग्रं बलियज्ञवाटे ॥" ७

स एवमुक्त्वा त्रिदशेन्द्रशत्रुरापृच्छ्य राजानमदीनसत्त्वः ।
समारुरोहानिलतुल्यवेगं रथं खरश्रेष्ठसमाधियुक्तम् ॥ ८

तमास्थाय महातेजा रथं हरिरथोपमम् ।
जगाम सहसा तत्र यत्र युद्धमरिन्दमः ॥ ९

तं प्रस्थितं महात्मानमनुजग्मुर्महाबलाः ।
संहर्षमाणा बहवो धनुष्प्रवरपाणयः ॥ १०

गजस्कन्धगताः केचित्केचित्प्रवरवाजिभिः ।
[व्याघ्रवृश्चिकमार्जालैः खरोष्ट्रैश्च भुजङ्गमैः ॥ ११

वराहश्वापदैस्सिंहैर्जम्बुकैः पर्वतोपमैः ।
शशहंसमयूरैश्च राक्षसा भीमविक्रमाः ॥] १२

प्रासमुद्गरनिस्त्रिंशपरश्वथगदाधराः ।
स शङ्खनिनदैः पूर्णैर्भेरीणां चापि निस्वनैः ॥ १३

जगाम त्रिदशेन्द्रारिस्स्तूयमानो निशाचरैः ।
स शङ्खशशिवर्णेन च्छत्रेण रिपुसूदनः ॥ १४

रराज प्रतिपूर्णेन नभश्चन्द्रमसा यथा ।
अवीज्यत ततो वीरो हैमैर्हेमविभूषितैः ॥ १५

चारुचामरमुख्यैश्च मुख्यस्सर्वधनुष्मताम् ।
[स तु दृष्ट्वा विनिर्यान्तं बलेन महता वृतम् ॥ १६

राक्षसाधिपतिश्श्रीमान् रावणः पुत्रमब्रवीत् ।
"त्वमप्रतिरथः पुत्र! त्वया वै वासवो जितः ॥ १७

किं पुनर्मानुषं धृष्यं निहनिष्यसि राघवम् ।"
तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य महाशिषः ॥] १८

ततस्त्विन्द्राजिता लङ्का सूर्यप्रतिमतेजसा ।
रराजाप्रतिवीरेण द्यौरिवार्केण भास्वता ॥ १९

स संप्राप्य महातेजा युद्धभूमिमरिन्दमः ।
स्थापयामास रक्षांसि रथं प्रति समन्ततः ॥ २०

ततस्तु हुतभोक्तारं हुतभुक्सदृशप्रभः ।
जुहाव राक्षसश्रेष्ठो मन्त्रवद्विधिवत्तदा ॥ २१

स हविर्लाजसंस्कारैर्माल्यगन्धपुरस्कृतैः ।
जुहुवे पावकं तत्र राक्षसेन्द्रः प्रतापवान् ॥ २२

शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ २३

स तत्राग्निं समास्तीर्य शरपत्रैस्सतोमरैः ।
छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ २४

सकृदेव समिद्धस्य विधूमस्य महार्चिषः ।
बभूवुस्तानि लिङ्गानि विजयं यान्यदर्शयन् ॥ २५

प्रदक्षिणावर्तशिखस्तप्तकाञ्चनभूषणः ।
हविस्तत्प्रतिजग्राह पावकस्स्वयमास्थितः ॥ २६

सोऽस्त्रमाहारयामास ब्राह्ममिन्द्ररिपुस्तदा ।
धनुश्चात्मरथं चैव सर्वं तत्राभ्यमन्त्रयत् ॥ २७

तस्मिन्नाहूयमानेऽस्त्रे हूयमाने च पावके ।
सार्कग्रहेन्दुनक्षत्रं वितत्रास नभस्थलम् ॥ २८

स पावकं पावकदीप्ततेजा हुत्वा महेन्द्रप्रतिमप्रभावः ।
सचापबाणासिरथाश्वसूतः खेऽन्तर्दधेऽऽत्मानमचिन्त्यरूपः ॥ २९

ततो हयरथाकीर्णं पताकाध्वजशोभितम् ।
निर्ययौ राक्षसबलं नर्दमानं युयुत्सया ॥ ३०

ते शरैर्बहुभिश्चित्रैस्तीक्ष्णवेगैरलंकृतः ।
तोमरैरङ्कुशैश्चापि वानराञ्जघ्नुराहवे ॥ ३१

रावणिस्तु ततः क्रुद्धस्तानुवाच निशाचरान् ।
"हृष्टा भवन्तो युध्यन्तु वानराणां जिघांसया ॥" ३२

ततस्ते राक्षसास्सर्वे नर्दन्तो जयकाङ्क्षिणः ।
अभ्यवर्षंस्ततो घोरा वानरान् शरवृष्टिभिः ॥ ३३

स तु नालीकनाराचैर्गदाभिर्मुसलैरपि ।
रक्षोभिस्संवृतस्संख्ये वानरान्विचकर्त ह ॥ ३४

ते वध्यमानास्समरे वानराः पादपायुधाः ।
अभ्यद्रवन्त सहिता रावणिं रणकर्कशम् ॥ ३५

इन्द्रजित्तु ततः क्रुद्धो महातेजा महाबलः ।
वानराणां शरीराणि व्यधमद्रावणात्मजः ॥ ३६

शरेणैकेन च हरीन्नव पञ्च च सप्त च ।
चिच्छेद समरे क्रुद्धो राक्षसान् संप्रहर्षयन् ॥ ३७

स शरैस्सूर्यसङ्काशैश्शातकुम्भविभूषितैः ।
वानरान् समरे वीरः प्रममाथ सुदुर्जयः ॥ ३८

ते भिन्नगात्रास्समरे वानराश्शरपीडिताः ।
पेतुर्मथितसङ्कल्पास्सुरैरिव महासुराः ॥ ३९

तं तपन्तमिवादित्यं घोरैर्बाणगभस्तिभिः ।
अभ्यधावन्त संक्रुद्धास्संयुगे वानरर्षभाः ॥ ४०

ततस्तु वानरास्सर्वे भिन्नदेहा विचेतसः ।
व्यथिता विद्रवन्ति स्म रुधिरेण समुक्षिताः ॥ ४१

रामस्यार्थे पराक्रम्य वानरास्त्यक्तजीविताः ।
नर्दन्तस्तेऽभिवृत्तास्तु समरे सशिलायुधाः ॥ ४२

ते द्रुमैः पर्वताग्रैश्च शिलाभिश्च प्लवङ्गमाः ।
अभ्यवर्षन्त समरे रावणिं पर्यवस्थिताः ॥ ४३
तद्द्रुमाणां शिलानां च वर्षं प्राणहरं महत् ।
व्यपोहत महातेजा रावणिस्समितिञ्जयः ॥ ४४
ततः पावकसङ्काशैश्शरैराशीविषोपमैः ।
वानराणामनीकानि बिभेद समरे प्रभुः ॥ ४५
अष्टादशशरैस्तीक्ष्णैस्स विध्वा गन्धमादनम् ।
विव्याध नवभिश्चैव नलं दूरादवस्थितम् ॥ ४६
सप्तभिस्तु महावीर्यो मैन्दं मर्मविदारणैः ।
पञ्चभिर्विशिखैश्चैव गजं विव्याध संयुगे ॥ ४७
जाम्बवन्तं तु दशभिर्नीलं त्रिंशद्भिरेव च ।
सुग्रीवमृषभं चैव सोऽङ्गदं द्विविदं तथा ॥ ४८
घोरैर्दत्तवरैस्तीक्ष्णैः निष्प्राणानकरोत्तदा ।
अन्यानपि तदा मुख्यान् वानरान्बहुभिश्शरैः ॥ ४९
अर्दयामास संक्रुद्धः कालाग्निरिव मूर्छितः ।
स शरैस्सूर्यसङ्काशैस्सुमुक्तैश्शीघ्रगामिभिः ॥ ५०
वानराणामनीकानि निर्ममन्थ महारणे ।
आकुलां वानरीं सेनां शरजालेन मोहिताम् ॥ ५१
हृष्टस्स परया प्रीत्या ददर्श क्षतजोक्षिताम् ।
पुनरेव महातेजा राक्षसेन्द्रात्मजो बली ॥ ५२
संसृज्य बाणवर्षं च शस्त्रवर्षं च दारुणम् ।
ममर्द वानरानीकमिन्द्रजित्त्वरितो बली ॥ ५३

स्वसैन्यमुत्सृज्य समेत्य तूर्णं महारणे वानरवाहिनीषु ।
अदृश्यमानश्शरजालमुग्रं ववर्ष नीलाम्बुधरो यथाऽम्बु ॥ ५४

ते शक्रजिद्बाणविशीर्णदेहा मायाहता विस्वरमुन्नदन्तः ।
रणे निपेतुर्हरयोऽद्रिकल्पा यथेन्द्रवज्राभिहता नगेन्द्राः ॥ ५५

ते केवलं संददृशुश्शिताग्रान्बाणान् रणे वानरवाहिनीषु ।
मायानिगूढं च सुरेन्द्रशत्रुं न चावृतं राक्षसमभ्यपश्यन् ॥ ५६

ततस्स रक्षोधिपतिर्महात्मा सर्वा दिशो बाणगणैश्शिताग्रैः ।
प्रच्छादयामास रविप्रकाशैर्विषादयामास च वानरेन्द्रान् ॥ ५७

स शूलनिस्त्रिंशपरश्वथानि व्याविध्य दीप्तानलसन्निभानि ।
स विस्फुलिङ्गोज्ज्वलपावकानि ववर्ष तीव्रं प्लवगेन्द्रसैन्ये ॥ ५८

ततो ज्वलनसङ्काशैश्शरैर्वानरयूथपाः ।
ताडिताश्शक्रजिद्बाणैः प्रफुल्ला इव किंशुकाः ॥ ५९

तेऽन्योन्यमभिसर्पन्तो निनदन्तश्च विस्वरम् ।
राक्षसेन्द्रास्त्रनिर्भिन्ना निपेतुर्वानरर्षभाः ॥ ६०

उदीक्षमाणा गगनं केचिन्नेत्रेषु ताडिताः ।
शरैर्विविशुरन्योन्यं पेतुश्च जगतीतले ॥ ६१

हनूमन्तं च सुग्रीवमङ्गदं गन्धमादनम् ।
जाम्बवन्तं सुषेणं च वेगदर्शिनमेव च ॥ ६२

मैन्दं च द्विविदं नीलं गवाक्षं गजगोमुखौ ।
केसरिं हरिलोमानं विद्युद्दंष्ट्रं च वानरम् ॥ ६३

सूर्याननं ज्योतिमुखं तथा दधिमुखं हरिम् ।
पावकाक्षं नलं चैव कुमुदं चैव वानरम् ॥ ६४

प्रासैश्शूलैश्शितैर्बाणैरिन्द्रजिन्मन्त्रसंहितैः ।
विव्याथ हरिशार्दूलान् सर्वांस्तान्राक्षसोत्तमः ॥ ६५

स वै गदाभिर्हरियूथमुख्यान् निर्भिद्य बाणैस्तपनीयपुङ्खैः ।
ववर्ष रामं शरवृष्टिजालैस्सलक्ष्मणं भास्कररश्मिकल्पैः ॥ ६६

स बाणवर्षैरभिवृष्यमाणो धारानिपातानिव तानचिन्त्य ।
समीक्षमाणः परमाद्भुतश्री रामस्तदा लक्ष्मणमित्युवाच ॥ ६७

"असौ पुनर्लक्ष्मण! राक्षसेन्द्रो ब्रह्मास्त्रमाश्रित्य सुरेन्द्रशत्रुः ।
निपातयित्वा हरिसैन्यमुग्रमस्मान् शरैरर्दयति प्रसक्तः ॥ ६८

स्वयम्भुवा दत्तवरो महात्मा खमास्थितोऽन्तर्हितभीमकायः ।
कथं नु शक्यो युधि नष्टदेहो निहन्तुमद्येन्द्रजिदुद्यतास्त्रः ॥ ६९

मन्ये स्वयम्भूर्भगवानचिन्त्यो यस्यैतदस्त्रं प्रभवश्च योऽस्य ।
बाणावपातांस्त्वमिहाद्य धीमन्! मया सहाव्यग्रमनास्सहस्व ॥ ७०

प्रच्छादयत्येष हि राक्षसेन्द्रस्सर्वा दिशस्सायकवृष्टिजालैः ।
एतच्च सर्वं पतिताग्र्यशूरं न भ्राजते वानरराजसैन्यम् ॥ ७१

आवां तु दृष्ट्वा पतितौ विसंज्ञौ निवृत्तयुद्धौ गतरोषहर्षौ ।
ध्रुवं प्रवेक्ष्यत्यमरारिवासमसौ समादाय रणाग्रलक्ष्मीम् ॥" ७२

ततस्तु ताविन्द्रजिदस्त्रजालैर्बभूवतुस्तत्र तदा विशस्तौ ।
स चापि तौ तत्र विदर्शयित्वा ननाद हर्षाद्युधि राक्षसेन्द्रः ॥ ७३

स तत्तदा वानरसैन्यमेवं रामं च संख्ये सह लक्ष्मणेन ।
विषादयित्वा सहसा विवेश पुरीं दशग्रीवभुजाभिगुप्ताम् ॥ ७४

इति श्रीमद्युद्धकाण्डे त्रिसप्ततितमस्सर्गः ॥

## ॥ चतुस्सप्ततितमस्सर्गः ॥

तयोस्तदा सादितयो रणाग्रे मुमोह सैन्यं हरिपुङ्गवानाम् ।
सुग्रीवनीलाङ्गदजाम्बवन्तो न चापि किंचित्प्रतिपेदिरे ते ॥ १
ततो विषण्णं समवेक्ष्य सैन्यं विभीषणो बुद्धिमतां वरिष्ठः ।
उवाच शाखामृगराजवीरानाश्वासयन्नप्रतिमैर्वचोभिः ॥ २
"माभैष्ट नास्त्यत्र विषादकालो यदार्यपुत्रौ विवशौ विषण्णौ ।
स्वयम्भुवो वाक्यमथोद्वहन्तौ यत्सादिताविन्द्रजिदस्त्रजालैः ॥ ३
तस्मै तु दत्तं परमास्त्रमेतत्स्वयम्भुवा ब्राह्मममोघवेगम् ।
तन्मानयन्तौ युधि राजपुत्रौ निपातितौ कोऽत्र विषादकालः ॥" ४
ब्राह्ममस्त्रं ततो धीमान् मानयित्वा तु मारुतिः ।
विभीषणवचः श्रुत्वा हनुमांस्तमथाब्रवीत् ॥ ५
"एतस्मिन्निहते सैन्ये वानराणां तरस्विनाम् ।
यो यो धारयते प्राणांस्तन्तमाश्वासयावहै ॥" ६
तावुभौ युगपद्वीरौ हनुमद्राक्षसोत्तमौ ।
उल्काहस्तौ तदा रात्रौ रणभूमौ विचेरतुः ॥ ७
भिन्नलाङ्गूलहस्तोरुपादाङ्गुलिशिरोधरैः ।
स्रवद्भिः क्षतजं गात्रैः प्रस्रवद्भिस्ततस्ततः ॥ ८
पतितैः पर्वताकारैर्वानरैरभिसंकुलाम् ।
शस्त्रैश्च पतितैर्दीप्तैर्ददृशाते वसुन्धराम् ॥ ९
सुग्रीवमङ्गदं नीलं शरभं गन्धमादनम् ।
गवाक्षं च सुषेणं च वेगदर्शिनमाहुकम् ॥ १०
मैन्दं नलं ज्योतिमुखं द्विविदं पनसं तथा ।
विभीषणो हनूमांश्च ददृशाते हतान्रणे ॥ ११

सप्तषष्टिर्हताः कोट्यो वानराणां तरस्विनाम् ।
अह्नः पञ्चमशेषेण वल्लभेन स्वयम्भुवः ॥ १२

सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् ।
मार्गते जाम्बवन्तं स हनूमान् सविभीषणः ॥ १३

स्वभावजरया युक्तं वृद्धं शरशतैश्चितम् ।
प्रजापतिसुतं वीरं शाम्यन्तमिव पावकम् ॥ १४

दृष्ट्वा तमुपसङ्क्रम्य पौलस्त्यो वाक्यमब्रवीत् ।
"कच्चिदार्य शरैस्तीक्ष्णैर्न प्राणा ध्वंसितास्तव ॥" १५

विभीषणवचः श्रुत्वा जाम्बानृक्षपुङ्गवः ।
कृच्छ्रादभ्युद्गिरन्वाक्यमिदं वचनमब्रवीत् ॥ १६

"नैरृतेन्द्र ! महावीर्य ! स्वरेण त्वाऽभिलक्षये ।
पीड्यमानश्शितैर्बाणैर्न त्वां पश्यामि चक्षुषा ॥ १७

अञ्जना सुप्रजा ! येन मातरिश्वा च नैरृत ! ।
हनूमान्वानरश्रेष्ठः प्राणान्धारयते कच्चित् ॥" १८

श्रुत्वा जाम्बवतो वाक्यमुवाचेदं विभीषणः ।
"आर्यपुत्रावतिक्रम्य कस्मात्पृच्छसि मारुतिम् ॥ १९

नैव राजनि सुग्रीवे नाङ्गदे नापि राघवे ।
आर्य ! सन्दर्शितस्नेहो यथा वायुसुते परः ॥" २०

विभीषणवचश्श्रुत्वा जाम्बवान्वाक्यमब्रवीत् ।
"शृणु नैरृतशार्दूल ! यस्मात्पृच्छामि मारुतिम् ॥ २१

तस्मिन् जीवति वीरे तु हतमप्यहतं बलम् ।
हनुमत्युज्झितप्राणे जीवन्तोऽपि वयं हताः ॥ २२

धरते मारुतिस्तात! मारुतप्रतिमो यदि ।
वैश्वानरसमो वीर्ये जीविताशा ततो भवेत् ॥" २३

ततो वृद्धमुपागम्य नियमेनाभ्यवादयत् ।
गृह्य जाम्बवतः पादौ हनूमान्मारुतात्मजः ॥ २४

( अहं स्थितोऽस्म्यनिर्विण्णः किं मया क्रियतां विभो! । )
श्रुत्वा हनुमतो वाक्यं तथाऽपि व्यथितेन्द्रियः ॥ २५

पुनर्जातमिवात्मानं मन्यते स्मर्क्षपुङ्गवः ।
ततोऽब्रवीन्महातेजा हनूमन्तं स जाम्बवान् ॥ २६

आगच्छ हरिशार्दूल! वानरांस्त्रातुमर्हसि ।
नान्यो विक्रमपर्याप्तस्त्वमेषां परमस्सखा ॥ २७

त्वत्पराक्रमकालोऽयं नान्यं पश्यामि कंचन ।
ऋक्षवानरवीराणामनीकानि प्रहर्षय ॥ २८

विशल्यौ कुरु चाप्येतौ सादितौ रामलक्ष्मणौ ।
गत्वा परममध्वानमुपर्युपरि सागरम् ॥ २९

हिमवन्तं नगश्रेष्ठं हनुमन्! गन्तुमर्हसि ।
ततः काञ्चनमत्युच्चमृषभं पर्वतोत्तमम् ॥ ३०

कैलासशिखरं चापि द्रक्ष्यस्यरिनिषूदन! ।
तयोश्शिखरयोर्मध्ये प्रदीप्तमतुलप्रभम् ॥ ३१

सर्वौषधियुतं वीर! द्रक्ष्यस्योषधिपर्वतम् ।
तस्य वानरशार्दूल! चतस्रो मूर्ध्नि सम्भवाः ॥ ३२

द्रक्ष्यस्योषधयो दीप्ता दीपयन्त्यो दिशो दश ।
मृतसञ्जीविनीं चैव विशल्यकरणीमपि ॥ ३३

सावर्ण्यकरणीं चैव सन्धानकरणीं तथा ।
तास्सर्वा हनुमन्! गृह्य क्षिप्रमागन्तुमर्हसि ॥ ३४

आश्वासय हरीन्प्राणैर्योज्य गन्धवहात्मज ।"
श्रुत्वा जाम्बवतो वाक्यं हनूमान् हरिपुङ्गवः ॥ ३५

आपूर्यत बलोद्धर्षैस्तोयवेगैरिवार्णवः ।
सपर्वततटाग्रस्थः पीडयन् पर्वतोत्तमम् ॥ ३६

हनूमान् दृश्यते वीरो द्वितीय इव पर्वतः ।
हरिपादविनिर्भग्नो निषसाद स पर्वतः ॥ ३७

न शशाक तदात्मानं सोढुं भृशनिपीडितः ।
तस्य पेतुर्नगा भूमौ हरिवेगाच्च जज्वलुः ॥ ३८

शृङ्गाणि च व्यशीर्यन्त पीडितस्य हनूमता ।
तस्मिन् संपीड्यमाने तु भग्नद्रुमशिलातले ॥ ३९

न शेकुर्वानराः स्थातुं घूर्णमाने नगोत्तमे ।
सा घूर्णितमहाद्वारा प्रभग्नगृहगोपुरा ॥ ४०

लङ्कात्रासाकुला रात्रौ प्रवृत्ते वाभवत्तदा ।
पृथिवीधरसङ्काशो निपीड्य धरणीधरम् ॥ ४१

पृथिवीं क्षोभयामास सार्णवां मारुतात्मजः ।
आरुरोह तदा तस्माद्धरिर्मलयपर्वतम् ॥ ४२

मेरुमन्दरसङ्काशं नानाप्रस्रवणाकुलम् ।
नानाद्रुमलताकीर्णं विकासिकमलोत्पलम् ॥ ४३

सेवितं देवगन्धर्वैष्षष्टियोजनमुच्छ्रितम् ।
विद्याधरैर्मुनिगणैरप्सरोभिर्निषेवितम् ॥ ४४

नानामृगगणाकीर्णं बहुकन्दरशोभितम् ।
सर्वानाकुलयन् तत्र यक्षगन्धर्वकिन्नरान् ॥ ४५

हनूमान् मेघसङ्काशो ववृधे मारुतात्मजः ।
पद्भ्यां तु शैलमापीड्य वडवामुखवन्मुखम् ॥ ४६

विवृत्योग्रं ननादोच्चैस्त्रासयन्निव राक्षसान् ।
तस्य नानद्यमानस्य श्रुत्वा निनदमद्भुतम् ॥ ४७

लङ्कास्था राक्षसास्सर्वे न शेकुस्स्पन्दितुं भयात् ।
नमस्कृत्वाऽथ रामाय मारुतिर्भीमविक्रमः ॥ ४८

राघवार्थे परं कर्म समीहत परन्तपः ।
स पुच्छमुद्यम्य भुजङ्गकल्पं विनम्य पृष्ठं श्रवणे निकुञ्च्य ।
विवृत्य वक्त्रं वडवामुखाभमापुप्लुवे व्योमनि चण्डवेगः ॥ ४९

स वृक्षषण्डांस्तरसा जहार शैलान् शिलाः प्राकृतवानरांश्च ।
बाहूरुवेगोद्धतसम्प्रणुन्नास्ते क्षीणवेगास्सलिले निपेतुः ॥ ५०

स तौ प्रसार्योरगभोगकल्पौ भुजौ भुजङ्गारिनिकाशवीर्यः ।
जगाम मेरुं नगराजमग्र्यं दिशः प्रकर्षन्निव वायुसूनुः ॥ ५१

स सागरं घूर्णितवीचिमालं तदा भृशं भ्रामितसर्वसत्त्वम् ।
समीक्षमाणस्सहसा जगाम चक्रं यथा विष्णुकराग्रमुक्तम् ॥ ५२

स पर्वतान्वृक्षगणान् सरांसि नदीस्तटाकानि पुरोत्तमानि ।
स्फीतान् जनान्तानपि संप्रवीक्ष्य जगाम वेगात्पितृतुल्यवेगः ॥ ५३

आदित्यपथमाश्रित्य जगाम स गतश्रमः ।
हनूमान् त्वरितो वीरः पितृतुल्यपराक्रमः ॥ ५४

जवेन महता युक्तो मारुतिर्मारुतो यथा ।
जगाम हरिशार्दूलो दिशश्शब्देन पूरयन् ॥ ५५

स्मरन् जाम्बवतो वाक्यं मारुतिर्वातरंहसा ।
ददर्श सहसा गत्वा हिमवन्तं महाकपिः ॥ ५६

नानाप्रस्रवणोपेतं नानाकन्दरनिर्झरम् ।
श्वेताभ्रचयसङ्काशैश्शिखरैश्चारुदर्शनैः ॥ ५७

शोभितं विविधैर्वृक्षैरगमत्पर्वतोत्तमम् ॥ ५८

स तं समासाद्य महानगेन्द्रमतिप्रवृद्धोत्तमघोरशृङ्गम् ।
ददर्श पुण्यानि महाश्रमाणि सुरर्षिसङ्घोत्तमसेवितानि ॥ ५९

स ब्रह्मकोशं रजतालयं च शक्रालयं रुद्रशरप्रमोक्षम् ।
हयाननं ब्रह्मशिरश्च दीप्तं ददर्श वैवस्वतकिङ्करांश्च ॥ ६०

वज्रालयं वैश्रवणालयं च सूर्यप्रभं सूर्यनिबन्धनं च ।
ब्रह्मासनं शङ्करकार्मुकं च ददर्श नाभिं च वसुन्धरायाः ॥ ६१

कैलासमग्र्यं हिमवच्छिलां च तथर्षभं काञ्चनशैलमग्र्यम् ।
सन्दीप्तसर्वौषधिसंप्रदीप्तं ददर्श सर्वौषधिपर्वतेन्द्रम् ॥ ६२

स तं समीक्ष्यानलरश्मिदीप्तं विसिस्मये वासवदूतसूनुः ।
आप्लुत्य तं चौषधिपर्वतेन्द्रं तत्रौषधीनां विचयं चकार ॥ ६३

स योजनसहस्राणि समतीत्य महाकपिः ।
दिव्यौषधिधरं शैलं व्यचरन्मारुतात्मजः ॥ ६४

महौषध्यस्ततस्सर्वास्तस्मिन् पर्वतसत्तमे ।
विज्ञायार्थिनमायान्तं ततो जग्मुरदर्शनम् ॥ ६५

स ता महात्मा हनुमानपश्यंश्चुकोप कोपाच्च भृशं ननाद ।
अमृष्यमाणोऽग्निनिकाशचक्षुर्महीधरेन्द्रं तमुवाच वाक्यम् ॥ ६६

किमेतदेवं सुविनिश्चितं ते यद्राघवेनासि कृतानुकम्पः ।
पश्याद्य मद्बाहुबलाभिभूतो विशीर्णमात्मानमथो नगेन्द्र ! ॥" ६७

स तस्य शृङ्गं सनगं सनागं सकाञ्चनं धातुसहस्रजुष्टम् ।
विकीर्णकूटं ज्वलिताग्रसानुं प्रगृह्य वेगात्सहसोन्ममाथ ॥ ६८
स तं समुत्पाट्य खमुत्पपात वित्रास्य लोकान् ससुरासुरेन्द्रान् ।
संस्तूयमानः खचरैरनेकैर्जगाम वेगाद्गरुडोग्रवेगः ॥ ६९
स भास्कराध्वानमनुप्रपन्नस्तं भास्कराभं शिखरं प्रगृह्य ।
बभौ तदा भास्करसन्निकाशो रवेस्समीपे प्रतिभास्कराभः ॥ ७०
स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु ।
सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेन ॥ ७१
तं वानराः प्रेक्ष्य विनेदुरुच्चैस्स तानपि प्रेक्ष्य मुदा ननाद ।
तेषां समुद्घुष्टरवं निशम्य लङ्कालया भीमतरं विनेदुः ॥ ७२
ततो महात्मा निपपात तस्मिन् शैलोत्तमे वानरसैन्यमध्ये ।
हर्युत्तमेभ्यश्शिरसाऽभिवाद्य विभीषणं तत्र स सस्वजे च ॥ ७३
तावप्युभौ मानुषराजपुत्रौ तं गन्धमाघ्राय महौषधीनाम् ।
बभूवतुस्तत्र तदा विशल्यावुत्तस्थुरन्ये च हरिप्रवीराः ॥ ७४
सर्वे विशल्या विरुजः क्षणेन हरिप्रवीरा निहताश्च ये स्युः ।
गन्धेन तासां प्रवरौषधीनां सुप्ता निशान्तेष्विव संप्रबुद्धाः ॥ ७५
यदा प्रभृति लङ्कायां युध्यन्ते कपिराक्षसाः ।
तदा प्रभृति मानार्थमाज्ञया रावणस्य च ॥ ७६
ये हन्यन्ते रणे तत्र राक्षसाः कपिकुञ्जरैः ।
हता हतास्तु क्षिप्यन्ते सर्व एव तु सागरे ॥ ७७
ततो हरिर्गन्धवहात्मजस्तु तमोषधीशैलमुदग्रवीर्यः ।
निनाय वेगाद्धिमवन्तमेव पुनश्च रामेण समाजगाम ॥ ७८

इति श्रीमद्युद्धकाण्डे चतुस्सप्ततितमस्सर्गः ॥

## ॥ पञ्चसप्ततितमस्सर्गः ॥

ततोऽब्रवीन्महातेजास्सुग्रीवो वानराधिपः ।
अर्थ्यं विज्ञापयंश्चापि हनूमन्तमिदं वचः ॥ १
"यतो हतः कुम्भकर्णः कुमाराश्च निषूदिताः ।
नेदानीमुपनिर्हारं रावणो दातुमर्हति ॥ २
ये ये महाबलास्सन्ति लघवश्च प्लवङ्गमाः ।
लङ्कामभ्युत्पतन्त्याशु गृह्योल्काः प्लवगर्षभाः ॥" ३
ततोऽस्तंगत आदित्ये रौद्रे तस्मिन्निशामुखे ।
लङ्कामभिमुखास्सोल्का जग्मुस्ते प्लवगर्षभाः ॥ ४
उल्काहस्तैर्हरिगणैस्सर्वतस्समभिद्रुताः ।
आरक्षस्था विरूपाक्षास्सहसा विप्रदुद्रुवुः ॥ ५
गोपुराट्टप्रतोलीषु चर्यासु विविधासु च ।
प्रासादेषु च संहृष्टास्ससृजुस्ते हुताशनम् ॥ ६
तेषां गृहसहस्राणि ददाह हुतभुक्तदा ।
प्रासादाः पर्वताकाराः पतन्ति धरणीतले ॥ ७
अगरुर्दह्यते तत्र वरं च हरिचन्दनम् ।
मौक्तिका मणयस्स्निग्धा वज्रं चापि प्रवालकम् ॥ ८
क्षौमं च दह्यते तत्र कौशेयं चापि शोभनम् ।
आविकं विविधं चौर्णं काञ्चनं भाण्डमायुधम् ॥ ९
नानाविकृतसंस्थानं वाजिभाण्डपरिच्छदौ ।
गजग्रैवेयकक्ष्याश्च रथभाण्डाश्च संस्कृताः ॥ १०
तनुत्राणि च योधानां हस्त्यश्वानां च वर्म च ।
खड्गा धनूंषि ज्याबाणास्तोमराङ्कुशशक्तयः ॥ ११

रोमजं वालजं चर्म व्याघ्रजं चाण्डजं बहु ।
मुक्तामणिविचित्रांश्च प्रासादांश्च समन्ततः ॥ १२
विविधानस्त्रसंयोगानग्निर्दहति तत्र वै ।
नानाविधान्गृहच्छन्दान् ददाह हुतभुक्तदा ॥ १३
आवासान्राक्षसानां च सर्वेषां गृहगर्धिनाम् ।
हेमचित्रतनुत्राणां स्रग्दामाम्बरधारिणाम् ॥ १४
शीधुपानचलाक्षाणां मदविह्वलगामिनाम् ।
कान्तालम्बितवस्त्राणां शत्रुसंजातमन्युनाम् ॥ १५
गदाशूलासिहस्तानां खादतां पिबतामपि ।
शयनेषु महार्हेषु प्रसुप्तानां प्रियैस्सह ॥ १६
त्रस्तानां गच्छतां तूर्णं पुत्रानादाय सर्वतः ।
तेषां शतसहस्राणि तदा लङ्कानिवासिनाम् ॥ १७
अदहत्पावकस्तत्र जज्वाल च पुनः पुनः ।
सारवन्ति महार्हाणि गम्भीरगुणवन्ति च ॥ १८
हेमचन्द्रार्धचन्द्राणि चन्द्रशालोन्नतानि च ।
रत्नचित्रगवाक्षाणि साधिष्ठानानि सर्वशः ॥ १९
मणिविद्रुमचित्राणि स्पृशन्तीव दिवाकरम् ।
क्रौञ्चबर्हिणवीणानां भूषणानां च निस्वनैः ॥ २०
नादितान्यचलाभानि वेश्मान्यग्निर्ददाह सः ।
ज्वलनेन परीतानि तोरणानि चकाशिरे ॥ २१
विद्युद्भिरिव नद्धानि मेघजालानि घर्मगे ।
ज्वलनेन परीतानि निपेतुर्भवनान्यथा ॥ २२

वज्रिवज्रहतानीव शिखराणि महागिरेः ।
विमानेषु प्रसुप्ताश्च दह्यमाना वराङ्गना ॥ २३

त्यक्ताभरणसर्वाङ्गा हाहेत्युच्चैर्विचुक्रुशुः ।
तानि निर्दह्यमानानि दूरतः प्रचकाशिरे ॥ २४

हिमवच्छिखराणीव दीप्तौषधिवनानि च ।
हर्म्याग्रैर्दह्यमानैश्च ज्वालाप्रज्वलितैरपि ॥ २५

रात्रौ सा दृश्यते लङ्का पुष्पितैरिव किंशुकैः ।
हस्त्यध्यक्षैर्गजैर्मुक्तैर्मुक्तैश्चैव तुरङ्गमैः ॥ २६

बभूव लङ्का लोकान्ते भ्रान्तग्राहइवार्णवः ।
अश्वं मुक्तं गजो दृष्ट्वा कचिद्भीतोऽपसर्पति ॥ २७

भीतो भीतं गजं दृष्ट्वा कचिदश्वो निवर्तते ।
लङ्कायां दह्यमानायां शुशुभे स महार्णवः ॥ २८

छायासंसक्तसलिलो लोहितोद इवार्णवः ।
स बभूव मुहूर्तेन हरिभिर्दीपिता पुरी ॥ २९

लोकस्यास्य क्षये घोरे प्रदीप्तेव वसुन्धरा ।
नारीजनस्य धूमेन व्याप्तस्योच्चैर्विनेदुषः ॥ ३०

स्वनो ज्वलनतप्तस्य शुश्रुवे दशयोजनम् ।
प्रदग्धकायानपरान् राक्षसान्निर्गतान्बहिः ॥ ३१

सहसाभ्युत्पतन्ति स्म हरयोऽथ युयुत्सवः ।
उद्घुष्टं वानराणां च राक्षसानां च निस्वनः ॥ ३२

दिशो दश समुद्रं च पृथिवीं चान्वनादयत् ।
विशल्यौ तु महात्मानौ तावुभौ रामलक्ष्मणौ ॥ ३३

असंभ्रान्तौ जगृहतुस्तदोभे धनुषी वरे ।
ततो विष्फारयानस्य रामस्य धनुरुत्तमम् ॥ ३४

बभूव तुमुलश्शब्दो राक्षसानां भयावहः ।
अशोभत तदा रामो धनुर्विष्फारयन्महत् ॥ ३५

भगवानिव संक्रुद्धो भवो वेदमयं धनुः ।
उद्घुष्टं वानराणां च राक्षसानां च निस्वनम् ॥ ३६

ज्याशब्दस्तावुभौ शब्दावति रामस्य शुश्रुवे ।
वानरोद्घुष्टघोषश्च राक्षसानां च निःस्वनः ॥ ३७

ज्याशब्दश्चापि रामस्य त्रयं व्याप्य दिशो दश ।
तस्य कार्मुकमुक्तैश्च शरैस्तत्पुरगोपुरम् ॥ ३८

कैलासशृङ्गप्रतिमं विकीर्णमपतद्भुवि ।
ततो रामशरान्दृष्ट्वा विमानेषु गृहेषु च ॥ ३९

सन्नाहो राक्षसेन्द्राणां तुमुलस्समपद्यत ।
तेषां सन्नह्यमानानां सिंहनादं च कुर्वताम् ॥ ४०

शर्वरी राक्षसेन्द्राणां रौद्रीव समपद्यत ।
आदिष्टा वानरेन्द्रास्तु सुग्रीवेण महात्मनः ॥ ४१

"आसन्नद्वारमासाद्य युध्यध्वं प्लवगर्षभाः ।
यश्च वो वितथं कुर्यात्तत्र तत्र व्यवस्थितः ॥ ४२

स हन्तव्यो हि संप्लुत्य राजशासनदूषकः ।
तेषु वानरमुख्येषु दीप्तोल्कोज्वलपाणिषु ॥ ४३

स्थितेषु द्वारमासाद्य रावणं मन्युराविशत् ।
तस्य जृम्भितविक्षोभाद्व्यामिश्रा वै दिशो दश ॥ ४४

रूपवानिव रुद्रस्य मन्युर्गात्रेष्वदृश्यत ।
स निकुम्भं च कुम्भं च कुम्भकर्णात्मजावुभौ ॥ ४५

प्रेषयामास संक्रुद्धो राक्षसैर्बहुभिस्सह ।
यूपाक्षश्शोणिताक्षश्च प्रजङ्घः कम्पनस्तथा ॥ ४६

निर्ययुः कौम्भकर्णिभ्यां सह रावणशासनात् ।
शशास नादयन् सर्वान् राक्षसान् सुमहाबलान् ॥ ४७

"राक्षसागच्छतात्रैव जयध्वं शीघ्रमेव च ।"
ततस्तु चोदितास्तेन राक्षसा ज्वलितायुधाः ॥ ४८

लङ्काया निर्ययुर्वीराः प्रणदन्तः पुनः पुनः ।
रक्षसां भूषणस्थाभिर्भाभिस्स्वाभिश्च सर्वशः ॥ ४९

चक्रुस्ते सप्रभं व्योम हरयश्चाग्निभिस्सह ।
तत्र ताराधिपस्याभा ताराणां च तथैव च ॥ ५०

तयोराभरणस्था च बलयोर्द्यामभासयत् ।
चन्द्राभा भूषणाभा च गृहाणां ज्वलतां च भा ॥ ५१

हरिराक्षससैन्यानि भ्राजयामास सर्वतः ।
तत्र चोर्ध्वं प्रदीप्तानां गृहाणां सागरः पुनः ॥ ५२

भाभिस्संसक्तपातालश्चलोर्मिश्शुशुभेऽधिकम् ।
पताकाध्वजसंसक्तमुत्तमासिपरश्वथम् ॥ ५३

भीमाश्वरथमातङ्गं नानापत्तिसमाकुलम् ।
दीप्तशूलगदाखड्गप्रासतोमरकार्मुकम् ॥ ५४

तद्राक्षसबलं घोरं भीमविक्रमपौरुषम् ।
ददृशे ज्वलितप्रासं किङ्किणीशतनादितम् ॥ ५५

हेमजालाचितभुजं व्यावेष्टितपरश्वथम् ।
व्याघूर्णितमहाशस्त्रं बाणसंसक्तकार्मुकम् ॥ ५६

गन्धमाल्यमधूत्सेकसम्मोदितमहानिलम् ।
घोरं शूरजनाकीर्णं महाम्बुधरनिस्वनम् ॥ ५७

तद्दृष्ट्वा बलमायान्तं राक्षसानां सुदारुणम् ।
संप्रचाल प्लवङ्गानां बलमुच्चैर्ननाद च ॥ ५८

जवेनाप्लुत्य च पुनस्तद्बलं रक्षसां महत् ।
अभ्ययात्प्रत्यरिबलं पतङ्गा इव पावकम् ॥ ५९

तेषां भुजपरामर्शव्यामृष्टपरिघाशनि ।
राक्षसानां बलं श्रेष्ठं भूयस्तरमशोभत ॥ ६०

तत्रोन्मत्ता इवोत्पेतुर्हरयोऽथ युयुत्सवः ।
तरुशैलैरभिघ्नन्तो मुष्टिभिश्च निशाचरान् ॥ ६१

तथैवापततां तेषां कपीनामसिभिश्शितैः ।
शिरांसि सहसा जह्रू राक्षसा भीमदर्शनाः ॥ ६२

दशनैर्हृतकर्णाश्च मुष्टिनिष्कीर्णमस्तकाः ।
शिलाप्रहारभग्नाङ्गा विचेरुस्तत्र राक्षसाः ॥ ६३

तथैवाप्यपरे तेषां कपीनामभिलक्षिताः ।
प्रवीरानभितो जघ्नू राक्षसानां तरस्विनाम् ॥ ६४

तथैवाप्यपरे तेषां कपीनामसिभिश्शितैः ।
हरिवीरान्निजघ्नुश्च घोररूपा निशाचराः ॥ ६५

घ्नन्तमन्यं जघानान्यः पातयन्तमपातयत् ।
गर्हमाणं जगर्हेऽन्यो दशन्तमपरोऽदशत् ॥ ६६

देहीत्यन्यो ददात्यन्यो ददामीत्यपरः पुनः ।
किं क्लेशयसि तिष्ठेति तत्रान्योन्यं बभाषिरे ॥ ६७

विप्रलम्बितवस्त्रं च विमुक्तकवचायुधम् ।
समुद्यतमहाप्रासं यष्टिशूलासिनं कुलम् ॥ ६८

प्रावर्तत महारौद्रं युद्धं वानररक्षसाम् ।
वानरान्दशसप्तेति राक्षसा जघ्नुराहवे ॥ ६९

राक्षसान्दशसप्तेति वानराश्चाभ्यपातयन् ।
विस्रस्तकेशवसनं विध्वस्तकवचध्वजम् ॥ ७०

बलं राक्षसमालम्ब्य वानराः पर्यवारयन् ।
(वानरा राक्षसाश्चैव व्यतिषक्ताः परस्परम् ॥ ७१
आविष्टा इव युध्यन्तश्चक्रुः कर्माण्यभीतवत् ।
ववृधे तुमुलं युद्धं रक्षसां वानरैस्सह ॥) ७२

इति श्रीमद्युद्धकाण्डे पञ्चसप्ततितमस्सर्गः ॥

---

## ॥ षट्सप्ततितमस्सर्गः ॥

प्रवृत्ते संकुले तस्मिन् घोरे वीरजनक्षये ।
अङ्गदः कम्पनं वीरमाससाद रणोत्सुकः ॥ १
आहूय सोऽङ्गदं कोपात्ताडयामास वेगितः ।
गदया कम्पनः पूर्वं स चचाल भृशाहतः ॥ २

स संज्ञां प्राप्य तेजस्वी चिक्षेप शिखरं गिरेः ।
अर्दितस्तत्प्रहारेण कम्पनः पतितो भुवि ॥ ३

ततस्तु कम्पनं दृष्ट्वा शोणिताक्षो हतं रणे ।
रथेनाभ्यपतत्क्षिप्रं तत्राङ्गदमभीतवत् ॥ ४

सोऽङ्गदं निशितैर्बाणैस्तदा विव्याध वेगितः ।
शरीरदारणैस्तीक्ष्णैः कालाग्निसमविग्रहैः ॥ ५

क्षुरक्षुरप्रनाराचैर्वत्सदन्तैश्शिलीमुखैः ।
कर्णिशल्यविपाठैश्च बहुभिश्च शितैश्शरैः ॥ ६

अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रः प्रतापवान् ।
धनुरुग्रं रथं बाणान्ममर्द तरसा बली ॥ ७

शोणिताक्षस्ततः क्षिप्रमसिं चर्म समाददे ।
उत्पपात दिवं क्रुद्धो वेगवानविचारयन् ॥ ८

तं क्षिप्रतरमाप्लुत्य परामृश्याङ्गदो बली ।
करेण तस्य तं खड्गं समाच्छिद्य ननाद च ॥ ९

तस्यांसफलके खड्गं निजघान ततोऽङ्गदः ।
यज्ञोपवीतवच्चैनं चिच्छेद कपिकुञ्जरः ॥ १०

तं प्रगृह्य महाखड्गं विनद्य च पुनः पुनः ।
वालिपुत्रोऽभिदुद्राव रणशीर्षे परानरीन् ॥ ११

आयसीं तु गदां वीरः प्रगृह्य कनकाङ्गदः ।
शोणिताक्षस्समाविध्य तमेवानुपपातह ॥ १२

प्रजङ्घसहितो वीरो यूपाक्षस्तु ततो बली ।
रथेनाभिययौ क्रुद्धो वालिपुत्रं महाबलम् ॥ १३

तयोर्मध्ये कपिश्रेष्ठश्शोणिताक्षप्रजङ्घयोः ।
विशाखयोर्मध्यगतः पूर्णचन्द्र इवाभवत् ॥ १४

अङ्गदं परिरक्षन्तौ मैन्दो द्विविद एव च ।
तस्य तस्थतुरभ्याशे परस्परदिदृक्षया ॥ १५

अभिपेतुर्महाकायाः प्रतियत्ता महाबलाः ।
राक्षसा वानरान्रोषादसिचर्मगदाधराः ॥ १६

त्रयाणां वानरेन्द्राणां त्रिभी राक्षसपुङ्गवैः ।
संसक्तानां महद्युद्धमभवद्रोमहर्षणम् ॥ १७

ते तु वृक्षान् समादाय संप्रचिक्षिपुराहवे ।
खड्गेन प्रतिचिच्छेद तान्प्रजङ्घो महाबलः ॥ १८

रथानश्वान् द्रुमैश्शैलैस्ते प्रचिक्षिपुराहवे ।
शरौघैः प्रतिचिच्छेद तान्यूपाक्षो निशाचरः ॥ १९

सृष्टान्द्विविदमैन्दाभ्यां द्रुमानुत्पाट्य वीर्यवान् ।
बभञ्ज गदया मध्ये शोणिताक्षः प्रतापवान् ॥ २०

उद्यम्य विपुलं खड्गं परमर्मनिकृन्तनम् ।
प्रजङ्घो वालिपुत्राय अभिदुद्राव वेगितः ॥ २१

तमभ्याशगतं दृष्ट्वा वानरेन्द्रो महाबलः ।
आजघानाश्वकर्णेन द्रुमेणातिबलस्तदा ॥ २२

बाहुं चास्य सनिस्त्रिंशमाजघान स मुष्टिना ।
वालिपुत्रस्य घातेन स पपात क्षितावसिः ॥ २३

तं दृष्ट्वा पतितं भूमौ खड्गमुत्पलसन्निभम् ।
मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ २४

ललाटे समहावीर्यमङ्गदं वानरर्षभम् ।
आजघान महातेजास्स मुहूर्तं चचाल ह ॥ २५

स संज्ञां प्राप्य तेजस्वी वालिपुत्रः प्रतापवान् ।
प्रजङ्घस्य शिरः कायात्खड्गेनापातयत्क्षितौ ॥ २६

स यूपाक्षोऽश्रुपूर्णाक्षः पितृव्ये निहते रणे ।
अवरुह्य रथात्क्षिप्रं क्षीणेषुः खड्गमाददे ॥ २७

तमापतन्तं संप्रेक्ष्य यूपाक्षं द्विविदस्त्वरन् ।
आजघानोरसि क्रुद्धो जग्राह च बलाद्बली ॥ २८

गृहीतं भ्रातरं दृष्ट्वा शोणिताक्षो महाबलः ।
आजघान गदाग्रेण वक्षसि द्विविदं ततः ॥ २९

स गदाभिहतस्तेन संचचाल महाबलः ।
उद्यतां च पुनस्तस्य जहार द्विविदो गदाम् ॥ ३०

एतस्मिन्नन्तरे वीरो मैन्दो वानरयूथपः ।
यूपाक्षं ताडयामास तलेनोरसि वीर्यवान् ॥ ३१

तौ शोणिताक्षयूपाक्षौ प्लवगाभ्यां तरस्विनौ ।
चक्रतुस्समरे तीव्रमाकर्षोत्पाटनं भृशम् ॥ ३२

द्विविदश्शोणिताक्षं विददार नखैर्मुखे ।
निष्पिपेष च वेगेन क्षितावाविध्य वीर्यवान् ॥ ३३

यूपाक्षमभिसंक्रुद्धो मैन्दो वानरयूथपः ।
पीडयामास बाहुभ्यां स पपात हतः क्षितौ ॥ ३४

हतप्रवीरा व्यथिता राक्षसेन्द्रचमूस्तदा ।
जगामाभिमुखी सा तु कुम्भकर्णसुतो यतः ॥ ३५

आपतन्तीं च वेगेन कुम्भस्तां सान्त्वयच्चमूम् ।
अथोत्कृष्टं महावीर्यैर्लब्धलक्षैः प्लवङ्गमैः ॥ ३६

निपातितमहावीरां दृष्ट्वा रक्षश्चमूं ततः ।
कुम्भः प्रचक्रे तेजस्वी रणे कर्म सुदुष्करम् ॥ ३७

स धनुर्धन्विनां श्रेष्ठः प्रगृह्य सुसमाहितः ।
मुमोचाशीविषप्रख्यान् शरान्देहविदारणान् ॥ ३८

तस्य तच्छुशुभे भूयस्सशरं धनुरुत्तमम् ।
विद्युदैरावतार्चिष्मद्द्वितीयेन्द्रधनुर्यथा ॥ ३९

आकर्णाकृष्टमुक्तेन जघान द्विविदं तदा ।
तेन हाटकपुङ्खेन पत्रिणा पत्रवाससा ॥ ४०

सहसाभिहतस्तेन विप्रमुक्तपदस्त्वरन् ।
निपपाताद्रिकूटाभो विह्वलः प्लवगोत्तमः ॥ ४१

मैन्दस्तु भ्रातरं दृष्ट्वा भग्नं तत्र महाहवे ।
अभिदुद्राव वेगेन प्रगृह्य महतीं शिलाम् ॥ ४२

तां शिलां तु प्रचिक्षेप राक्षसाय महाबलः ।
बिभेद तां शिलां कुम्भः प्रसन्नैः पञ्चभिश्शरैः ॥ ४३

सन्धाय चान्यं सुमुखं शरमाशीविषोपमम् ।
आजघान महातेजा वक्षसि द्विविदाग्रजम् ॥ ४४

स तु तेन प्रहारेण मैन्दो वानरयूथपः ।
मर्मण्यभिहतस्तेन पपात भुवि मूर्छितः ॥ ४५

अङ्गदो मातुलौ दृष्ट्वा पतितौ तु महाबलौ ।
अभिदुद्राव वेगेन कुम्भमुद्यतकार्मुकम् ॥ ४६

तमापतन्तं विव्याथ कुम्भः पञ्चभिरायसैः ।
त्रिभिश्चान्यैश्शितैर्बाणैर्मातङ्गमिव तोमरैः ॥ ४७

सोऽङ्गदं विविधैर्बाणैः कुम्भो विव्याथ वीर्यवान् ।
अकुण्ठधारैर्निशितैस्तीक्ष्णैः कनकभूषणैः ॥ ४८

अङ्गदः प्रतिविद्धाङ्गो वालिपुत्रो न कम्पते ।
शिलापादपवर्षाणि तस्य मूर्ध्नि ववर्ष ह ॥ ४९

स प्रचिच्छेद तान्सर्वान् बिभेद च पुनश्शिलाः ।
कुम्भकर्णात्मजश्श्रीमान् वालिपुत्रसमीरितान् ॥ ५०

आपतन्तं च संप्रेक्ष्य कुम्भो वानरयूथपम् ।
भ्रुवोर्विव्याध बाणाभ्यामुल्काभ्यामिव कुञ्जरम् ॥ ५१

तस्य सुस्राव रुधिरं पिहिते चास्य लोचने ।
अङ्गदः पाणिना नेत्रे विधाय रुधिरोक्षिते ॥ ५२

सालमासन्नमेकेन परिजग्राह पाणिना ।
सम्पीड्य चोरसि स्कन्धं करेणाभिनिवेश्य च ॥ ५३

किञ्चिदभ्यवनम्यैनमुन्ममाथ यथा गजः ।
तमिन्द्रकेतुप्रतिमं वृक्षं मन्दरसन्निभम् ॥ ५४

समुत्सृजन्तं वेगेन पश्यतां सर्वरक्षसाम् ।
स बिभेद शितैर्बाणैस्सप्तभिः कायभेदनैः ॥ ५५

अङ्गदो विव्यथेऽभीक्ष्णं ससाद च मुमोह च ।
अङ्गदं व्यथितं दृष्ट्वा सीदन्तमिव सागरे ॥ ५६

दुरासदं हरिश्रेष्ठं रामायान्ये न्यवेदयन् ।
रामस्तु व्यथितं श्रुत्वा वालिपुत्रं रणाजिरे ॥ ५७

व्यादिदेश हरिश्रेष्ठान् जाम्बवत्प्रमुखान् ततः ।
ते तु वानरशार्दूलाः श्रुत्वा रामस्य शासनम् ॥ ५८

अभिपेतुस्सुसंक्रुद्धाः कुम्भमुद्यतकार्मुकम् ।
ततो द्रुमशिलाहस्ताः कोपसंरक्तलोचनाः ॥ ५९

रिरक्षिषन्तोऽभ्यपतन्नङ्गदं वानरर्षभाः ।
जाम्बवांश्च सुषेणश्च वेगदर्शी च वानरः ॥ ६०

कुम्भकर्णात्मजं वीरं क्रुद्धास्समभिदुद्रुवुः ।
समीक्ष्यापततस्तांस्तु वानरेन्द्रान् महाबलान् ॥ ६१

आववार शरौघेण नगेनेव जलाशयम् ।
तस्य बाणपथं प्राप्य न शेकुरतिवर्तितुम् ॥ ६२

वानरेन्द्रा महात्मानो वेलामिव महोदधिः ।
तांस्तु दृष्ट्वा हरिगणान् शरवृष्टिभिरर्दितान् ॥ ६३

अङ्गदं पृष्ठतः कृत्वा भ्रातृजं प्लवगेश्वरः ।
अभिदुद्राव वेगेन सुग्रीवः कुम्भमाहवे ॥ ६४

शैलसानुचरं नागं वेगवानिव केसरी ।
उत्पाट्य च महाशैलानश्वकर्णान्धवान्बहून् ॥ ६५

अन्यांश्च विविधान्वृक्षान् चिक्षेप च महाबलः ।
तां छादयन्तीमाकाशं वृक्षवृष्टिं दुरासदाम् ॥ ६६

कुम्भकर्णात्मजश्शीघ्रं चिच्छेद निशितैश्शरैः ।
अभिलक्ष्येण तीव्रेण कुम्भेन निशितैश्शरैः ॥ ६७

आचितास्ते द्रुमा रेजुर्यथा घोराश्शतघ्नयः ।
द्रुमवर्षं तु संछिन्नं दृष्ट्वा कुम्भेन वीर्यवान् ॥ ६८

वानराधिपतिश्श्रीमान् महासत्त्वो न विव्यथे ।
निर्भिद्यमानस्सहसा सहमानश्च तान् शरान् ॥ ३९

कुम्भस्य धनुराक्षिप्य बभञ्जेन्द्रधनुष्प्रभम् ।
अवप्लुत्य ततश्शीघ्रं कृत्वा कर्म सुदुष्करम् ॥ ७०

अब्रवीत्कुपितः कुम्भं भग्नशृङ्गमिव द्विपम् ।
"निकुम्भाग्रज ! वीर्यं ते बाणवेगवदद्भुतम् ॥ ७१

सन्नतिश्च प्रभावश्च तव वा रावणस्य वा ।
प्रह्लादबलिवृत्रघ्नकुबेरवरुणोपम ॥ ७२

एकस्त्वमनुजातोऽसि पितरं बलवृत्ततः ।
त्वामेवैकं महाबाहुं चापहस्तमरिन्दमम् ॥ ७३

त्रिदशा नातिवर्तन्ते जितेन्द्रियमिवाधयः ।
विक्रमस्व महाबुद्धे ! कर्माणि मम पश्यतः ॥ ७४

वरदानात्पितृव्यस्ते सहते देवदानवान् ।
कुम्भकर्णस्तु वीर्येण सहते च सुरासुरान् ॥ ७५

धनुषीन्द्रजितस्तुल्यः प्रतापे रावणस्य च ।
त्वमद्य रक्षसां लोके श्रेष्ठोऽसि बलवीर्यतः ॥ ७६

महाविमर्दं समरे मया सह तवाद्भुतम् ।
अद्य भूतानि पश्यन्तु शक्रशम्बरयोरिव ॥ ७७

कृतमप्रतिमं कर्म दर्शितं चास्त्रकौशलम् ।
पातिता हरिवीराश्च त्वया वै भीमविक्रमाः ॥ ७८

उपालम्भभयाच्चापि नासि वीर ! मया हतः ।
कृतकर्मा परिश्रान्तो विश्रान्तं पश्य मे बलम् ॥" ७९

तेन सुग्रीववाक्येन सावमानेन मानितः ।
अग्नेराज्याहुतस्येव तेजस्तस्याभ्यवर्तत ॥ ८०

ततः कुम्भस्तु सुग्रीवं बाहुभ्यां जगृहे तदा ।
गजाविवाहितमदौ निश्वसन्तौ मुहुर्मुहुः ॥ ८१

अन्योन्यगात्रग्रथितौ कर्षन्ताावितरेतरम् ।
सधूमां मुखतो ज्वालां विसृजन्तौ परिश्रमात् ॥ ८२
तयोः पादाभिघाताच्च निमग्ना चाभवन्मही ।
व्याघूर्णिततरङ्गश्च चुक्षुभे वरुणालयः ॥ ८३
ततः कुम्भं समुत्क्षिप्य सुग्रीवो लवणाम्भसि ।
पातयामास वेगेन दर्शयन्नुदधेस्तलम् ॥ ८४
ततः कुम्भनिपातेन जलराशिस्समुत्थितः ।
विन्ध्यमन्दरसङ्काशो विससर्प समन्ततः ॥ ८५
ततः कुम्भस्समुत्पत्य सुग्रीवमभिवाद्य च ।
आजघानोरसि क्रुद्धो वज्रवेगेन मुष्टिना ॥ ८६
तस्य चर्म च पुस्फोट बहु सुस्राव शोणितम् ।
स च मुष्टिर्महावेगः प्रतिजघ्नेऽस्थिमण्डले ॥ ८७
तदा वेगेन तत्रासीत्तेजः प्रज्वलितं मुहुः ।
वज्रनिष्पेषसंजाता ज्वाला मेरौ यथा गिरौ ॥ ८८
स तत्राभिहतस्तेन सुग्रीवो वानरर्षभः ।
मुष्टिं संवर्तयामास वज्रकल्पं महाबलः ॥ ८९
अर्चिस्सहस्रविकचं रविमण्डलसप्रभम् ।
स मुष्टिं पातयामास कुम्भस्योरसि वीर्यवान् ॥ ९०
स तु तेन प्रहारेण विह्वलो भृशताडितः ।
निपपात तदा कुम्भो गतार्चिरिव पावकः ॥ ९१
मुष्टिनाभिहतस्तेन निपपाताशु राक्षसः ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ९२

कुम्भस्य पततो रूपं भग्नस्योरसि मुष्टिना ।
बभौ रुद्राभिपन्नस्य यथा रूपं गवां पतेः ॥ ९४
तस्मिन् हते भीमपराक्रमेण प्लवङ्गमानामृषभेण युद्धे ।
मही सशैला सवना चचाल भयं च रक्षांस्यधिकं विवेश ॥ ९५

इति श्रीमद्युद्धकाण्डे षट्सप्ततितमस्सर्गः ॥

---

## ॥ सप्तसप्ततितमस्सर्गः ॥

निकुम्भो भ्रातरं दृष्ट्वा सुग्रीवेण निपातितम् ।
प्रदहन्निव कोपेन वानरेन्द्रमवैक्षत ॥ १
ततस्स्रग्दामसन्नद्धं दत्तपञ्चाङ्गुलं शुभम् ।
आददे परिघं वीरो नगेन्द्रशिखरोपमम् ॥ २
हेमपट्टपरिक्षिप्तं वज्रविद्रुमभूषितम् ।
यमदण्डोपमं भीमं रक्षसां भयनाशनम् ॥ ३
तमाविध्य महातेजाश्शक्रध्वजसमं तदा ।
विननाद विवृत्तास्यो निकुम्भो भीमविक्रमः ॥ ४
उरोगतेन निष्केण भुजस्थैरङ्गदैरपि ।
कुण्डलाभ्यां च चित्राभ्यां मालया च विचित्रया ॥ ५
निकुम्भो भूषणैर्भाति तेन स्म परिघेण च ।
यथेन्द्रधनुषा मेघस्सविद्युत् स्तनयित्नुमान् ॥ ६
परिघाग्रेण पुस्फोट वातग्रन्थिर्महात्मनः ।
प्रजज्वाल सघोषश्च विधूम इव पावकः ॥ ७
नगर्या विटपावत्या गन्धर्वभवनोत्तमैः ।
सह चैवामरावत्या सर्वैश्च भवनैस्सह ॥ ८

सतारग्रहनक्षत्रं सचन्द्रं समहाग्रहम् ।
निकुम्भपरिघाघूर्णं भ्रमतीव नभस्स्थलम् ॥ ९

दुरासदश्च सञ्जज्ञे परिघाभरणप्रभः ।
कपीनां सनिकुम्भाग्निर्युगान्ताग्निरिवोत्थितः ॥ १०

राक्षसा वानराश्चापि न शेकुस्स्पन्दितुं भयात् ।
हनूमांस्तु विवृत्योरस्तस्थौ तस्याग्रतो बली ॥ ११

परिघोपमबाहुस्तु परिघं भास्करप्रभम् ।
बली बलवतस्तस्य पातयामास वक्षसि ॥ १२

स्थिरे तस्योरसि व्यूढे परिघश्शतधाकृतः ।
विशीर्यमाणस्सहसा उल्काशतमिवाम्बरे ॥ १३

स तु तेन प्रहारेण विचचाल महाकपिः ।
परिघेण समाधूतो यथा भूमिचलेऽचलः ॥ १४

स तदाभिहतस्तेन हनूमान् प्लवगोत्तमः ।
मुष्टिं संवर्तयामास बलेनातिमहाबलः ॥ १५

तमुद्यम्य महावेगा निकुम्भोरसि वीर्यवान् ।
अभिचिक्षेप वेगेन वेगवान्वायुविक्रमः ॥ १६

ततः पुस्फोट चर्मास्य प्रसुस्राव च शोणितम् ।
मुष्टिना तेन सञ्जज्ञे ज्वाला विद्युदिवोत्थिता ॥ १७

स तु तेन प्रहारेण निकुम्भो विचचाल ह ।
स्वस्थश्चापि निजग्राह हनूमन्तं महाबलम् ॥ १८

विचुक्रुशुस्तदा संख्ये भीमं लङ्कानिवासिनः ।
निकुम्भेनोद्धृतं दृष्ट्वा हनूमन्तं महाबलम् ॥ १९

स तथा ह्रीयमाणोऽपि कुम्भकर्णात्मजेन ह ।
आजघानानिलसुतो वज्रकल्पेन मुष्टिना ॥ २०

आत्मानं मोचयित्वाथ क्षितावभ्यवपद्यत ।
हनूमानुन्ममाथाशु निकुम्भं मारुतात्मजः ॥ २१

निक्षिप्य परमायत्तो निकुम्भं निष्पिपेषह ।
उत्पत्य चास्य वेगेन पपातोरसि वीर्यवान् ॥ २२

परिगृह्य च बाहुभ्यां परिवृत्य शिरोधराम् ।
उत्पाटयामास शिरो भैरवं नदतो महत् ॥ २३

(अथ देवास्सगन्धर्वा विद्याधरमहोरगाः ।
आकाशचारिणस्सर्वे अप्सरोभिस्सहासुराः ॥ २४

हनुमन्तं महाबाहुं वायुपुत्रमरिन्दमम् ।
प्रशंसन्तः परैर्वाक्यैः प्रसूनैरभ्यवर्षयन् ॥) २५

अथ विनदति सादिते निकुम्भे पवनसुतेन रणे बभूव युद्धम् ।
दशरथसुतराक्षसेन्द्रसून्वोर्भृशतरमागतरोषयोस्सुभीमम् ॥ २६

व्यपेते तु जीवे निकुम्भस्य हृष्टा विनेदुः प्लवङ्गादिशस्सस्वनुश्च ।
चचालेव चोर्वी पफालेव च द्यौर्भयं राक्षसानां बलं चाविवेश ॥ २७

इति श्रीमद्युद्धकाण्डे सप्तसप्ततितमस्सर्गः ॥

---

## ॥ अष्टसप्ततितमस्सर्गः ॥

निकुम्भं निहतं श्रुत्वा कुम्भं च विनिपातितम् ।
रावणः परमामर्षी प्रजज्वालानलो यथा ॥ १

नैर्ऋतः क्रोधशोकाभ्यां द्वाभ्यां तु परिमूर्छितः ।
खरपुत्रं विशालाक्षं मकराक्षमचोदयत् ॥ २

"गच्छ पुत्र ! मयाऽऽज्ञप्तो बलेनाभिसमन्वितः ।
राघवं लक्ष्मणं चैव जहि तांश्च वनौकसः ॥" ३

राक्षसस्य वचश्श्रुत्वा शूरमानी खरात्मजः ।
बाढमित्यब्रवीद्धृष्टो मकराक्षो निशाचरः ॥ ४

सोऽभिवाद्य दशग्रीवं कृत्वा चापि प्रदक्षिणम् ।
निर्जगाम गृहाच्छुभ्राद्रावणस्याज्ञया बली ॥ ५

समीपस्थं बलाध्यक्षं खरपुत्रोऽब्रवीदिदम् ।
"रथश्चानीयतां शीघ्रं सैन्यं चाहूयतां त्वरात् ॥" ६

तस्य तद्वचनं श्रुत्वा बलाध्यक्षो निशाचरः ।
स्यन्दनं च बलं चैव समीपं प्रत्यपादयत् ॥ ७

प्रदक्षिणं रथं कृत्वा आरुरोह निशाचरः ।
सूतं संचोदयामास "शीघ्रं मे रथमावह ॥" ८

अथ तान् राक्षसान् सर्वान् मकराक्षोऽब्रवीदिदम् ।
"यूयं सर्वे प्रयुध्यध्वं पुरस्तान्मम राक्षसाः ॥ ९

अहं राक्षसराजेन रावणेन महात्मना ।
आज्ञप्तस्समरे हन्तुं तावुभौ रामलक्ष्मणौ ॥ १०

अद्य रामं वधिष्यामि लक्ष्मणं च निशाचराः ।
शाखामृगं च सुग्रीवं वानरांश्च शरोत्तमैः ॥ ११

अद्य शूलनिपातैश्च वानराणां महाचमूम् ।
प्रदहिष्यामि सम्प्राप्तः शुष्केन्धनमिवानलः ॥" १२

मकराक्षस्य तच्छ्रुत्वा वचनं ते निशाचराः ।
सर्वे नानायुधोपेता बलवन्तस्समागताः ॥ १३

ते कामरूपिणस्सर्वे दंष्ट्रिणः पिङ्गलेक्षणाः ।
मातङ्गा इव नर्दन्तो ध्वस्तकेशा भयानकाः ॥ १४

परिवार्य महाकाया महाकायं खरात्मजम् ।
अभिजग्मुस्ततो हृष्टाश्चालयन्तो वसुन्धराम् ॥ १५

शङ्खभेरीसहस्राणामाहतानां समन्ततः ।
क्ष्वेलितास्फोटितानां च ततश्शब्दो महानभूत् ॥ १६

प्रभ्रष्टोऽथ करात्तस्य प्रतोदस्सारथेस्तदा ।
पपात सहसा चैव ध्वजस्तस्य च रक्षसः ॥ १७

तस्य ते रथयुक्ताश्च हया विक्रमवर्जिताः ।
चरणैराकुलैर्गत्वा दीनास्सास्रमुखा ययुः ॥ १८

प्रवाति पवनस्तस्मिन् सपांसुः खरदारुणः ।
निर्याणे तस्य रौद्रस्य मकराक्षस्य दुर्मतेः ॥ १९

तानि दृष्ट्वा निमित्तानि राक्षसा वीर्यवत्तमाः ।
अचिन्त्य निर्गतास्सर्वे यत्र तौ रामलक्ष्मणौ ॥ २०

घनगजमहिषाङ्गतुल्यवर्णास्समरमुखेष्वसकृद्गदासिभिन्नाः ।
'अहमह' मिति युद्धकौशलास्ते रजनिचराः परितस्समुन्नदन्तः ॥

इति श्रीमद्युद्धकाण्डे अष्टसप्ततितमस्सर्गः ॥

---

## ॥ एकोनाशीतितमस्सर्गः ॥

निर्गतं मकराक्षं ते दृष्ट्वा वानरयूथपाः ।
आप्लुत्य सहसा सर्वे योद्धुकामा व्यवस्थिताः ॥ १

ततः प्रवृत्तं सुमहत्तद्युद्धं रोमहर्षणम ।
निशाचरैः प्लवङ्गानां देवानां दानवैरिव ॥ २

वृक्षशूलनिपातैश्च शिलापरिघपातनैः ।
अन्योन्यं मर्दयन्ति स्म तदा कपिनिशाचराः ॥ ३

शक्तिखड्गगदाकुन्तैस्तोमरैश्च निशाचराः ।
पट्टसैर्भिण्डिवालैश्च बाणपातैस्समन्ततः ॥ ४

पाशमुद्गरदण्डैश्च निखातैश्चापरे तदा ।
कदनं कपिवीराणां चक्रुस्ते रजनीचराः ॥ ५

बाणौघैरर्दिताश्चापि खरपुत्रेण वानराः ।
सम्भ्रान्तमनसस्सर्वे दुद्रुवुर्भयपीडिताः ॥ ६

तान्दृष्ट्वा राक्षसास्सर्वे द्रवमाणान्वलीमुखान् ।
नेदुस्ते सिंहवद्धृष्टा राक्षसा जितकाशिनः ॥ ७

विद्रवत्सु तदा तेषु वानरेषु समन्ततः ।
रामस्तान्वारयामास शरवर्षेण राक्षसान् ॥ ८

वारितान्राक्षसान्दृष्ट्वा मकराक्षो निशाचरः ।
क्रोधानलसमाविष्टो वचनं चेदमब्रवीत् ॥ ९

"तिष्ठ राम! मया सार्धं द्वन्द्वयुद्धं ददामि ते ।
त्याजयिष्यामि ते प्राणान् धनुर्मुक्तैश्शितैश्शरैः ॥ १०

यत्तदा दण्डकारण्ये पितरं हतवान् मम ।
मदग्रतस्स्वकर्मस्थं दृष्ट्वा रोषोऽभिवर्धते ॥ ११

दह्यन्ते भृशमङ्गानि दुरात्मन्! मम राघव ।
यन्मयासि न दृष्टस्त्वं तस्मिन् काले महावने ॥ १२

दिष्ट्यासि दर्शनं राम! मम त्वं प्राप्तवानिह ।
काङ्क्षितोऽसि क्षुधार्तस्य सिंहस्येवेतरो मृगः ॥ १३

अद्य मद्बाणवेगेन प्रेतराड्विषयं गतः ।
ये त्वया निहता वीरास्सह तैश्च समेष्यसि ॥ १४

बहुनात्र किमुक्तेन शृणु राम! वचो मम ।
पश्यन्तु सकलालोकास्त्वां मां चैव रणाजिरे । १५

अस्त्रैर्वा गदया वापि बाहुभ्यां वा महाहवे ।
अभ्यस्तं येन वा राम! तेनैव युधि वर्तताम् ॥" १६

मकराक्षवचश्श्रुत्वा रामो दशरथात्मजः ।
अब्रवीत्प्रहसन्वाक्यमुत्तरोत्तरवादिनम् ॥ १७

'कत्थसे किं वृथा रक्षो! बहून्यसदृशानि तु ।
न रणे शक्यते जेतुं विना युद्धेन वाग्बलात् ॥ १८

चतुर्दशसहस्राणि रक्षसां त्वत्पिता च यः ।
त्रिशिरा दूषणश्चैव दण्डके निहता मया ॥ १९

स्वाशितास्तव मांसेन गृध्रगोमायुवायसाः ।
भविष्यन्त्यद्य व पाप! तीक्ष्णतुण्डनखाङ्कुराः ॥" २०

राघवेणैवमुक्तस्तु खरपुत्रो निशाचरः ।
बाणौघानमुचत्तस्मै राघवाय रणाजिरे ॥ २१

तान् शरान् शरवर्षेण रामश्चिच्छेद नैकधा ।
निपेतुर्भुवि ते च्छिन्ना रुक्मपुङ्खास्सहस्रशः ॥ २२

तद्युद्धमभवत्तत्र समेत्यान्योन्यमोजसा ।
रक्षसः खरपुत्रस्य सूनोर्दशरथस्य च ॥ २३

जीमूतयोरिवाकाशं शब्दो ज्यातलयोस्तदा ।
धनुर्मुक्तस्स्वनोत्कृष्टश्श्रूयते च रणाजिरे ॥ २४

देवदानवगन्धर्वाः किन्नराश्च महोरगाः ।
अन्तरिक्षगतास्सर्वे द्रष्टुकामास्तदद्भुतम् ॥ २५

विद्धमन्योन्यगात्रेषु द्विगुणं वर्धते परम् ।
कृतप्रतिकृतान्योन्यं कुरुतां तौ रणाजिरे ॥ २६

राममुक्तांस्तु बाणौघान् राक्षसस्त्वच्छिनद्रणे ।
रक्षोमुक्तांस्तु रामो वै नैकधा प्राच्छिनच्छरैः ॥ २७

बाणौघैर्विततास्सर्वा दिशश्च प्रदिशस्तथा ।
संछन्ना वसुधा चैव समन्तान्न प्रकाशते ॥ २८

ततः क्रुद्धो महाबाहुर्धनुश्चिच्छेद रक्षसः ।
अष्टाभिरथ नाराचैस्सूतं विव्याथ राघवः ॥ २९

भित्त्वा शरै रथं रामो रथाश्वान् समपातयत् ।
विरथो वसुधास्थश्च मकराक्षो निशाचरः ॥ ३०

तत्तिष्ठद्वसुधां रक्षश्शूलं जग्राह पाणिना ।
त्रासनं सर्वभूतानां युगान्ताग्निसमप्रभम् ॥ ३१

विभ्राम्य तु महच्छूलं प्रज्वलत्तन्निशाचरः ।
स क्रोधात्प्राहिणोतस्मै राघवाय महाहवे ॥ ३२

तमापतन्तं ज्वलितं खरपुत्रकराच्च्युतम् ।
बाणैस्तु त्रिभिराकाशे शूलं चिच्छेद राघवः ॥ ३३

स छिन्नो नैकधा शूलो दिव्यहाटकमण्डितः ।
व्यशीर्यत महोल्केव रामबाणार्दितो भुवि ॥ ३४

तच्छूलं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ।
साधु साध्विति भूतानि व्याहरन्ति नभोगताः ॥ ३५

तद्दृष्ट्वा निहतं शूलं मकराक्षो निशाचरः ।
मुष्टिमुद्यम्य काकुत्स्थं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ३६

स तं दृष्ट्वाऽऽपतन्तं वै प्रहस्य रघुनन्दनः ।
पावकास्त्रं ततो रामस्सन्दधे तु शरासने ॥ ३७

तेनास्त्रेण हतं रक्षः काकुत्स्थेन तदा रणे ।
संछिन्नहृदयं तत्र पपात च ममार च ॥ ३८

दृष्ट्वा ते राक्षसास्सर्वे मकराक्षस्य पातनम् ।
लङ्कामेवाभ्यधावन्त रामबाणार्दितास्तदा ॥ ३९

दशरथनृपपुत्रबाणवेगै रजनिचरं निहतं खरात्मजं तम् ।
ददृशुरथ सुरा भृशं प्रहृष्टा गिरिमिव वज्रहतं क्षितौ विकीर्णम् ॥ ४०

इति श्रीमद्युद्धकाण्डे एकोनाशीतितमस्सर्गः ॥

---

## ॥ अशीतितमस्सर्गः ॥

मकराक्षं हतं श्रुत्वा रावणस्समितिञ्जयः ।
क्रोधेन महताविष्टो दन्तान् कटकटापयन् ॥ १

कुपितश्च तदा तत्र किं कार्यमिति चिन्तयन् ।
आदिदेशातिसंक्रुद्धो रणायेन्द्रजितं सुतम् ॥ २

"जहि वीर! महावीर्यौ भ्रातरौ रामलक्ष्मणौ ।
अदृश्यो दृश्यमानो वा सर्वथा त्वं बलाधिकः ॥ ३

त्वमप्रतिमकर्माणमिन्द्रं जयसि संयुगे ।
किं पुनर्मानुषौ दृष्ट्वा न वधिष्यसि संयुगे ॥" ४

तथोक्तो राक्षसेन्द्रेण प्रतिगृह्य पितुर्वचः ।
यज्ञभूमौ स विधिवत्पावकं जुहुवेन्द्रजित् ॥ ५

जुह्वतश्चापि तत्राग्निं रक्तोष्णीषधराः स्त्रियः ।
आजग्मुस्तत्र सम्भ्रान्ता राक्षसो यत्र रावणिः ॥ ६

शस्त्राणि शरपत्राणि समिधोऽथ विभीतकाः ।
लोहितानि च वासांसि स्रुवं कार्ष्णायसं तथा ॥ ७

सर्वतोऽग्निं समास्तीर्य शरपत्रैस्सतोमरैः ।
छागस्य कृष्णवर्णस्य गलं जग्राह जीवतः ॥ ८

सकृदेव समिद्धस्य विधूमस्य महार्चिषः ।
बभूवुस्तानि लिङ्गानि विजयं दर्शयन्ति च ॥ ९

प्रदक्षिणावर्तशिखस्तप्तहाटकसन्निभः ।
हविस्तत्प्रतिजग्राह पावकस्स्वयमुत्थितः ॥ १०

हुत्वाग्निं तर्पयित्वा च देवदानवराक्षसान् ।
आरुरोह रथश्रेष्ठमन्तर्धानगतं शुभम् ॥ ११

स वाजिभिश्चतुर्भिश्च बाणैश्च निशितैर्युतः ।
आरोपितमहाचापश्शुशुभे स्यन्दनोत्तमः ॥ १२

जाज्वल्यमानो वपुषा तपनीयपरिच्छदः ।
मृगैश्चन्द्रार्धचन्द्रैश्च स रथस्समलंकृतः ॥ १३

जाम्बूनदमहाकम्बुर्दीप्तपावकसन्निभः ।
बभूवेन्द्रजितः केतुर्वैडूर्यसमलंकृतः ॥ १४

तेन चादित्यकल्पेन ब्रह्मास्त्रेण च पालितः ।
स बभूव दुराधर्षो रावणिस्सुमहाबलः ॥ १५

सोऽभिनिर्याय नगरादिन्द्रजित्समितिञ्जयः ।
हुत्वाग्निं राक्षसैर्मन्त्रैरन्तर्धानगतोऽब्रवीत् ॥ १६

"अद्य हत्वा रणे यौ तौ मिथ्याप्रव्राजितौ वने ।
जयं पित्रे प्रदास्यामि रावणाय रणार्जितम् ॥ १७
अद्य निर्वानरामुर्वीं हत्वा रामं सलक्ष्मणम् ।
करिष्ये परमप्रीति" मित्युक्त्वान्तरधीयत ॥ १८
आससादाथ संक्रुद्धो दशग्रीवेण चोदितः ।
तीक्ष्णकार्मुकनाराचैस्तीक्ष्णस्त्विन्द्ररिपू रणे ॥ १९
स ददर्श महावीर्यौ नागौ त्रिशिरसाविव ।
सृजन्ताविषुजालानि वीरौ वानरमध्यगौ ॥ २०
इमौ ताविति संचिन्त्य सज्यं कृत्वाऽथ कार्मुकम् ।
सन्ततानेषुधाराभिः पर्जन्य इव वृष्टिमान् ॥ २१
स तु वैहायसं प्राप्य सरथो रामलक्ष्मणौ ।
अचक्षुर्विषये तिष्ठन् विव्याध निशितैश्शरैः ॥ २२
तौ तस्य शरवेगेन परीतौ रामलक्ष्मणौ ।
धनुषी सशरे कृत्वा दिव्यमस्त्रं प्रचक्रतुः ॥ २३
प्रच्छादयन्तौ गगनं शरजालैर्महाबलौ ।
तमस्त्रैस्सूर्यसङ्काशैर्नैवपस्पृशतुश्शरैः ॥ २४
स हि धूमान्धकारं च चक्रे प्रच्छादयन्नभः ।
दिशश्चान्तर्दधे श्रीमान्नीहारतमसा वृताः ॥ २५
नैव ज्यातलनिर्घोषो न च नेमिखुरस्वनः ।
शुश्रुवे चरतस्तस्य न च रूपं प्रकाशते ॥ २६
घनान्धकारे तिमिरे शरवर्षमिवाद्भुतम् ।
स ववर्ष महाबाहुर्नाराचशरवृष्टिभिः ॥ २७

स रामं सूर्यसङ्काशैश्शरैर्दत्तवरो भृशम् ।
विव्याध समरे क्रुद्धस्सर्वगात्रेषु रावणिः ॥ २८

तौ हन्यमानौ नाराचैर्धाराभिरिव पर्वतौ ।
हेमपुङ्खान्नरव्याघ्रौ तिग्मान्मुमुचतुश्शरान् ॥ २९

अन्तरिक्षे समासाद्य रावणिं कङ्कपत्रिणः ।
निकृत्य पतगा भूमौ पेतुस्ते शोणितोक्षिताः ॥ ३०

अतिमात्रं शरौघेण पीड्यमानौ नरोत्तमौ ।
तानिषून्पततो भल्लैरनेकैर्निचकृन्ततुः ॥ ३१

यतो हि ददृशाते तौ शरान्निपततश्शितान् ।
ततस्तु तौ दाशरथी ससृजातेऽस्त्रमुत्तमम् ॥ ३२

रावणिस्तु दिशस्सर्वा रथेनातिरथः पतन् ।
विव्याध तौ दाशरथी लघ्वस्त्रो निशितैश्शरैः ॥ ३३

तेनातिविद्धौ तौ वीरौ रुक्मपुङ्खैस्सुसंहितैः ।
बभूवतुर्दाशरथी पुष्पिताविव किंशुकौ ॥ ३४

नास्य वेद गतिं कश्चिन्न च रूपं धनुश्शरान् ।
न चान्यद्विदितं किञ्चित्सूर्यस्येवाभ्रसंप्लवे ॥ ३५

तेन विद्धाश्च हरयो निहताश्च गतासवः ।
बभूवुश्शतशस्तत्र पतिता धरणीतले ॥ ३६

लक्ष्मणस्तु सुसंक्रुद्धो भ्रातरं वाक्यमब्रवीत् ।
"ब्राह्ममस्त्रं प्रयोक्ष्यामि वधार्थं सर्वरक्षसाम्" ॥ ३७

तमुवाच ततो रामो लक्ष्मणं शुभलक्षणम् ।
"नैकस्य हेतो रक्षांसि पृथिव्यां हन्तुमर्हसि ॥ ३८

अयुध्यमानं प्रच्छन्नं प्राञ्जलिं शरणागतम् ।
पलायन्तं प्रमत्तं वा न त्वं हन्तुमिहार्हसि ॥ ३९

अस्यैव तु वधे यत्नं करिष्यावो महाबल ।
आदेक्ष्यावो महावेगानस्त्रानाशीविषोपमान् ॥ ४०

तमेनं मायिनं क्षुद्रमन्तर्हितरथं बलात् ।
राक्षसं निहनिष्यन्ति दृष्ट्वा वानरयूथपाः ॥ ४१

यद्येषभूमिं विशते दिवं वा रसातलं वापि नभस्स्थलं वा ।
एवं निगूढोऽपि ममास्त्रदग्धः पतिष्यते भूमितले गतासुः ॥ ४२

इत्येवमुक्त्वा वचनं महात्मा रघुप्रवीरः प्लवगर्षभैर्वृतः ।
वधाय रौद्रस्य नृशंसकर्मणस्तदा महात्मा त्वरितं निरीक्षते ॥ ४३

इति श्रीमद्युद्धकाण्डे अशीतितमस्सर्गः ॥

---

## ॥ एकाशीतितमस्सर्गः ॥

विज्ञाय तु मनस्तस्य राघवस्य महात्मनः ।
सन्निवृत्याहवात्तस्मात्प्रविवेश पुरीं ततः ॥ १

सोऽनुस्मृत्य वधं तेषां राक्षसानां तरस्विनाम् ।
क्रोधताम्रेक्षणश्शूरो निर्जगाम महाद्युतिः ॥ २

स पश्चिमेन द्वारेण निर्ययौ राक्षसैर्वृतः ।
इन्द्रजित्तु महावीर्यः पौलस्त्यो देवकण्टकः ॥ ३

इन्द्रजित्तु ततो दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
रणायाभ्युद्यतौ वीरौ मायां प्रादुष्करोत्तदा ॥ ४

इन्द्रजित्तु रथे स्थाप्य सीतां मायामयीं ततः ।
बलेन महतावृत्य तस्या वधमरोचयत् ॥ ५

मोहनार्थं तु सर्वेषां बुद्धिं कृत्वा स दुर्मतिः ।
हन्तुं सीतां व्यवसितो वानराभिमुखो ययौ ॥ ६

तं दृष्ट्वा त्वभिनिर्यान्तं नगर्याः काननौकसः ।
उत्पेतुरभिसंक्रुद्धाश्शिलाहस्ता युयुत्सवः ॥ ७

हनूमान्पुरतस्तेषां जगाम कपिकुञ्जरः ।
प्रगृह्य सुमहच्छृङ्गं पर्वतस्य दुरासदम् ॥ ८

स ददर्श हतानन्दां सीतामिन्द्रजितो रथे ।
एकवेणीधरां दीनामुपवासकृशाननाम् ॥ ९

परिक्लिष्टैकवसनाममृजां राघवप्रियाम् ।
रजोमलाभ्यामालिप्तैस्सर्वगात्रैर्वरस्त्रियम् ॥ १०

तां निरीक्ष्य मुहूर्तं तु मैथिलीमध्यवस्य तु ।
बभूवाचिरदृष्टा हि तेन सा जनकात्मजा ॥ ११

तां दीनां मलदिग्धाङ्गीं रथस्थां दृश्य मैथिलीम् ।
बाष्पपर्याकुलमुखो हनूमान्व्यथितोऽभवत् ॥ १२

अब्रवीत्तां तु शोकार्तां निरानन्दां तपस्विनीम् ।
सीतां रथे स्थितां दृष्ट्वा राक्षसेन्द्रसुताश्रिताम् । १३

'किं समर्थितमस्ये'ति चिन्तयन् समहाकपिः ।
सह तैर्वानरश्रेष्ठैरभ्यधावत रावणिम् ॥ १४

तद्वानरबलं दृष्ट्वा रावणिः क्रोधमूर्छितः ।
कृत्वा विकोशं निस्त्रिंशं मूर्ध्निसीतां परामृशत् ॥ १५

तां स्त्रियं पश्यतां तेषां ताडयामास रावणिः ।
क्रोशन्तीं रामरामेति मायया योजितां रथे ॥ १६

गृहीतमूर्धजां दृष्ट्वा हनूमान् दैन्यमागतः ।
शोकजं वारि नेत्राभ्यामुत्सृजन्मारुतात्मजः ॥ १७

तां दृष्ट्वा चारुसर्वाङ्गीं रामस्य महिषीं प्रियाम् ।
अब्रवीत् परुषं वाक्यं क्रोधाद्रक्षोधिपात्मजम् ॥ १८

" दुरात्म ! आत्मनाशाय केशपक्षे परामृशः ।
ब्रह्मर्षीणां कुले जातो राक्षसीं योनिमाश्रितः ॥ १९

धिक्त्वां पापसमाचारं यस्य ते मतिरीदृशी ।
नृशंसानार्य ! दुर्वृत्त ! क्षुद्र ! पापपराक्रम ॥ २०

अनार्यस्येदृशं कर्म घृणा ते नास्ति निर्घृण ।
च्युता गृहाच्च राज्याच्च रामहस्ताच्च मैथिली ॥ २१

किं तवैषाऽपराद्धा हि यदेनां हन्तुमिच्छसि ।
सीतां च हत्वा न चिरं जीविष्यसि कथंचन ॥ २२

वधार्हः कर्मणानेन मम हस्तगतोह्यसि ।
ये च स्त्रीघातिनां लोका लोकवध्येषु कुत्सिताः ॥ २३

इह जीवितमुत्सृज्य प्रेत्यतान्प्रतिपत्स्यसे ।"
इति ब्रुवाणो हनुमान् सायुधैर्हरिभिर्वृतः ॥ २४

अभ्यधावत संक्रुद्धो राक्षसेन्द्रसुतं प्रति ।
आपतन्तं महावीर्यं तदनीकं वनौकसाम् ॥ २५

रक्षसां भीमवेगानामनीकं तु न्यवारयत् ।
स तां बाणसहस्रेण विक्षोभ्य हरिवाहिनीम् ॥ २६

हरिश्रेष्ठं हनूमन्तमिन्द्रजित्प्रत्युवाच ह ।
"सुग्रीवस्त्वं च रामश्च यन्निमित्तमिहागताः ॥ २७

तां हनिष्यामि वैदेहीमद्यैव तव पश्यतः ।
इमां हत्वा ततो रामं लक्ष्मणं त्वां च वानर ! ॥ २८
सुग्रीवं च वधिष्यामि तं चानार्यं विभीषणम् ।
न हन्तव्याः स्त्रियश्चेति यद्ब्रवीषि प्लवङ्गम ! ॥ २९
पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् । ”
तमेवमुक्त्वा रुदतीं सीतां मायामयीं तदा ॥ ३०
शितधारेण खड्गेन निजघानेन्द्रजित्स्वयम् ।
यज्ञोपवीतमार्गेण भिन्ना तेन तपस्विनी ॥ ३१
सा पृथिव्यां पृथुश्रोणि पपात प्रियदर्शना ।
तामिन्द्रजित्स्वयं हत्वा हनूमन्तमुवाच ह ॥ ३२
“ मया रामस्य पश्येमां कोपेन च निषूदिताम् ।
एषा विशस्ता वैदेही विफलो वः परिश्रमः ॥ ” ३३
ततः खड्गेन महता हत्वा तामिन्द्रजित्स्वयम् ।
हृष्टस्सरथमास्थाय विननाद महास्वनम् ॥ ३४
वानरास्सुश्रुवुश्शब्दमदूरे प्रत्यवस्थिताः ।
व्यादितास्यस्य नदतस्तद्दुर्गं संश्रितस्य च ॥ ३५
तदा तु सीतां विनिहत्य दुर्मतिः प्रहृष्टचेतास्स बभूव रावणिः ।
तं हृष्टरूपं समुदीक्ष्य वानरा विषण्णरूपास्सहसा प्रदुद्रुवुः ॥ ३६

इति श्रीमद्युद्धकाण्डे एकाशीतितमस्सर्गः ॥

---

## ॥ द्व्यशीतितमस्सर्गः ॥

श्रुत्वा तु भीमनिर्ह्रादं शक्राशनिसमस्वनम् ।
वीक्षमाणा दिशस्सर्वा दुद्रुवुर्वानरर्षभाः ॥ १

तानुवाच ततस्सर्वान् हनूमान्मारुतात्मजः ।
विषण्णवदनान् दीनांस्त्रस्तान्विद्रवतः पृथक् ॥ २

" कस्माद्विषण्णवदना विद्रवध्वे प्लवङ्गमाः ।
त्यक्तयुद्धसमुत्साहश्शूरत्वं क्व नु वो गतम् ॥ ३

पृष्ठतोऽनुव्रजध्वं माममग्रतो यान्तमाहवे ।
शूरैरभिजनोपेतैरयुक्तं हि निवर्तितुम् ॥ " ४

एवमुक्तास्सुसंहृष्टा वायुपुत्रेण वानराः ।
शैलशृङ्गाण्यगांश्चैव जगृहुर्हृष्टमानसाः ॥ ५

अभिपेतुश्च गर्जन्तो राक्षसान्वानरर्षभाः ।
परिवार्य हनूमन्तमन्वयुश्च महाहवे ॥ ६

स तैर्वानरमुख्यैश्च हनूमान् सर्वतो वृतः ।
हुताशन इवार्चिष्मानदहच्छत्रुवाहिनीम् ॥ ७

स राक्षसानां कदनं चकार सुमहाकपिः ।
वृतो वानरसैन्येन कालान्तकयमोपमः ॥ ८

स तु कोपेन चाविष्टः शोकेन च महाकपिः ।
हनूमान्रावणिरथे पातयन्महतीं शिलाम् ॥ ९

तामापतन्तीं दृष्ट्वैव रथस्सारथिना तदा ।
विधेयाश्वसमायुक्तस्सुदूरमपवाहितः ॥ १०

तमिन्द्रजितमप्राप्य रथस्थं सहसारथम् ।
विवेश धरणीं भित्त्वा सा शिला व्यर्थमुद्यता ॥ ११

पातितायां शिलायां तु रक्षसां व्यथिता चमूः ।
निपतन्त्या च शिलया राक्षसा मथिता भृशम् ॥ १२

तमभ्यधावन् शतशो नदन्तः काननौकसः ।
ते द्रुमांश्च महावीर्या गिरिशृङ्गाणि चोद्यताः ॥ १३

क्षिपन्तीन्द्रजितस्संख्ये वानरा भीमविक्रमाः ।
वृक्षशैलमहावर्षं विसृजन्तः प्लवङ्गमाः ॥ १४

शत्रूणां कदनं चक्रुर्नेदुश्च विविधैस्स्वनैः ।
वानरैस्तैर्महावीर्यैर्घोररूपा निशाचराः ॥ १५

वीर्यादभिहता वृक्षैर्व्यवेष्टन्त रणाजिरे ।
स्वसैन्यमभिवीक्ष्याथ वानरार्दितमिन्द्रजित् ॥ १६

प्रगृहीतायुधः क्रुद्धः परानभिमुखो ययौ ।
स शरौघानवसृजन् स्वसैन्येनाभिसंवृतः ॥ १७

जघान कपिशार्दूलान् सुबहून्दृष्टविक्रमः ।
शूलैरशनिभिः खड्गैः पट्टसैः कूटमुद्गरैः ॥ १८

ते चाप्यनुचरास्तस्य वानरान् जघ्नुरोजसा ।
सस्कन्धविटपैस्सालैश्शिलाभिश्च महाबलः ॥ १९

हनुमान्कदनं चक्रे रक्षसां भीमकर्मणाम् ।
स निवार्य परानीकमब्रवीत्तान्वनौकसः ॥ २०

हनुमान् "सन्निवर्तध्वं न नस्साध्यमिदं बलम् ।
त्यक्त्वा प्राणान् विवेष्टन्तो रामप्रियचिकीर्षवः ॥ २१

यन्निमित्तं हि युध्यामो हता सा जनकात्मजा ।
इममर्थं हि विज्ञाप्य रामं सुग्रीवमेव च ॥ २२

तौ यत्प्रतिविधास्येते तत्करिष्यामहे वयम् ।"
इत्युक्त्वा वानरश्रेष्ठो वारयन् सर्ववानरान् ॥ २३

शनैश्शनैरसंत्रस्तस्सबलस्सन्यवर्तत ।
ततः प्रेक्ष्य हनूमन्तं व्रजन्तं यत्र राघवः ॥ २४

स होतुकामो दुष्टात्मा गतश्चैत्यनिकुम्भिलाम् ।
निकुम्भिलामधिष्ठाय पावकं जुहुवेन्द्रजित् ॥ २५

यज्ञभूम्यां तु विधिवत्पावकस्तेन रक्षसा ।
हूयमानः प्रजज्वाल मांसशोणितभुक्तदा ॥ २६

सोऽर्चिःपिनद्धो ददृशे होमशोणिततर्पितः ।
सन्ध्यागत इवादित्यस्सुतीव्रोऽग्निस्समुत्थितः ॥ २७

अथेन्द्रजिद्राक्षसभूतये तु जुहाव हव्यं विधिना विधानवित् ।
दृष्ट्वा व्यतिष्ठन्त च राक्षसास्ते महासमूहेषु नयानयज्ञाः ॥ २८

इति श्रीमद्युद्धकाण्डे द्व्यशीतितमस्सर्गः ॥

---

## ॥ त्र्यशीतितमस्सर्गः ॥

राघवश्चापि विपुलं तं राक्षसवनौकसाम् ।
श्रुत्वा संग्रामनिर्घोषं जाम्बवन्तमुवाच ह ॥ १

"सौम्य! नूनं हनुमता क्रियते कर्म दुष्करम् ।
श्रूयते हि यथा भीमस्सुमहानायुधस्वनः ॥ २

तद्गच्छ कुरु साहाय्यं स्वबलेनाभिसंवृतः ।
क्षिप्रमृक्षपते! तस्य कपिश्रेष्ठस्य युध्यतः ॥" ३

ऋक्षराजस्तथोक्तस्तु स्वेनानीकेन संवृतः ।
आगच्छत्पश्चिमद्वारं हनूमान् यत्र वानरः ॥ ४

अथायान्तं हनूमन्तं ददर्शर्क्षपतिः पथि ।
वानरैः कृतसंग्रामैश्श्वसद्भिरभिसंवृतम् ॥ ५

दृष्ट्वा पथि हनूमांश्च तद्रक्षबलमुद्यतम् ।
नीलमेघनिभं भीमं सन्निवार्य न्यवर्तत ॥ ६

स तेन हरिसैन्येन सन्निकर्षं महायशाः ।
शीघ्रमागम्य रामाय दुःखिता वाक्यमब्रवीत् ॥ ७

" समरे युध्यमानानामस्माकं प्रेक्षतां पुरः ।
जघान रुदतीं सीतामिन्द्रजिद्रावणात्मजः ॥ ८

उद्भ्रान्तचित्तस्तां दृष्ट्वा विषण्णोऽहमरिन्दम ।
तदहं भवतो वृत्तं विज्ञापयितुमागतः ॥" ९

तस्य तद्वचनं श्रुत्वा राघवश्शोकमूर्छितः ।
निपपात तदा भूमौ छिन्नमूल इव द्रुमः ॥ १०

तं भूमौ देवसङ्काशं पतितं प्रेक्ष्य राघवम् ।
अभिपेतुस्समुत्पत्य सर्वतः कपिसत्तमाः ॥ ११

असिञ्चन् सलिलैश्चैनं पद्मोत्पलसुगन्धिभिः ।
प्रदहन्तमनासाद्यं सहसाग्निमिवोच्छ्रितम् ॥ १२

तं लक्ष्मणोऽथ बाहुभ्यां परिष्वज्य सुदुःखितः ।
उवाच राममस्वस्थं वाक्यं हेत्वर्थसंहितम् ॥ १३

" शुभे वर्त्मनि तिष्ठन्तं त्वामार्य ! विजितेन्द्रियम् ।
अनर्थेभ्यो न शक्नोति त्रातुं धर्मो निरर्थकः ॥ १४

भूतानां स्थावराणां च जङ्गमानां च दर्शनम् ।
यथास्ति न तथा धर्मस्तेन नास्तीति मे मतिः ॥ १५

यथैव स्थावरं व्यक्तं जङ्गमं च तथाविधम् ।
नायमर्थस्तथा युक्तस्त्वद्विधो न विपद्यते ॥ १६

यद्यधर्मो भवेद्भूतो रावणो नरकं व्रजेत् ।
भवांश्च धर्मयुक्तो वै नैव व्यसनमाप्नुयात् ॥ १७

तस्य च व्यसनाभावाद्व्यसनं च गते त्वयि ।
धर्मो भवत्यधर्मश्च परस्परविरोधिनौ ॥ १८

धर्मेणोपलभेद्धर्ममधर्मं चाप्यधर्मतः ।
यद्यधर्मेण युज्येयुर्येष्वधर्मः प्रतिष्ठितः ॥ १९

यदि धर्मेण युज्येरन्नाधर्मरुचयो जनाः ।
धर्मेण चरतां धर्मस्तथा चैषां फलं भवेत् ॥ २०

यस्मादर्था विवर्धन्ते येष्वधर्मः प्रतिष्ठितः ।
क्लिश्यन्ते धर्मशीलाश्च तस्मादेतौ निरर्थकौ ॥ २१

वध्यन्ते पापकर्माणो यद्यधर्मेण राघव !
वधकर्महतो धर्मस्स हतः कं वधिष्यति ॥ २२

अथवा विहिते नायं हन्यते हन्ति वा परम् ।
विधिरालिप्यते तेन न स पापेन कर्मणा ॥ २३

अदृष्टप्रतिकारेण त्वव्यक्तेनासता सता ।
कथं शक्यं परं प्राप्तुं धर्मेणारिविकर्शन ! ॥ २४

यदि सत्स्यात्सतां मुख्यं नासत्स्यात्तव किंचन ।
त्वया यदीदृशं प्राप्तं तस्मात्सन्नोपपद्यते ॥ २५

अथवा दुर्बलः क्लीबो बलं धर्मोऽनुवर्तते ।
दुर्बलो हृतमर्यादो न सेव्य इति मे मतिः ॥ २६

बलस्य यदि चेद्धर्मो गुणभूतः पराक्रमे ।
धर्ममुत्सृज्य वर्तस्व यथा धर्मे तथा बले ॥ २७

अथ चेत्सत्यवचनं धर्मः किल परन्तप ! ।
अनृतस्त्वय्यकरुणः किं न बद्धस्त्वया पिता ॥ २८

यदि धर्मो भवेद्भूतो ह्यधर्मो वा परन्तप !
न स्म हत्वा मुनिं वज्री कुर्यादिज्यां शतक्रतुः ॥ २९

अधर्मसंश्रितो धर्मो विनाशयति राघव । ”
सर्वमेतद्यथाकामं काकुत्स्थ ! कुरुते नरः ॥ ३०

मम चेदं मतं तात ! धर्मोऽयमिति राघव ! ।
धर्ममूलं त्वया छिन्नं राज्यमुत्सृजता तदा ॥ ३१

अर्थेभ्यो हि विवृद्धेभ्यस्संवृत्तेभ्यस्ततस्ततः ।
क्रियास्सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ३२

अर्थेन हि वियुक्तस्य पुरुषस्याल्पतेजसः ।
व्युच्छिद्यन्ते क्रियास्सर्वा ग्रीष्मे कुसरितो यथा ॥ ३३

सोऽयमर्थं परित्यज्य सुखकामस्सुखैधितः ।
पापमारभते कर्तुं ततो दोषः प्रवर्तते ॥ ३४

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थास्स पुमान्लोके यस्यार्थास्स च पण्डितः ॥ ३५

यस्यार्थास्स च विक्रान्तो यस्यार्थास्स च बुद्धिमान् ।
यस्यार्थास्स महाभागो यस्यार्थास्स महागुणः ॥ ३६

अर्थस्यैते परित्यागे दोषाः प्रव्याहृथा मया ।
राज्यमुत्सृजता वीर ! येन बुद्धिस्त्वया कृता ॥ ३७

यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थश्शक्यो विचिन्वता ॥ ३८

हर्षः कामश्च दर्पश्च धर्मः क्रोधश्शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ! ॥ ३९

येषां नश्यत्ययं लोकश्चरतां धर्मचारिणाम् ।
तेऽर्थास्त्वयि न दृश्यन्ते दुर्दिनेषु यथा ग्रहाः ॥ ४०

त्वयि प्रव्रजिते वीर ! गुरोश्च वचनं स्थिते ।
रक्षसापहृता भार्या प्राणैः प्रियतरा तव ॥ ४१

तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् ।
कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ! ॥ ४२

उत्तिष्ठ नरशार्दूल ! दीर्घबाहो ! दृढव्रत ! ॥
किमात्मानं महात्मानमात्मानं नावबुध्यसे ॥ ४३

अयमनघ तवोदितः प्रियार्थं जनकसुतानिधनं निरीक्ष्य रुष्टः ।
सहयगजरथां सराक्षसेन्द्रां भृशमिषुभिर्विनिपातयामि लङ्काम् ॥" ४४

इति श्रीमद्युद्धकाण्डे त्र्यशीतितमसर्गः ॥

---

## ॥ चतुरशीतितमस्सर्गः ॥

राममाश्वासयाने तु लक्ष्मणे भ्रातृवत्सले ।
निक्षिप्य गुल्मान् स्वस्थाने तत्रागच्छद्विभीषणः ॥ १

नानाप्रहरणैर्वीरैश्चतुर्भिस्सचिवैर्वृतः ।
नीलाञ्जनचयाकारैर्मातङ्गैरिव यूथपः ॥ २

सोऽभिगम्य महात्मानं राघवं शोकलालसम् ।
वानरांश्चैव ददृशे बाष्पपर्याकुलेक्षणान् ॥ ३

राघवं च महात्मानमिक्ष्वाकुकुलनन्दनम् ।
ददर्श मोहमापन्नं लक्ष्मणस्याङ्कमाश्रितम् ॥ ४

व्रीलितं शोकसन्तप्तं दृष्ट्वा रामं विभीषणः ।
अन्तर्दुःखेन दीनात्मा 'किमेत' दिति सोऽब्रवीत् ॥ ५

विभीषणमुखं दृष्ट्वा सुग्रीवं तांश्च वानरान् ।
लक्ष्मणोवाच मन्दार्थमिदं बाष्पपरिप्लुतः ॥ ६

"हतामिन्द्रजिता सीतामिह श्रुत्वैव राघवः ।
हनुमद्वचनात्सौम्य ! ततो मोहमुपागतः ॥" ७

कथयन्तं तु सौमित्रिं संनिवार्य विभीषणः ।
(पुष्कलार्थमिदं वाक्यं विसंज्ञं राममब्रवीत् ॥) ८

"मनुजेन्द्रार्तरूपेण यदुक्तं तु हनूमता ।
तदयुक्तमहं मन्ये सागरस्येव शोषणम् ॥ ९

अभिप्रायं तु जानामि रावणस्य दुरात्मनः ।
सीतां प्रति महाबाहो ! न च घातं करिष्यति ॥ १०

याच्यमानस्सुबहुशो मया हितचिकीर्षुणा ।
'वैदेहीमुत्सृज' स्वेति न च तत्कृतवान्वचः ॥ ११

नैव साम्ना न दानेन न भेदेन कुतो युधा ।
सा द्रष्टुमपि शक्येत नैव चान्येन केनचित् ॥ १२

वानरान्मोहयित्वा तु प्रतियातस्स राक्षसः ।
चैत्यं निकुम्भिलां नाम यत्र होमं करिष्यति ॥ १३

हुतवानुपयातो हि देवैरपि सवासवैः ।
दुराधर्षो भवत्येव संग्रामे रावणात्मजः ॥ १४

तेन मोहयता नूनमेषा माया प्रयोजिता ।
विघ्नमन्विच्छता तत्र वानराणां पराक्रमे ॥ १५

ससैन्यास्तत्र गच्छामो यावत्तन्न समाप्यते ।
त्यजेमं नरशार्दूल! मिथ्या सन्तापमागतम् ॥ १६

सीदते हि बलं सर्वं दृष्ट्वा त्वां शोककर्शितम् ।
इह त्वं स्वस्थहृदयस्तिष्ठ सत्त्वसमुच्छ्रितः ॥ १७

लक्ष्मणं प्रेषयास्माभिस्सहसैन्यानुकर्षिभिः ।
एष तं नरशार्दूलो रावणिं निशितैश्शरैः ॥ १८

त्याजयिष्यति तत्कर्म ततो वध्यो भविष्यति ।
तस्यैते निशितास्तीक्ष्णाः पत्रिपत्राङ्गवाजिनः ॥ १९

पतत्रिण इवासौम्याश्शराः पास्यन्ति शोणितम् ।
तं सन्दिश महाबाहो! लक्ष्मणं शुभलक्षणम् ॥ २०

राक्षसस्य विनाशाय वज्रं वज्रधरो यथा ॥

मनुजवर! न कालविप्रकर्षो रिपुनिधनं प्रति यत्क्षमोऽद्य कर्तुम् ।
त्वमतिसृज रिपोर्वधाय वाणीममररिपोर्मथने यथा महेन्द्रः ॥ २१

समाप्तकर्मा हि स राक्षसाधिपो भवत्यदृश्यस्समरे सुरासुरैः ।
युयुत्सता तेन समाप्तकर्मणा भवेत्सुराणामपि संशयो महान् ॥ २२

इति श्रीमद्युद्धकाण्डे चतुरशीतितमस्सर्गः ॥

---

## ॥ पञ्चाशीतितमस्सर्गः ॥

तस्य तद्वचनं श्रुत्वा राघवश्शोककर्शितः ।
नोपधारयते व्यक्तं यदुक्तं तेन रक्षसा ॥ १

ततो धैर्यमवष्टभ्य रामः परपुरञ्जयः ।
विभीषणमुपासीनमुवाच कपिसन्निधौ ॥ २

"नैर्ऋताधिपते! वाक्यं यदुक्तं तं विभीषण!
भूयस्तच्छ्रोतुमिच्छामि ब्रूहि यत्ते विवक्षितम् ॥" ३

राघवस्य वचश्श्रुत्वा वाक्यं वाक्यविशारदः ।
यत्तत्पुनरिदं वाक्यं बभाषे स विभीषणः ॥ ४

"यथाऽऽज्ञप्तं महाबाहो! त्वया गुल्मनिवेशनम् ।
तत्तथाऽनुष्ठितं वीर! त्वद्वाक्यसमनन्तरम् ॥ ५

तान्यनीकानि सर्वाणि विभक्तानि समन्ततः ।
विन्यस्तयूथपाश्चैव यथान्यायं विभागशः ॥ ६

भूयस्तु मम विज्ञाप्यं तच्छृणुष्व महायशः ।
त्वय्यकारणसन्तप्ते सन्तप्तहृदया वयम् ॥ ७

त्यज राज! त्विमं शोकं मिथ्यासन्तापमागतम् ।
तदियं त्यज्यतां चिन्ता शत्रुहर्षविवर्धनी ॥ ८

उद्यमः क्रियतां वीर! हर्षस्समुपसेव्यताम् ।
प्राप्तव्या यदि ते सीता हन्तव्याश्च निशाचराः ॥ ९

रघुनन्दन! वक्ष्यामि श्रूयतां मे हितं वचः ।
साध्वयं यातु सौमित्रिर्बलेन महता वृतः ॥ १०

निकुम्भिलायां संप्राप्य हन्तुं रावणिमाहवे ।
धनुर्मण्डलनिर्मुक्तैराशीविषविषोपमैः ॥ ११

शरैर्हन्तुं महेष्वासो रावणिं समितिञ्जयः ।
तेन वीरेण तपसा वरदानात्स्वयम्भुवः ॥ १२

अस्त्रं ब्रह्मशिरः प्राप्तं कामगाश्च तुरङ्गमाः ।
स एष सहसैन्येन प्राप्तः किल निकुम्भिलाम् ॥ १३

यद्यत्तिष्ठेत्कृतं कर्म हतान् सर्वांश्च विद्धि नः ।
निकुम्भिलामसम्प्राप्तमहुताग्निं च यो रिपुः ॥ १४

त्वामाततायिनं हन्यादिन्द्रशत्रोस्सते वधः ।
वरो दत्तो महाबाहो! सर्वलोकेश्वरेण वै ॥ १५

इत्येवं विहितो राजन् वधस्तस्यैष धीमतः ।
वधायेन्द्रजितो राम! सन्दिशस्व महाबल ॥ १६

हते तस्मिन् हतं विद्धि रावणं ससुहृज्जनम् ।"
विभीषणवचश्श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १७

"जानामि तस्य रौद्रस्य मायां सत्यपराक्रम ।
स हि ब्रह्मास्त्रवित्प्राज्ञो महामायो महाबलः ॥ १८

करोत्यसंज्ञान् संग्रामे देवान् सवरुणानपि ।
तस्यान्तरिक्षे चरतो रथस्थस्य महायशः ॥ १९

न गतिर्ज्ञायते तस्य सूर्यस्येवाभ्रसंप्लवे ।"
राघवस्तु रिपोर्ज्ञात्वा माया वीर्यं दुरात्मनः ॥ २०

लक्ष्मणं कीर्तिसम्पन्नमिदं वचनमब्रवीत् ।
"यद्वानरेन्द्रस्य बलं तेन सर्वेण संवृतः ॥ २१

हनूमत्प्रमुखैश्चैव यूथपैस्सहलक्ष्मण! ।
जाम्बवेनर्क्षपतिना सहसैन्येन संवृतः ॥ २२

जहि तं राक्षससुतं मायाबलविशारदम् ।
अयं त्वां सचिवैस्सार्धं महात्मा रजनीचरः ॥ २३

अभिज्ञस्तस्य देशस्य पृष्ठतोऽनुगमिष्यति ।"
राघवस्य वचश्श्रुत्वा लक्ष्मणस्सविभीषणः ॥ २४

जग्राह कार्मुकश्रेष्ठमत्यद्भुतपराक्रमः ।
सन्नद्धः कवची खड्गी सशरो हेमचापधृत् ॥ २५

रामपादावुपस्पृश्य हृष्टस्सौमित्रिरब्रवीत् ।
"अद्य मत्कार्मुकोन्मुक्ताश्शरा निर्भिद्य रावणिम् ॥ २६

लङ्कामभिपतिष्यन्ति हंसाः पुष्करिणीमिव ।
अद्यैव तस्य रौद्रस्य शरीरं मामकाश्शराः ॥ २७

विधमिष्यन्ति भित्त्वा तं मम चापगुणच्युताः ।"
स एवमुक्त्वा द्युतिमान् वचनं भ्रातुरग्रतः ॥ २८

स रावणिवधाकाङ्क्षी लक्ष्मणस्त्वरितो ययौ ।
सोऽभिवाद्य गुरोः पादौ कृत्वा चापि प्रदक्षिणम् ॥ २९

निकुम्भिलामभिययौ चैत्यं रावणिपालितम् ।
विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ ३०

कृतस्वस्त्ययनो भ्रात्रा लक्ष्मणस्त्वरितो ययौ ।
वानराणां सहस्रैस्तु हनुमान्बहुभिर्वृतः ॥ ३१

विभीषणश्च सामात्यस्तदा लक्ष्मणमन्वगात् ।
महता हरिसैन्येन सवेगमभिसंवृतः ॥ ३२

ऋक्षराजबलं चैव ददर्श पथि विष्ठितम् ।
स गत्वा दूरमध्वानं सौमित्रिर्मित्रनन्दनः ॥ ३३

राक्षसेन्द्रबलं दूरादपश्यद्व्यूहमास्थितम् ।
स तं प्राप्य धनुष्पाणिर्मायायोगमरिन्दमः ॥ ३४

तस्थौ ब्रह्मविधानेन विजेतुं रघुनन्दनः ।
विभीषणेन सहितो राजपुत्रः प्रतापवान् ॥ ३५

अङ्गदेन च वीरेण तथाऽनिलसुतेन च ॥

विविधममलशस्त्रभास्वरं तद्ध्वजगहनं विपुलं महारथैश्च ।
प्रतिभयतमप्रमेयवेगं तिमिरमिव द्विषतां बलं विवेश ॥ ३६

इति श्रीमद्युद्धकाण्डे पञ्चाशीतितमस्सर्गः ॥

---

## ॥ षडशीतितमस्सर्गः ॥

अथ तस्यामवस्थायां लक्ष्मणं रावणानुजः ।
परेषामहितं वाक्यमर्थसाधकमब्रवीत् ॥ १

"यदेतद्राक्षसानीकं मेघश्यामं विलोक्यते ।
एतदायोध्यतां शीघ्रं कपिभिः पादपायुधैः ॥ २

अस्यानीकस्य महतो भेदने यत लक्ष्मण ! ।
राक्षसेन्द्रसुतोऽप्यत्र भिन्ने दृश्यो भविष्यति ॥ ३

सत्वमिन्द्राशनिप्रख्यैश्शरैरवकिरन्परान् ।
अभिद्रवाशु यावद्वै नैतत्कर्म समाप्यते ॥ ४

जहि वीर ! दुरात्मानं मायापरमधार्मिकम् ।
रावणिं क्रूरकर्माणं सर्वलोकभयावहम् ॥" ५

विभीषणवचश्श्रुत्वा लक्ष्मणश्शुभलक्षणः ।
ववर्ष शरवर्षाणि राक्षसेन्द्रसुतं प्रति ॥ ६

ऋक्षाश्शाखामृगाश्चैव द्रुमाद्रिनखयोधिनः ।
अभ्यधावन्त सहितास्तदानीकमवस्थितम् ॥ ७

राक्षसाश्च शितैर्बाणै रसिभिश्शक्तितोमरैः ।
उद्यतैस्समवर्तन्त कपिसैन्यजिघांसवः ॥ ८

स संप्रहारस्तुमुलस्संजज्ञे कपिरक्षसाम् ।
शब्देन महता लङ्कां नादयन्वै समन्ततः ॥ ९

शस्त्रैश्च बहुधाकारैश्शितैर्बाणैश्च पादपैः ।
उद्यतैर्गिरिश्शृङ्गैश्च घोरैराकाशमावृतम् ॥ १०

ते राक्षसा वानरेषु विकृताननबाहवः ।
निवेशयन्तश्शस्त्राणि चक्रुस्ते सुमहद्भयम् ॥ ११

तथैव सकलैर्वृक्षैर्गिरिश्शृङ्गैश्च वानराः ।
अभिजघ्नुर्निजघ्नुश्च समरे राक्षसर्षभान् ॥ १२

ऋक्षवानरमुख्यैश्च महाकायैर्महाबलैः ।
रक्षसां वध्यमानानां महद्भयमजायत ॥ १३

स्वमनीकं विषण्णं तु श्रुत्वा शत्रुभिरर्दितम् ।
उदतिष्ठत दुर्धर्षस्तत्कर्मण्यननुष्ठिते ॥ १४

वृक्षान्धकारान्निर्गत्य जातक्रोधस्सरावणिः ।
आरुरोह रथं सज्जं पूर्वयुक्तं सराक्षसः ॥ १५

स भीमकार्मुकधरः कालमेघसमप्रभः ।
रक्तास्यनयनः क्रुद्धो बभौ मृत्युरिवान्तकः ॥ १६

दृष्ट्वैव तु रथस्थं तं पर्यवर्तत तद्बलम् ।
रक्षसां भीमवेगानां लक्ष्मणेन युयुत्सताम् ॥ १७

तस्मिन्काले तु हनुमानुद्यम्य सुदुरासदम् ।
धरणीधरसङ्काशो महावृक्षमरिन्दमः ॥ १८

स राक्षसानां तत्सैन्यं कालाग्निरिव निर्दहन् ।
चकार बहुभिर्वृक्षैर्निस्संज्ञं युधि वानरः ॥ १९

विध्वंसयन्तं तरसा दृष्ट्वैव पवनात्मजम् ।
राक्षसानां सहस्राणि हनूमन्तमवाकिरन् ॥ २०

शितशूलधराश्शूलै रसिभिश्चासिपाणयः ।
शक्तिभिश्शक्तिहस्ताश्च पट्टसैः पट्टसायुधाः ॥ २१

परिघैश्च गदाभिश्च चक्रैश्च शुभदर्शनैः ।
शतशश्च शतघ्नीभिरायसैरपि मुद्गरैः ॥ २२

घोरैः परश्वधैश्चैव भिण्डिवालैश्च राक्षसाः ।
मुष्टिभिर्वज्रकल्पैश्च तलैरशनिसन्निभैः ॥ २३

अभिजघ्नुस्समासाद्य समन्तात्पर्वतोपमम् ।
तेषामपि च संक्रुद्धश्चकार कदनं महत् ॥ २४

स ददर्श कपिश्रेष्ठमचलोपममिन्द्रजित् ।
सूदयन्तममित्रघ्नममित्रान् पवनात्मजम् ॥ २५

स सारथिमुवाचेदं "याहि यत्रैष वानरः ।
क्षयमेष हि नः कुर्याद्राक्षसानामुपेक्षितः ॥" २६

इत्युक्तस्सारथिस्तेन ययौ यत्र स मारुतिः ।
वहन्परमदुर्दर्षं स्थितमिन्द्रजितं रथे ॥ २७

सोऽभ्युपेत्य शरान्खड्गान् पट्टसांश्च परश्वथान् ।
अभ्यवर्षत दुर्धर्षः कपिमूर्ध्नि सराक्षसः ॥ २८

तानि शस्त्राणि घोराणि प्रतिगृह्य समारुतिः ।
रोषेण महताविष्टो वाक्यं चेदमुवाच ह ॥ २९

"युध्यस्व यदि शूरोऽसि रावणात्मज ! दुर्मते ! ।
वायुपुत्रं समासाद्य जीवन्न प्रतियास्यसि ॥ ३०

बाहुभ्यां प्रतियुध्यस्व यदि मे द्वन्द्वमाहवे ।
वेगं सहस्व दुर्बुद्धे ! ततस्त्वं रक्षसां वरः ॥ ३१

हनुमन्तं जिघांसन्तं समुद्यतशरासनम् ।
रावणात्मजमाचष्टे लक्ष्मणाय विभीषणः ॥ ३२

"यस्स वासवनिर्जेता रावणस्यात्मसम्भवः ।
स एष रथमास्थाय हनुमन्तं जिघांसति ॥ ३३

तमप्रतिमसंस्थानैश्शरै श्शत्रुविदारणैः ।
जीवितान्तकरैर्घोरैस्सौमित्रे ! रावणिं जहि ॥" ३४

इत्येवमुक्तस्तु तदा महात्मा विभीषणेनारिविभीषणेन ।
ददर्श तं पर्वतसन्निकाशं रथे स्थितं भीमबलं नदन्तम् ॥ ३५

इति श्रीमद्युद्धकाण्डे षडशीतितमस्सर्गः ॥

---

## ॥ सप्ताशीतितमस्सर्गः ॥

एवमुक्त्वा तु सौमित्रिं जातहर्षो विभीषणः ।
धनुष्पाणिनमादाय त्वरमाणो जगाम सः ॥ १

अविदूरं ततो गत्वा प्रविश्य च महद्वनम् ।
दर्शयामास तत्कर्म लक्ष्मणाय विभीषणः ॥ २

नीलजीमूतसङ्काशं न्यग्रोधं भीमदर्शनम् ।
तेजस्वी रावणभ्राता लक्ष्मणाय न्यवेदयत् ॥ ३

"इहोपहारं भूतानां बलवान्रावणात्मजः ।
उपहृत्य ततः पश्चात्संग्राममभिवर्तते ॥ ४

अदृश्यस्सर्वभूतानां ततो भवति राक्षसः ।
निहन्ति समरे शत्रून् बध्नाति च शरोत्तमैः ॥ ५

तमप्रविष्टं न्यग्रोधं बलिनं रावणात्मजम् ।
विध्वंसय शरैस्तीक्ष्णैस्सरथं साश्वसारथिम् ॥" ६

तथेत्युक्त्वा महातेजास्सौमित्रिर्मित्रनन्दनः ।
बभूवावस्थितस्तत्र चित्रं विष्फारयन् धनुः ॥ ७

स रथेनाग्निवर्णेन बलवान्रावणात्मजः ।
इन्द्रजित्कवची धन्वी सध्वजः प्रत्यदृश्यत ॥ ८

तमुवाच महातेजाः पौलस्त्यमपराजितम् ।
"समाह्वये त्वां समरे सम्यग्युद्धं प्रयच्छ मे ॥" ९

एवमुक्तो महातेजा मनस्वी रावणात्मजः ।
अब्रवीत् परुषं वाक्यं तत्र दृष्ट्वा विभीषणम् ॥ १०

"इह त्वं जात संवृद्धस्साक्षाद्भ्राता पितुर्मम ।
कथं द्रुह्यसि पुत्रस्य पितृव्यो मम राक्षस ! ॥ ११

न ज्ञातित्वं न सौहार्दं न जातिस्तव दुर्मते ! ।
प्रमाणं न च सौन्दर्यं न धर्मो धर्मदूषण ! ॥ १२

शोच्यस्त्वमसि दुर्बुद्धे ! निन्दनीयश्च साधुभिः ।
यस्त्वं स्वजनमुत्सृज्य परभृत्यत्वमागतः ॥ १३

नैतच्छिथिलया बुद्ध्या त्वं वेत्सि महदन्तरम् ।
क्व च स्वजनसंवादः क्व च नीचपराश्रयः ॥ १४

गुणवान्वा परजनस्स्वजनो निर्गुणोऽपि वा ।
निर्गुणस्स्वजनश्श्रेयान् यः परः पर एव सः ॥ १५

यस्स्वपक्षं परित्यज्य परपक्षं निषेवते ।
स स्वपक्षे क्षयं प्राप्ते पश्चात्तैरेव हन्यते ॥ १६

निरनुक्रोशता चेयं यादृशी ते निशाचर ! ।
स्वजनेन त्वया शक्यं परुषं रावणानुज ! ॥" १७

इत्युक्तो भ्रातृपुत्रेण प्रत्युवाच विभीषणः ।
" अजानन्निव मच्छीलं किं राक्षस ! विकत्थसे ॥ १८

राक्षसेन्द्रसुतासाधो ! पारुष्यं त्यज गौरवात् ।
कुले यद्यप्यहं जातो रक्षसां क्रूरकर्मणाम् ॥ १९

गुणोऽयं प्रथमो नृणां तन्मे शीलमराक्षसम् ।
न रमे दारुणेनाहं नचाधर्मेण वै रमे ॥ २०

भ्रात्रा विषमशीलेन कथं भ्राता निरस्यते ।
धर्मात्प्रच्युतशीलं हि पुरुषं पापनिश्चयम् ॥ २१

त्यक्त्वा सुखमवाप्नोति हस्तादाशीविषं यथा ।
हिंसापरस्वहरणे परदाराभिमर्शनम् ॥ २२

त्याज्यमाहुर्दुराचारं वेश्म प्रज्वलितं यथा ।
परस्वानां च हरणं परदाराभिमर्शनम् ॥ २३

सुहृदामतिशङ्का च त्रयो दोषाः क्षयावहाः ।
महर्षीणां वधो घोरस्सर्वदेवैश्च विग्रहः ॥ २४

अभिमानश्च कोपश्च वैरित्वं प्रतिकूलता ।
एते दोषा मम भ्रातुर्जीवितैश्वर्यनाशनाः ॥ २५

गुणान्प्रच्छादयामासुः पर्वतानिव तोयदाः ।
दोषैरेतैः परित्यक्तो मया भ्राता पिता तव ॥ २६

नेयमस्ति पुरी लङ्का न च त्वं न च ते पिता ।
अतिमानी च बालश्च दुर्विनीतश्च राक्षस ! ॥ २७

बद्धस्त्वं कालपाशेन ब्रूहि मां यद्यदिच्छसि ।
अद्य ते व्यसनं प्राप्तं किं मां त्वमिह वक्ष्यसि ॥ २८

प्रवेष्टुं न त्वया शक्यो न्यग्रोधो राक्षसाधम ! ।
धर्षयित्वा च काकुत्स्थौ न शक्यं जीवितुं त्वया ॥ २९

युध्यस्व नरदेवेन लक्ष्मणेन रणे सह ।
हतस्त्वं देवताकार्यं करिष्यसि यमक्षये ॥ ३०

निदर्शय स्वात्मबलं समुद्यतं कुरुष्व सर्वायुधसायकव्ययम् ।
न लक्ष्मणस्यैत्य हि बाणगोचरं त्वमद्य जीवन् सबलो गमिष्यसि ॥

इति श्रीमद्युद्धकाण्डे सप्ताशीतितमस्सर्गः ॥

---

## ॥ अष्टाशीतितमस्सर्गः ॥

विभीषणवचश्श्रुत्वा रावणः क्रोधमूर्छितः ।
अब्रवीत्परुषं वाक्यं वेगेनाभ्युत्पपात ह ॥ १

उद्यतायुधनिस्त्रिंशो रथे सुसमलंकृते ।
कालाश्वयुक्ते महति स्थितः कालान्तकोपमः ॥ २

महाप्रमाणमुद्यम्य विपुलं वेगवद्दृढम् ।
धनुर्भीमं परामृश्य शरांश्चामित्रनाशनान् ॥ ३

तं ददर्श महेष्वासो रथे सुसमलंकृतः ।
अलंकृतममित्रघ्नं राघवस्यानुजं बली ॥ ४

हनुमत्पृष्ठमासीनमुदयस्थरविप्रभम् ।
उवाचैनं समारब्धस्सौमित्रिं सविभीषणम् ॥ ५

तांश्च वानरशार्दूलान् "पश्यध्वं मे पराक्रमम् ।
अद्य मत्कार्मुकोत्सृष्टं शरवर्षं दुरासदम् ॥ ६

मुक्तं वर्षमिवाकाशे वारयिष्यथ संयुगे ।
अद्य वो मामका बाणा महाकार्मुकनिस्सृताः ॥ ७

विधमिष्यन्ति गात्राणि तूलराशिमिवानलः ।
तीक्ष्णसायकनिर्भिन्नान् शूलशक्त्यृष्टितोमरैः ॥ ८

अद्य वो गमयिष्यामि सर्वानेव यमक्षयम् ।
क्षिपतश्शरवर्षाणि क्षिप्रहस्तस्य मे युधि ॥ ९

जीमूतस्येव नदतः कः स्थास्यति ममाग्रतः ।
रात्रियुद्धे मया पूर्वं वज्राशनिसमैश्शरैः ॥ १०

शायितौ स्थौ मया भूमौ विसंज्ञौ सपुरस्सरौ ।
स्मृतिर्नतेऽस्ति वा मन्ये व्यक्तं वा यमसादनम् ॥ ११

आशीविषमिव क्रुद्धं यन्मां योद्धुं व्यवस्थितः ।"
तच्छ्रुत्वा राक्षसेन्द्रस्य गर्जितं लक्ष्मणस्तदा ॥ १२

अभीतवदनः क्रुद्धो रावणिं वाक्यमब्रवीत् ।
"उक्तश्च दुर्गमः पारः कार्याणां राक्षस ! त्वया ॥ १३

कार्याणां कर्मणां पारं यो गच्छति स बुद्धिमान् ।
सं त्वमर्थस्य हीनार्थो दुरवापस्य केनचित् ॥ १४

वाचो व्याहृत्य जानीषे कृतार्थोऽस्मीति दुर्मते !
अन्तर्धानगतेनाजौ यस्त्वया चरितस्तदा ॥ १५

तस्कराचरितो मार्गो नैष वीरनिषेवितः ।
यथा बाणपथं प्राप्य स्थितोऽहं तव राक्षस ॥ १६

दर्शयस्वाद्य तत्तेजो वाचा त्वं किं विकत्थसे ।"
एवमुक्तो धनुर्भीमं परामृश्य महाबलः ॥" १७

ससर्ज निशितान्बाणानिन्द्रजित्समितिञ्जयः ।
ते निसृष्टा महावेगाश्शरास्सर्पविषोपमाः ॥ १८

सम्प्राप्य लक्ष्मणं पेतुश्श्वसन्त इव पन्नगाः ।
शरैरतिमहावेगैर्वेगवान्रावणात्मजः ॥ १९

सौमित्रिमिन्द्रजिद्युद्धे विव्याथ शुभलक्षणम् ।
सशरैरतिविद्धाङ्गो रुधिरेण समुक्षितः ॥ २०

शुशुभे लक्ष्मणश्श्रीमान् विधूम इव पावकः ।
इन्द्रजित्त्वात्मनः कर्म प्रसमीक्ष्याधिगम्य च ॥ २१

विनद्य सुमहानादमिदं वचनमब्रवीत् ।
पत्रिणश्शितधारास्ते शरा मत्कार्मुकच्युताः ॥ २२

आदास्यन्तेऽद्य सौमित्रे! जीवितं जीवितान्तगाः ।
अद्यगोमायुसङ्घाश्च श्येनसङ्घाश्च लक्ष्मण! ॥ २३

गृध्राश्च निपतन्तु त्वां गतासुं निहतं मया ।
क्षत्रबन्धुं सदाऽऽनार्यं रामः परमदुर्मतिः ॥ २४

भक्तं भ्रातरमद्यैव त्वां द्रक्ष्यति मया हतम् ।
विशस्तकवचं भूमौ व्यपविद्धशरासनम् ॥ २५

हृतोत्तमाङ्गं सौमित्रे! त्वामद्य निहतं मया ।"
इति ब्रुवाणं संरब्धं परुषं रावणात्मजम् ॥ २६

हेतुमद्वाक्यमत्यर्थं लक्ष्मणः प्रत्युवाच ह ।
वाग्बलं त्यज दुर्बुद्धे! क्रूरकर्मासि राक्षस! ॥ २७

अथ कस्माद्वदस्येतत्संपादय सुकर्मणा ।
अकृत्वा कत्थसे कर्म किमर्थमिह राक्षस! ॥ २८

कुरु तत्कर्म येनाहं श्रद्दध्यां तव कत्थनम् ।
अनुक्त्वा परुषं वाक्यं किञ्चिदप्यनवक्षिपन् ॥ २९
अविकत्थन्वधिष्यामि त्वां पश्य पुरुषाधम ।"
इत्युक्त्वा पञ्च नाराचानाकर्णं पूरितान् शितान् ॥ ३०
निजघान महावेगान् लक्ष्मणो राक्षसोरसि ।
सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ॥ ३१
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा ।
स शरैराहतस्तेन सरोषो रावणात्मजः ॥ ३२
सुप्रयुक्तैस्त्रिभिर्बाणैः प्रतिविव्याथ लक्ष्मणम् ।
स बभूव तदा भीमो नरराक्षससिंहयोः ॥ ३३
विमर्दस्तुमुलो युद्धे परस्परजयैषिणोः ।
उभौ हि बलसम्पन्नावुभौ विक्रमशालिनौ ॥ ३४
उभावपि सुविक्रान्तौ सर्वशस्त्रास्त्रकोविदौ ।
उभौ परमदुर्जेयावतुल्यबलतेजसौ ॥ ३५
युयुधाते तदा वीरौ ग्रहाविव नभो गतौ ।
बलवृत्राविवाभीतौ युधि तौ दुष्प्रधर्षणौ ॥ ३६
युयुधाते महात्मानौ तदा केसरिणाविव ।
बहूनवसृजन्तौ हि मार्गणौघानवस्थितौ ॥ ३७
नरराक्षससिंहौ तौ प्रहृष्टावभ्ययुध्यताम् ॥
सुसम्प्रहृष्टौ नरराक्षसोत्तमौ जयैषिणौ मार्गणचापधारिणौ ।
परस्परं तौ प्रववर्षतुर्भृशं शरौघवर्षेण बलाहकाविव ॥ ३८
अभिप्रवृद्धौ युधि युद्धकोविदौ शरासिचण्डौ शितशस्त्रधारिणौ ।
अभीक्ष्णमाविव्यथतुर्महाबलौ महाहवे शम्बरवासवाविव ॥ ३९

इति श्रीमद्युद्धकाण्डे अष्टाशीतितमस्सर्गः ॥

## ॥ एकोननवतितमस्सर्गः ॥

ततश्शरं दाशरथिस्सन्धायामित्रकर्शनः ।
ससर्ज राक्षसेन्द्राय क्रुद्धस्सर्प इव श्वसन् ॥ १
तस्य ज्यातलनिर्घोषं स श्रुत्वा रावणात्मजः ।
विवर्णवदनो भूत्वा लक्ष्मणं समुदैक्षत ॥ २
तं विवर्णमुखं दृष्ट्वा राक्षसं रावणात्मजम् ।
सौमित्रिं युद्धसंयुक्तं प्रत्युवाच विभीषणः ॥ ३
" निमित्तान्यनुपश्यामि यान्यस्मिन् रावणात्मजे ।
त्वर तेन महाबाहो भग्न एष न संशयः ॥" ४
ततस्सन्धाय सौमित्रिर्बाणानग्निशिखोपमान् ।
मुमोच निशितांस्तस्मिन् सर्पानिव महाविषान् ॥ ५
शक्राशनिसमस्पर्शैर्लक्ष्मणेनाहतश्शरैः ।
मुहूर्तमभवन्मूढस्सर्वसंक्षुभितेन्द्रियः ॥ ६
उपलभ्य मुहूर्तेन संज्ञां प्रत्यागतेन्द्रियः ।
ददर्शावस्थितं वीरं वीरो दशरथात्मजम् ॥ ७
सोऽभिचक्राम सौमित्रिं रोषात्संरक्तलोचनः ।
अब्रवीच्चैनमासाद्य पुनस्सपरुषं वचः ॥ ८
" किं न स्मरसि तद्युद्धे प्रथमे मत्पराक्रमम् ।
निबद्धस्त्वं सह भ्रात्रा यदा भुवि विवेष्टसे ॥ ९
युवां खलु मया युद्धे शक्राशनिसमैश्शरैः ।
शायितौ प्रथमं भूमौ विसंज्ञौ सपुरस्सरौ ॥ १०
स्मृतिर्वा नास्ति ते मन्ये व्यक्तं वा यमसादनम् ।
गन्तुमिच्छसि यस्मात्त्वं मां धर्षयितुमिच्छसि ॥ ११

यदि ते प्रथमे युद्धे न दृष्टो मत्पराक्रमः ।
अद्य ते दर्शयिष्यामि तिष्ठेदानीं व्यवस्थितः ॥ १२

इत्युक्त्वा सप्तभिर्बाणैरभिविव्याथ लक्ष्मणम् ।
दशभिस्तु हनूमन्तं तीक्ष्णधारैश्शरोत्तमैः ॥ १३

ततश्शरशतेनैव सुप्रयुक्तेन वीर्यवान् ।
क्रोधाद्द्विगुणसंरब्धो निर्बिभेद विभीषणम् ॥ १४

तद्दृष्ट्वेन्द्रजिता कर्म कृतं रामानुजस्तदा ।
अचिन्तयित्वा प्रहसन्नैतत्किञ्चिदिति ब्रुवन् ॥ १५

मुमोच स शरान्घोरान् संगृह्य नरपुङ्गवः ।
अभीतवदनः क्रुद्धो रावणिं लक्ष्मणो युधि ॥ १६

"नैवं रणगताश्शूराः प्रहरन्ति निशाचर ।
लघवश्चाल्पवीर्याश्च सुखा हीमे शरास्तव ॥ १७

नैवं शूरास्तु युध्यन्ते समरे जयकाङ्क्षिणः ।"
इत्येवं तं ब्रुवाणस्तु शरवर्षैरवाकिरत् ॥ १८

तस्य बाणैस्सुविध्वस्तं कवचं हेमभूषितम् ।
व्यशीर्यत रथोपस्थे ताराजालमिवाम्बरात् ॥ १९

विधूतवर्मा नाराचैर्बभूव स कृतव्रणः ।
इन्द्रजित्समरे वीरः प्ररूढ इव सानुमान् ॥ २०

ततश्शरसहस्रेण संक्रुद्धो रावणात्मजः ।
बिभेद समरे वीरं लक्ष्मणं भीमविक्रमः ॥ २१

व्यशीर्यत महद्दिव्यं कवचं लक्ष्मणस्य च ।
कृतप्रतिकृतान्योन्यं बभूवतुरभिद्रुतौ ॥ २२

अभीक्ष्णं निःश्वसन्तौ तौ युध्येतां तुमुलं युधि ।
शरसंकृत्तसर्वाङ्गौ सर्वतो रुधिरोक्षितौ ॥ २३

सुदीर्घकालं तौ वीरावन्योन्यं निशितैश्शरैः ।
ततक्षतुर्महात्मानौ रणकर्मविशारदौ ॥ २४

बभूवतुश्चात्मजये यत्तौ भीमपराक्रमौ ।
तौ शरौघैस्तदा कीर्णौ निकृत्तकवचध्वजौ ॥ २५

स्रवन्तौ रुधिरं चोष्णं जलं प्रस्रवणाविव ।
शरवर्षं ततो घोरं मुञ्चतोर्भीमनिस्वनम् ॥ २६

स सारयोरिवाकाशे नीलयोः कालमेघयोः ।
तयोरथ महान्कालो व्यत्ययाद्युध्यमानयोः ॥ २७

नच तौ युद्धवैमुख्यं श्रमं वाऽप्युपजग्मतुः ।
अस्त्राण्यस्त्रविदां श्रेष्ठौ दर्शयन्तौ पुनः पुनः ॥ २८

शरानुच्चावचाकारानन्तरिक्षे बबन्धतुः ।
व्यपेतदोषमस्यन्तौ लघु चित्रं च सुष्ठु च ॥ २९

उभौ तु तुमुलं घोरं चक्रतुर्नरराक्षसौ ।
तयोः पृथक्पृथग्भीमः शुश्रुवे तलनिस्वनः ॥ ३०

प्रकम्पयञ्जनं घोरो निर्घात इव दारुणः ।
स तयोर्भ्राजते शब्दस्तदा समरसक्तयोः ॥ ३१

सुघोरयोर्निष्टनतोर्गगने मेघयोरिव ।
सुवर्णपुङ्खैर्नाराचैर्बलवन्तौ कृतव्रणौ ॥ ३२

प्रसुस्रुवाते रुधिरं कीर्तिमन्तौ जये धृतौ ।
ते गात्रयोर्निपतिता रुक्मपुङ्खाश्शरा युधि ॥ ३३

असृङ्नद्धा विनिष्पत्य विविशुर्धरणीतलम् ।
अन्ये सुनिशितैश्शस्त्रैराकाशे सञ्जघट्टिरे ॥ ३४

बभञ्जुश्चिच्छिदुश्चान्ये तयोर्बाणास्सहस्रशः ।
स बभूव रणो घोरस्तयोर्बाणमयश्च यः ॥ ३५

अग्निभ्यामिव दीप्ताभ्यां सत्रे कुशमयश्च यः ।
तयोः कृतव्रणौ देहौ शुशुभाते महात्मनोः ॥ ३६

सपुष्पाविव निष्पत्रौ वने शाल्मलिकिंशुकौ ।
चक्रतुस्तुमुलं घोरं सन्निपातं मुहुर्मुहुः ॥ ३७

इन्द्रजिल्लक्ष्मणश्चैव परस्परवधैषिणौ ।
लक्ष्मणो रावणिं युद्धे रावाणश्चापि लक्ष्मणम् ॥ ३८

अन्योन्यं तावभिघ्नन्तौ न श्रमं प्रत्यपद्यताम् ।
बाणजालैश्शरीरस्थैरवगाढैस्तरस्विनौ ॥ ३९

शुशुभाते महावीर्यौ प्ररूढाविव पर्वतौ ।
तयो रुधिरसिक्तानि संवृतानि शरैर्भृशम् ॥ ४०

बभ्राजुस्सर्वगात्राणि ज्वलन्त इव पावकाः ।
तयोरथ महान्कालो व्यत्ययाद्युध्यमानयोः ॥ ४१

न च तौ युद्धवैमुख्यं श्रमं वाऽप्युपजग्मतुः ॥
अथ समरपरिश्रमं निहन्तुं समरमुखेष्वजितस्य लक्ष्मणस्य ।
प्रियहितमुपपादयन्महौजास्समरमुपेत्य विभीषणोऽवतस्थे ॥ ४२

इति श्रीमद्युद्धकाण्डे एकोननवतितमस्सर्गः ॥

---

## ॥ नवतितमस्सर्गः ॥

युध्यमानौ तु तौ दृष्ट्वा प्रसक्तौ नरराक्षसौ ।
प्रभिन्नाविव मातङ्गौ परस्परवधैषिणौ ॥ १
तौ द्रष्टुकामस्संग्रामे परस्परगतौ बली ।
शूरस्स रावणभ्राता तस्थौ संग्राममूर्धनि ॥ २
ततो विष्फारयामास महद्धनुरवस्थितः ।
उत्ससर्ज च तीक्ष्णाग्रान् राक्षसेषु महाशरान् ॥ ३
ते शराश्शिखिसङ्काशां निपतन्तस्समाहिताः ।
राक्षसान् दारयामासुर्वज्राणीव महागिरीन् ॥ ४
विभीषणस्यानुचरास्तेऽपि शूलासिपट्टसैः ।
चिच्छिदुस्समरे वीरान् राक्षसान्राक्षसोत्तमाः ॥ ५
राक्षसैस्तैः परिवृतस्स तदा तु विभीषणः ।
बभौ मध्ये प्रहृष्टानां कलभानामिव द्विपः ॥ ६
ततस्संचोदयानो वै हरीन्रक्षोरणप्रियान् ।
उवाच वचनं काले कालज्ञो रक्षसां वरः ॥ ७
"एकोऽयं राक्षसेन्द्रस्य परायणमिव स्थितः ।
एतच्छेषं बलं तस्य किं तिष्ठत हरीश्वराः ॥ ८
अस्मिन्विनिहते पापे राक्षसे रणमूर्धनि ।
रावणं वर्जयित्वा तु शेषमस्य बलं हतम् ॥ ९
प्रहस्तो निहतो वीरो निकुम्भश्च महाबलः ।
कुम्भकर्णश्च कुम्भश्च धूम्राक्षश्च निशाचरः ॥ १०
जम्बुमाली महामाली तीक्ष्णवेगोऽशनिप्रभः ।
सुप्तघ्नो यज्ञकोपश्च वज्रदंष्ट्रश्च राक्षसः ॥ ११

संह्रादी विकटो निघ्नस्तपनो दम एव च ।
प्रघासः प्रघसश्चैव प्रजङ्घोऽजङ्घ एव च ॥ १२
अग्निकेतुश्च दुर्धर्षो रश्मिकेतुश्च वीर्यवान् ।
विद्युज्जिह्वो द्विजिह्वश्च सूर्यशत्रुश्च राक्षसः ॥ १३
अकम्पनस्सुपार्श्वश्च चक्रमाली च राक्षसः ।
कम्पनस्सत्त्ववन्तौ तौ देवान्तकनरान्तकौ ॥ १४
एतान्निहत्यातिबलान् बहून्राक्षससत्तमान् ।
बाहुभ्यां सागरं तीर्त्वा लङ्घ्यतां गोष्पदं लघु ॥ १५
एतावदेव शेषं वो जेतव्यमिह वानराः ! ।
हतास्सर्वे समागम्य राक्षसा बलदर्पिताः ॥ १६
अयुक्तं निधनं कर्तुं पुत्रस्य जनितुर्मम ।
घृणामपास्य रामार्थे निहन्यां भ्रातुरात्मजम् ॥ १७
हन्तुकामस्य मे बाष्पं चक्षुश्चैव निरुध्यति ।
तमेवैष महाबाहुर्लक्ष्मणश्शमयिष्यति ॥ १८
वानरा घ्नत सम्भूय भृत्यानस्य समीपगान् ।"
इति तेनातियशसा राक्षसेनाभिचोदिताः ॥ १९
वानरेन्द्रा जहृषिरे लाङ्गूलानि च विव्यधुः ।
ततस्ते कपिशार्दूलाः क्ष्वेलन्तश्च मुहुर्मुहुः ॥ २०
मुमुचुर्विविधान्नादान् मेघान्दृष्ट्वेव बर्हिणः ।
जाम्बवानपि तैस्सर्वैस्स्वयूथैरपि संवृतः ॥ २१
अश्मभिस्ताडयामास नखैर्दन्तैश्च राक्षसान् ।
निघ्नन्तमृक्षाधिपतिं राक्षसास्ते महाबलाः ॥ २२

परिवव्रुर्भयं त्यक्त्वा तमनेकविधायुधाः ।
शरैः परशुभिस्तीक्ष्णैः पट्टसैर्यष्टितोमरैः ॥ २३

जाम्बवन्तं मृधे जघ्नुर्निघ्नन्तं राक्षसीं चमूम् ।
स सम्प्रहारस्तुमुलस्संजज्ञे कपिरक्षसाम् ॥ २४

देवासुराणां क्रुद्धानां यथा भीमो महास्वनः ।
हनूमानपि संक्रुद्धस्सालमुत्पाट्य वीर्यवान् ॥ २५

रक्षसां कदनं चक्रे समासाद्य सहस्रशः ।
स दत्त्वा तुमुलं युद्धं पितृव्यस्येन्द्रजिद्युधि ॥ २६

लक्ष्मणं परवीरघ्नं पुनरेवाभ्यधावत ।
तौ प्रयुद्धौ तदा वीरौ मृधे लक्ष्मणराक्षसौ ॥ २७

शरौघानभिवर्षन्तौ जघ्नतुस्तौ परस्परम् ।
अभीक्ष्णमन्तर्दधतुश्शरजालैर्महाबलौ ॥ २८

चन्द्रादित्याविवोष्णान्ते यथा मेघैस्तरस्विनौ ।
न ह्यादानं न सन्धानं धनुषो वा परिग्रहः ॥ २९

न विप्रमोक्षो बाणानां न विकर्षो न विग्रहः ।
न मुष्टिप्रतिसन्धानं न लक्ष्यप्रतिपादनम् ॥ ३०

अदृश्यत तयोस्तत्र युध्यतोः पाणिलाघवात् ।
चापवेगविनिर्मुक्तबाणजालैस्समन्ततः ॥ ३१

अन्तरिक्षेऽभिसंछन्ने न रूपाणि चकाशिरे ।
लक्ष्मणो रावणिं प्राप्य रावणिश्चापि लक्ष्मणम् ॥ ३२

अव्यवस्था भवत्युग्रा ताभ्यामन्योन्यविग्रहे ।
ताभ्यामुभाभ्यां तरसा विसृष्टैर्विशिखैश्शितैः ॥ ३३

निरन्तरमिवाकाशं बभूव तमसा वृतम् ।
तैः पतद्भिश्च बहुभिस्तयोश्शरशतैश्शितैः ॥ ३४

दिशश्च प्रदिशश्चैव बभूवुश्शरसङ्कुलाः ।
तमसा संवृतं सर्वमासीद्भीमतरं महत् ॥ ३५

अस्तं गते सहस्रांशौ संवृतं तमसेवहि ।
रुधिरौघमहानद्यः प्रावर्तन्त सहस्रशः ॥ ३६

क्रव्यादा दारुणा वाग्भिश्चिक्षिपुर्भीमनिस्वनम् ।
न तदानीं ववौ वायुर्नच जज्वाल पावकः ॥ ३७

"स्वस्त्यस्तु लोकेभ्य" इति जजल्पुस्ते महर्षयः ।
सम्पेतुश्चात्र सम्प्राप्ता गन्धर्वास्सह चारणैः ॥ ३८

अथ राक्षससिंहस्य कृष्णान् कनकभूषणान् ।
शरैश्चतुर्भिस्सौमित्रिर्विव्याध चतुरो हयान् ॥ ३९

ततोऽपरेण भल्लेन सितेन निशितेन च ।
सम्पूर्णायतमुक्तेन सुपत्रेण सुवर्चसा ॥ ४०

महेन्द्राशनिकल्पेन सूतस्य विचरिष्यतः ।
स तेन बाणाशनिना तलशब्दानुवादिना ॥ ४१

लाघवाद्राघवश्श्रीमान् शिरः कायादपाहरत् ।
स यन्तरि महातेजा हते मण्डोदरीसुतः ॥ ४२

स्वयं सारथ्यमकरोत्पुनश्च धनुरस्पृशत् ।
तदद्भुतमभूत्तत्र सामर्थ्यं पश्यतां युधि ॥ ४३

हयेषु व्यग्रहस्तं तं विव्याध निशितैश्शरैः ।
धनुष्यथ पुनर्व्यग्रे हयेषु मुमुचे शरान् ॥ ४४

छिद्रेषु तेषु बाणेषु सौमित्रिश्शीघ्रविक्रमः ।
अर्दयामास बाणौघैर्विचरन्तमभीतवत् ॥ ४५
निहतं सारथिं दृष्ट्वा समरे रावणात्मजः ।
प्रजहौ समरोद्धर्षं विषण्णस्स बभूव ह ॥ ४६
विषण्णवदनं दृष्ट्वा राक्षसं हरियूथपाः ।
ततः परमसंहृष्टा लक्ष्मणं चाभ्यपूजयन् ॥ ४७
ततः प्रमाथी शरभो रभसो गन्धमादनः ।
अमृष्यमाणाश्चत्वारश्चक्रुर्वेगं हरीश्वराः ॥ ४८
ते चास्य हयमुख्येषु तूर्णमुत्प्लुत्य वानराः ।
चतुर्षु सुमहावीर्या निपेतुर्भीमविक्रमाः ॥ ४९
तेषामधिष्ठितानां तैर्वानरैः पर्वतोपमैः ।
मुखेभ्यो रुधिरं रक्तं हयानां समवर्तत ॥ ५०
ते हया मथिता भग्ना व्यसवो धरणीं गताः ।
ते निहत्य हयांस्तस्य प्रमथ्य च महारथम् ॥ ५१
पुनरुत्पत्य वेगेन तस्थुर्लक्ष्मणपार्श्वतः ।
स हताश्वादवप्लुत्य रथान्मथितसारथेः ॥ ५२
शरवर्षेण सौमित्रिमभ्यधावत रावणिः ॥
ततो महेन्द्रप्रतिमस्सलक्ष्मणः पदातिनं तं निशितैश्शरोत्तमैः ।
सृजन्तमाजौ निशितान् शरोत्तमान् भृशं तदा बाणगणैर्न्यवारयत् ॥

इति श्रीमद्युद्धकाण्डे नवतितमस्सर्गः ॥

## ॥ एकनवतितमस्सर्गः ॥

स हताश्वो महातेजा भूमौ तिष्ठन्निशाचरः ।
इन्द्रजित्परमक्रुद्धस्संप्रजज्वाल तेजसा ॥ १

तौ धन्विनौ जिघांसन्तावन्योन्यमिषुभिर्भृशम् ।
विजयेनाभिनिष्क्रान्तौ वने गजवृषाविव ॥ २

निबर्हयन्तश्चान्योन्यं ते राक्षसवनौकसः ।
भर्तारं न जहुर्युद्धे संपतन्तस्ततस्ततः ॥ ३

ततस्तान्राक्षसान्सर्वान् हर्षयन्रावणात्मजः ।
स्तुवानो हर्षमाणश्च इदं वचनमब्रवीत् ॥ ४

"तमसा बहुलेनेमास्संसक्तास्सर्वतो दिशः ।
नेह विज्ञायते स्वो वा परो व राक्षसोत्तमाः ॥ ५

धृष्टं भवन्तो युध्यन्तु हरीणां मोहनाय वै ।
अहं तु रथमास्थाय आगमिष्यामि संयुगम् ॥ ६

तथा भवन्तः कुर्वन्तु यथेमे काननौकसः ।
न बुध्येयुर्दुरात्मानः प्रविष्टे नगरं मयि ॥" ७

इत्युक्त्वा रावणसुतो वञ्चयित्वा वनौकसः ।
प्रविवेश पुरीं लङ्कां रथहेतोरमित्रहा ॥ ८

स रथं भूषयित्वा तु रुचिरं हेमभूषितम् ।
प्रासासिशरसम्पूर्णं युक्तं परमवाजिभिः ॥ ९

अधिष्ठितं हयज्ञेन सूतेनाप्तोपदेशिना ।
आरुरोह महातेजा रावणिस्समितिञ्जयः ॥ १०

स राक्षसगणैर्मुख्यैर्वृतो मन्दोदरीसुतः ।
निर्ययौ नगरात्तूर्णं कृतान्तबलचोदितः ॥ ११

सोऽभिनिष्क्रम्य नगरादिन्द्रजित्परवीरहा ।
अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२

ततो रथस्थमालोक्य सौमित्री रावणात्मजम् ।
वानराश्च महावीर्या राक्षसश्च विभीषणः ॥ १३

विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः ।
रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ १४

पातयामास बाणौघैश्शतशोऽथ सहस्रशः ।
स मण्डलीकृतधनू रावणिस्समितिञ्जयः ॥ १५

हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः ।
ते वध्यमाना हरयो नाराचैर्भीमविक्रमाः ॥ १६

सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः ।
ततस्समरकोपेन ज्वलितो रघुनन्दनः ॥ १७

चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् ।
सोऽन्यत्कार्मुकमादाय सज्जं चक्रे त्वरन्निव ॥ १८

तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ।
अथैनं छिन्नधन्वानमाशीविषविषोपमैः ॥ १९

विव्याथोरसि सौमित्री रावणिं पञ्चभिश्शरैः ।
ते तस्य कायं निर्भिद्य महाकार्मुकनिस्सृताः ॥ २०

निपेतुर्धरणीं बाणारक्ता इव महोरगाः ।
स भिन्नवर्मा रुधिरं वमन्वक्त्रेण रावणिः ॥ २१

जग्राह कार्मुकं श्रेष्ठं दृढज्यं बलवत्तरम् ।
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः ॥ २२

ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः ।
मुक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः ॥ २३

अवारयदसम्भ्रान्तो लक्ष्मणस्सदुरासदम् ।
दर्शयामास च तदा रावणिं रघुनन्दनः ॥ २४

असम्भ्रान्तो महातेजास्तदद्भुतमिवाभवत् ।
ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे ॥ २५

अविध्यत्परमक्रुद्धश्शीघ्रमस्त्रं प्रदर्शयन् ।
राक्षसेन्द्रसुतं चापि बाणौघैस्समताडयत् ॥ २६

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापिना ।
असक्तं प्रेषयामास लक्ष्मणाय शरान्बहून् ॥ २७

तानप्राप्तान् शितैर्बाणैश्चिच्छेद रघुनन्दनः ।
सारथेरस्यच रणे रथिनो रथिसत्तमः ॥ २८

शिरो जहार धर्मात्मा भल्लेनानतपर्वणा ।
असूतास्ते हयास्तत्र रथमूहुरविक्लबाः ॥ २९

मण्डलान्यभिधावन्तस्तदद्भुतमिवाभवत् ।
अमर्षवशमापन्नस्सौमित्रिर्दृढविक्रमः ॥ ३०

प्रत्यविध्यद्धयांस्तस्य शरैर्वित्रासयन्रणे ।
अमृष्यमाणस्तत्कर्म रावणस्य सुतो बली ॥ ३१

विव्याध दशभिर्बाणैस्सौमित्रिं तममर्षिणम् ।
ते तस्य वज्रप्रतिमाश्शरास्सर्पविषोपमाः ॥ ३२

विलयं जग्मुराहत्य कवचं काञ्चनप्रभम् ।
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः ॥ ३३

सोऽभिनिष्क्रम्य नगरादिन्द्रजित्परवीरहा ।
अभ्ययाज्जवनैरश्वैर्लक्ष्मणं सविभीषणम् ॥ १२

ततो रथस्थमालोक्य सौमित्री रावणात्मजम् ।
वानराश्च महावीर्या राक्षसश्च विभीषणः ॥ १३

विस्मयं परमं जग्मुर्लाघवात्तस्य धीमतः ।
रावणिश्चापि संक्रुद्धो रणे वानरयूथपान् ॥ १४

पातयामास बाणौघैश्शतशोऽथ सहस्रशः ।
स मण्डलीकृतधनू रावणिस्समितिञ्जयः ॥ १५

हरीनभ्यहनत्क्रुद्धः परं लाघवमास्थितः ।
ते वध्यमाना हरयो नाराचैर्भीमविक्रमाः ॥ १६

सौमित्रिं शरणं प्राप्ताः प्रजापतिमिव प्रजाः ।
ततस्समरकोपेन ज्वलितो रघुनन्दनः ॥ १७

चिच्छेद कार्मुकं तस्य दर्शयन् पाणिलाघवम् ।
सोऽन्यत्कार्मुकमादाय सज्जं चक्रे त्वरन्निव ॥ १८

तदप्यस्य त्रिभिर्बाणैर्लक्ष्मणो निरकृन्तत ।
अथैनं छिन्नधन्वानमाशीविषविषोपमैः ॥ १९

विव्याथोरसि सौमित्री रावणिं पञ्चभिश्शरैः ।
ते तस्य कायं निर्भिद्य महाकार्मुकनिस्सृताः ॥ २०

निपेतुर्धरणीं बाणा रक्ता इव महोरगाः ।
स भिन्नवर्मा रुधिरं वमन्वक्त्रेण रावणिः ॥ २१

जग्राह कार्मुकं श्रेष्ठं दृढज्यं बलवत्तरम् ।
स लक्ष्मणं समुद्दिश्य परं लाघवमास्थितः ॥ २२

ववर्ष शरवर्षाणि वर्षाणीव पुरन्दरः ।
मुक्तमिन्द्रजिता तत्तु शरवर्षमरिन्दमः ॥ २३

अवारयदसम्भ्रान्तो लक्ष्मणस्सदुरासदम् ।
दर्शयामास च तदा रावणिं रघुनन्दनः ॥ २४

असम्भ्रान्तो महातेजास्तदद्भुतमिवाभवत् ।
ततस्तान् राक्षसान् सर्वांस्त्रिभिरेकैकमाहवे ॥ २५

अविध्यत्परमक्रुद्धश्शीघ्रमस्त्रं प्रदर्शयन् ।
राक्षसेन्द्रसुतं चापि बाणौघैस्समताडयत् ॥ २६

सोऽतिविद्धो बलवता शत्रुणा शत्रुतापिना ।
असक्तं प्रेषयामास लक्ष्मणाय शरान्बहून् ॥ २७

तानप्राप्तान् शितैर्बाणैश्चिच्छेद रघुनन्दनः ।
सारथेरस्यच रणे रथिनो रथिसत्तमः ॥ २८

शिरो जहार धर्मात्मा भल्लेनानतपर्वणा ।
असूतास्ते हयास्तत्र रथमूहुरविक्लबाः ॥ २९

मण्डलान्यभिधावन्तस्तदद्भुतमिवाभवत् ।
अमर्षवशमापन्नस्सौमित्रिर्दृढविक्रमः ॥ ३०

प्रत्याविध्यद्धयांस्तस्य शरैर्वित्रासयन्रणे ।
अमृष्यमाणस्तत्कर्म रावणस्य सुतो बली ॥ ३१

विव्याध दशभिर्बाणैस्सौमित्रिं तममर्षिणम् ।
ते तस्य वज्रप्रतिमाश्शरास्सर्पविषोपमाः ॥ ३२

विलयं जग्मुराहत्य कवचं काञ्चनप्रभम् ।
अभेद्यकवचं मत्वा लक्ष्मणं रावणात्मजः ॥ ३३

ललाटे लक्ष्मणं बाणैस्सुपुङ्खैस्त्रिभिरिन्द्रजित् ।
अविध्यत्परमक्रुद्धश्शीघ्रास्त्रं च प्रदर्शयन् ॥ ३४

तैः पृषत्कैर्ललाटस्थैश्शुशुभे रघुनन्दनः ।
रणाग्रे समरश्लाघी त्रिशृङ्ग इव पर्वतः ॥ ३५

स तदा ह्यर्दितो बाणै राक्षसेन महामृधे ।
तमाशु प्रतिविव्याध लक्ष्मणः पञ्चभिश्शरैः ॥ ३६

विकृष्येन्द्रजिता युद्धे वदने शुभकुण्डले ।
लक्ष्मणेन्द्रजितौ वीरौ महाबलशरासनौ ॥ ३७

अन्योन्यं जघ्नतुर्बाणैर्विशिखैर्भीमविक्रमौ ।
ततश्शोणितदिग्धाङ्गौ लक्ष्मणेन्द्रजितावुभौ ॥ ३८

रणे तौ रेजतुर्वीरौ पुष्पिताविव किंशुकौ ।
तौ परस्परमभ्येत्य सर्वगात्रेषु धन्विनौ ॥ ३९

घोरैर्विव्यधतुर्बाणैः कृतभावावुभौ जये ।
ततस्समरकोपेन संयुक्तो रावणात्मजः ॥ ४०

विभीषणं त्रिभिर्बाणैर्विव्याध वदने शुभे ।
अयोमुखैस्त्रिभिर्विद्ध्वा राक्षसेन्द्रं विभीषणम् ॥ ४१

एकैकेनाभिविव्याध तान्सर्वान् हरियूथपान् ।
तस्मै दृढतरं क्रुद्धो जघान गदया हयान् ॥ ४२

विभीषणो महातेजा रावणस्सुदुरात्मनः ।
स हताश्वादवप्लुत्य रथान्निहतसारथेः ॥ ४३

रथशक्तिं महातेजा पितृव्याय मुमोच ह ।
तामापतन्तीं सम्प्रेक्ष्य सुमित्रानन्दवर्धनः ॥ ४४

चिच्छेद निशितैर्बाणैर्दशधा सोऽपतद्भुवि ।
तस्मै दृढधनुः क्रुद्धो हताश्वाय विभीषणः ॥ ४५
वज्रस्पर्शसमान्पञ्च ससर्जोरसि मार्गणान् ।
ते तस्य कायं निर्भिद्य रुक्मपुङ्खा निमित्तगाः ॥ ४६
बभूवुर्लोहितादिग्धा रक्ता इव महोरगाः ।
स पितृव्याय संक्रुद्ध इन्द्रजिच्छरमाददे ॥ ४७
उत्तमं रक्षसां मध्ये यमदत्तं महाबलः ।
तं समीक्ष्य महातेजा महेषुं तेन संहितम् ॥ ४८
लक्ष्मणोऽप्याददे बाणमन्यं भीमपराक्रमः ।
कुबेरेण स्वयं स्वप्ने स्वस्मै दत्तं महात्मना ॥ ४९
दुर्जयं दुर्विषह्यं च सेन्द्रैरपि सुरासुरैः ।
तयोस्ते धनुषी श्रेष्ठे बाहुभिः परिघोपमैः ॥ ५०
विकृष्यमाणे बलवत्क्रौञ्चाविव चुकूजतुः ।
ताभ्यां तौ धनुषि श्रेष्ठे संहितौ सायकोत्तमौ ॥ ५१
विकृष्यमाणौ वीराभ्यां भृशं जज्वलतुः श्रिया ।
तौ भासयन्तावाकाशं धनुर्भ्यां विशिखौ च्युतौ ॥ ५२
मुखेन मुखमाहत्य संनिपेततुरोजसा ।
सन्निपातस्तयोश्चासीच्छरयोर्घोररूपयोः ॥ ५३
स धूमविस्फुलिङ्गश्च तज्जोऽग्निर्दारुणोऽभवत् ।
तौ महाग्रहसङ्काशावन्योन्यं सन्निपत्य च ॥ ५४
संग्रामे च तदा यान्तौ मेदिन्यां विनिपेततुः ।
शरौ प्रतिहतौ दृष्ट्वा तावुभौ रणमूर्धनि ॥ ५५

मीलितौ जातरोषै च लक्ष्मणेन्द्रजितौ तदा ।
सुसंरब्धस्तु सौमित्रिरस्त्रं वारुणमाददे ॥ ५६

रौद्रं महेन्द्रजिद्युद्धं व्यसृजद्युधि निष्ठितः ।
तेन तद्विहतं त्वस्त्रं वारुणं परमाद्भुतम् ॥ ५७

ततः क्रुद्धो महातेजा इन्द्रजित्समितिञ्जयः ।
आग्नेयं सन्दधे दीप्तं स लोकं संक्षिपन्निव ॥ ५८

सौरेणास्त्रेण तद्वीरो लक्ष्मणः प्रत्यवारयत् ।
अस्त्रं निवारितं दृष्ट्वा रावणिः क्रोधमूर्छितः ॥ ५९

आसुरं शत्रुनाशाय घोरमस्त्रं समाददे ।
तस्माच्चापाद्विनिष्पेतुर्भास्वराः कूटमुद्गराः ॥ ६०

शूलानि च भुशुण्ठ्यश्च गदाः खड्गाः परश्वथाः ।
तद्दृष्ट्वा लक्ष्मणस्संख्ये घोरमस्त्रमथासुरम् ॥ ६१

अवार्यं सर्वभूतानां सर्वशत्रुविनाशनम् ।
माहेश्वरेण द्युतिमांस्तदस्त्रं प्रत्यवारयत् ॥ ६२

तयोस्सुतुमुलं युद्धं संबभूवाद्भुतोपमम् ।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥ ६३

भैरवाभिरुते भीमे युद्धे वानररक्षसाम् ।
भूतैर्बहुभिराकाशं विस्मितैरावृतं बभौ ॥ ६४

ऋषयः पितरो देवा गन्धर्वा गरुडोरगाः ।
शतक्रतुं पुरस्कृत्य ररक्षुर्लक्ष्मणं रणे ॥ ६५

अथान्यं मार्गणश्रेष्ठं सन्दधे राघवानुजः ।
हुताशनसमस्पर्शं रावणात्मजदारणम् ॥ ६६

सुपत्रमनुवृत्ताङ्गं सुपर्वाणं सुसंस्थितम् ।
सुवर्णविकृतं वीरश्शरीरान्तकरं शरम् ॥ ६७

दुरावारं दुर्विषहं राक्षसानां भयावहम् ।
आशीविषविषप्रख्यं देवसङ्घैस्समर्चितम् ॥ ६८

येन शक्रो महातेजा दानवानजयत्प्रभुः ।
पुरा दैवासुरे युद्धे वीर्यवान्हरिवाहनः ॥ ६९

तदैन्द्रमस्त्रं सौमित्रिस्संयुगेष्वपराजितम् ।
शरश्रेष्ठं धनुश्श्रेष्ठे नरश्रेष्ठोऽभिसन्दधे ॥ ७०

सन्धायामित्रदलनं विचकर्षशरासनम् ।
सज्यमायम्य दुर्धर्षं कालो लोकक्षये यथा ॥ ७१

सन्धाय धनुषि श्रेष्ठे विकर्षन्निदमब्रवीत् ।
लक्ष्मीवान् लक्ष्मणो वाक्यमर्थसाधकमात्मनः ॥ ७२

"धर्मात्मा सत्यसन्धश्च रामो दाशरथिर्यदि ।
पौरुषे चाप्रतिद्वन्द्वश्शरैनं जहि रावणिम् ॥ ७३

इत्युक्त्वा बाणमाकर्णं विकृष्य तमजिह्मगम् ।
लक्ष्मणस्समरे वीरस्ससर्जेन्द्रजितं प्रति ॥ ७४

ऐन्द्रास्त्रेण समायोज्य लक्ष्मणः परवीरहा ।
स शिरस्सशिरस्त्राणं श्रीमज्ज्वलितकुण्डलम् ॥ ७५

प्रमथ्येन्द्रजितः कायात्पातयामास भूतले ।
तद्राक्षसतनूजस्य छिन्नस्कन्धं शिरो महत् ॥ ७६

तपनीयनिभं भूमौ ददृशे रुधिरोक्षितम् ।
हतस्तु निपपाताशु धरण्यां रावणात्मजः ॥ ७७

कवची सशिरस्त्राणो विध्वस्तस्सशरासनः ।
चुक्रुशुस्ते ततस्सर्वे वानरास्सविभीषणाः ॥ ७८

हृष्यन्तो निहते तस्मिन् देवा वृत्रवधे यथा ।
अथान्तरिक्षे देवानामृषीणां च महात्मनाम् ॥ ७९

अभिजज्ञे च सन्नादो गन्धर्वाप्सरसामपि ।
पतितं तमभिज्ञाय राक्षसी सा महाचमूः ॥ ८०

वध्यमाना दिशो भेजे हरिभिर्जितकाशिभिः ।
वानरैर्वध्यमानास्ते शस्त्राण्युत्सृज्य राक्षसाः ॥ ८१

लङ्कामभिमुखास्सस्रुर्नष्टसंज्ञाः प्रधाविताः ।
दुद्रुवुर्बहुधा भीता राक्षसाश्शतशो दिशः ॥ ८२

त्यक्त्वा प्रहरणान् सर्वे पट्टसासिपरश्वथान् ।
केचिल्लङ्कां परित्रस्ताः प्रविष्टा वानरार्दिताः ॥ ८३

समुद्रे पतिताः केचित्केचित्पर्वतमाश्रिताः ।
हतमिन्द्राजितं दृष्ट्वा शयानं समरक्षितौ ॥ ८४

राक्षसानां सहस्रेषु न कश्चित्प्रत्यदृश्यत ।
यथाऽस्तं गत आदित्ये नावतिष्ठन्ति रश्मयः ॥ ८५

तथा तस्मिन्निपतिते राक्षसास्ते गता दिशः ।
शान्तरश्मिरिवादित्यो निर्वाण इव पावकः ॥ ८६

स बभूव महातेजा व्यपास्त गतजीवितः ।
प्रशान्तपीडा बहुलो विनष्टारिः प्रतापवान् ॥ ८७

बभूव लोकःपतिते राक्षसेन्द्रसुते तदा ।
हर्षं च शक्रो भगवान् सह सर्वैस्सुरर्षभः ॥ ८८

जगाम निहते तस्मिन् राक्षसे पापकर्मणि ।
आकाशे चापि देवानां शुश्रुवे दुन्दुभिस्वनः ॥ ८९

नृत्यद्भिरप्सरोभिश्च गन्धर्वैश्च महात्मभिः ।
ववृषुः पुष्पवर्षाणि तदद्भुतमभूत्तदा ॥ ९०

प्रशशंसुर्हते तस्मिन् राक्षसे क्रूरकर्मणि ।
शुद्धा आपो दिशश्चैव जहृषुर्दैत्यदानवाः ॥ ९१

आजग्मुः पतिते तस्मिन् सर्वलोकभयावहे ।
ऊचुश्च सहितास्सर्वे देवगन्धर्वदानवाः ॥ ९२

'विज्वराश्शान्तकलुषा ब्राह्मणा विचर'न्तिति ।
ततोऽभ्यनन्दन्संहृष्टास्समरे हरियूथपाः ॥ ९३

तमप्रतिबलं दृष्ट्वा हतं नैर्ऋतपुङ्गवम् ।
विभीषणो हनूमांश्च जाम्बवांश्चर्क्षयूथपः ॥ ९४

विजयेनाभिनन्दन्तस्तुष्टुवुश्चापि लक्ष्मणम् ।
क्ष्वेलन्तश्च नदन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥ ९५

लब्धलक्षा रघुसुतं परिवार्योपतस्थिरे ।
लाङ्गूलानि प्रविध्यन्तस्स्फोटयन्तश्च वानराः ॥ ९६

'लक्ष्मणो जय' तीत्येवं वाक्यं विश्रावयंस्तदा ।
अन्योन्यं च समाश्लिष्य कपयो हृष्टमानसाः ॥ ९७

चक्रुरुच्चावचगुणा राघवाश्रयजाः कथाः ॥
तदसुकरमथाभिवीक्ष्य हृष्टाः प्रियसुहृदो युधि लक्ष्मणस्य कर्म ।
परममुपलभन्मनः प्रहर्षं विनिहतमिन्द्ररिपुं निशम्य देवाः ॥ ९८

इति श्रीमद्युद्धकाण्डे एकनवतितमस्सर्गः ॥

---

## ॥ द्विनवतितमस्सर्गः ॥

रुधिरक्लिन्नगात्रस्तु लक्ष्मणश्शुभलक्षणः ।
बभूव हृष्टस्तं हत्वा शक्रजेतारमाहवे ॥ १
ततस्स जाम्बवन्तं च हनुमन्तं च वीर्यवान् ।
सन्निवर्त्य महातेजास्तांश्च सर्वान् वनौकसः ॥ २
आजगाम ततस्तीव्रं यत्र सुग्रीवराघवौ ।
विभीषणमवष्टभ्य हनूमन्तं च लक्ष्मणः ॥ ३
ततो राममभिक्रम्य सौमित्रिरभिवाद्य च ।
तस्थौ भ्रातृसमीपस्थ इन्द्रस्येव बृहस्पतिः ॥ ४
निष्टनन्निव चागम्य राघवाय महात्मने ।
आचचक्षे तदा वीरो घोरमिन्द्रजितो वधम् ॥ ५
रावणेस्तु शिरश्छिन्नं लक्ष्मणेन महात्मना ।
न्यवेदयत रामाय तदा हृष्टो विभीषणः ॥ ६
श्रुत्वैतत्तु महावीर्यो लक्ष्मणेनेन्द्रजिद्वधम् ।
प्रहर्षमतुलं लेभे रामो वाक्यमुवाच ह ॥ ७
" साधु लक्ष्मण ! तुष्टोऽस्मि कर्मणा सुकृतं कृतम् ।
रावणेर्हि विनाशेन जितमित्युपधारय ॥ " ८
स तं शिरस्युपाघ्राय लक्ष्मणं लक्ष्मिवर्धनम् ।
लज्जमानं बलात्स्नेहादङ्कमारोप्य वीर्यवान् ॥ ९
उपवेश्य तमुत्सङ्गे परिष्वज्यावपीडितम् ।
भ्रातरं लक्ष्मणं स्निग्धं पुनः पुनरुदैक्षत ॥ १०
शल्यसम्पीडितं शस्तं निश्वसन्तं तु लक्ष्मणम् ।
रामस्तु दुःखसन्तप्तस्तदा निश्वसितो भृशम् ॥ ११

मूर्ध्नि चैनमुपाघ्राय भूयस्संस्पृश्य च त्वरन् ।
उवाच लक्ष्मणं वाक्यमाश्वास्य पुरुषर्षभः ॥ १२

"कृतं परमकल्याणं कर्म दुष्करकर्मणा ।
अद्य मन्ये हते पुत्रे रावणं निहतं युधि ॥ १३

अद्याहं विजयी शत्रौ हते तस्मिन् दुरात्मनि ।
रावणस्य नृशंसस्य दिष्टया वीर! त्वया रणे ॥ १४

छिन्नो हि दक्षिणो बाहुस्सहि तस्य व्यपाश्रयः ।
विभीषणहनूमद्भ्यां कृतं कर्म महद्रणे ॥ १५

अहोरात्रैस्त्रिभिर्वीरः कथंचिद्विनिपातितः ।
निरमित्रः कृतोऽस्म्यद्य निर्यास्यति हि रावणः ॥ १६

बलव्यूहेन महता श्रुत्वा पुत्रं निपातितम् ।
तं पुत्रवधसन्तप्तं निर्यान्तं राक्षसाधिपम् ॥ १७

बलेनावृत्य महता निहनिष्यामि दुर्जयम् ।
त्वया लक्ष्मण! नाथेन सीता च पृथिवी च मे ॥ १८

न दुष्प्रापा हते त्वद्य शक्रजेतरि चाहवे ।"
स तं भ्रातरमाश्वास्य परिष्वज्य च राघवः ॥ १९

रामस्सुषेणं मुदितस्समाभाष्येदमब्रवीत् ।
"सशल्योऽयं महाप्राज्ञ सौमित्रिर्मित्रवत्सलः ॥ २०

यथा भवति सुस्वस्थस्तथा त्वं समुपाचर ।
विशल्यः क्रियतां क्षिप्रं सौमित्रिस्सविभीषणः ॥ २१

ऋक्षवानरसैन्यानां शूराणां द्रुमयोधिनाम् ।
ये चाप्यन्येऽत्र युध्यन्ति सशल्या व्रणिनस्तथा ॥ २२

तेऽपि सर्वे प्रयत्नेन क्रियन्तां सुखिनस्त्वया ।"
एवमुक्तस्तु रामेण महात्मा हरियूथपः ॥ २३
लक्ष्मणाय ददौ नस्तस्सुषेणः परमौषधिम् ।
स तस्या गन्धमाघ्राय विशल्यस्समपद्यत ॥ २४
तदा निर्वेदनश्चैव संरूढव्रण एव च ।
विभीषणमुखानां च सुहृदां राघवाज्ञया ॥ २५
सर्ववानरमुख्यानां चिकित्सां स तदाऽकरोत् ।
ततः प्रकृतिमापन्नो हृतशल्यो गतव्यथः ॥ २६
सौमित्रिर्मुदितस्तत्र क्षणेन विगतज्वरः ॥
तथैव रामः प्लवगाधिपस्तदा विभीषणश्चर्क्षपतिश्च जाम्बवान् ।
अवेक्ष्य सौमित्रिमरोगमुत्थितं मुदा ससैन्यास्सुचिरं जहर्षिरे ॥
अपूजयत्कर्म स लक्ष्मणस्य सुदुष्करं दाशरथिर्महात्मा ।
हृष्टा बभूवुर्युधि यूथपेन्द्रा निपातितं शक्रजितं निशम्य ॥ २८

इतिश्रीमद्युद्धकाण्डे द्विनवतितमस्सर्गः ॥

---

## ॥ त्रिनवतितमस्सर्गः ॥

ततः पौलस्त्य सचिवाश्श्रुत्वा चेन्द्रजितं हतम् ।
आचचक्षुरभिज्ञाय दशग्रीवाय सव्यथाः ॥ १
"युद्धे हतो महाराज लक्ष्मणेन तवात्मजः ।
विभीषणसहायेन मिषतां नो महाद्युतिः ॥ २
शूरश्शूरेण सङ्गम्य संयुगेष्वपराजितः ।
लक्ष्मणेन हतश्शूरः पुत्रस्तव महेन्द्रजित् ॥ ३

गतस्स परमान्लोकान् शरैस्सन्ताप्य लक्ष्मणम् ।"
स तं प्रतिभयं श्रुत्वा वधं पुत्रस्य दारुणम् ॥ ४

घोरमिन्द्रजितस्संख्ये कश्मलं चाविशन्महत् ।
उपलभ्य चिरात्संज्ञां राजा राक्षसपुङ्गवः ॥ ५

पुत्रशोकार्दितो दीनो विललापाकुलेन्द्रियः ।
"हा राक्षसचमूमुख्य ! मम वत्स महारथ ! ॥ ६

जित्वेन्द्रं कथमद्य त्वं लक्ष्मणस्य वशं गतः ।
ननु त्वमिषुभिः क्रुद्धो भिन्द्याः कालान्तकावपि ॥ ७

मन्दरस्यापि शृङ्गाणि किं पुनर्लक्ष्मणं युधि ।
अद्य वैवस्वतो राजा भूयो बहुमतो मम ॥ ८

येनाद्य त्वं महाबाहो ! संयुक्तः कालधर्मणा ।
एष पन्थास्सुयोधानां सर्वामरगणेष्वपि ॥ ९

यः कृते हन्यते भर्तुस्स पुमान् स्वर्गमृच्छति ।
अद्य देवगणास्सर्वे लोकपालास्तथर्षयः ॥ १०

हतमिन्द्रजितं श्रुत्वा सुखं स्वप्स्यन्ति निर्भयाः ।
अद्य लोकास्त्रयः कृत्स्नां पृथिवी च सकानना ॥ ११

एकेनेन्द्रजिता हीना शून्येव प्रतिभाति मे ।
अद्य नैर्ऋतकन्यानां श्रोष्याम्यन्तःपुरे रवम् ॥ १२

करेणुसङ्घस्य यथा निनादं गिरिगह्वरे ।
यौवराज्यं च लङ्कां च रक्षांसि च परन्तप ।
मातरं मां च भार्यां च क्व गतोऽसि विहाय नः ।
मम नाम त्वया वीर गतस्य यमसादनम् ॥ १४

प्रेतकार्याणि कार्याणि विपरीते हि वर्तसे ।
स त्वं जीवति सुग्रीवे राघवे च सलक्ष्मणे ॥ १५
मम शल्यमनुद्धृत्य क गतोऽसि विहाय नः ।"
एवमादि विलापार्तं रावणं राक्षसाधिपम् ॥ १६
आविवेश महान्कोपः पुत्रव्यसनसम्भवः ।
प्रकृत्या कोपनं ह्येनं पुत्रस्य पुनराधयः ॥ १७
दीप्तं सन्दीपयामासुर्घर्मेऽर्कमिव रश्मयः ।
ललाटे भ्रुकुटीभिश्च सङ्गताभिर्व्यरोचत ॥ १८
युगान्ते सह नक्रैस्तु महोर्मिभिरिवोदधिः ।
कोपाद्विजृम्भमाणस्य वक्त्राद्व्यक्तमभिज्वलन् ॥ १९
उत्पपात स धूमोऽग्निर्वृत्रस्य वदनादिव ।
सपुत्रवधसन्तप्तश्शूरः क्रोधवशं गतः ॥ २०
समीक्ष्य रावणो बुद्ध्या वैदेह्या रोचयद्वधम् ।
तस्य प्रकृत्या रक्ते च रक्ते क्रोधाग्निनापि च ॥ २१
रावणस्य महाघोरे दीप्ते नेत्रे बभूवतुः ।
घोरं प्रकृत्या रूपं तत्तस्य क्रोधाग्निमूर्छितम् ॥ २२
बभूव रूपं रुद्रस्य क्रुद्धस्येव दुरासदम् ।
तस्य क्रुद्धस्य नेत्राभ्यां प्रापतन्नास्रबिन्दवः ॥ २३
दीप्ताभ्यामिव दीपाभ्यां सार्चिषस्स्नेहबिन्दवः ।
दन्तान्विदशतस्तस्य श्रूयते दशनस्वनः ॥ २४
यन्त्रस्यावेष्ट्यमानस्य महतो दानवैरिव ।
कालाग्निरिव संक्रुद्धो यां यां दिशमवैक्षत ॥ २५

तस्यां तस्यां भयत्रस्ता राक्षसास्संविलिल्यिरे ।
तमन्तकमिव क्रुद्धं चराचरचिखादिषुम् ॥ २६

वीक्षमाणं दिशस्सर्वा राक्षसा नोपचक्रमुः ।
ततः परमसंक्रुद्धो रावणो राक्षसाधिपः ॥ २७

अब्रवीद्राक्षसां मध्ये संस्तम्भयितुमाहवे ।
"मया वर्षसहस्राणि चरित्वा दुश्चरं तपः ॥ २८

तेषु तेष्ववकाशेषु स्वयंभूः परितोषितः ॥
तस्यैव तपसोऽव्युष्ट्या प्रसादाच्च स्वयंभुवः ॥ २९

नासुरेभ्यो न देवेभ्यो भयं मम कदाचन ।
कवचं ब्रह्मदत्तं मे यदादित्यसमप्रभम् ॥ ३०

देवासुरविमर्देषु नभिन्नं वज्रशक्तिभिः ।
तेन मामद्य संयुक्तं रथस्थमिह संयुगे ॥ ३१

प्रतियात्कोऽद्य मामाजौ साक्षादपि पुरन्दरः ।
यत्तदाभिप्रसन्नेन सशरं कार्मुकं महत् ॥ ३२

देवासुरविमर्देषु मम दत्तं स्वयंभुवा ।
अद्य तूर्यशतैर्भीमं धनुरुत्थाप्यतां मम ॥ ३३

रामलक्ष्मणयोरेव वधाय परमाहवे ।"
सपुत्रवधसन्तप्तश्शूरः क्रोधवशं गतः ॥ ३४

समीक्ष्य रावणो बुद्ध्या सीतां हन्तुं व्यवस्यत ।
प्रत्यवेक्ष्य तु ताम्राक्षस्सुघोरो घोरदर्शनः ॥ ३५

दीनो दीनस्वरान् सर्वांस्तानुवाच निशाचरान् ।
"मायया मम वत्सेन वञ्चनार्थं वनौकसाम् ॥ ३६

किंचिदेव हृतं तत्र सीतेयमिति दर्शितम् ।
तदिदं तथ्यमेवाहं करिष्ये प्रियमात्मनः ॥ ३७

वैदेहीं नाशयिष्यामि क्षत्रबन्धुमनुव्रताम् ।"
इत्येवमुक्त्वा सचिवान्खड्गमाशु परामृशत् ॥ ३८

उद्धृत्य गुणसम्पन्नं विमलाम्बरवर्चसम् ।
निष्पपात सवेगेन सभार्यस्सचिवैर्वृतः ॥ ३९

रावणः पुत्रशोकेन भृशमाकुलचेतनः ।
संक्रुद्धः खड्गमादाय सहसा यत्र मैथिली ॥ ४०

व्रजन्तं राक्षसं प्रेक्ष्य सिंहनादं प्रचुक्रुशुः ।
ऊचुश्चान्योन्यमाश्लिष्य संक्रुद्धं प्रेक्ष्य राक्षसाः ॥ ४१

अद्यैनं तावुभौ दृष्ट्वा भ्रातरौ प्रव्यथिष्यतः ।
लोकपाला हि चत्वारः क्रुद्धेनानेन निर्जिताः ॥ ४२

बहवश्शत्रवश्चान्ये संयुगेषु निपातिताः ।
त्रिषु लोकेषु रत्नानि भुङ्क्ते चाहृत्य रावणः ॥ ४३

विक्रमे च बले चैव नास्त्यस्य सदृशो भुवि ।
तेषां सङ्कल्पमानानामशोकवनिकां गताम् ॥ ४४

अभिदुद्राव वैदेहीं रावणः क्रोधमूर्छितः ।
वार्यमाणस्सुसंक्रुद्धस्सुहृद्भिर्हितबुद्धिभिः ॥ ४५

अभ्यधावत संक्रुद्धः खे ग्रहो रोहिणीमिव ।
मैथिली रक्ष्यमाणा तु राक्षसीभिरनिन्दिता ॥ ४६

ददर्श राक्षसं क्रुद्धं निस्त्रिंशवरधारिणम् ।
तं निशाम्य सनिस्त्रिंशं व्यथिता जनकात्मजा ॥ ४७

निवार्यमाणं बहुशस्सुहृद्भिरनुवर्तिनम् ।
सीता दुःखसमाविष्टा विलपन्तीदमब्रवीत् ॥ ४८

" यथायं मामभिक्रुद्धस्समभिद्रवति स्वयम् ।
वधिष्यति सनाथां मामनाथामिव दुर्मतिः ॥ ४९

बहुशश्चोदयामास भर्तारं मामनुव्रताम् ।
भार्या भव रमस्वेति प्रत्याख्यातो ध्रुवं मया ॥ ५०

सोऽयं ममानुपस्थाने व्यक्तं नैराश्यमागतः ।
क्रोधमोहसमाविष्टो निहन्तुं मां समुद्यतः ॥ ५१

अथ वा तौ नरव्याघ्रौ भ्रातरौ रामलक्ष्मणौ ।
मन्निमित्तमनार्येण समरेऽद्य निपातितौ ॥ ५२

अहो धिङ्मन्निमित्तोऽयं विनाशो राजपुत्रयोः ।
अथवा पुत्रशोकेन अहत्वा रामलक्ष्मणौ ॥ ५३

विधमिष्यति मां रौद्रो राक्षसः पापनिश्चयः ।
हनूमतोऽपि यद्वाक्यं न कृतं क्षुद्रया मया ॥ ५४

यद्यहं तस्य पृष्ठेन तदा यायामनिन्दिता ।
नाद्यैवमनुशोचेयं भर्तुरङ्कगता सती ॥ ५५

मन्ये तु हृदयं तस्याः कौसल्यायाः फलिष्यति ।
एकपुत्रा यदा पुत्रं विनष्टं श्रोष्यते युधि ॥ ५६

सा हि जन्म च बाल्यं च यौवनं च महात्मनः ।
धर्मकार्याणि रूपं च रुदती संस्मरिष्यति ॥ ५७

निराशा निहते पुत्रे दत्त्वा श्राद्धमचेतना ।
अग्निमारोक्ष्यते नूनमपो वापि प्रवेक्ष्यति ॥ ५८

धिगस्तु कुब्जामसतीं मन्थरां पापनिश्चयाम् ।
यन्निमित्तमिदं दुःखं कौसल्या प्रतिपत्स्यते ॥" ५९
इत्येवं मैथिलीं दृष्ट्वा विलपन्तीं तपस्विनीम् ।
रोहिणीमिव चन्द्रेण विनाग्रहवशं गताम् ॥ ६०
एतस्मिन्नन्तरे तस्य अमात्यो बुद्धिमान् शुचिः ।
सुपार्श्वो नाम मेधावी राक्षसो राक्षसेश्वरम् ॥ ६१
निवार्यमाणं सचिवैरिदं वचनमब्रवीत् ।
"कथं नाम दशग्रीव! साक्षाद्वैश्रवणानुज! ॥ ६२
हन्तुमिच्छसि वैदेहीं क्रोधाद्धर्ममपास्य हि ।
वेदविद्याव्रतस्नातस्स्वकर्मनिरतस्सदा ॥ ६३
स्त्रियाः कस्माद्वधं वीर मन्यसे राक्षसेश्वर!
मैथिलीं रूपसम्पन्नां प्रत्यवेक्षस्व पार्थिव ॥ ६४
त्वमेव तु सहास्माभी राघवे क्रोधमुत्सृज ।
अभ्युत्थानं त्वमद्यैव कृष्णपक्षचतुर्दशीम् ॥ ६५
कृत्वा निर्याह्यमावास्यां विजयाय बलैर्वृतः ।
शूरो धीमान्रथी खड्गी रथप्रवरमास्थितः ॥ ६६
हत्वा दाशरथिं रामं भवान्प्राप्स्यति मैथिलीम् । "
स तद्दुरात्मा सुहृदा निवेदितं वचस्सुधर्म्यं प्रतिगृह्य रावणः ।
गृहं जगामाथ ततश्च वीर्यवान्पुनस्सभां च प्रययौ सुहृद्वृतः ॥ ६७

इति श्रीमद्युद्धकाण्डे त्रिनवतितमस्सर्गः ॥

---

## ॥ चतुर्नवतितमस्सर्गः ॥

स प्रविश्य सभां राजा दीनः परमदुःखितः ।
निषसादासने मुख्ये सिंहः क्रुद्ध इव श्वसन् ॥ १

अब्रवीच्च स तान्सर्वान् बलमुख्यान्महाबलः ।
रावणः प्राञ्जलिर्वाक्यं पुत्रव्यसनकर्शितः ॥ २

" सर्वे भवन्तस्सर्वेण हस्त्यश्वेन समावृताः ।
निर्यान्तु रथसङ्घैश्च पादातैश्चोपशोभिताः ॥ ३

एकं रामं परिक्षिप्य समरे हन्तुमर्हथ ।
वर्षन्तश्शरवर्षेण प्रावृट्काल इवाम्बुदाः ॥ ४

अथवाऽहं शरैस्तीक्ष्णैर्भिन्नगात्रं महारणे ।
भवद्भिश्श्वो निहन्तास्मि रामं लोकस्य पश्यतः ॥" ५

इत्येतद्राक्षसेन्द्रस्य वाक्यमादाय राक्षसाः ।
निर्ययुस्ते रथैश्शीघ्रैर्नानानीकैस्सुसंवृताः ॥ ६

परिघान्पट्टसांश्चैव शरखड्गपरश्वथान् ।
शरीरान्तकरान् सर्वे चिक्षिपुर्वानरान्प्रति ॥ ७

वानराश्च द्रुमान् शैलान्राक्षसान्प्रतिचिक्षिपुः ।
स सङ्ग्रामो महान् भीमस्सूर्यस्योदयनं प्रति ॥ ८

रक्षसां वानराणां च तुमुलस्समपद्यत ।
ते गदाभिर्विचित्राभिः प्रासैः खड्गैः परश्वथैः ॥ ९

अन्योन्यं समरे जघ्नुस्तदा वानरराक्षसाः ।
एवं प्रवृत्ते सङ्ग्रामे ह्युद्भूतं सुमहद्रजः ॥ १०

रक्षसां वानराणां च शान्तं शोणितविस्रवैः ।
मातङ्गरथकूलाश्च वाजिमत्स्याध्वजद्रुमाः ॥ ११

शरीरसङ्घाटवहाः प्रसस्रुश्शोणितापगाः ।
ततस्ते वानरास्सर्वे शोणितौघपरिप्लुताः ॥ १२

ध्वजवर्मरथानश्वान्नानाप्रहरणानि च ।
आप्लुत्याप्लुत्य समरे राक्षसानां बभञ्जिरे ॥ १३

केशान्कर्णललाटांश्च नासिकाश्च प्लवङ्गमाः ।
रक्षसां दशनैस्तीक्ष्णैर्नखैश्चापि व्यकर्तयन् ॥ १४

एकैकं राक्षसं सङ्ख्ये शतं वानरयूथपाः ।
अभ्यधावन्त फलिनं वृक्षं शकुनयो यथा ॥ १५

तथा गदाभिर्गुर्वीभिः प्रासैः खड्गैः परश्वधैः ।
निजघ्नुर्वानरान्घोरान् राक्षसाः पर्वतोपमाः ॥ १६

राक्षसैर्वध्यमानानां वानराणां महाचमूः ।
शरण्यं शरणं याता रामं दशरथात्मजम् ॥ १७

ततो रामो महातेजा धनुरादाय वीर्यवान् ।
प्रविश्य राक्षसं सैन्यं शरवर्षं ववर्ष ह ॥ १८

प्रविष्टं तु तदा रामं मेघास्सूर्यमिवाम्बरे ।
नाभिजग्मुर्महाघोरं निर्दहन्तं शराग्निना ॥ १९

कृतान्येव सुघोराणि रामेण रजनीचराः ।
रणे रामस्य ददृशुः कर्माण्यसुकराणि च ॥ २०

चालयन्तं महानीकं विधमन्तं महारथान् ।
ददृशुस्ते न वै रामं वातं वनगतं यथा ॥ २१

छिन्नं भिन्नं शरैर्दग्धं प्रभग्नं शस्त्रपीडितम् ।
बलं रामेण ददृशुर्न रामं शीघ्रकारिणम् ॥ २२

प्रहरन्तं शरीरेषु न ते पश्यन्ति लाघवम् ।
इन्द्रियार्थेषु तिष्ठन्तं भूतात्मानमिव प्रजाः ॥ २३

" एष हन्ति गजानीकमेष हन्ति महारथान् ।
एष हन्ति शरैस्तीक्ष्णैः पदातीन्वाजिभिस्सह ॥" २४

इति ते राक्षसास्सर्वे रामस्य सदृशान्रणे ।
अन्योन्यं कुपिता जघ्नुस्सादृश्याद्राघवस्य ते ॥ २५

न ते ददृशिरे रामं दहन्तमरिवाहिनीम् ।
मोहिताः परमास्त्रेण गान्धर्वेण महात्मना ॥ २६

ते तु रामसहस्राणि रणे पश्यन्ति राक्षसाः ।
पुनः पश्यन्ति काकुत्स्थमेकमेव महाहवे ॥ २७

भ्रमन्तीं काञ्चनीं कोटिं कार्मुकस्य महात्मनः ।
अलातचक्रप्रतिमां ददृशुस्तेन राघवम् ॥ २८

शरीरनाभिसत्त्वार्चिश्शरारं नेमिकार्मुकं ।
ज्याघोषतलनिर्घोषं तेजोबुद्धिगुणप्रभम् ॥ २९

दिव्यास्त्रगुणपर्यन्तं निघ्नन्तं युधि राक्षसान् ।
ददृशू रामचक्रं तत्कालचक्रमिव प्रजाः ॥ ३०

अनीकं दशसाहस्रं रथानां वातरंहसाम् ।
अष्टादशसहस्राणि कुञ्जराणां तरस्विनाम् ॥ ३१

चतुर्दशसहस्राणि सारोहाणां च वाजिनाम् ।
पूर्णे शतसहस्रे द्वे राक्षसानां पदातिनाम् ॥ ३२

दिवसस्याष्टमे भागे शरैरग्निशिखोपमैः ।
हतान्येकेन रामेण रक्षसां कामरूपिणाम् ॥ ३३

ते हताश्वा हतरथाश्शान्ता विमथितध्वजाः ।
अभिपेतुः पुरीं लङ्कां हतशेषा निशाचराः ॥ ३४

हतैर्गजपदात्यश्वैस्तद्बभूव रणाजिरम् ।
आक्रीडमिव रुद्रस्य क्रुद्धस्य सुमहात्मनः ॥ ३५

ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
'साधु साध्' विति रामस्य तत्कर्म समपूजयन् ॥ ३६

अब्रवीच्च तदा रामस्सुग्रीवं प्रत्यनन्तरम् ।
विभीषणं च धर्मात्मा हनूमन्तं च वानरम् ॥ ३७

जाम्बवन्तं हरिश्रेष्ठं मैन्दं द्विविदमेव च ।
एतदस्त्रबलं दिव्यं मम वा त्र्यम्बकस्य वा ॥ ३८

निहत्य तां राक्षसवाहिनीं तु रामस्तदा शक्रसमो महात्मा ।
अस्त्रेषु शस्त्रेषु जितक्लमश्च संस्तूयते देवगणैः प्रहृष्टैः ॥ ३९

इति श्रीमद्युद्धकाण्डे चतुर्नवतितमस्सर्गः ॥

---

## ॥ पञ्चनवतितमस्सर्गः ॥

तानि तानि सहस्राणि सारोहाणां च वाजिनाम् ।
रथानां त्वग्निवर्णानां सध्वजानां सहस्रशः ॥ १

राक्षसानां सहस्राणि गदापरिघयोधिनाम् ।
काञ्चनध्वजचित्राणां शूराणां कामरूपिणाम् ॥ २

निहतानि शरैस्तीक्ष्णैस्तप्तकाञ्चनभूषणैः ।
रावणेन प्रयुक्तानि रामेणाक्लिष्टकर्मणा ॥ ३

दृष्ट्वा श्रुत्वा च सम्भ्रान्ता हतशेषा निशाचराः ।
राक्षसीश्च समागम्य दीनाश्चिन्तापरिप्लुताः ॥ ४

विधवा हतपुत्राश्च क्रोशन्त्यो हतबान्धवाः ।
राक्षस्यस्सह सङ्गम्य दुःखार्ताः पर्यदेवयन् ॥ ५

"कथं शूर्पणखा वृद्धा कराला निर्णतोदरी ।
आससाद वने रामं कन्दर्पमिव रूपिणम् ॥ ६

सुकुमारं महासत्त्वं सर्वभूतहिते रतम् ।
तं दृष्ट्वा लोकनिन्द्या सा हीनरूपा प्रकामिता ॥ ७

कथं सर्वगुणैर्हीना गुणवन्तं महौजसम् ।
सुमुखं दुर्मुखी रामं कामयामास राक्षसी ॥ ८

जनस्यास्याल्पभाग्यत्वाद्वलिनी श्वेतमूर्धजा ।
अकार्यमपहास्यं च सर्वलोकविगर्हितम् ॥ ९

राक्षसानां विनाशाय दूषणस्य खरस्य च ।
चकाराप्रतिरूपा सा राघवस्य प्रधर्षणम् ॥ १०

तन्निमित्तमिदं वैरं रावणेन कृतं महत् ।
वधाय नीता सा सीता दशग्रीवेण रक्षसा ॥ ११

न च सीतां दशग्रीवः प्राप्नोति जनकात्मजम् ।
बद्धं बलवता वैरमक्षयं राघवेण च ॥ १२

वैदेहीं प्रार्थयानं तं विराधं प्रेक्ष्य राक्षसम् ।
हतमेकेन रामेण पर्याप्तं तन्निदर्शनम् ॥ १३

चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ।
निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ १४

खरश्च निहतस्संख्ये दूषणस्त्रिशिरास्तथा ।
शरैरादित्यसङ्काशैः पर्याप्तं तन्निदर्शनम् ॥ १५

हतो योजनबाहुश्च कबन्धो रुधिराशनः ।
क्रोधान्नादं नदन् सोऽथ पर्याप्तं तन्निदर्शनम् ॥ १६

जघान बलिनं रामस्सहस्रनयनात्मजम् ।
वालिनं मेरुसङ्काशं पर्याप्तं तन्निदर्शनम् ॥ १७

ऋश्यमूके वसन् शैले दीनो भग्नमनोरथः ।
सुग्रीवस्थापितो राज्ये पर्याप्तं तन्निदर्शनम् ॥ १८

धर्मार्थसहितं वाक्यं सर्वेषां रक्षसां हितम् ।
युक्तं विभीषणेनोक्तं मोहात्तस्य न रोचते ॥ १९

विभीषणवचः कुर्याद्यदिस्म धनदानुजः ।
श्मशानभूता दुःखार्ता नेयं लङ्कापुरी भवेत् ॥ २०

कुम्भकर्णं हतं श्रुत्वा राघवेण महाबलम् ।
अतिकायं च दुर्धर्षं लक्ष्मणेन हतं पुनः ॥ २१

प्रियं चेन्द्रजितं पुत्रं रावणो नावबुध्यते ।
मम पुत्रो मम भ्राता मम भर्ता रणे हतः ॥" २२

इत्येवं श्रूयते शब्दो राक्षसीनां कुले कुले ।
रथाश्चाश्वाश्च नागाश्च हताश्शतसहस्रशः ॥ २३

रणे रामेण शूरेण राक्षसाश्च पदातयः ।
रुद्रो वा यदि वा विष्णुर्महेन्द्रो वा शतक्रतुः ॥ २४

हन्ति नो रामरूपेण यदि वा स्वयमन्तकः ।
हतप्रवीरा रामेण निराशा जीविते वयम् ॥ २५

अपश्यन्तो भयस्यान्तमनाथा विलपामहे ।
रामहस्ताद्दशग्रीवश्शूरो दत्तमहावरः ॥ २६

इदं भयं महाघोरमुत्पन्नं नावबुध्यते ।
न देवा न च गन्धर्वा न पिशाचा न राक्षसाः ॥ २७

उपसृष्टं परित्रातुं शक्ता रामेण संयुगे ।
उत्पाताश्चापि दृश्यन्ते रावणस्य रणे रणे ॥ २८

कथयिष्यन्ति रामेण रावणस्य निबर्हणम् ।
पितामहेन प्रीतेन देवदानवराक्षसैः ॥ २९

रावणस्याभयं दत्तं मानुषेभ्यो न याचितम् ।
तदिदं मानुषं मन्ये प्राप्तं निस्संशयं भयम् ॥ ३०

जीवितान्तकरं घोरं रक्षसां रावणस्य च ।
पीड्यमानास्तु बलिना वरदानेन रक्षसा ॥ ३१

दीप्तैस्तपोभिर्विबुधाः पितामहमपूजयन् ।
देवतानां हितार्थाय महात्मा वै पितामहः ॥ ३२

उवाच देवतास्सर्वा इदं तुष्टा महद्वचः ।
"अद्य प्रभृति लोकांस्त्रीन् सर्वे दानवराक्षसाः ॥ ३३

भयेन प्रावृता नित्यं विचरिष्यन्ति शाश्वतम् ।
दैवतैस्तु समागम्य सर्वैश्चेन्द्रपुरोगमैः ॥ ३४

वृषध्वजस्त्रिपुरहा महादेवः प्रसादितः ।
प्रसन्नस्तु महादेवो देवानेतद्वचोऽब्रवीत् ॥ ३५

"उत्पत्स्यति हितार्थं वो नारी रक्षः क्षयावहा ।"
एषा देवैः प्रयुक्ता तु क्षुद्यथा दानवान्पुरा ॥ ३६

भक्षयिष्यति नस्सीता राक्षसघ्नी सरावणान् ।
रावणस्यापनीतेन दुर्विनीतस्य दुर्मतेः ॥ ३७

अयं निष्ठानको घोरश्शोकेन समभिप्लुतः ।
तं न पश्यामहे लोके यो नश्शरणदो भवेत् ॥ ३८

राघवेणोपसृष्टानां कालेनेव युगक्षये ।
नास्ति नश्शरणं कश्चिद्भये महति तिष्ठताम् ॥ ३९

दवाग्निवेष्टितानां हि करेणूनां यथा वने ।
प्राप्तकालं कृतं तेन पौलस्त्येन महात्मना ॥ ४०

यत एव भयं दृष्टं तमेव शरणं गतः ॥
इतीव सर्वा रजनीचरस्त्रियः परस्परं संपरिरभ्य बाहुभिः।
विषेदुरार्ता भयभारपीडिता विनेदुरुच्चैश्च तदा सुदारुणम् ॥ ४१

इति श्रीमद्युद्धकाण्डे पञ्चनवतितमस्सर्गः ॥

---

## ॥ षण्णवतितमस्सर्गः ॥

आर्तानां राक्षसानां तु लङ्कायां वै कुलेकुले ।
रावणः करुणं शब्दं शुश्राव परिदेवितम् ॥ १

स तु दीर्घं विनिःश्वस्य मुहूर्तं ध्यानमास्थितः ।
बभूव परमक्रुद्धो रावणो भीमदर्शनः ॥ २

सन्दश्य दशनैरोष्ठं क्रोधसंरक्तलोचनः ।
राक्षसैरपि दुर्दर्शः कालाग्निरिव मूर्छितः ॥ ३

उवाच च समीपस्थान् राक्षसान्राक्षसेश्वरः ।
भयाऽव्यक्तकथांस्तत्र निर्दहन्निव चक्षुषा ॥ ४

महोदरं महापार्श्वं विरूपाक्षं च राक्षसम् ।
"शीघ्रं वदत सैन्यानि 'निर्याते' ति ममऽऽज्ञया ॥ ५

तस्य तद्वचनं श्रुत्वा राक्षसास्ते भयार्दिताः ।
चोदयामासुरव्यग्रान् राक्षसांस्तान्नृपाज्ञया ॥ ६

ते तु सर्वे 'तथे' त्युक्त्वा राक्षसा घोरदर्शनाः ।
कृतस्वस्त्ययनास्सर्वे रणायाभिमुखा ययुः ॥ ७

प्रतिपूज्य यथान्यायं रावणं ते निशाचराः ।
तस्थुः प्राञ्जलयस्सर्वे भर्तुर्विजयकाङ्क्षिणः ॥ ८

अथोवाच प्रहस्यैतान् रावणः क्रोधमूर्छितः ।
महोदरमहापार्श्वौ विरूपाक्षं च राक्षसम् ॥ ९

अद्य बाणैर्धनुर्मुक्तैर्युगान्तादित्यसन्निभैः ।
राघवं लक्ष्मणं चैव नेष्यामि यमसादनम् ॥ १०

खरस्य कुम्भकर्णस्य प्रहस्तेन्द्रजितोस्तथा ।
करिष्यामि प्रतीकारमद्य शत्रुवधादहम् ॥ ११

नैवान्तरिक्षं न दिशो न नद्यो नापि सागराः ।
प्रकाशत्वं गमिष्यन्ति मद्बाणजलदावृताः ॥ १२

अद्य वानरमुख्यानां तानि यूथानि भागशः ।
धनुषा शरजालेन विधमिष्यामि पत्रिणा ॥ १३

अद्य वानरसैन्यानि रथेन पवनौजसा ।
धनुस्समुद्रादुद्भूतैर्मथिष्यामि शरोर्मिभिः ॥ १४

आकोशपद्मवक्त्राणि पद्मकेसरवर्चसाम् ।
अद्य व्यूहतटाकानि गजवत्प्रमथाम्यहम् ॥ १५

सशरैरद्य वदनैस्संख्ये वानरयूथपाः ।
मण्डयिष्यन्ति वसुधां सनालैरिव पङ्कजैः ॥ १६

अद्य युद्धप्रचण्डानां हरीणां द्रुमयोधिनाम् ।
मुक्तेनैकेषुणा युद्धे भेत्स्यामि च शतं शतम् ॥ १७

हता भर्ता हता भ्राता यासां च तनया हताः ।
वधेनाद्य रिपोस्तासां करोम्यास्रप्रमार्जनम् ॥ १८

अद्य मद्बाणनिर्भिन्नैः प्रकीर्णैर्गतचेतनैः ।
करोमि वानरैर्युद्धे यत्नावेक्ष्यतलां महीम् ॥ १९

अद्य गोमायवो गृध्रा ये च मांसाशिनोऽपरे ।
सर्वांस्तांस्तर्पयिष्यामि शत्रुमांसैश्शरार्दितैः ॥ २०

कल्प्यतां मे रथश्शीघ्रं क्षिप्रमानीयतां धनुः ।
अनुप्रयान्तु मां सर्वे येऽवशिष्टा निशाचराः ॥" २१

तस्य तद्वचनं श्रुत्वा महापार्श्वोऽब्रवीद्वचः ।
बलाध्यक्षान् स्थितांस्तत्र 'बलं सन्त्वर्यता'मिति ॥ २२

बलाध्यक्षा सुसंरब्धा राक्षसास्तान्गृहाद्गृहात् ।
चोदयन्तः परिययुर्लङ्कां लघुपराक्रमाः ॥ २३

ततो मुहूर्तान्निष्पेतू राक्षसा भीमदर्शनाः ।
नर्दन्तो भीमवदना नानाप्रहरणैर्भुजैः ॥ २४

असिभिः पट्टिसैश्शूलैर्गदाभिर्मुसलैर्हलैः ।
शक्तिभिस्तीक्ष्णधाराभिर्महद्भिः कूटमुद्गरैः ॥ २५

यष्टिभिर्विमलैश्चक्रैर्निशितैश्च परश्वधैः ।
भिण्डिवालैश्शतघ्नीभिरन्यैश्चापि वरायुधैः ॥ २६

अथानयद्बलाध्यक्षस्सत्वरो रावणाज्ञया ।
द्रुतं सूतसमायुक्तं युक्ताष्टतुरगं रथम् ॥ २७

आरुरोह रथं भीमो दीप्यमानं स्वतेजसा ।
ततः प्रयातस्सहसा राक्षसैर्बहुभिर्वृतः ॥ २८

रावणस्सत्त्वगाम्भीर्याद्दारयन्निव मेदिनीम् ।
रावणेनाभ्यनुज्ञातौ महापार्श्वमहोदरौ ॥ २९

विरूपाक्षश्च दुर्धर्षो रथानारुरुहुस्तदा ।
ते तु हृष्टा विनर्दन्तो भिन्दन्तइव मेदिनीम् ॥ ३०

नादं घोरं विमुञ्चन्तो निर्ययुर्जयकाङ्क्षिणः ।
ततो युद्धाय तेजस्वी रक्षोगणबलैर्वृतः ॥ ३१

निर्ययावुद्यतधनुः कालान्तकयमोपमः ।
ततः प्रजवनाश्वेन रथेन स महारथः ॥ ३२

द्वारेण निर्ययौ तेन यत्र तौ रामलक्ष्मणौ ।
ततो नष्टप्रभस्सूर्यो दिशश्च तिमिरावृताः ॥ ३३

द्विजाश्च नेदुर्घोराश्च संचचालेव मेदिनी ।
ववर्ष रुधिरं देवश्चस्खलुस्तुरगाः पथि ॥ ३४

ध्वजाग्रे न्यपतद्गृध्रो विनेदुश्चाशिवं शिवाः ।
नयनं चास्फुरद्वामं सव्यो बाहुरकम्पत ॥ ३५

विवर्णवदनं चासीत्किञ्चिदभ्रश्यत स्वरः ।
ततो निष्पततो युद्धे दशग्रीवस्य रक्षसः ॥ ३६

रणे निधनशंसीनि रूपाण्येतानि जज्ञिरे ।
अन्तरिक्षात्पपातोल्का निर्घातसमनिस्वना ॥ ३७

विनेदुरशिवा गृध्रा वायसैरनुनादिताः ।
एतानचिन्तयन्घोरानुत्पातान् समुपस्थितान् ॥ ३८

निर्ययौ रावणो मोहाद्वधार्थी कालचोदितः ।
तेषां तु रथघोषेण राक्षसानां महात्मनाम् ॥ ३९

वानराणामपि चमूर्युद्धायैवाभ्यवर्तत ।
तेषां तु तुमुलं युद्धं बभूव कपिरक्षसाम् ॥ ४०

अन्योन्यमाह्वयानानां क्रुद्धानां जयमिच्छताम् ।
ततः क्रुद्धो दशग्रीवश्शरैः काञ्चनभूषणैः ॥ ४१

वानराणामनीकेषु चकार कदनं महत् ।
निकृत्तशिरसः केचिद्रावणेन वलीमुखाः ॥ ४२

केचिद्विच्छिन्नहृदयाः केचिच्छ्रोत्रविवर्जिताः ।
निरुच्छ्वासा हताःकेचित्केचित्पार्श्वेषु दारिताः ॥ ४३

केचिद्विच्छिन्नशिरसः केचिच्चक्षुर्विवर्जिताः ।
दशाननः क्रोधविवृत्तनेत्रो यतो यतोऽभ्येति रथेन सङ्ख्ये ।
ततस्ततस्तस्य शरप्रवेगं सोढुं न शेकुर्हरिपुङ्गवास्ते ॥ ४४

इति श्रीमद्युद्धकाण्डे षण्णवतितमस्सर्गः ॥

---

## ॥ सप्तनवतितमस्सर्गः ॥

तथा तैः कृत्तगात्रैस्तु दशग्रीवेण मार्गणैः ।
बभूव वसुधा तत्र प्रकीर्णा हरिभिस्तदा ॥ १

रावणस्याप्रसह्यं तं शरसंपातमेकतः ।
न शेकुस्सहितुं दीप्तं पतङ्गा ज्वलनं यथा ॥ २

तेऽर्दिता निशितैर्बाणैः क्रोशन्तो विप्रदुद्रुवुः ।
पावकार्चिस्समाविष्टा दह्यमाना यथा गजाः ॥ ३

प्लवङ्गानामनीकानि महाभ्राणीव मारुतः ।
स ययौ समरे तस्मिन्विधमन्रावणश्शरैः ॥ ४

कदनं तरसा कृत्वा राक्षसेन्द्रो वनौकसाम् ।
आससाद ततो युद्धे राघवं त्वरितस्तदा ॥ ५

सुग्रीवस्तान्कपीन्दृष्ट्वा भग्नान्विद्रवतो रणे ।
गुल्मे सुषेणं निक्षिप्य चक्रे युद्धेऽद्भुतं मनः ॥ ६

आत्मनस्सदृशं वीरस्स तं निक्षिप्य वानरम् ।
सुग्रीवोऽभिमुखश्शत्रुं प्रतस्थे पादपायुधः ॥ ७

पार्श्वतः पृष्ठतश्चास्य सर्वे यूथाधिपास्स्वयम् ।
अनुजह्रुर्महाशैलान् विविधांश्च महाद्रुमान् ॥ ८

स नदन् युधि सुग्रीवस्स्वरेण महता महान् ।
पातयन्विविधांश्चान्यान्जगामोत्तमराक्षसान् ॥ ९

ममन्थ च महाकायान् राक्षसान्वानरेश्वरः ।
युगान्तसमये वायुः प्रवृद्धानगमानिव ॥ १०

राक्षसानामनीकेषु शैलवर्षं ववर्ष ह ।
अश्मवर्षं यथा मेघः पक्षिसङ्घेषु कानने ॥ ११

कपिराजविमुक्तैस्तैश्शैलवर्षैस्तु राक्षसाः ।
विकीर्णशिरसःपेतुर्निकृत्ता इव पर्वताः ॥ १२

अथ संक्षीयमाणेषु राक्षसेषु समन्ततः ।
सुग्रीवेण प्रभग्नेषु पतत्सु निनदत्सु च ॥ १३

विरूपाक्षस्स्वकं नाम धन्वी विश्राव्य राक्षसः ।
रथादाप्लुत्य दुर्धर्षो गजस्कन्धमुपारुहत् ॥ १४

स तं द्विरदमारुह्य विरूपाक्षो महारथः ।
विनदन्भीमनिर्ह्रादं वानरानभ्यधावत ॥ १५

सुग्रीवे स शरान्घोरान्विससर्ज चमूमुखे ।
स्थापयामास चोद्विग्नान्राक्षसान् संप्रहर्षयन् ॥ १६

स तु विद्धश्शितैर्बाणैः कपीन्द्रस्तेन रक्षसा ।
चुक्रोध च महाक्रोधो वधे चास्य मनो दधे ॥ १७

ततः पादपमुद्धृत्य शूरस्सम्प्रधनो हरिः ।
अभिपत्य जघानास्य प्रमुखे तु महागजम् ॥ १८

स तु प्रहाराभिहतस्सुग्रीवेण महागजः ।
अपासर्पद्धनुर्मात्रं निषसाद ननाद च ॥ १९

गजात्तु मथितात्तूर्णमपक्रम्य स वीर्यवान् ।
राक्षसोऽभिमुखश्शत्रुं प्रत्युद्गम्य ततः कपिम् ॥ २०

आर्षभं चर्म खड्गं च प्रगृह्य लघुविक्रमः ।
भर्त्सयन्निव सुग्रीवमाससाद व्यवस्थितम् ॥ २१

स हि तस्याभिसंक्रुद्धः प्रगृह्य विपुलां शिलाम् ।
विरूपाक्षाय चिक्षेप सुग्रीवो जलदोपमाम् ॥ २२

स तां शिलामापतन्तीं दृष्ट्वा राक्षसपुङ्गवः ।
अपक्रम्य सुविक्रान्तः खड्गेन प्राहरत्तदा ॥ २३

तेन खड्गप्रहारेण रक्षसा बलिना हतः ।
मुहूर्तमभवद्वीरो विसंज्ञ इव वानरः ॥ २४

स तदा सहसोत्पत्य राक्षसस्य महाहवे ।
मुष्टिं संवर्त्य वेगेन पातयामास वक्षसि ॥ २५

मुष्टिप्रहाराभिहतो विरूपाक्षो निशाचरः ।
तेन खड्गेन संक्रुद्धस्सुग्रीवस्य चमूमुखे ॥ २६

कवचं पातयामास पद्भ्यामभिहतोऽपतत् ।
स समुत्थाय पतितः कपिस्तस्य व्यसर्जयत् ॥ २७

तलप्रहारमशनेस्समानं भीमनिस्वनम् ।
तलप्रहारं तद्रक्षस्सुग्रीवेण समुद्यतम् ॥ २८

नैपुण्यान्मोचयित्वैनं मुष्टिनोरस्यताडयत् ।
ततस्सु ॱ ुद्धतरस्सुग्रीवो वानरेश्वरः ॥ २९

मोक्षितं चात्मनो दृष्ट्वा प्रहारं तेन रक्षसा ।
स ददर्शान्तरं तस्य विरूपाक्षस्य वानरः ॥ ३०

ततो न्यपातयत्क्रोधाच्छङ्खदेशे महत्तलम् ।
महेन्द्राशनिकल्पेन तलेनाभिहतः क्षितौ ॥ ३१

पपात रुधिरक्लिन्नश्शोणितं च समुद्वमन् ।
स्रोतोभ्यस्तु विरूपाक्षो जलं प्रस्रवणादिव ॥ ३२

विवृत्तनयनं क्रोधात्सफेनं रुधिराप्लुतम् ।
ददृशुस्ते विरूपाक्षं विरूपाक्षतरं कृतम् ॥ ३३

स्फुरन्तं परिवर्तन्तं पार्श्वेन रुधिरोक्षितम् ।
करुणं च विनर्दन्तं ददृशुः कपयो रिपुम् ॥ ३४

तथा तु तौ संयति संप्रयुक्तौ तरस्विनौ वानरराक्षसानाम् ।
बलार्णवौ सस्वनतुस्सुभीमं महार्णवौ द्वाविव भिन्नवेलौ ॥ ३५

विनाशितं प्रेक्ष्य विरूपनेत्रं महाबलं तं हरिपार्थिवेन ।
बलं समस्तं कपिराक्षसानामुन्मत्तगङ्गाप्रतिमं बभूव ॥ ३६

इति श्रीमद्युद्धकाण्डे सप्तनवतितमस्सर्गः ॥

---

## ॥ अष्टनवतितमस्सर्गः ॥

हन्यमाने बले तूर्णमन्योन्यं ते महामृधे ।
सरसीव महाघर्मे सोपक्षीणे बभूवतुः ॥ १
स्वबलस्य विघातेन विरूपाक्षवधेन च ।
बभूव द्विगुणं क्रुद्धो रावणो राक्षसाधिपः ॥ २
प्रक्षीणं तु बलं दृष्ट्वा वध्यमानं वलीमुखैः ।
बभूवास्य व्यथा युद्धे प्रेक्ष्य दैवविपर्ययम् ॥ ३
उवाच च समीपस्थं महोदरमरिन्दमम् ।
अस्मिन्काले महाबाहो ! जयाशा त्वयि मे स्थिता ॥ ४
जहि शत्रुचमूं वीर ! दर्शयाद्य पराक्रमम् ।
भर्तृपिण्डस्य कालोऽयं निर्देष्टुं साधु युध्यताम् ॥" ५
एवमुक्तस्तथेत्युक्त्वा राक्षसेन्द्रो महोदरः ।
प्रविवेशारिसेनां तां पतङ्ग इव पावकम् ॥ ६
ततस्स कदनं चक्रे वानराणां महाबलः ।
भर्तृवाक्येन तेजस्वी स्वेन वीर्येण चोदितः ॥ ७
वानराश्च महासत्त्वाः प्रगृह्य विपुलाश्शिलाः ।
प्रविश्यारिबलं भीमं जघ्नुस्ते रजनीचरान् ॥ ८
महोदरस्तु संक्रुद्धश्शरैः काञ्चनभूषणैः ।
चिच्छेद पाणिपादोरून्वानराणां महाहवे ॥ ९
ततस्ते वानरास्सर्वे राक्षसैरर्दिता भृशम् ।
दिशो दश द्रुताः केचित्केचित्सुग्रीवमाश्रिताः ॥ १०
प्रभग्नां समरे दृष्ट्वा वानराणां महाचमूम् ।
अभिदुद्राव सुग्रीवो महोदरमनन्तरम् ॥ ११

प्रगृह्य विपुलां घोरां महीधरसमां शिलाम् ।
चिक्षेप स महातेजास्तद्वधाय हरीश्वरः ॥ १२

तामापतन्तीं सहसा शिलां दृष्ट्वा महोदरः ।
असम्भ्रान्तस्ततो बाणैर्निर्बिभेद दुरासदाम् ॥ १३

रक्षसा तेन बाणौघैर्निकृत्ता सा सहस्रधा ।
निपपात शिला भूमौ गृध्रचक्रमिवाकुलम् ॥ १४

तां तु भिन्नां शिलां दृष्ट्वा सुग्रीवः क्रोधमूर्छितः ।
सालमुत्पाट्य चिक्षेप राक्षसे रणमूर्धनि ॥ १५

शरैश्च विददारैनं शूरः परपुरञ्जयः ।
स ददर्श ततः क्रुद्धः परिघं पतितं भुवि ॥ १६

आविध्य तु स तं दीप्तं परिघं तस्य दर्शयन् ।
परिघाग्रेण वेगेन जघानास्य हयोत्तमान् ॥ १७

तस्माद्धतहयाद्वीरस्सोऽवप्लुत्य महारथात् ।
गदां जग्राह संक्रुद्धो राक्षसोऽथ महोदरः ॥ १८

गदापरिघहस्तौ तौ युधि वीरौ समीयतुः ।
नर्दन्तौ गोवृषप्रख्यौ घनाविव सविद्युतौ ॥ १९

ततः क्रुद्धो गदां तस्मै चिक्षेप रजनीचरः ।
ज्वलन्तीं भास्कराभासां सुग्रीवाय महोदरः ॥ २०

गदां तां सुमहाघोरामापतन्तीं महाबलः ।
सुग्रीवो रोषताम्राक्षस्समुद्यम्य महाहवे ॥ २१

आजघान गदां तस्य परिघेण हरीश्वरः ।
पपात स गदाभिन्नः परिघस्तस्य भूतले ॥ २२

ततो जग्राह तेजस्वी सुग्रीवो वसुधातलात् ।
आयसं मुसलं घोरं सर्वतो हेममूषितम् ॥ २३

स तमुद्यम्य चिक्षेप सोऽप्यन्यां व्याक्षिपद्गदाम् ।
भिन्नावन्योन्यमासाद्य पेततुर्धरणीतले ॥ २४

ततो भग्नप्रहरणौ मुष्टिभ्यां तौ समीयतुः ।
तेजोबलसमाविष्टौ दीप्ताविव हुताशनौ ॥ २५

जघ्नतुस्तौ तदान्योन्यं नेदतुश्च पुनः पुनः ।
तलैश्चान्योन्यमाहत्य पेततुर्धरणीतले ॥ २६

उत्पेततुस्ततस्तूर्णं जघ्नतुश्च परस्परम् ।
भुजैश्चिक्षिपतुर्वीरावन्योन्यमपराजितौ ॥ २७

जग्मतुस्तौ श्रमं वीरौ बाहुयुद्धे परन्तपौ ।
आजहार तदा खड्गमदूरपरिवर्तिनम् ॥ २८

राक्षसश्चर्मणा सार्धं महावेगो महोदरः ।
तथैव च महाखड्गं चर्मणा पतितं सह ॥ २९

जग्राह वानरश्रेष्ठस्सुग्रीवो वेगवत्तरः ।
तौ तु रोषपरीताङ्गौ नर्दन्तावभ्यधावताम् ॥ ३०

उद्यतासी रणे हृष्टावुभौ शस्त्रविशारदौ ।
दक्षिणं मण्डलं चोभौ सुतूर्णं सम्परीयतुः ॥ ३१

अन्योन्यमभिसंक्रुद्धौ जये प्रणिहितावुभौ ।
स तु शूरो महावेगो वीर्यश्लाघी महोदरः ॥ ३२

महाचर्मणि तं खड्गं पातयामास दुर्मतिः ।
लग्नमुत्कर्षतः खड्गं खड्गेन कपिकुञ्जरः ॥ ३३

जहार सशिरस्त्राणं कुण्डलोपहितं शिरः ।
निकृत्तशिरसस्तस्य पतितस्य महीतले ॥ ३४
तद्बलं राक्षसेन्द्रस्य दृष्ट्वा तत्र न तिष्ठते ।
हत्वा तं वानरैस्सार्धं ननाद मुदितो हरिः ॥ ३५
चुक्रोध च दशग्रीवो बभौ हृष्टश्च राघवः ।
विषण्णवदनास्सर्वे राक्षसा दीनचेतसः ॥ ३६
विद्रवन्ति ततस्सर्वे भयवित्रस्तचेतसः ।
महोदरं तं विनिपात्य भूमौ महागिरेः कीर्णमिवैकदेशम् ।
सूर्यात्मजस्तत्र रराज लक्ष्म्या सूर्यस्स्वतेजोभिरिवाप्रधृष्यः ॥ ३७
अथ विजयमवाप्य वानरेन्द्रस्समरमुखे सुरसिद्धयक्षसङ्घैः ।
अवनितलगतैश्च भूतसङ्घैर्हर्षसमाकुलितैः स्तुतो महात्मा ॥ ३८

इति श्रीमद्युद्धकाण्डे अष्टनवतितमस्सर्गः ॥

---

## ॥ एकोनशततमस्सर्गः ॥

महोदरे तु निहते महापार्श्वो महाबलः ।
सुग्रीवेण समीक्ष्याथ क्रोधात्संरक्तलोचनः ॥ १
अङ्गदस्य चमूं भीमां क्षोभयामास सायकैः ।
स वानराणां मुख्यानामुत्तमाङ्गानि सर्वशः ॥ २
पातयामास कायेभ्यः फलं वृन्तादिवानिलः ।
केषांचिदिषुभिर्बाहून् स्कन्धांश्चिच्छेद राक्षसः ॥ ३
वानराणां सुसंक्रुद्धः पार्श्वं केषां व्यदारयत् ।
तेऽर्दिता बाणवर्षेण महापार्श्वेन वानराः ॥ ४

विषादविमुखास्सर्वे बभूवुर्गतचेतसः ।
निरीक्ष्य बलमुद्विग्नमङ्गदो राक्षसार्दितम् ॥ ५
वेगं चक्रे महाबाहुस्समुद्र इव पर्वणि ।
आयसं परिघं गृह्य सूर्यरश्मिसमप्रभम् ॥ ६
समरे वानरश्रेष्ठो महापार्श्वं न्यपातयत् ।
स तु तेन प्रहारेण महापार्श्वो विचेतनः ॥ ७
ससूतस्यन्दनात्तस्माद्विसंज्ञः प्रापतद्भुवि ।
स ऋक्षराजस्तेजस्वी नीलाञ्जनचयोपमः ॥ ८
निष्पत्य सुमहावीर्यस्स्वाद्यूहान्मेघसन्निभात् ।
प्रगृह्य गिरिश्रृङ्गाभां क्रुद्धस्स विपुलां शिलाम् ॥ ९
अश्वान्जघान तरसा स्यन्दने च बभञ्ज तम् ।
मुहूर्ताल्लब्धसंज्ञस्तु महापार्श्वो महाबलः ॥ १०
अङ्गदं बहुभिर्बाणैर्भूयस्तं प्रत्यविध्यत ।
जाम्बवन्तं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ११
ऋक्षराजं गवाक्षं च जघान बहुभिश्शरैः ।
जाम्बवन्तं गवाक्षं च स दृष्ट्वा शरपीडितौ ॥ १२
जग्राह परिघं घोरमङ्गदः क्रोधमूर्छितः ।
तस्याङ्गदः प्रकुपितो राक्षसस्य तमायसम् ॥ १३
दूरस्थितस्य परिघं रविरश्मिसमप्रभम् ।
द्वाभ्यां भुजाभ्यां संगृह्य भ्रामयित्वा च वेगवान् ॥ १४
महापार्श्वस्य चिक्षेप वधार्थं वालिनस्सुतः ।
स तु क्षिप्तो बलवता परिघस्तस्य रक्षसः ॥ १५

धनुश्च सशरं हस्ताच्छिरस्त्रं चाप्यपातयत् ।
तं समासाद्य वेगेन वालिपुत्रः प्रतापवान् ॥ १६

तलेनाभ्यहनत्क्रुद्धः कर्णमूले सकुण्डले ।
स तु क्रुद्धो महावेगो महापार्श्वो महाद्युतिः ॥ १७

करेणैकेन जग्राह सुमहान्तं परश्वधम् ।
तं तैलधौतं विपुलं शैलसारमयं दृढम् ॥ १८

राक्षसः परमक्रुद्धो वालिपुत्रे न्यपातयत् ।
तेन वामांसफलके भृशं प्रत्यवसादितम् ॥ १९

अङ्गदो मोक्षयामास सरोषस्स परश्वधम् ।
स वीरो वज्रसङ्काशमङ्गदो मुष्टिमात्मनः ॥ २०

संवर्तयत्सुसंक्रुद्धः पितृतुल्यपराक्रमः ।
राक्षसस्य स्तनाभ्याशे मर्मज्ञो हृदयं प्रति ॥ २१

इन्द्राशनिसमस्पर्शं स मुष्टिं विन्यपातयत् ।
तेन तस्य निपातेन राक्षसस्य महामृधे ॥ २२

पफाल हृदयं चाशु स पपात हतो भुवि ।
तस्मिन्निपतिते भूमौ तत्सैन्यं संप्रचुक्षुभे ॥ २३

अभवच्च महान्क्रोधस्समरे रावणस्य तु ।
वानराणां च हृष्टानां सिंहनादश्च पुष्कलः ॥ २४

स्फोटयन्निव शब्देन लङ्कां साट्टालगोपुराम् ।
महेन्द्रेणेव देवानां नादस्समभवन्महान् ॥ २५

अथेन्द्रशत्रुस्त्रिदशालयानां वनौकसां चैव महाप्रणादम् ।
श्रुत्वा सरोषं युधि राक्षसेन्द्रः पुनश्च युद्धाभिमुखोऽवतस्थे ॥ २६

इति श्रीमद्युद्धकाण्डे एकोनशततमस्सर्गः ॥

---

## ॥ शततमस्सर्गः ॥

महोदरमहापार्श्वौ हतौ दृष्ट्वा तु राक्षसौ ।
तस्मिंश्च निहते वीरे विरूपाक्षे महाबले ॥ १
आविवेश महान्क्रोधो रावणं तु महामृधे ।
सूतं संचोदयामास वाक्यं चेदमुवाच ह ॥ २
"निहतानाममात्यानां रुद्धस्य नगरस्य च ।
दुःखमेकोऽपनेष्यामि हत्वा तौ रामलक्ष्मणौ ॥ ३
रामवृक्षं रणे हन्मि सीतापुष्पफलप्रदम् ।
प्रशाखा यस्य सुग्रीवो जाम्बवान् कुमुदो नलः ॥ ४
मैन्दश्च द्विविदश्चैव ह्यङ्गदो गन्धमादनः ।
हनूमांश्च सुषेणश्च सर्वे च हरियूथपाः ॥" ५
स दिशो दश घोषेण रथस्यातिरथो महान् ।
नादयन् प्रययौ तूर्णं राघवं चाभ्यवर्तत ॥ ६
पूरिता तेन शब्देन सनदीगिरिकानना ।
संचचाल मही सर्वा सवराहमृगद्विपा ॥ ७
तामसं स महाघोरं चकारास्त्रं सुदारुणम् ।
निर्ददाह कपीन् सर्वांस्ते प्रपेतुस्समन्ततः ॥ ८
उत्पपात रजो घोरं तैर्भग्नैस्संप्रधावितैः ।
न हि तत्सहितुं शेकुर्ब्रह्मणा निर्मितं स्वयम् ॥ ९
तान्यनीकान्यनेकानि रावणस्य शरोत्तमैः ।
दृष्ट्वा भग्नानि शतशो राघवः पर्यवस्थितः ॥ १०
ततो राक्षसशार्दूलो विद्राव्य हरिवाहिनीम् ।
स ददर्श ततो रामं तिष्ठन्तमपराजितम् ॥ ११

लक्ष्मणेन सह भ्रात्रा विष्णुना वासवं यथा ।
आलिखन्तमिवाकाशमवष्टभ्य महद्धनुः ॥ १२

पद्मपत्रविशालाक्षं दीर्घबाहुमरिन्दमम् ।
ततो रामो महातेजास्सौमित्रिसहितो बली ॥ १३

वानरांश्च रणे भग्नानापतन्तं च रावणम् ।
समीक्ष्य राघवो हृष्टो मध्ये जग्राह कार्मुकम् ॥ १४

विष्फारयितुमारेभे ततस्स धनुरुत्तमम् ।
महावेगं महानादं निर्भिन्दन्निव मेदिनीम् ॥ १५

रावणस्य च बाणौघै रामविष्फारितेन च ।
शब्देन राक्षसास्ते तु पेतुश्च शतशस्तदा ॥ १६

तयोश्शरपथं प्राप्तो रावणो राजपुत्रयोः ।
स बभूव यथा राहुस्समीपे शशिसूर्ययोः ॥ १७

तमिच्छन्प्रथमं योद्धुं लक्ष्मणो निशितैश्शरैः ।
मुमोच धनुरायम्य शरानग्निशिखोपमान् ॥ १८

तान्मुक्तमात्रानाकाशे लक्ष्मणेन धनुष्मता ।
बाणान्बाणैर्महातेजा रावणः प्रत्यवारयत् ॥ १९

एकमेकेन बाणेन त्रिभिस्त्रीन् दशभिर्दश ।
लक्ष्मणस्य प्रचिच्छेद दर्शयन्पाणिलाघवम् ॥ २०

अभ्यतिक्रम्य सौमित्रिं रावणस्समितिंजयः ।
आससाद ततो रामं स्थितं शैलमिवाचलम् ॥ २१

स सङ्ख्ये राममासाद्य क्रोधसंरक्तलोचनः ।
व्यसृजच्छरवर्षाणि रावणो राघवोपरि ॥ २२

शरधारास्ततो रामो रावणस्य धनुश्च्युताः ।
दृष्ट्वैवापततश्शीघ्रं भल्लान् जग्राह सत्वरम् ॥ २३

तान् शरौघांस्ततो भल्लैस्तीक्ष्णैश्चिच्छेद राघवः ।
दीप्यमानान्महाघोरान् क्रुद्धानाशीविषानिव ॥ २४

राघवो रावणं तूर्णं रावणो राघवं तदा ।
अन्योन्यं विविधैस्तीक्ष्णैश्शरैरभिववर्षतुः ॥ २५

चेरतुश्च चिरं चित्रं मण्डलं सव्यदक्षिणम् ।
बाणवेगात्समुत्क्षिप्तावन्योन्यमपराजितौ ॥ २६

तयोर्भूतानि वित्रेसुर्युगपत्सम्प्रयुध्यतोः ।
रौद्रयोस्सायकमुचोर्यमान्तकनिकाशयोः ॥ २७

सन्ततं विविधैर्बाणैर्बभूव गगनं तदा ।
घनैरिवातपापाये विद्युन्मालासमाकुलैः ॥ २८

गवाक्षितमिवाकाशं बभूव शरवृष्टिभिः ।
महावेगैस्सुतीक्ष्णाग्रैर्गृध्रपत्रैस्सुवाजितैः ॥ २९

शरान्धकारं तौ भीमं चक्रतुस्समरं तदा ।
गतेऽस्तं तपने चापि महामेघाविवोत्थितौ ॥ ३०

बभूव तुमुलं युद्धमन्योन्यवधकाङ्क्षिणोः ।
अनासाद्यमचिन्त्यं च वृत्रवासवयोरिव ॥ ३१

उभौ हि परमेष्वासावुभौ शस्त्रविशारदौ ।
उभावस्त्रविदां मुख्यावुभौ युद्धे विचेरतुः ॥ ३२

उभौ हि येन व्रजतस्तेन तेन शरोर्मयः ।
ऊर्मयो वायुना विद्धा जग्मुस्सागरयोरिव ॥ ३३

ततस्संसक्तहस्तस्तु रावणो लोकरावणः ।
नाराचमालां रामस्य ललाटे प्रत्यमुञ्चत ॥ ३४

रौद्रचापप्रयुक्तां तां नीलोत्पलदलप्रभाम् ।
शिरसा धारयन्रामो न व्यथां प्रत्यपद्यत ॥ ३५

अथ मन्त्रानभिजपन्रौद्रमस्त्रमुदीरयन् ।
शरान्भूयस्समादाय रामः क्रोधसमन्वितः ॥ ३६

मुमोच च महातेजाश्चापमायम्य वीर्यवान् ।
ते महामेघसङ्काशे कवचे पतितास्शराः ॥ ३७

अवध्ये राक्षसेन्द्रस्य न व्यथां जनयंस्तदा ।
पुनरेवाथ तं रामो रथस्थं राक्षसाधिपम् ॥ ३८

ललाटे परमास्त्रेण सर्वास्त्रकुशलो रणे ।
ते भित्त्वा बाणरूपाणि पञ्चशीर्षा इवोरगाः ॥ ३९

श्वसन्तो विविशुर्भूमिं रावणप्रतिकूलिताः ।
निहत्य राघवस्यास्त्रं रावणः क्रोधमूर्छितः ॥ ४०

आसुरं सुमहाघोरमस्त्रं प्रादुश्चकार ह ।
सिंहव्याघ्रमुखांश्चान्यान्कङ्ककाकमुखानपि ॥ ४१

गृध्रश्येनमुखांश्चापि सृगालवदनांस्तथा ।
ईहामृगमुखांश्चान्यान्व्यादितास्यान्भयानकान् ॥ ४२

पञ्चास्यान्लेलिहानांश्च ससर्ज निशितान् शरान् ।
शरान्खरमुखांश्चान्यान्वराहमुखसंस्थितान् ॥ ४३

श्वानकुक्कुटवक्त्रांश्च मकराशीविषाननान् ।
एतानन्यांश्च मायावी ससर्ज निशितान् शरान् ॥ ४४

रामं प्रति महातेजाः क्रुद्धस्सर्प इव श्वसन् ।
आसुरेण समाविष्टस्सोऽस्त्रेण रघुनन्दनः ॥ ४५

ससर्जास्त्रं महोत्साहः पावकं पावकोपमः ।
अग्निदीप्तमुखान्बाणांस्तथा सूर्यमुखानपि ॥ ४६

चन्द्रार्धचन्द्रवक्त्रांश्च धूमकेतुमुखानपि ।
ग्रहनक्षत्रवक्त्रांश्च महोल्कामुखसंस्थितान् ॥ ४७

विद्युज्जिह्वोपमांश्चान्यान् ससर्ज निशितान् शरान् ।
ते रावणशरा घोरा राघवास्त्रसमाहताः ॥ ४८

विलयं जग्मुराकाशे जग्मुश्चैव सहस्रशः ।
तदस्त्रं निहतं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ४९

हृष्टा नेदुस्ततस्सर्वे कपयः कामरूपिणः ।
सुग्रीवप्रमुखा वीराः परिवार्य तु राघवम् ॥ ५०

ततस्तदस्त्रं विनिहत्य राघवः प्रसह्य तद्रावणबाहुनिस्सृतम् ।
मुदान्वितो दाशरथिर्महाहवे विनेदुरुच्चैर्मुदिता कपीश्वराः ॥ ५१

इति श्रीमद्युद्धकाण्डे शततमस्सर्गः ॥

---

## ॥ एकोत्तरशततमस्सर्गः ॥

तस्मिन्प्रतिहतेऽस्त्रे तु रावणो राक्षसाधिपः ।
क्रोधं च द्विगुणं चक्रे क्रोधाच्चास्त्रमनन्तरम् ॥ १

मयेन विहितं रौद्रमन्यदस्त्रं महाद्युतिः ।
उत्स्रष्टुं रावणो घोरं राघवाय प्रचक्रमे ॥ २

ततश्शूलानि निश्चेरुर्गदाश्च मुसलानि च ।
कार्मुकाद्दीप्यमानानि वज्रसाराणि सर्वशः ॥ ३

मुद्गराः कूटपाशाश्च दीप्ताश्चाशनयस्तथा ।
निष्पेतुर्विविधास्तीक्ष्णा वाता इव युगक्षये ॥ ४

तदस्त्रं राघवश्श्रीमानुत्तमास्त्रविदां वरः ।
जघान परमास्त्रेण गान्धर्वेण महाद्युतिः ॥ ५

तस्मिन्प्रतिहतेऽस्त्रे तु राघवेण महात्मना ।
रावणः क्रोधताम्राक्षस्सौरमस्त्रमुदैरयत् ॥ ६

ततश्चक्राणि निष्पेतुर्भास्वराणि महान्ति च ।
कार्मुकाद्भीमवेगस्य दशग्रीवस्य धीमतः ॥ ७

तैरासीद्गगनं दीप्तं सम्पतद्भिरितस्ततः ।
पतद्भिश्च दिशो दीप्ताश्चन्द्रसूर्यग्रहैरिव ॥ ८

तानि चिच्छेद बाणौघैश्चक्राणि स तु राघवः ।
आयुधानि विचित्राणि रावणस्य चमूमुखे ॥ ९

तदस्त्रं तु हतं दृष्ट्वा रावणो राक्षसाधिपः ।
विव्याध दशभिर्बाणै रामं सर्वेषु मर्मसु ॥ १०

स विद्धो दशभिर्बाणैर्महाकार्मुकनिस्सृतैः ।
रावणेन महातेजा न प्राकम्पत राघवः ॥ ११

ततो विव्याध गात्रेषु सर्वेषु समितिंजयः ।
राघवस्तु सुसंक्रुद्धो रावणं बहुभिश्शरैः ॥ १२

एतस्मिन्नन्तरे क्रुद्धो राघवस्यानुजो बली ।
लक्ष्मणस्सायकान्सप्त जग्राह परवीरहा ॥ १३

तैस्सायकैर्महावेगै रावणस्य महाद्युतिः ।
ध्वजं मनुष्यशीर्षं तु तस्य चिच्छेद नैकधा ॥ १४

सारथेश्चापि बाणेन शिरो ज्वलितकुण्डलम् ।
जहार लक्ष्मणश्श्रीमान्नैर्ऋतस्य महाबलः ॥ १५

तस्य बाणैश्च चिच्छेद धनुर्गजकरोपमम् ।
लक्ष्मणो राक्षसेन्द्रस्य पञ्चाभिर्निशितैश्शरैः ॥ १६

नीलमेघनिभांश्चास्य सदश्वान्पर्वतोपमान् ।
जघानाप्लुत्य गदया रावणस्य विभीषणः ॥ १७

हताश्वो वेगवान्वेगादवप्लुत्य महारथात् ।
क्रोधमाहारयत्तीव्रं भ्रातरं प्रति रावणः ॥ १८

ततश्शक्तिं महाशक्तिर्दीप्तां दीप्ताशनीमिव ।
विभीषणाय चिक्षेप राक्षसेन्द्रः प्रतापवान् ॥ १९

अप्राप्तामेव तां बाणैस्त्रिभिश्चिच्छेद लक्ष्मणः ।
अथोदतिष्ठत्सन्नादो वानराणां तदा रणे ॥ २०

सा पपात त्रिधा च्छिन्ना शक्तिः काञ्चनमालिनी ।
सविस्फुलिङ्गा ज्वलिता महोल्केव दिवश्च्युता ॥ २१

ततस्सम्भाविततरां कालेनापि दुरासदाम् ।
जग्राह विपुलां शक्तिं दीप्यमानां स्वतेजसा ॥ २२

सा वेगिता बलवता रावणेन दुरासदा ।
जज्वाल सुमहाघोरा शक्राशनिसमप्रभा ॥ २३

एतस्मिन्नन्तरे वीरो लक्ष्मणस्तं विभीषणम् ।
प्राणसंशयमापन्नं तूर्णमभ्यवपद्यत ॥ २४

तं विमोक्षयितुं वीरश्चापमायम्य लक्ष्मणः ।
रावणं शक्तिहस्तं वै शरवर्षैरवाकिरत् ॥ २५

कीर्यमाणश्शरौघेण विसृष्टेन महात्मना ।
न प्रहर्तुं मनश्चक्रे विमुखीकृतविक्रमः ॥ २६

मोक्षितं भ्रातरं दृष्ट्वा लक्ष्मणेन स रावणः ।
लक्ष्मणाभिमुखस्तिष्ठन्निदं वचनमब्रवीत् ॥ २७

"मोक्षितस्ते बलश्लाघि ! न्यस्मादेवं विभीषणः ।
विमुच्य राक्षसं शक्तिस्त्वयीयं विनिपात्यते ॥ २८

एषा ते हृदयं भित्त्वा शक्तिर्लोहितलक्षणा ।
मद्बाहुपरिघोत्सृष्टा प्राणानादाय यास्यति ॥" २९

इत्येवमुक्त्वा तां शक्तिमष्टघण्टां महास्वनाम् ।
मयेन मायाविहिताममोघां शत्रुघातिनीम् ॥ ३०

लक्ष्मणाय समुद्दिश्य ज्वलन्तीमिव तेजसा ।
रावणः परमक्रुद्धश्चिक्षेप च ननाद च ॥ ३१

सा क्षिप्ता भीमवेगेन शक्राशनिसमस्वना ।
शक्तिरभ्यपतद्वेगाल्लक्ष्मणं रणमूर्धनि ॥ ३२

तामनुव्याहरच्छक्तिमापतन्तीं स राघवः ।
"स्वस्त्यस्तु लक्ष्मणा" येति मोघा भव हतोद्यमा ॥ ३३

रावणेन रणे शक्तिः क्रुद्धेनाशीविषोपमा ।
मुक्ता शूरस्य भीतस्य लक्ष्मणस्य ममज्ज सा ॥ ३४

न्यपतत्सा महावेगा लक्ष्मणस्य महोरसि ।
जिह्वेवोरगराजस्य दीप्यमाना महाद्युतिः ॥ ३५

ततो रावणवेगेन सुदूरमवगाढया ।
शक्त्या निर्भिन्नहृदयः पपात भुवि लक्ष्मणः ॥ ३६

तदवस्थं समीपस्थो लक्ष्मणं प्रेक्ष्य राघवः ।
भ्रातृस्नेहान्महातेजा विषण्णहृदयोऽभवत् ॥ ३७

स मुहूर्तमनुध्याय बाष्पव्याकुललोचनः ।
बभूव संरब्धतरो युगान्तइव पावकः ॥ ३८

न विषादस्य कालोऽयमिति संचिन्त्य राघवः ।
चक्रे सुतुमुलं युद्धं रावणस्य वधे धृतः ॥ ३९

सर्वयत्नेन महता लक्ष्मणं सन्निरीक्ष्य च ।
स ददर्श ततो रामश्शक्त्या भिन्नं महाहवे ॥ ४०

लक्ष्मणं रुधिरादिग्धं सपन्नगमिवाचलम् ।
तामपि प्रहितां शक्तिं रावणेन बलीयसा ॥ ४१

यत्नतस्ते हरिश्रेष्ठा न शेकुरवमर्दितुम् ।
अर्दिताश्चैव बाणौघैः क्षिप्रहस्तेन रक्षसा ॥ ४२

सौमित्रिं सा विनिर्भिद्य प्रविष्टा धरणीतलम् ।
तां कराभ्यां परामृश्य रामश्शक्तिं भयावहाम् ॥ ४३

बभञ्ज समरे क्रुद्धो बलवान्विचकर्ष च ।
तस्य निष्कर्षतश्शक्तिं रावणेन बलीयसा ॥ ४४

शरास्सर्वेषु गात्रेषु पातिता मर्मभेदिनः ।
अचिन्तयित्वा तान्बाणान् समाश्लिष्य च लक्ष्मणम् ॥ ४५

अब्रवीच्च हनूमन्तं सुग्रीवं चैव राघवः ।
"लक्ष्मणं परिवार्येह तिष्ठध्वं वानरोत्तमाः ! ॥ ४६

पराक्रमस्य कालोऽयं संप्राप्तो मे चिरेप्सितः ।
पापात्माऽयं दशग्रीवो वध्यतां पापनिश्चयः ॥ ४७

काङ्क्षतश्चातकस्येव घर्मान्ते मेघदर्शनम् ।
अस्मिन्मुहूर्ते न चिरात्सत्यं प्रतिशृणोमि वः ॥ ४८

अरावणमरामं वा जगद्द्रक्ष्यथ वानराः ।!
राज्यनाशं वने वासं दण्डके परिधावनम् ॥ ४९

वैदेह्याश्च परामर्शं रक्षोभिश्च समागमम् ।
प्राप्तं दुःखं महाघोरं क्लेशं च निरयोपमम् ॥ ५०

अद्य सर्वमहं त्यक्ष्ये निहत्वा रावणं रणे ।
यदर्थं वानरं सैन्यं समानीतमिदं मया ॥ ५१

सुग्रीवश्च कृतो राज्ये निहत्वा वालिनं रणे ।
यदर्थं सागरः क्रान्तस्सेतुर्बद्धश्च सागरे ॥ ५२

सोऽयमद्य रणे पापश्चक्षुर्विषयमागतः ।
चक्षुर्विषयमागम्य नायं जीवितुमर्हति ॥ ५३

दृष्टिं दृष्टिविषस्येव सर्पस्य मम रावणः ।
स्वस्थाः पश्यत दुर्धर्षा युद्धं वानरपुङ्गवाः ! ॥ ५४

आसीनाः पर्वताग्रेषु ममेदं रावणस्य च ।
अद्य रामस्य रामत्वं पश्यन्तु मम संयुगे ॥ ५५

त्रयो लोकास्सगन्धर्वास्सदेवास्सर्षिचारणाः ।
अद्य कर्म करिष्यामि यल्लोकास्सचराचराः ॥ ५६

सदेवाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति ।
समागम्य सदा लोके यथा युद्धं प्रवर्तितम् ॥" ५७

एवमुक्त्वा शितैर्बाणैस्तप्तकाञ्चनभूषणैः ।
आजघान दशग्रीवं रणे रामस्समाहितः ॥ ५८

अथ प्रदीप्तैर्नाराचैर्मुसलैश्चापि रावणः ।
अभ्यवर्षत्तदा रामं धाराभिरिव तोयदः ॥ ५९

रामरावणमुक्तानामन्योन्यमभिनिघ्नताम् ।
शराणां च शराणां च बभूव तुमुलस्स्वनः ॥ ६०

ते भिन्नाश्च विकीर्णाश्च रामरावणयोश्शराः ।
अन्तरिक्षात्प्रदीप्ताग्रा निपेतुर्धरणीतले ॥ ६१

तयोर्ज्यातलनिर्घोषो रामरावणयोर्महान् ।
त्रासनस्सर्वभूतानां संबभूवाद्भुतोपमः ॥ ६२

स कीर्यमाणश्शरजालवृष्टिभिर्महात्मना दीप्तधनुष्मतार्दितः ।
भयात्प्रदुद्राव समेत्य रावणो यथाऽनिले नाभिहतो बलाहकः ॥ ६३

इति श्रीमद्युद्धकाण्डे एकोत्तरशततमस्सर्गः ॥

---

## ॥ द्व्युत्तरशततमस्सर्गः ॥

शक्त्या विनिहतं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं रुधिरौघपरिप्लुतम् ॥ १

स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ।
विसृजन्नेव बाणौघान् सुषेणं वाक्यमब्रवीत् ॥ २

"एष रावणवीर्येण लक्ष्मणः पतितः क्षितौ ।
सर्पवद्वेष्टते वीरो मम शोकमुदीरयन् ॥ ३

शोणितार्द्रमिमं वीरं प्राणैरिष्टतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥ ४

अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन च ॥ ५

लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥ ६

अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ।
चिन्ता मे वर्धते तीव्रा मुमूर्षा चोपजायते" ॥ ७

भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना ।
विनिश्वसन्तं दुःखार्तं मर्मण्यभिहतं भृशम् ॥ ८

राघवो भ्रातरं दृष्ट्वा प्रियं प्राणं बहिश्चरम् ।
दुःखेन महताऽविष्टो ध्यानशोकपरायणः ॥ ९

परं विषादमापन्नो विललापाकुलेन्द्रियः ।
"न हि युद्धेन मे कार्यं नैव प्राणैर्न सीतया ॥ १०

भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांसुषु ।
किं मे राज्येन किं प्राणैर्युद्धे कार्यं न विद्यते ॥ ११

यत्रायं निहतश्शेते रणमूर्धनि लक्ष्मणः ।
देशे देशे कळत्राणि देशेदेशे च बान्धवाः ॥ १२

तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ।"
इत्येवं विलपन्तं तं शोकविह्वलितेन्द्रियम् ॥ १३

विवेष्टमानं करुणमुच्छ्वसन्तं पुनः पुनः ।
राममाश्वासयन्वीरस्सुषेणो वाक्यमब्रवीत् ॥ १४

"न मृतोऽयं महाबाहो! लक्ष्मणो लक्ष्मिवर्धनः ।
न चास्य विकृतं वक्त्रं नापि श्यावं न निष्प्रभम् ॥ १५

सुप्रभं च प्रसन्नं च मुखमस्याभिलक्ष्यते ।
पद्मरक्ततलौ हस्तौ सुप्रसन्ने च लोचने ॥ १६

एवं न विद्यते रूपं गतासूनां विशां पते! ।
दीर्घायुषस्तु ये मर्त्यास्तेषां तु मुखमीदृशम् ॥ १७
नायं प्रेतत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
मा विषादं कृथा वीर! सप्राणोऽयमरिन्दम! ॥ १८
आख्यास्यते प्रसुप्तस्य स्रस्तगात्रस्य भूतले ।
सोच्छ्वासं हृदयं वीर! कम्पमानं मुहुर्मुहुः ॥" १९
एवमुक्त्वा तु वाक्यज्ञस्सुषेणो राघवं वचः ।
हनुमन्तमुवाचेदं हनुमन्तमभित्वरन् ॥ २०
"सौम्य! शीघ्रमितो गत्वा शैलमोषधिपर्वतम् ।
पूर्वं ते कथितो योऽसौ वीर! जाम्बवता शुभः ॥ २१
दक्षिणे शिखरे तस्य जातामोषधिमानय ।
विशल्यकरणीं नाम विशल्यकरणीं शुभाम् ॥ २२
सवर्णकरणीं चापि तथा सञ्जीवनीमपि ।
सन्धानकरणीं चापि गत्वा शीघ्रमिहाऽनय ॥ २३
सञ्जीवनार्थं वीरस्य लक्ष्मणस्य महात्मनः ।"
इत्येवमुक्तो हनुमान्गत्वा चौषधिपर्वतम् ॥ २४
चिन्तामभ्यगमच्छ्रीमानजानं स्तां महौषधिम् ।
तस्य बुद्धिस्समुत्पन्ना मारुतेरमितौजसः ॥ २५
इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ।
अस्मिन्हि शिखरे जातामोषधिं तां सुखावहाम् ॥ २६
प्रतर्कादवगच्छामि सुषेणो मां यथाऽब्रवीत् ।
अगृह्य यदि गच्छामि विशल्यकरणीमहम् ॥ २७

कालात्ययेन दोषस्याद्वैक्लब्यं च महद्भवेत् ।"
इति संचिन्त्य हनुमान्क्षिप्रं गत्वा महाबलः ॥ २८
आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेश्शिरः ।
फुल्लनानातरुगणं समुत्पाट्य महाबलः ॥ २९
गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ।
स नीलमिव जीमूतं तोयपूर्णं नभःस्थलात् ॥ ३०
आपपात गृहीत्वा तु हनुमान् शिखरं गिरेः ।
तृष्णया स परिश्रान्तः पर्वतं भूधरोत्तमम् ॥ ३१
कृत्वा मुखे स निर्वर्त्य प्रसस्रुर्जलराशयः ।
समागम्य महावेगस्सन्न्यस्य शिखरं गिरेः ॥ ३२
विश्रम्य किंचिद्धनुमान् सुषेणमिदमब्रवीत् ।
"ओषधिं नावगच्छामि तामहं हरिपुङ्गव ! ॥ ३३
तदिदं शिखरं कृत्स्नं गिरेस्तस्याऽऽहृतं मया । "
एवं कथयमानं तं प्रशस्य पवनात्मजम् ॥ ३४
सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधिम् ।
विस्मितास्तु बभूवुस्ते रणे वानरराक्षसाः ॥ ३५
दृष्ट्वा हनूमतः कर्म सुरैरपि सुदुष्करम् ।
ततस्संक्षोदयित्वा तामोषधिं वानरोत्तमः ॥ ३६
लक्ष्मणस्य ददौ नस्तस्सुषेणस्सुमहाद्युतेः ।
सशल्यस्तां समाघ्राय लक्ष्मणः परवीरहा ॥ ३७
विशल्यो विरुजश्शीघ्रमुदतिष्ठन्महीतलात् ।
तमुत्थितं ते हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ॥ ३८

साधु साध्विति सुप्रीतास्सुषेणं प्रत्यपूजयन् ।
तत्तु शैलस्य शिखरं हनूमान्मारुतात्मजः ॥ ३९
यथास्थानं प्रचिक्षेप पूर्ववत्तत्र्यवस्थितम् ।
' एह्येही 'त्यब्रवीद्रामो लक्ष्मणं परवीरहा ॥ ४०
सस्वजे स्नेहगाढं च बाष्पपर्याकुलेक्षणः ।
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ॥ ४१
" दिष्ट्या त्वां वीर ! पश्यामि मरणात्पुनरागतम् ।
न हि मे जीवितेनार्थस्सीतया चापि लक्ष्मण ! ॥ ४२
को हि मे विजयेनार्थस्त्वयि पञ्चत्वमागते " ।
इत्येवं वदतस्तस्य राघवस्य महात्मनः ॥ ४३
खिन्नश्शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ।
" तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम ! ॥ ४४
लघुः कश्चिदिवासत्वो नैवं वक्तुमिहार्हसि ।
न हि प्रतिज्ञां कुर्वन्ति वितथां साधवोऽनघ ! ॥ ४५
लक्षणं हि महत्त्वस्य प्रतिज्ञापरिपालनम् ।
नैराश्यमुपगन्तुं ते तदलं मत्कृतेऽनघ ! ॥ ४६
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ।
न जीवन्यास्यते शत्रुस्तव बाणपथं गतः ॥ ४७
नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ।
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ॥ ४८
यावदस्तं न यात्येष कृतकर्मा दिवाकरः ।
यदि वधमिच्छसि रावणस्य संख्ये यदि च कृतां त्वमिहेच्छसि प्रतिज्ञाम्
यदि तव राजवरात्मजाभिलाषः कुरु च वचो मम शीघ्रमद्य वीर !

इति श्रीमद्युद्धकाण्डे द्व्युत्तरशततमस्सर्गः ॥

## ॥ त्र्युत्तरशततमस्सर्गः ॥

लक्ष्मणेन तु तद्वाक्यमुक्तं श्रुत्वा स राघवः ।
सन्दधे परवीरघ्नो धनुरादाय वीर्यवान् ॥ १

रावणाय शरान्घोरान्विससर्ज चमूमुखे ।
अथान्यं रथमारुह्य रावणो राक्षसाधिपः ॥ २

अभ्यद्रवत काकुत्स्थं स्वर्भानुरिव भास्करम् ।
दशग्रीवो रथस्थस्तु रामं वज्रोपमैश्शरैः ॥ ३

आजघान महाघोरैर्धाराभिरिव तोयदः ।
दीप्तपावकसङ्काशैश्शरैः काञ्चनभूषणैः ॥ ४

निर्बिभेद रणे रामो दशग्रीवं समाहितः ।
"भूमौ स्थितस्य रामस्य रथस्थस्य च रक्षसः ॥ ५

न समं युद्ध" मित्याहुर्देवगन्धर्वदानवाः ।
ततः काञ्चनचित्राङ्गः किङ्किणीशतभूषितः ॥ ६

तरुणादित्यसङ्काशो वैडूर्यमयकूबरः ।
सदश्वैः काञ्चनापीडैर्युक्तश्श्वेतप्रकीर्णकैः ॥ ७

हरिभिस्सूर्यसङ्काशैर्हेमजालविभूषितैः ।
रुक्मवेणुध्वजश्श्रीमान् देवराजरथो वरः ॥ ८

देवराजेन सन्दिष्टो रथमारुह्य मातलिः ।
अभ्यवर्तत काकुत्स्थमवतीर्य त्रिविष्टपात् ॥ ९

अब्रवीच्च तदा रामं सप्रतोदो रथे स्थितः ।
प्राञ्जलिर्मातलिर्वाक्यं सहस्राक्षस्य सारथिः ॥ १०

"सहस्राक्षेण काकुत्स्थ रथोऽयं विजयाय ते ।
दत्तस्तव महासत्व ! श्रीमन् ! शत्रुनिबर्हण ! ॥ ११

इदमैन्द्रं महच्चापं कवचं चाग्निसन्निभम् ।
शराश्चादित्यसंङ्काशाश्शक्तिश्च विमला शिता ॥ १२

आरुह्येमं रथं वीर! राक्षसं जहि रावणम् ।
मया सारथिना राजन्! महेन्द्र इव दानवान्" ॥ १३

इत्युक्तस्संपरिक्रम्य रथं समभिवाद्य च ।
आरुरोह तदा रामो लोकान्लक्ष्म्या विराजयन् ॥ १४

तद्बभूवाद्भुतं युद्धं तुमुलं रोमहर्षणम् ।
रामस्य च महाबाहो रावणस्य च रक्षसः ॥ १५

स गान्धर्वेण गान्धर्वं दैवं दैवेन राघवः ।
अस्त्रं राक्षसराजस्य जघान परमास्त्रवित् ॥ १६

अस्त्रं तु परमं घोरं राक्षसं राक्षसाधिपः ।
ससर्ज परमक्रुद्धः पुनरेव निशाचरः ॥ १७

ते रावणधनुर्मुक्ताश्शराः काञ्चनभूषणाः ।
अभ्यवर्तन्त काकुत्स्थं सर्पा भूत्वा महाविषाः ॥ १८

ते दीप्तवदनादीप्तं वमन्तो ज्वलनं मुखैः ।
राममेवाभ्यवर्तन्त व्यादितास्या भयानकाः ॥ १९

तैर्वासुकिसमस्पर्शैर्दीप्तभोगैर्महाविषैः ।
दिशश्च सन्ततास्सर्वाः प्रदिशश्च समावृताः ॥ २०

तान्दृष्ट्वा पन्नगान्रामस्समापतत आहवे ।
अस्त्रं गारुत्मतं घोरं प्रादुश्चक्रे भयावहम् ॥ २१

ते राघवशरा मुक्ता रुक्मपुङ्खाश्शिखिप्रभाः ।
सुपर्णाः काञ्चना भूत्वा विचेरुस्सर्पशत्रवः ॥ २२

ते तान् सर्वान् शराञ्जघ्नुस्सर्परूपान्महाजवान् ।
सुपर्णरूपा रामस्य विशिखाः कामरूपिणः ॥ २३

अस्त्रे प्रतिहते क्रुद्धो रावणो राक्षसाधिपः ।
अभ्यवर्षत्तदा रामं घोराभिश्शरवृष्टिभिः ॥ २४

ततश्शरसहस्रेण राममक्लिष्टकारिणम् ।
अर्दयित्वा शरौघेण मातलिं प्रत्यविध्यत ॥ २५

चिच्छेद केतुमुद्दिश्य शरेणैकेन रावणः ।
पातयित्वा रथोपस्थे रथात्केतुं च काञ्चनम् ॥ २६

ऐन्द्रानपि जवानाश्वान् शरजालेन रावणः ।
तद्दृष्ट्वा सुमहत्कर्म रावणस्य दुरात्मनः ॥ २७

विषेदुर्देवगन्धर्वा दानवाश्चारणैस्सह ।
राममार्तं तदा दृष्ट्वा सिद्धाश्च परमर्षयः ॥ २८

व्यथिता वानरेन्द्राश्च बभूवुस्सविभीषणः ।
रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा ॥ २९

प्राजापत्यं च नक्षत्रं रोहिणीं शशिनः प्रियाम् ।
समाक्रम्य बुधस्तस्थौ प्रजानामशुभावहः ॥ ३०

स धूमपरिवृत्ताग्निः प्रज्वलन्निव सागरः ।
उत्पपात तदा क्रुद्धस्स्पृशन्निव दिवाकरम् ॥ ३१

शस्त्रवर्णस्सुपरुषो मन्दरश्मिर्दिवाकरः ।
अदृश्यत कबन्धाङ्कस्संसक्तो धूमकेतुना ॥ ३२

कोसलानां च नक्षत्रं व्यक्तमिन्द्राग्निदैवतम् ।
आक्रम्याङ्गारकस्तस्थौ विशाखामपि चाम्बरे ॥ ३३

दशास्यो विंशतिभुजः प्रगृहीतशरासनः ।
अदृश्यत दशग्रीवो मैनाकइव पर्वतः ॥ ३४

निरस्यमानो रामस्तु दशग्रीवेण रक्षसा ।
नाशक्नोदभिसन्धातुं सायकान्रणमूर्धनि ॥ ३५

स कृत्वा भ्रुकुटीं क्रुद्धः किंचित्संरक्तलोचनः ।
जगाम सुमहाक्रोधं निर्दहन्निव चक्षुषा ॥ ३६

इति श्रीमद्युद्धकाण्डे त्र्युत्तरशततमस्सर्गः ॥

---

## ॥ चतुरुत्तरशततमस्सर्गः ॥

तस्य क्रुद्धस्य वदनं दृष्ट्वा रामस्य धीमतः ।
सर्वभूतानि वित्रेसुः प्राकम्पत च मेदिनी ॥ १

सिंहशार्दूलवान् शैलस्संचचाल चलद्रुमः ।
बभूव चातिक्षुभितस्समुद्रस्सरितां पतिः ॥ २

खगाश्च खरनिर्घोषा गगने परुषाघनाः ।
औत्पातिकानि नर्दन्तस्समन्तात्परिचक्रमुः ॥ ३

रामं दृष्ट्वा सुसंक्रुद्धमुत्पातांश्च सुदारुणान् ।
वित्रेसुस्सर्वभूतानि रावणस्याभवद्भयम् ॥ ४

विमानस्थास्तदा देवा गन्धर्वाश्च महोरगाः ।
ऋषिदानवदैत्याश्च गरुत्मन्तश्च खेचराः ॥ ५

ददृशुस्ते महायुद्धं लोकसंवर्तसंस्थितम् ।
नानाप्रहरणैर्भीमैश्शूरयोस्संप्रयुध्यतोः ॥ ६

ऊचुस्सुरासुरास्सर्वे तदा विग्रहमागताः ।
प्रेक्षमाणा महद्युद्धं वाक्यं भक्त्या प्रहृष्टवत् ॥ ७

दशग्रीवं जयेत्याहुरसुरास्समवस्थिताः ।
देवा राममथोचुस्ते त्वं जयेति पुनः पुनः ॥ ८

एतस्मिन्नन्तरे क्रोधाद्राघवस्य स रावणः ।
प्रहर्तुकामो दुष्टात्मा स्पृशन्प्रहरणं महत् ॥ ९

वज्रसारं महानादं सर्वशत्रुनिबर्हणम् ।
शैलशृङ्गनिभैः कूटैश्चितं दृष्टिभयावहम् ॥ १०

स धूममिव तीक्ष्णाग्रं युगान्ताग्निचयोपमम् ।
अतिरौद्रमनासाद्यं कालेनापि दुरासदम् ॥ ११

त्रासनं सर्वभूतानां दारणं भेदनं तथा ।
प्रदीप्तमिव रोषेण शूलं जग्राह रावणः ॥ १२

तच्छूलं परमक्रुद्धो मध्ये जग्राह वीर्यवान् ।
अनेकैस्समरे शूरै राक्षसैः परिवारितः ॥ १३

समुद्यम्य महाकायो ननाद युधि भैरवम् ।
संरक्तनयनो रोषात्स्वसैन्यमभिहर्षयन् ॥ १४

पृथिवीं चान्तरिक्षं च दिशश्चोपदिशस्तथा ।
प्राकम्पयत्तदा शब्दो राक्षसेन्द्रस्य दारुणः ॥ १५

प्रतिनादस्य नादेन तेन तस्य दुरात्मनः ।
सर्वभूतानि वित्रेसुस्सागरश्च प्रचुक्षुभे ॥ १६

स गृहीत्वा महावीर्यश्शूलं तद्रावणो महत् ।
विनद्य सुमहानादं रामं परुषमब्रवीत् ॥ १७

“ शूलोऽयं वज्रसारस्ते राम ! रोषान्मयोद्यतः ।
तव भ्रातृसहायस्य सद्यः प्राणान्हरिष्यति ॥ १८

रक्षसामद्य शूराणां निहतानां चमूमुखे।
त्वां निहत्य रणश्लाघिन्करोमि तरसा समम् ॥ १९

तिष्ठेदानीं निहन्मि त्वामेष शूलेन राघव ! "
एवमुक्त्वा स चिक्षेप तच्छूलं राक्षसाधिपः ॥ २०

तद्रावणकरान्मुक्तं विद्युज्ज्वालासमाकुलम् ।
अष्टघण्टं महानादं वियद्गतमशोभत ॥ २१

तच्छूलं राघवो दृष्ट्वा ज्वलन्तं घोरदर्शनम् ।
ससर्ज विशिखान्रामश्चापमायम्य वीर्यवान् ॥ २२

आपतन्तं शरौघेण वारयामास राघवः ।
उत्पतन्तं युगान्ताग्निं बलौघैरिव वासवः ॥ २३

निर्ददाह स तान्बाणान् रामकार्मुकनिस्सृतान् ।
रावणस्य महाशूलः पतङ्गानिव पावकः ॥ २४

तान्दृष्ट्वा भस्मसाद्भूतान् शूलसंस्पर्शचूर्णितान् ।
सायकानन्तरिक्षस्थान्राघवः क्रोधमाहरत् ॥ २५

स तां मातलिना नीतां शक्तिं वासवनिर्मिताम् ।
जग्राह परमक्रुद्धो राघवो रघुनन्दनः ॥ २६

सा तोलिता बलवता शक्तिर्घण्टाकृतस्वना ।
नभः प्रज्वालयामास युगान्तोल्केव स प्रभा ॥ २७

सा क्षिप्ता राक्षसेन्द्रस्य तस्मिन् शूले पपात ह ।
भिन्नश्शक्त्या महान् शूलो निपपात हतद्युतिः ॥ २८

निर्बिभेद ततो बाणैर्हयानस्य महाजवान् ।
रामस्तीक्ष्णैर्महावेगैर्वज्रकल्पैश्शितैश्शरैः ॥ २९

निर्बिभेदोरसि ततो रावणं निशितैश्शरैः ।
राघवः परमायत्तो ललाटे पत्रिभिस्त्रिभिः ॥ ३०

स शरैर्भिन्नसर्वाङ्गो गात्रप्रस्रुतशोणितः ।
राक्षसेन्द्रस्समूहस्थः फुल्लाशोक इवाबभौ ॥ ३१

स रामबाणैरभिविद्धगात्रो निशाचरेन्द्रः क्षतजार्द्रगात्रः ।
जगाम खेदं च समाजमध्ये क्रोधं च चक्रे सुभृशं तदानीम् ॥ ३२

इति श्रीमद्युद्धकाण्डे चतुरुत्तरशततमस्सर्गः ॥

---

## ॥ पञ्चोत्तरशततमस्सर्गः ॥

स तेन तु तथा क्रोधात्काकुत्स्थेनार्दितो रणे ।
रावणस्समरश्लाघी महाक्रोधमुपागमत् ॥ १

स दीप्तनयनो रोषाच्चापमायम्य वीर्यवान् ।
अभ्यर्दयत्सुसङ्क्रुद्धो राघवं परमाहवे ॥ २

बाणधारासहस्रैस्तैस्सतोयद इवाम्बरात् ।
राघवं रावणो बाणैस्तटाकमिव पूरयत् ॥ ३

पूरितश्शरजालेन धनुर्मुक्तेन संयुगे ।
महागिरिरिवाकम्प्यः काकुत्स्थो न प्रकम्पते ॥ ४

स शरैश्शरजालानि वारयन् समरे स्थितः ।
गभस्तीनिव सूर्यस्य प्रतिजग्राह वीर्यवान् ॥ ५

ततश्शरसहस्राणि क्षिप्रहस्तो निशाचरः ।
निचखानोरसि क्रुद्धो राघवस्य महात्मनः ॥ ६

स शोणितसमादिग्धस्समरे लक्ष्मणाग्रजः ।
दृष्टः फुल्लइवारण्ये सुमहान्किंशुकद्रुमः ॥ ७

शराभिघातसंरब्धस्सोऽपि जग्राह सायकान् ।
काकुत्स्थस्सुमहातेजा युगान्तादित्यतेजसः ॥ ८

ततोऽन्योन्यं सुसंरब्धावुभौ तौ रामरावणौ ।
शरान्धकारे समरे नोपालक्षयतां तदा ॥ ९

ततः क्रोधसमाविष्टो रामो दशरथात्मजः ।
उवाच रावणं वीरः प्रसह्य परुषं वचः ॥ १०

"मम भार्या जनस्थानादज्ञानाद्राक्षसाधम ! ।
हृता ते विवशा यस्मात्तस्मात्त्वं नासि वीर्यवान् ॥ ११

मया विरहितां दीनां वर्तमानां महावने ।
वैदेहीं प्रसभं हृत्वा 'शूरोऽह' मिति मन्यसे ॥ १२

स्त्रीषु शूर ! विनाथासु परदाराभिमर्शक ।
कृत्वा कापुरुषं कर्म 'शूरोऽह' मिति मन्यसे ॥ १३

भिन्नमर्याद ! निर्लज्ज ! चारित्रेष्वनवस्थित ! ।
दर्पान्मृत्युमुपादाय 'शूरोऽह' मिति मन्यसे ॥ १४

शूरेण धनदभ्रात्रा बलैस्समुदितेन च ।
श्लाघनीयं यशस्यं च कृतं कर्म महत्त्वया ॥ १५

उत्सेकेनाभिपन्नस्य गर्हितस्याहितस्य च ।
कर्मणः प्राप्नुहीदानीं तस्याद्य सुमहत्फलम् ॥ १६

'शूरोऽह' मिति चात्मानमवगच्छसि दुर्मते ।
नैव लज्जास्ति ते सीतां चोरवद्व्यपकर्षतः ॥ १७

यदि मत्सन्निधौ सीता धर्षिता स्यात्त्वया बलात् ।
भ्रातरं तु खरं पश्येत्तदा मत्सायकैर्हतः ॥ १८

दिष्ट्यासि मम दुष्टात्मन्! चक्षुर्विषयमागतः ।
अद्य त्वां सायकैस्तीक्ष्णैर्नयामि यमसादनम् ॥ १९

अद्य ते मच्छरैश्छिन्नं शिरो ज्वलितकुण्डलम् ।
क्रव्यादा व्यपकर्षन्तु विकीर्णं रणपांसुषु ॥ २०

निपत्योरसि गृध्रास्ते क्षितौ क्षिप्तस्य रावण! ।
पिबन्तु रुधिरं तर्षाद्बाणशल्यान्तरोत्थितम् ॥ २१

अद्य मद्बाणभिन्नस्य गतासोः पतितस्य ते ।
कर्षन्त्वान्त्राणि पतगा गरुत्मन्त इवोरगान् ॥" २२

(दृष्टोऽसि महतः कालाद्दिष्ट्या दृष्टिपथं गतः ।
अद्य क्रोधं विमोक्ष्यामि सीताहरणसम्भवम्) ॥ २३

इत्येवं संवदन्वीरो रामश्शत्रुनिबर्हणः ।
राक्षसेन्द्रं समीपस्थं शरवर्षैरवाकिरत् ॥ २४

बभूव द्विगुणं वीर्यं बलं हर्षश्च संयुगे ।
रामस्यास्त्रबलं चैव शत्रोर्निधनकाङ्क्षिणः ॥ २५

प्रादुर्बभूवुरस्त्राणि सर्वाणि विदितात्मनः ।
प्रहर्षाच्च महातेजाश्शीघ्रहस्ततरोऽभवत् ॥ २६

शुभान्येतानि चिह्नानि विज्ञायात्मगतानि सः ।
भूय एवार्दयद्रामो रावणं राक्षसान्तकृत् ॥ २७

हरीणां चाश्मनिकरैश्शरवर्षैश्च राघवात् ।
हन्यमानो दशग्रीवो विघूर्णहृदयोऽभवत् ॥ २८

यदा च शस्त्रं नालेभे न व्यकर्षच्छरासनम् ।
नास्य प्रत्यकरोद्वीर्यं विक्लबेनान्तरात्मना ॥ २९

क्षिप्ताश्चापि शरास्तेन शस्त्राणि विविधानि च ।
न रणार्थाय वर्तन्ते मृत्युकालेऽभिवर्ततः ॥ १०

सूतस्तु रथनेतास्य तदवस्थं समीक्ष्य तम् ।
शनैर्युद्धादसंभ्रान्तो रथं तस्यापवाहयत् ॥ ११

इति श्रीमद्युद्धकाण्डे पञ्चोत्तरशततमस्सर्गः ॥

---

## ॥ षडुत्तरशततमस्सर्गः ॥

स तु मोहात्सुसंक्रुद्धः कृतान्तबलचोदितः ।
क्रोधसंरक्तनयनो रावणस्सूतमब्रवीत् ॥ १

"हीनवीर्यमिवाशक्तं पौरुषेण विवर्जितम् ।
भीरुं लघुमिवासत्त्वं विहीनमिव तेजसा ॥ २

विमुक्तमिव मायाभिरस्त्रैरिव बहिष्कृतम् ।
मामवज्ञाय दुर्बुद्धे! स्वया बुद्ध्या विचेष्टसे ॥ ३

किमर्थं मामवज्ञाय मच्छन्दमनवेक्ष्य च ।
त्वया शत्रोस्समक्षं मे रथोऽयमपवाहितः ॥ ४

त्वयाऽद्य हि ममानार्य! चिरकालसमार्जितम् ।
यशो वीर्यं च तेजश्च प्रत्ययश्च विनाशितः ॥ ५

शत्रोः प्रख्यातवीर्यस्य रञ्जनीयस्य विक्रमैः ।
पश्यतो युद्धलुब्धोऽहं कृतः का पुरुषस्त्वया ॥ ६

यस्त्वं रथमिमं मोहान्न चोद्वहसि दुर्मते! ।
सत्योऽयं प्रतितर्को मे परेण त्वमुपस्कृतः ॥ ७

न ह्येतद्विद्यते कर्म सुहृदो हितकाङ्क्षिणः ।
रिपूणां सदृशं चैतन्न त्वयैतत्स्वनुष्ठितम् ॥ ८

निवर्तय रथं शीघ्रं यावन्नोपैति मे रिपुः ।
यदि वाऽध्युषितो वासि स्मर्यन्ते यदि वा गुणाः ॥" ९

एवं परुषमुक्तस्तु हितबुद्धिरबुद्धिना ।
अब्रवीद्रावणं सूतो हितं सानुनयं वचः ॥ १०

" न भीतोऽस्मि न मूढोऽस्मि नोपजप्तोऽस्मि शत्रुभिः ।
नप्रमत्तो न निस्स्नेहो विस्मृता न च सत्क्रिया ॥ ११

मया तु हितकामेन यशश्च परिरक्षता ।
स्नेहप्रस्कन्नमनसा प्रियमित्यप्रियं कृतम् ॥ १२

नास्मिन्नर्थे महाराज ! त्वं मां प्रियहिते रतम् ।
कश्चिल्लघुरिवानार्यो दोषतो गन्तुमर्हसि ॥ १३

श्रूयतां त्वभिधास्यामि यन्निमित्तं मया रथः ।
नदीवेग इवाम्भोभिस्संयुगे विनिवर्तितः ॥ १४

श्रमं तवावगच्छामि महता रणकर्मणा ।
न हि ते वीर ! सौमुख्यं प्रहर्षं वोपधारये ॥ १५

रथोद्वहनखिन्नाश्च त इमे रथवाजिनः ।
दीना घर्मपरिश्रान्ता गावो वर्षहता इव ॥ १६

निमित्तानि च भूयिष्ठं यानि प्रादुर्भवन्ति नः ।
तेषु तेष्वभिपन्नेषु लक्षयाम्यप्रदक्षिणम् ॥ १७

देशकालौ च विज्ञेयौ लक्षणानीङ्गितानि च ।
दैन्यं खेदश्च हर्षश्च रथिनश्च बलाबलम् ॥ १८

स्थलनिम्नानि भूमेश्च समानि विषमाणि च ।
युद्धकालश्च विज्ञेयः परस्यान्तरदर्शनम् ॥ १९

उपयानापयाने च स्थानं प्रत्यपसर्पणम् ।
सर्वमेतद्रथस्थेन ज्ञेयं रथकुटुम्बिना ॥ २०

तव विश्रमहेतोश्च तथैषां रथवाजिनाम् ।
रौद्रं वर्जयता खेदं क्षमं कृतमिदं मया ॥ २१

न मया स्वेच्छया वीर! रथोऽयमपवाहितः ।
भर्तृस्नेहपरीतेन मयेदं यत्कृतं प्रभो! ॥ २२

आज्ञापय यथा तत्वं वक्ष्यस्यरिनिषूदन! ।
तत्करिष्याम्यहं वीर! गतानृण्येन चेतसा ॥ २३

सन्तुष्टस्तेन वाक्येन रावणस्तस्य सारथेः ।
प्रशस्यैनं बहुविधं युद्धलुब्धोऽब्रवीदिदम् ॥ २४

"रथं शीघ्रमिमं सूत! राघवाभिमुखं कुरु ।
नाहत्वा समरे शत्रून्निवर्तिष्यति रावणः ॥" २५

एवमुक्त्वा ततस्तुष्टो रावणो राक्षसेश्वरः ।
ददौ तस्मै शुभं ह्येकं हस्ताभरणमुत्तमम् ॥ २६

श्रुत्वा रावणवाक्यं तु सारथिस्संन्यवर्तत ।
ततो द्रुतं रावणवाक्यचोदितः प्रचोदयामास हयान् स सारथिः ।
स राक्षसेन्द्रस्य ततो महारथः क्षणेन रामस्य रणाग्रतोऽभवत् ॥ २७

इति श्रीमद्युद्धकाण्डे षडुत्तरशततमस्सर्गः ॥

---

## ॥ सप्तोत्तरशततमस्सर्गः ॥

### ॥ आदित्यहृदयम् ॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम् ।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम् ॥ १

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम् ।
उपगम्याब्रवीद्राममगस्त्यो भगवानृषिः ॥ २

"राम! राम! महाबाहो! शृणु गुह्यं सनातनम् ।
येन सर्वानरीन्वत्स! समरे विजयिष्यसि ॥ ३

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम् ।
जयावहं जपेन्नित्यमक्षय्यं परमं शिवम् ॥ ४

सर्वमङ्गळमङ्गल्यं सर्वपापप्रणाशनम् ।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम् ॥ ५

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम् ।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम् ॥ ६

सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः ।
एष देवासुरगणान्लोकान्पाति गभस्तिभिः ॥ ७

एष ब्रह्मा च विष्णुश्च शिवस्स्कन्दः प्रजापतिः ।
महेन्द्रो धनदः कालो यमस्सोमो ह्यपांपतिः ॥ ८

पितरो वसवस्साध्या ह्यश्विनौ मरुतो मनुः ।
वायुर्वह्निः प्रजाप्राण ऋतुकर्ता प्रभाकरः ॥ ९

आदित्यस्सविता सूर्यः खगः पूषा गभस्तिमान् ।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः ॥ १०

हरिदश्वस्सहस्रार्चिस्सप्तसप्तिर्मरीचिमान् ।
तिमिरोन्मथनश्शम्भुस्त्वष्टा मार्ताण्ड अंशुमान् ॥ ११

हिरण्यगर्भश्शिशिरस्तपनो भास्करो रविः ।
अग्निगर्भोऽदितेः पुत्रश्शङ्खश्शिशिरनाशनः ॥ १२

व्योमानथस्तमोभेदी ऋग्यजुस्सामपारगः ।
घनवृष्टिरपां मित्रो विन्ध्यवीथी प्लवङ्गमः ॥ १३

आतपी मण्डली मृत्युः पिङ्गलस्सर्वतापनः ।
कविर्विश्वो महातेजा रक्तस्सर्वभवोद्भवः ॥ १४

नक्षत्रग्रहताराणामधिपो विश्वभावनः ।
तेजसामतितेजस्वी द्वादशात्मन्नमोऽस्तु ते ॥ १५

नमः पूर्वाय गिरये पश्चिमे गिरये नमः ।
ज्योतिर्गणानां पतये दिनाधिपतये नमः ॥ १६

जयाय जयभद्राय हर्यश्वाय नमो नमः ।
नमो नमस्सहस्रांशो ! आदित्याय नमो नमः ॥ १७

नम उग्राय वीराय सारङ्गाय नमो नमः ।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः ॥ १८

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे ।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः ॥ १९

तमोघ्नाय हिमघ्नाय शत्रुघ्नायामितात्मने ।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः ॥ २०

तप्तचामीकराभाय वह्नये विश्वकर्मणे ।
नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे ॥ २१

नाशयत्येष वै भूतं तदेव सृजति प्रभुः ।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः ॥ २२

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः ।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम् ॥ २३

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च ।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः ॥ २४
एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च ।
कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव ! ॥ २५
पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम् ।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि ॥ २६
अस्मिन् क्षणे महाबाहो ! रावणं त्वं वधिष्यसि ।”
एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम् ॥ २७
एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा ।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥ २८
आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान् ।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥ २९
रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत् ।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥ ३०
अथ रविरवदन्निरीक्ष्य रामं मुदितमनाः परमं प्रहृष्यमाणः ।
निशिचरपतिसंक्षयं विदित्वा सुरगणमध्यगतो 'वचस्त्व'रेति ॥ ३१

इति श्रीमद्युद्धकाण्डे सप्तोत्तरशततमस्सर्गः ॥

---

## ॥ अष्टोत्तरशततमस्सर्गः ॥

स रथं सारथिर्हृष्टः परसैन्यप्रधर्षणम् ।
गन्धर्वनगराकारं समुच्छ्रितपताकिनम् ॥ १
युक्तं परमसंपन्नैर्वाजिभिर्हेममालिभिः ।
युद्धोपकरणैः पूर्णं पताकाध्वजमालिनम् ॥ २

प्रसन्तमिव चाकाशं नादयन्तं वसुन्धराम् ।
प्रणाशं परसैन्यानां स्वसैन्यानां प्रहर्षणम् ॥ ३

रावणस्य रथं क्षिप्रं चोदयामास सारथिः ।
तमापतन्तं सहसा स्वनवन्तं महास्वनम् ॥ ४

रथं राक्षसराजस्य नरराजो ददर्श ह ।
कृष्णवाजिसमायुक्तं युक्तं रौद्रेण वर्चसा ॥ ५

तडिमानमिवाकाशे विमानं सूर्यवर्चसम् ।
तटित्पताकागहनं दर्शितेन्द्रायुधायुधम् ॥ ६

शरधारा विमुञ्चन्तं धारासारमिवाम्बुदम् ।
तं दृष्ट्वा मेघसङ्काशमापतन्तं रथं रिपोः ॥ ७

गिरेर्वज्राभिमृष्टस्य दीर्यतस्सदृशास्वनम् ।
विष्फारयन्वै वेगेन बालचन्द्रनतं धनुः ॥ ८

उवाच मातलिं रामस्सहस्राक्षस्य सारथिम् ।
"मातले ! पश्य संरब्धमापतन्तं रथं रिपोः ॥ ९

यथापसव्यं पतता वेगेन महता पुनः ।
समरे हन्तुमात्मानं तथा तेन कृता मतिः ॥ १०

तदप्रमादमातिष्ठन् प्रत्युद्गच्छ रथं रिपोः ।
विध्वंसयितुमिच्छामि वायुर्मेघमिवोत्थितम् ॥ ११

अविक्लबमसंभ्रान्तमव्यग्रहृदयेक्षणम् ।
रश्मिसचारानियतं प्रचोदय रथं द्रुतम् ॥ १२

कामं न त्वं समाधेयः पुरन्दररथोचितः ।
युयुत्सुरहमेकाग्रः स्मारये त्वां न शिक्षये ॥" १३

परितुष्टस्स रामस्य तेन वाक्येन मातलिः ।
प्रचोदयामास रथं सुरसारथिसत्तमः ॥ १४

अपसव्यं ततः कुर्वन्रावणस्य महारथम् ।
चक्रोत्क्षिप्तेन रजसा रावणं व्यवधूनयत् ॥ १५

ततः क्रुद्धो दशग्रीवस्ताम्रविष्फारितेक्षणः ।
रथप्रतिमुखं रामं सायकैरवधूनयत् ॥ १६

धर्षणामर्षितो रामो धैर्यं रोषेण लम्भयन् ।
जग्राह सुमहावेगमैन्द्रं युधि शरासनम् ॥ १७

शरांश्च सुमहातेजास्सूर्यरश्मिसमप्रभान् ।
तदोपोढं महद्युद्धमन्योन्यवधकाङ्क्षिणोः ॥ १८

परस्पराभिमुखयोर्दृप्तयोरिव सिंहयोः ।
ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ॥ १९

समेयुर्द्वैरथं द्रष्टुं रावणक्षयकाङ्क्षिणः ।
समुत्पेतुरथोत्पाता दारुणा रोमहर्षणाः ॥ २०

रावणस्य विनाशाय राघवस्य जयाय च ।
ववर्ष रुधिरं देवो रावणस्य रथोपरि ॥ २१

वाता मण्डलिनस्तीक्ष्णा ह्यपसव्यं प्रचक्रमुः ।
महद्गृध्रकुलं चास्य भ्रममाणं नभःस्थले ॥ २२

येन येन रथो याति तेन तेन प्रधावति ।
सन्ध्यया चावृता लङ्का जपापुष्पनिकाशया ॥ २३

दृश्यते सम्प्रदीप्तेव दिवसेऽपि वसुन्धरा ।
सनिर्घाता महोल्काश्च संप्रचेरुर्महास्वनाः ॥ २४

विषादयंस्ते रक्षांसि रावणस्य तदाऽहिताः ।
रावणश्च यतस्तत्र संचचाल वसुन्धरा ॥ २५

रक्षसां च प्रहरतां गृहीता इव बाहवः ।
ताम्राः पीताश्शिताश्श्वेताः पतितास्सूर्यरश्मयः ॥ २६

दृश्यन्ते रावणस्याङ्गे पर्वतस्येव धातवः ।
गृध्रैरनुगताश्चास्य वमन्त्यो ज्वलनं मुखैः ॥ २७

प्रणेदुर्मुखमीक्षन्त्यस्संरब्धमशिवं शिवाः ।
प्रतिकूलं ववौ वायू रणे पांसून् समाकिरन् ॥ २८

तस्य राक्षसराजस्य कुर्वन्दृष्टिविलोपनम् ।
निपेतुरिन्द्राशनयस्सैन्ये चास्य समन्ततः ॥ २९

दुर्विषह्यस्वना घोरा विना जलधरस्वनम् ।
दिशश्च प्रदिशस्सर्वा बभूवुस्तिमिरावृताः ॥ ३०

पांसुवर्षेण महता दुर्दर्शं च नभोऽभवत् ।
कुर्वन्त्यः कलहं घोरं शारिकास्तद्रथं प्रति ॥ ३१

निपेतुश्शतशस्तत्र दारुणं दारुणारुताः ।
जघनेभ्यस्स्फुलिङ्गांश्च नेत्रेभ्योऽश्रूणि सन्ततम् ॥ ३२

मुमुचुस्तस्य तुरगास्तुल्यमग्निं च वारि च ।
एवं प्रकारा बहवस्समुत्पाता भयावहाः ॥ ३३

रावणस्य विनाशाय दारुणास्संप्रजज्ञिरे ।
रामस्यापि निमित्तानि सौम्यानि च शुभानि च ॥ ३४

बभूवुर्जयशंसीनि प्रादुर्भूतानि सर्वशः ।
निमित्तानि च सौम्यानि राघवस्य जयाय च ॥ ३५

दृष्ट्वा परमसंहृष्टो हतं मेने च रावणम् ।
ततो निरीक्ष्यात्मगतानि राघवो रणे निमित्तानि निमित्तकोविदः ।
जगाम हर्षं च परां च निर्वृतिं चकार युद्धे ह्यधिकं च विक्रमम् ॥

इति श्रीमद्युद्धकाण्डे अष्टोत्तरशततमस्सर्गः ॥

---

## ॥ नवोत्तरशततमस्सर्गः ॥

ततः प्रवृत्तं सुक्रूरं रामरावणयोस्तदा ।
सुमहद्द्वैरथं युद्धं सर्वलोकभयावहम् ॥ १

ततो राक्षससैन्यं च हरीणां च महद्बलम् ।
प्रगृहीतप्रहरणं निश्चेष्टं समतिष्ठत ॥ २

संप्रयुद्धौ ततो दृष्ट्वा बलवन्नरराक्षसौ ॥
व्याक्षिप्तहृदयास्सर्वे परं विस्मयमागताः ॥ ३

नानाप्रहरणैर्व्यग्रैर्भुजैर्विस्मितबुद्धयः ।
तस्थुः प्रेक्ष्य च संग्रामं नाभिजघ्नुः परस्परम् ॥ ४

रक्षसां रावणं चापि वानराणां च राघवम् ।
पश्यतां विस्मिताक्षाणां सैन्यं चित्रमिवाबभौ ॥ ५

तौ तु तत्र निमित्तानि दृष्ट्वा रावणराघवौ ।
कृतबुद्धी स्थिरामर्षौ युयुधाते ह्यभीतवत् । ६

जेतव्यमिति काकुत्स्थो मर्तव्यमिति रावणः ।
धृतौ स्ववीर्यसर्वस्वं युद्धे दर्शयतां तदा ॥ ७

ततः क्रुद्धो दशग्रीवश्शरान् सन्धाय वीर्यवान् ।
मुमोच ध्वजमुद्दिश्य राघवस्य रथे स्थितम् ॥ ८

ते शरास्तमनासाद्य पुरन्दररथध्वजम् ।
रथशक्तिं परामृश्य निपेतुर्धरणीतले ॥ ९

ततो रामोऽपि संक्रुद्धश्चापमायम्य वीर्यवान् ।
कृतप्रतिकृतं कर्तुं मनसा संप्रचक्रमे ॥ १०

रावणध्वजमुद्दिश्य मुमोच निशितं शरम् ।
महासर्पमिवासह्यं ज्वलन्तं स्वेन तेजसा ॥ ११

जगाम स महीं छित्त्वा दशग्रीवध्वजं शरः ।
स निकृत्तोऽपतद्भूमौ रावणस्य रथध्वजः ॥ १२

ध्वजस्योन्मथनं दृष्ट्वा रावणस्सुमहाबलः ।
संप्रदीप्तोऽभवत्क्रोधादमर्षात्प्रदहन्निव ॥ १३

स रोषवशमापन्नश्शरवर्षं महद्वमन् ।
रामस्य तुरगान् दीप्तैश्शरैर्विव्याध रावणः ॥ १४

ते विद्धा हरयस्तत्र नास्खलन्नापि बभ्रमुः ।
बभूवुस्स्वस्थहृदयाः पद्मनालैरिवाहताः ॥ १५

तेषामसम्भ्रमं दृष्ट्वा वाजिनां रावणस्तदा ।
भूय एव सुसंक्रुद्धश्शरवर्षं मुमोच ह ॥ १६

गदाश्च परिघांश्चैव चक्राणि मुसलानि च ।
गिरिशृङ्गाणि वृक्षांश्च तथा शूलपरश्वधान् ॥ १७

मायाविहितमेतत्तु शस्त्रवर्षमपातयत् ।
तुमुलं त्रासजननं भीमं भीमप्रतिस्वनम् ॥ १८

तद्वर्षमभवद्युद्धे नैकशस्त्रमयं महत् ।
विमुच्य राघवरथं समन्ताद्वानरे बले ॥ १९

सायकैरन्तरिक्षं च चकाराशु निरन्तरम् ।
सहस्रशस्ततो बाणानश्रान्तहृदयोद्यमः ॥ २०

मुमोच च दशग्रीवो निस्सङ्गेनान्तरात्मना ।
व्यायच्छमानं तं दृष्ट्वा सत्वरं रावणं रणे ॥ २१

प्रहसन्निव काकुत्स्थस्सन्दधे सायकान् शितान् ।
स मुमोच ततो बाणान्रणे शतसहस्रशः ॥ २२

तान्दृष्ट्वा रावणश्चक्रे स्वशरैः खं निरन्तरम् ।
ततस्ताभ्यां प्रमुक्तेन शरवर्षेण भास्वता ॥ २३

शरबद्धमिवाभाति द्वितीयं भास्वदम्बरम् ।
नानिमित्तोऽभवद्बाणो नातिभेत्ता न निष्फलः ॥ २४

अन्योन्यमभिसंहत्य निपेतुर्धरणीतले ।
तथा विसृजतोर्बाणान् रामरावणयोर्मृधे ॥ २५

प्रायुध्यतामविच्छिन्नावस्यन्तौ सव्यदक्षिणम् ।
चक्रतुस्तु शरौघैस्तौ निरुच्छ्वासमिवाम्बरम् ॥ २६

रावणस्य हयान्रामो हयान्रामस्य रावणः ।
जघ्नतुस्तौ तथाऽन्योन्यं कृतानुकृतकारिणौ ॥ २७

एवं तौ तु सुसंक्रुद्धौ चक्रतुर्युद्धमद्भुतम् ।
मुहूर्तमभवद्युद्धं तुमुलं रोमहर्षणम् ॥ २८

प्रयुध्यमानौ समरे महाबलौ शितैश्शरै रावणलक्ष्मणाग्रजौ ।
ध्वजावपातेन स राक्षसाधिपो भृशं प्रचुक्रोध तदा रघूत्तमे ॥ २९

इति श्रीमद्युद्धकाण्डे नवोत्तरशततमस्सर्गः ॥

---

## ॥ दशोत्तरशततमस्सर्गः ॥

तौ तदा युध्यमानौ तु समरे रामरावणौ ।
ददृशुस्सर्वभूतानि विस्मितेनान्तरात्मना ॥ १
अर्दयन्तौ तु समरे तयोस्तु स्यन्दनोत्तमौ ।
परस्परमभिक्रुद्धौ परस्परमभिद्रुतौ ॥ २
परस्परवधे युक्तौ घोररूपौ बभूवतुः ।
मण्डलानि च वीथीश्च गतप्रत्यागतानि च ॥ ३
दर्शयन्तौ बहुविधां सूतसारथ्यजां गतिम् ।
अर्दयन्रावणं रामो राघवं चापि रावणः ॥ ४
गतिवेगं समापन्नौ प्रवर्तननिवर्तने ।
क्षिपतोश्शरजालानि तयोस्तौ स्यन्दनोत्तमौ ॥ ५
चेरतुस्संयुगमहीं सासारौ जलदौ यथा ।
दर्शयित्वा तथा तौ तु गतिं बहुविधां रणे ॥ ६
परस्परस्याभिमुखौ पुनरेवावतस्थतुः ।
धुरं धुरेण रथयोर्वक्त्रं वक्त्रेण वाजिनाम् ॥ ७
पताकाश्च पताकाभिस्समेयुः स्थितयोस्तदा ।
रावणस्य ततो रामो धनुर्मुक्तैश्शितैश्शरैः ॥ ८
चतुर्भिश्चतुरो दीप्तैर्हयान्प्रत्यपसर्पयत् ।
स क्रोधवशमापन्नो हयानामपसर्पणे ॥ ९
मुमोच निशितान्बाणान् राघवाय निशाचरः ।
सोऽतिविद्धो बलवता दशग्रीवेण राघवः ॥ १०
जगाम न विकारं च नचापि व्यथितोऽभवत् ।
चिक्षेप च पुनर्बाणान्वज्रपातसमस्वनान ॥ ११

सारथिं वज्रहस्तस्य समुद्दिश्य निशाचरः ।
मातलेस्तु महावेगाश्शरीरे पतिताश्शराः ॥ १२

न सूक्ष्ममपि सम्मोहं व्यथां वा प्रददुर्युधि ।
तया धर्षणया क्रुद्धो मातलेर्न तथाऽऽत्मनः ॥ १३

चकार शरजालेन राघवो विमुखं रिपुम् ।
विंशतं त्रिंशतं षष्टिं शतशोऽथ सहस्रशः ॥ १४

मुमोच राघवो वीरस्सायकान् स्यन्दने रिपोः ।
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ॥ १५

गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ।
तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ॥ १६

गदानां मुसलानां च परिघाणां च निस्वनैः ।
शराणां पुङ्खपातैश्च क्षुभितास्सप्तसागराः ॥ १७

क्षुब्धानां सागराणां च पातालतलवासिनः ।
व्यथिताः पन्नगास्सर्वे दानवाश्च सहस्रशः ॥ १८

चकम्पे मेदिनी कृत्स्ना सशैलवनकानना ।
भास्करो निष्प्रभश्चासीन्न ववौ चापि मारुतः ॥ १९

ततो देवास्सगन्धर्वास्सिद्धाश्च परमर्षयः ।
चिन्तामापेदिरे सर्वे सकिन्नरमहोरगाः ॥ २०

" स्वस्ति गोब्राह्मणेभ्योऽस्तु लोकास्तिष्ठन्तु शाश्वताः ।
जयतां राघवस्संख्ये रावणं राक्षसेश्वरम् ॥ " २१

एवं जपन्तोऽपश्यंस्ते देवास्सर्षिगणास्तदा ।
रामरावणयोर्युद्धं सुघोरं रोमहर्षणम् ॥ २२

गन्धर्वाप्सरसां सङ्घा दृष्ट्वा युद्धमनूपमम् ।
"गगनं गगनाकारं सागरस्सागरोपमः ॥ २३

रामरावणयोर्युद्धं रामरावणयोरिव ।"
एवं ब्रुवन्तो ददृशुस्तद्युद्धं रामरावणम् ॥ २४

ततः क्रुद्धो महाबाहू रघूणां कीर्तिवर्धनः ।
सन्धाय धनुषा रामः क्षुरमाशीविषोपमम् ॥ २५

(चिक्षेप परमक्रुद्धो रावणस्य शिरो रणे) ।
रावणस्य शिरश्छिन्दंश्श्रीमज्ज्वलितकुण्डलम् ॥ २६

तच्छिरः पतितं भूमौ दृष्टं लोकैस्त्रिभिस्तदा ।
तस्यैव सदृशं चान्यद्रावणस्योत्थितं शिरः ॥ २७

तत्क्षिप्रं क्षिप्रहस्तेन रामेण क्षिप्रकारिणा ।
द्वितीयं रावणशिरश्छिन्नं संयति सायकैः ॥ २८

छिन्नमात्रं तु तच्छीर्षं पुनरन्यत् स्म दृश्यते ।
तदप्यशनिसङ्काशैश्छिन्नं रामेण सायकैः ॥ २९

एवमेकशतं छिन्नं शिरसां तुल्यवर्चसाम् ।
नचैव रावणस्यान्तो दृश्यते जीवितक्षये ॥ ३०

ततस्सर्वास्त्रविद्वीरः कौसल्यानन्दवर्धनः ।
मार्गणैर्बहुभिर्युक्तश्चिन्तयामास राघवः ॥ ३१

"मारीचो निहतो यैस्तु खरो यैस्तु सदूषणः ।
क्रौञ्चारण्ये विराधस्तु कबन्धो दण्डकावने ॥ ३२

त इमे सायकास्सर्वे युद्धे प्रत्यायिका मम ।
किन्नु तत्कारणं येन रावणे मन्दतेजसः ॥ ३३

इति चिन्तापरश्चासीदप्रमत्तश्च संयुगे ।
ववर्ष शरवर्षाणि राघवो रावणोरसि ॥ ३४
रावणोऽपि ततः क्रुद्धो रथस्थो राक्षसेश्वरः ।
गदामुसलवर्षेण रामं प्रत्यर्दयद्रणे ॥ ३५
तत्प्रवृत्तं महद्युद्धं तुमुलं रोमहर्षणम् ।
अन्तरिक्षे च भूमौ च पुनश्च गिरिमूर्धनि ॥ ३६
देवदानवयक्षाणां पिशाचोरगरक्षसाम् ।
पश्यतां तन्महद्युद्धं सर्वरात्रमवर्तत ॥ ३७
नैव रात्रं न दिवसं न मुहूर्तं न च क्षणम् ।
रामरावणयोर्युद्धं विराममुपगच्छति ॥ ३८
दशरथसुतराक्षसेन्द्रयोर्जयमनवेक्ष्य रणे स राघवस्य ।
सुरवररथसारथिर्महान् रणगतमेनमुवाच वाक्यमाशु ॥ ३९

इति श्रीमद्युद्धकाण्डे दशोत्तरशततमस्सर्गः ॥

---

## ॥ एकादशोत्तरशततमस्सर्गः ॥

अथ संस्मारयामास राघवं मातलिस्तदा ।
अजानन्निव किं वीर ! त्वमेनमनुवर्तसे ॥ १
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो ! ।
विनाशकालः कथितो यस्सुरैस्सोऽद्य वर्तते ॥ " २
ततस्संस्मारितो रामस्तेन वाक्येन मातलेः ।
जग्राह स शरं दीप्तं निश्श्वसन्तमिवोरगम् ॥ ३
यमस्मै प्रथमं प्रादादगस्त्यो भगवानृषिः ।
ब्रह्मदत्तं महाबाणममोघं युधि वीर्यवान् ॥ ४

ब्रह्मणा निर्मितं पूर्वमिन्द्रार्थममितौजसा ।
दत्तं सुरपतेः पूर्वं त्रिलोकजयकाङ्क्षिणः ॥ ५

यस्य वाजेषु पवनः फले पावकभास्करौ ।
शरीरमाकाशमयं गौरवे मेरुमन्दरौ ॥ ६

जाज्वल्यमानं वपुषा सुपुङ्खं हेमभूषितम् ।
तेजसा सर्वभूतानां कृतं भास्करवर्चसम् ॥ ७

सधूममिव कालाग्निं दीप्तमाशीविषं यथा ।
परनागाश्ववृन्दानां भेदनं क्षिप्रकारिणम् ॥ ८

द्वाराणां परिघाणां च गिरीणामपि भेदनम् ।
नानारुधिरसिक्ताङ्गं मेदोदिग्धं सुदारुणम् ॥ ९

वज्रसारं महानादं नानासमितिदारणम् ।
सर्ववित्रासनं भीमं श्वसन्तमिव पन्नगम् ॥ १०

कङ्कगृध्रबळानां च गोमायुगणरक्षसाम् ।
नित्यं भक्षप्रदं युद्धे यमरूपं भयावहम् ॥ ११

नन्दनं वानरेन्द्राणां रक्षसामवसादनम् ।
वाजितं विविधैर्वाजैश्चारुचित्रैर्गरुत्मतः ॥ १२

तमुत्तमेषुं लोकानामिक्ष्वाकुभयनाशनम् ।
द्विषतां कीर्तिहरणं प्रहर्षकरमात्मनः ॥ १३

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः ।
वेदप्रोक्तेन विधिना सन्दधे कार्मुके बली ॥ १४

तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे ।
सर्वभूतानि वित्रेसुश्चचाल च वसुन्धरा ॥ १५

स रावणाय संक्रुद्धो भृशमायम्य कार्मुकम् ।
चिक्षेप परमायत्तस्तं शरं मर्मघातिनम् ॥ १६

स वज्र इव दुर्धर्षो वज्रिबाहुविसर्जितः ।
कृतान्त इव चावार्यो न्यपतद्रावणोरसि ॥ १७

स विसृष्टो महावेगश्शरीरान्तकरश्शरः ।
बिभेद हृदयं तस्य रावणस्य दुरात्मनः ॥ १८

रुधिराक्तस्सवेगेन जीवितान्तकरश्शरः ।
रावणस्य हरन्प्राणान्विवेश धरणीतलम् ॥ १९

स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः ।
कृतकर्मा निभृतवत्स्वतूणीं पुनरागमत् ॥ २०

तस्य हस्ताद्धतस्याशु कार्मुकं तत्ससायकम् ।
निपपात सहप्राणैर्भ्रश्यमानस्य जीवितात् ॥ २१

गतासुर्भीमवेगस्तु नैरृतेन्द्रो महाद्युतिः ।
पपात स्यन्दनाद्भूमौ वृत्रो वज्रहतो यथा ॥ २२

तं दृष्ट्वा पतितं भूमौ हतशेषा निशाचराः ।
हतनाथा भयत्रस्तास्सर्वतस्संप्रदुद्रुवुः ॥ २३

नर्दन्तश्चाभिपेतुस्तान्वानरा द्रुमयोधिनः ।
दशग्रीववधं दृष्ट्वा विजयं राघवस्य च ॥ २४

अर्दिता वानरैर्हृष्टैर्लङ्कामभ्यपतन्भयात् ।
गताश्रयत्वात्करुणैर्बाष्पप्रस्रवणैर्मुखैः ॥ २५

ततो विनेदुस्संहृष्टा वानरा जितकाशिनः ।
वदन्तो राघवजयं रावणस्य च तद्वधम् ॥ २६

अथान्तरिक्षे व्यनदत्सौम्यस्त्रिदशदुन्दुभिः ।
दिव्यगन्धवहस्तत्र मारुतस्सुसुखं ववौ ॥ २७

निपपातान्तरिक्षाच्च पुष्पवृष्टिस्तदा भुवि ।
किरन्ती राघवरथं दुरवापा मनोरमा ॥ २८

राघवस्तवसंयुक्ता गगनेऽपि च शुश्रुवे ।
साधुसाध्विति वागग्र्या देवतानां महात्मनाम् ॥ २९

आविवेश महाहर्षो देवानां चारणैस्सह ।
रावणे निहते रौद्रे सर्वलोकभयङ्करे ॥ ३०

ततस्सकामं सुग्रीवमङ्गदं च महाबलम् ।
चकार राघवः प्रीतो हत्वा राक्षसपुङ्गवम् ॥ ३१

ततः प्रजग्मुः प्रशमं मरुद्गणा दिशः प्रसेदुर्विमलं नभोऽभवत् ।
मही चकम्पे न च मारुतो ववौ स्थिरप्रभश्चाप्यभवद्दिवाकरः ॥ ३२

ततस्तु सुग्रीवविभीषणादयस्सुहृद्विशेषास्सहलक्ष्मणास्तदा ।
समेत्य हृष्टा विजयेन राघवं रणेऽभिरामं विधिनाऽभ्यपूजयन् ॥ ३३

स तु निहतरिपुः स्थिरप्रतिज्ञस्स्वजनबलाभिवृतो रणे रराज ।
रघुकुलनृपनन्दनो महौजास्त्रिदशगणैरभिसंवृतो यथेन्द्रः ॥ ३४

इति श्रीमद्युद्धकाण्डे एकादशोत्तरशततमस्सर्गः ॥

---

## ॥ द्वादशोत्तरशततमस्सर्गः ॥

भ्रातरं निहतं दृष्ट्वा शयानं रामनिर्जितम् ।
शोकवेगपरीतात्मा विललाप विभीषणः ॥ १

"वीर ! विक्रान्त ! विख्यात ! विनीत ! नयकोविद ! ।
महार्हशयनोपेत ! किं शेषेऽद्य हतो भुवि ॥ २

विक्षिप्य दीर्घौ निश्चेष्टौ भुजावङ्गदभूषितौ ।
मकुटेनापवृत्तेन भास्कराकारवर्चसा ॥ ३

तदिदं वीर! संप्राप्तं मया पूर्वं समीरितम् ।
काममोहपरीतस्य यत्ते न रुचितं वचः ॥ ४

यन्न दर्पात्प्रहस्तो वा नेन्द्रजिन्नापरे जनाः ।
न कुम्भकर्णोऽतिरथो नातिकायो नरान्तकः ॥ ५

न स्वयं त्वममन्येथास्तस्योदर्कोऽयमागतः ।
गतस्सेतुस्सुनीतानां गतो धर्मस्य विग्रहः ॥ ६

गतस्सत्त्वस्य संक्षेपः प्रस्तावानां गतिर्गता ।
आदित्यः पतितो भूमौ मग्नस्तमसि चन्द्रमाः ॥ ७

चित्रभानुः प्रशान्तार्चिर्व्यवसायो निरुद्यमः ।
अस्मिन्निपतिते भूमौ वीरे शस्त्रभृतां वरे ॥ ८

किं शेषमिव लोकस्य हतवीरस्य सांप्रतम् ।
रणे राक्षसशार्दूले प्रसुप्त इव पांसुषु ॥ ९

धृतिप्रवाळः प्रसहाग्र्यपुष्पस्तपोबलश्शौर्यनिबद्धमूलः ।
रणे महान्राक्षसराजवृक्षस्सम्मर्दितो राघवमारुतेन ॥ १०

तेजोविषाणः कुलवंशवंशः कोपप्रसादापरगात्रहस्तः ।
इक्ष्वाकुसिंहावगृहीतदेहस्सुप्तः क्षितौ रावणगन्धहस्ती ॥ ११

पराक्रमोत्साहविजृम्भितार्चिर्निश्श्वासधूमस्स्वबलप्रतापः ।
प्रतापवान् संयति राक्षसाग्निर्निर्वापितो रामपयोधरेण ॥ १२

सिंहर्क्षलाङ्गूलककुद्विषाणः पराभिजिद्गन्धनगन्धहस्ती ।
रक्षोवृषश्चापलकर्णचक्षुः क्षितीश्वरव्याघ्रहतोऽवसन्नः ॥" १३

वदन्तं हेतुमद्वाक्यं परिमृष्टार्थनिश्चयम् ।
रामश्शोकसमाविष्टमित्युवाच विभीषणम् ॥ १४

" नायं विनष्टो निश्चेष्टस्समरे चण्डविक्रमः ।
अत्युन्नतमहोत्साहः पतितोऽयमशङ्कितः ॥ १५

नैवं विनष्टाश्शोच्यन्ते क्षत्रधर्ममवस्थिताः ।
वृद्धिमाशंसमाना ये निपतन्ति रणाजिरे ॥ १६

येन सेन्द्रास्त्रयो लोकास्त्रासिता युधि धीमता ।
तस्मिन्कालसमायुक्ते न कालः परिशोचितुम् ॥ १७

नैकान्तविजयो युद्धे भूतपूर्वः कदाचन ।
परैर्वा हन्यते वीरः परान्वा हन्ति संयुगे ॥ १८

इयं हि पूर्वैस्सन्दिष्टा गतिः क्षत्रियसम्मता ।
क्षत्रियो निहतस्संख्ये न शोच्य इति निश्चयः ॥ १९

तदेवं निश्चयं दृष्ट्वा तत्त्वमास्थाय विज्वरः ।
यदिहानन्तरं कार्यं कल्प्यं तदनुचिन्तय ॥" २०

तमुक्तवाक्यं विक्रान्तं राजपुत्रं विभीषणः ।
उवाच शोकसन्तप्तो भ्रातुर्हितमनन्तरम् ॥ २१

" योऽयं विमर्देषु न भग्नपूर्वस्सुरैस्समेतैस्सह वासवेन ।
भवन्तमासाद्य रणे विभग्नो वेलां समासाद्य यथा समुद्रः ॥ २२

अनेन दत्तानि सुपूजितानि भुक्ताश्च भोगा निभृताश्च भृत्याः ।
धनानि मित्रेषु समर्पितानि वैराण्यमित्रेषु च यापितानि ॥ २३

एषोऽऽहिताग्निश्च महातपाश्च वेदान्तगः कर्मसु चाग्र्यवीर्यः ।
एतस्य यत्प्रेतगतस्य कृत्यं तत्कर्तुमिच्छामि तव प्रसादात् ॥!' २४

स तस्य वाक्यैः करुणैर्महात्मा सम्बोधितस्साधु विभीषणेन ।
आज्ञापयामास नरेन्द्रसूनुस्स्वर्गीयमाधानमदीनसत्त्वः ॥ २५
" मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ " २६

इतिश्रीमद्युद्धकाण्डे द्वादशोत्तरशततमस्सर्गः ॥

## ॥ त्रयोदशोत्तरशततमस्सर्गः ॥

रावणं निहतं श्रुत्वा राघवेण महात्मना ।
अन्तःपुराद्विनिष्पेतू राक्षस्यश्शोककर्शिताः ॥ १
वार्यमाणास्सुबहुशो वेष्ट्यन्त्यः क्षितिपांसुषु ।
विमुक्तकेश्यो दुःखार्ता गावो वत्सहता इव ॥ २
उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ।
प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥ ३
'राजपु'त्रेति वादिन्यो 'हानाथे' ति च सर्वशः ।
परिपेतुः कबन्धाङ्कां महीं शोणितकर्दमाम् ॥ ४
ता बाष्पपरिपूर्णाक्ष्यो भर्तृशोकपराजिताः ।
करेण्व इव नर्दन्त्यो विनेदुर्हतयूथपाः ॥ ५
ददृशुस्तं महावीर्यं महाकायं महाद्युतिम् ।
रावणं निहतं भूमौ नीलाञ्जनचयोपमम् ॥ ६
ताः पतिं सहसा दृष्ट्वा शयानं रणपांसुषु ।
निपेतुस्तस्य गात्रेषु च्छिन्ना वनलता इव ॥ ७
बहुमानात्परिष्वज्य काचिदेनं रुरोदह ।
चरणौ काचिदालिंग्य काचित्कण्ठेऽवलम्ब्य च ॥ ८

उद्धृत्य च भुजौ काचिद्भूमौ स्म परिवर्तते ।
हतस्य वदनं दृष्ट्वा काचिन्मोहमुपागमत् ॥ ९

काचिदङ्के शिरः कृत्वा रुरोद मुखमीक्षती ।
स्नापयन्ती मुखं बाष्पैस्तुषारैरिव पङ्कजम् ॥ १०

एवमार्ताः पतिं दृष्ट्वा रावणं निहतं भुवि ।
चुक्रुशुर्बहुधा शोकाद्भूयस्ताः पर्यदेवयन् ॥ ११

"येन वित्रासितश्शक्रो येन वित्रासितो यमः ।
येन वैश्रवणो राजा पुष्पकेण वियोजितः ॥ १२

गन्धर्वाणामृषीणां च सुराणां च महात्मनाम् ।
भयं येन महद्दत्तं सोऽयं शेते रणे हतः ॥ १३

असुरेभ्यस्सुरेभ्यो वा पन्नगेभ्योऽपि वा तथा ।
न भयं यो विजानाति तस्येदं मानुषाद्भयम् ॥ १४

अवध्यो देवतानां यस्तथा दानवरक्षसाम् ।
हतस्सोऽयं रणे शेते मानुषेण पदातिना ॥ १५

यो न शक्यस्सुरैर्हन्तुं न यक्षैर्नासुरैस्तथा ।
सोऽयं कश्चिदिवासत्त्वो मृत्युं मर्त्येन लम्भितः ॥" १६

एवं वदन्त्यो बहुधा रुरुदुस्तस्य ताः स्त्रियः ।
भूय एव च दुःखार्ता विलेपुश्च पुनः पुनः ॥ १७

"अशृण्वता च सुहृदां सततं हितवादिनाम् ।
मरणायाहृता सीता घातिताश्च निशाचराः ॥ १८

एतास्समामिदानीं ते वयमात्मा च पातिताः ।
ब्रुवाणोऽपि हितं वाक्यमिष्टो भ्राता विभीषणः ॥ १९

धृष्टं परुषितो मोहात्त्वयाऽत्मवधकाङ्क्षिणा ।
यदि निर्यातिता ते स्यात्सीता रामाय मैथिली ॥ २०

न नस्स्याद्व्यसनं घोरमिदं मूलहरं महत् ।
वृत्तकामो भवेद्भ्राता रामो मित्रकुलं भवेत् ॥ २१

वयं चाविधवास्सर्वास्सकामा न च शत्रवः ।
त्वया पुनर्नृशंसेन सीतां संरुन्धता बलात् ॥ २२

राक्षसा वयमात्मा च त्रयं तुल्यं निपातितम् ।
न कामकारः कामं वा तव राक्षसपुङ्गव ! ॥ २३

दैवं चेष्टयते सर्वं हतं दैवेन हन्यते ।
वानराणां विनाशोऽयं रक्षसां च महाहवे ॥ २४

तव चैव महाबाहो ! दैवयोगादुपागतः ।
नैवार्थेन न कामेन विक्रमेण न चाज्ञया ॥ २५

शक्या दैवगतिर्लोके निवर्तयितुमुद्यता । ”
विलेपुरेवं दीनास्ता राक्षसाधिपयोषितः ॥ २६
कुरर्य इव दुःखार्ता बाष्पपर्याकुलेक्षणाः ॥

इति श्रीमद्युद्धकाण्डे त्रयोदशोत्तरशततमस्सर्गः ॥

---

## ॥ चतुर्दशोत्तरशततमस्सर्गः ॥

तासां विलपमानानां तदा राक्षसयोषिताम् ।
ज्येष्ठा पत्नी प्रिया दीना भर्तारं समुदैक्षत ॥ १

दशग्रीवं हतं दृष्ट्वा रामेणाचिन्त्यकर्मणा ।
पतिं मन्दोदरी तत्र कृपणा पर्यदेवयत् ॥ २

"ननु नाम महाभाग! तव वैश्रवणानुज! ।
क्रुद्धस्य प्रमुखे स्थातुं त्रस्यत्यपि पुरन्दरः ॥ ३

ऋषयश्च महीदेवा गन्धर्वाश्च यशस्विनः ।
ननु नाम तवोद्वेगाच्चारणाश्च दिशो गताः ॥ ४

स त्वं मानुषमात्रेण रामेण युधि निर्जितः ।
न व्यपत्रपसे राजन्! किमिदं राक्षसर्षभ! ॥ ५

कथं त्रैलोक्यमाक्रम्य श्रिया वीर्येण चान्वितम् ।
अविषह्यं जघान त्वां मानुषो वनगोचरः ॥ ६

मानुषाणामविषये चरतः कामरूपिणः ।
विनाशस्तव रामेण संयुगे नोपपद्यते ॥ ७

न चैतत्कर्म रामस्य श्रद्दधामि चमूमुखे ।
सर्वतस्समुपेतस्य तव तेनाभिमर्शनम् ॥ ८

यदैव च जनस्थाने राक्षसैर्बहुभिर्वृतः ।
खरस्तव हतो भ्राता तदैवासौ न मानुषः ॥ ९

यदैव नगरीं लङ्कां दुष्प्रवेशां सुरैरपि ।
प्रविष्टो हनुमान्वीर्यात्तदैव व्यथिता वयम् ॥ १०

यदैव वानरैर्घोरैर्बद्धस्सेतुर्महार्णवे ।
तदैव हृदयेनाहं शङ्के राममंमानुषम् ॥ ११

अथवा रामरूपेण कृतान्तस्स्वयमागतः ।
मायां तव विनाशाय विधायाप्रतितर्किताम् ॥ १२

अथवा वासवेन त्वं धर्षितोऽसि महाबल! ।
वासवस्य कुतश्शक्तिस्त्वां द्रष्टुमपि संयुगे ॥ १३

(महावीर्यं महासत्त्वं देवशत्रुं भयावहम्) ।
व्यक्तमेष महायोगी परमात्मा सनातनः ॥ १४

अनादिमध्यनिधनो महतः परमो महान् ।
तमसः परमो धाता शङ्खचक्रगदाधरः ॥ १५

श्रीवत्सवक्षा नित्यश्रीरजय्यश्शाश्वतो ध्रुवः ।
मानुषं वपुरास्थाय विष्णुस्सत्यपराक्रमः ॥ १६

सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः ।
सर्वलोकेश्वरस्साक्षाल्लोकानां हितकाम्यया ॥ १७

सराक्षसपरीवारं हतवांस्त्वां महाद्युतिः ।
इन्द्रियाणि पुरा जित्वा जितं त्रिभुवनं त्वया ॥ १८

स्मरद्भिरिव तद्वैरमिन्द्रियैरेव निर्जितः ।
'क्रियतामविरोधश्च राघवे' णेति यन्मया ॥ १९

उच्यमानो न गृह्णासि तस्येयं व्युष्टिरागता ।
अकस्माच्चाभिकामोऽसि सीतां राक्षसपुङ्गव! ॥ २०

ऐश्वर्यस्य विनाशाय देहस्य स्वजनस्य च ।
अरुन्धत्या विशिष्टां तां रोहिण्याश्चापि दुर्मते ॥ २१

सीतां धर्षयता मान्यां त्वया ह्यसदृशं कृतम् ।
वसुधायाश्च वसुधां श्रियः श्रीं भर्तृवत्सलाम् ॥ २२

सीतां सर्वानवद्याङ्गीमरण्ये विजने शुभाम् ।
आनयित्वा तु तां दीनां छद्मनाऽऽत्मस्वदूषण! ॥ २३

अप्राप्य चैव तं कामं मैथिलीसङ्गमे कृतम् ।
पतिव्रतायास्तपसा नूनं दग्धोऽसि मे प्रभो! ॥ २४

तदैव यन्न दग्धस्त्वं धर्षयंस्तनुमध्यमाम् ।
देवा बिभ्यति ते सर्वे सेन्द्रास्साग्निपुरोगमाः ॥ २५

अवश्यमेव लभते फलं पापस्य कर्मणः ।
घोरं पर्यागते काले कर्ता नास्त्यत्र संशयः ॥ २६

शुभकृच्छुभमाप्नोति पापकृत्पापमश्नुते ।
विभीषणस्सुखं प्राप्तस्त्वं प्राप्तः पापमीदृशम् ॥ २७

सन्त्यन्याः प्रमदास्तुभ्यं रूपेणाभ्यधिकास्ततः ।
अनङ्गवशमापन्नस्त्वं तु मोहान्न बुध्यसे ॥ २८

न कुलेन न रूपेण न दाक्षिण्येन मैथिली ।
मयाधिका वा तुल्या वा त्वं तु मोहान्न बुध्यसे ॥ २९

सर्वथा सर्वभूतानां नास्ति मृत्युरलक्षणः ।
तव तावदयं मृत्युर्मैथिलीकृतलक्षणः ॥ ३०

सीतानिमित्तजो मृत्युस्त्वया दूरादुपाहृतः ।
मैथिली सह रामेण विशोका विहरिष्यति ॥ ३१

अल्पपुण्या त्वहं घोरे पतिता शोकसागरे ।
कैलासे मन्दरे मेरौ तथा चैत्ररथे वने ॥ ३२

देवोद्यानेषु सर्वेषु विहृत्य सहिता त्वया ।
विमानेनानुरूपेण यायाम्यतुलया श्रिया ॥ ३३

पश्यन्ती विविधान्देशांस्तांस्तांश्चित्रस्रगम्बरा ।
भ्रंशिता कामभोगेभ्यस्साऽस्मि वीर ! वधात्तव ॥ ३४

सैवान्येवास्मि संवृत्ता धिग्राज्ञां चञ्चलाः श्रियः ।
हा राजन् ! सुकुमारं ते सुभ्रु सुत्वक्समुन्नसम् ॥ ३५

कीर्तिश्रीद्युतिभिस्तुल्यमिन्दुपद्मदिवाकरैः ।
किरीटकूटोज्ज्वलितं ताम्रास्यं दीप्तकुण्डलम् ॥ ३६

मदव्याकुललोलाक्षं भूत्वा यत्पानभूमिषु ।
विविधस्रग्धरं चारु वल्गुस्मितकथं शुभम् ॥ ३७

तदेवाद्य तवेदं हि वक्त्रं न भ्राजते प्रभो ! ।
रामसायकनिर्भिन्नं सिक्तं रुधिरविस्रवैः ॥ ३८

विशीर्णमेदोमस्तिष्कं रूक्षं स्यन्दनरेणुभिः ।
हा पश्चिमा मे संप्राप्ता दशा वैधव्यकारिणी ॥ ३९

या मयाऽऽसीन्न सम्बुद्धा कदाचिदपि मन्दया ।
'पिता दानवराजो मे' 'भर्ता मे राक्षसेश्वरः ॥' ४०

'पुत्रो मे शक्रनिर्जेता' इत्येवं गर्विता भृशम् ।
दृप्तारिमर्दनाश्शूराः प्रख्यातबलपौरुषाः ॥ ४१

अकुतश्चिद्भयानाथा ममेत्यासीन्मतिर्दृढा ।
तेषामेवं प्रभावानां युष्माकं राक्षसर्षभ ! ॥ ४२

कथं भयमसंबुद्धं मानुषादिदमागतम् ।
स्निग्धेन्द्रनीलनीलं तु प्रांशु शैलोपमं महत् ॥ ४३

केयूराङ्गदवैडूर्यमुक्तादामस्रगुज्ज्वलम् ।
कान्तं विहारेष्वधिकं दीप्तं सङ्ग्रामभूमिषु ॥ ४४

भात्याभरणभाभिर्यद्विद्युद्भिरिव तोयदः ।
तदवाद्य शरीरं ते तीक्ष्णैर्नैकैश्शरैश्चितम् ॥ ४५

पुनर्दुर्लभसंस्पर्शं परिष्वक्तुं न शक्यते ।
श्वाविदश्शललैर्यद्वद्बाणैर्लग्नैर्निरन्तरम् । ४६

स्वर्पितैर्मर्मसु भृशं संछिन्नस्नायुबन्धनम् ।
क्षितौ निपतितं राजन्! श्यावं रुधिरसच्छवि ॥ ४७

वज्रप्रहाराभिहतो विकीर्ण इव पर्वतः ।
हा स्वप्नस्सत्यमेवेदं त्वं रामेण कथं हतः ॥ ४८

त्वं मृत्योरपि मृत्युस्स्याः कथं मृत्युवशं गतः ।
त्रैलोक्यवसुभोक्तारं त्रैलोक्योद्वेगदं महत् ॥ ४९

जेतारं लोकपालानां क्षेप्तारं शङ्करस्य च ।
दृप्तानां निगृहीतारमाविष्कृतपराक्रमम् ॥ ५०

लोकक्षोभयितारं च नादैर्भूतविराविणम् ।
ओजसा दृप्तवाक्यानां वक्तारं रिपुसन्निधौ ॥ ५१

स्वयूथभृत्यवर्गाणां गोप्तारं भीमकर्मणाम् ।
हन्तारं दानवेन्द्राणां यक्षाणां च सहस्रशः ॥ ५२

निवातकवचानां च संगृहीतारमीश्वरम् ।
नैकयज्ञविलोप्तारं त्रातारं स्वजनस्य च ॥ ५३

धर्मव्यवस्थाभेत्तारं मायास्रष्टारमाहवे ।
देवासुरनृकन्यानामाहर्तारं ततस्ततः ॥ ५४

शत्रुस्त्रीशोकदातारं नेतारं स्वजनस्य च ।
लङ्काद्वीपस्य गोप्तारं कर्तारं भीमकर्मणाम् ॥ ५५

अस्माकं कामभोगानां दातारं रथिनां वरम् ।
एवं प्रभावं भर्तारं दृष्ट्वा रामेण पातितम् ॥ ५६

स्थिराऽस्मि या देहमिमं धारयामि हतप्रिया ।
शयनेषु महार्हेषु शयित्वा राक्षसेश्वर! ॥ ५७

इह कस्मात्प्रसुप्तोऽसि धरण्यां रेणुपाटलः ।
यदा मे तनयश्शस्तो लक्ष्मणेनेन्द्रजिद्युधि ॥ ५८

तदाऽस्म्यभिहता तीव्रमद्य त्वस्मिन्निपातिता ।
नाहं बन्धुजनैर्हीना हीना नाथेन तु त्वया ॥ ५९

विहीना कामभोगैश्च शोचिष्ये शाश्वतीस्समाः ।
प्रपन्नो दीर्घमध्वानं राजन्नद्यासि दुर्गमम् ॥ ६०

नय मामपि दुःखार्तां न जीविष्ये त्वया विना ।
कस्मात्त्वं मां विहायेह कृपणां गन्तुमिच्छसि ॥ ६१

दीनां विलपितैर्मन्दां किं वा मां नाभिभाषसे ।
दृष्ट्वा न खल्वसि क्रुद्धो मामिहानवकुण्ठिताम् ॥ ६२

निर्गतां नगरद्वारात्पद्भ्यामेवागतां प्रभो ! ।
पश्येष्टदारदारांस्ते भ्रष्टलज्जावकुण्ठिताम् ॥ ६३

बहिर्निष्पतितान् सर्वान्कथं दृष्ट्वा न कुप्यसि ।
अयं क्रीडासहायस्ते नाथ ! लालप्यते जनः ॥ ६४

न चैनमाश्वासयसे किं वा न बहुमन्यसे ।
यास्त्वया विधवा राजन् ! कृता नैकाः कुलस्त्रियः ॥ ६५

पतिव्रता धर्मपरा गुरुशुश्रुषणे रताः ।
ताभिश्शोकाभितप्ताभिश्शप्तः परवशं गतः ॥ ६६

त्वया विप्रकृताभिर्यत्तदा शप्तं तदा गतम् ।
प्रवादस्सत्य एवायं त्वां प्रति प्रायशो नृप ! ॥ ६७

पतिव्रतानां नाकस्मात्पतन्त्यश्रूणि भूतले ॥
कथं च नाम ते राजन् ! लोकानाक्रम्य तेजसा ॥ ६८

नारीचौर्यमिदं क्षुद्रं कृतं शौण्डीर्यमानिना ।
अपनीयाश्रमाद्रामं यन्मृगच्छद्मना त्वया । ६९

आनीता रामपत्नी सा तत्ते कातर्यलक्षणम् ।
कातर्यं च न ते युद्धे कदाचित्संस्मराम्यहम् ॥ ७०

तत्तु भाग्यविपर्यासान्नूनं ते पक्वलक्षणम् ।
अतीतानागतार्थज्ञो वर्तमानविचक्षणः ॥ ७१

मैथिलीमाहृतां दृष्ट्वा ध्यात्वा निःश्वस्य चायतम् ।
सत्यवाक्स महाभागो देवरो मे यदब्रवीत् ॥ ७२

सोऽयं राक्षसमुख्यानां विनाशः पर्युपस्थितः ।
कामक्रोधसमुत्थेन व्यसनेन प्रसङ्गिना ॥ ७३

निर्वृत्तस्त्वत्कृतेऽनर्थस्सोऽयं मूलहरो महान् ।
त्वया कृतमिदं सर्वमनाथं रक्षसां कुलम् ॥ ७४

न हि त्वं शोचितव्यो मे प्रख्यातबलपौरुषः ।
स्त्रीस्वभावात्तु मे बुद्धिः कारुण्ये परिवर्तते ॥ ७५

सुकृतं दुष्कृतं च त्वं गृहीत्वा स्वां गतिं गतः ।
आत्मानमनुशोचामि त्वद्वियोगेन दुःखिता ॥ ७६

सुहृदां हितकामानां न श्रुतं वचनं त्वया ।
भ्रातॄणां चापि कार्त्स्न्येन हितमुक्तं त्वयाऽनघ! ॥ ७७

हेत्वर्थयुक्तं विधिवत् श्रेयस्करमदारुणम् ।
विभीषणेनाभिहितं न कृतं हेतुमत्त्वया ॥ ७८

मारीचकुम्भकर्णाभ्यां वाक्यं मम पितुस्तदा ।
न श्रुतं वीर्यमत्तेन तस्येदं फलमीदृशम् ॥ ७९

नीलजीमूतसङ्काश ! पीताम्बरशुभाङ्गद ! ।
स्वगात्राणि विनिक्षिप्य किं शेषे रुधिराप्लुतः ॥ ८०

प्रसुप्त इव शोकार्तां किं मां न प्रतिभाषसे ।
महावीर्यस्य दक्षस्य संयुगेष्वपलायिनः ॥ ८१

यातुधानस्य दौहित्रीं किं च मां नाभ्युदीक्षसे ।
उत्तिष्ठोत्तिष्ठ किं शेषे प्राप्ते परिभवे नवे ॥ ८२

अद्य वै निर्भयां लङ्कां प्रविष्टास्सूर्यरश्मयः ।
येन सूदयसे शत्रून् समरे सूर्यवर्चसा ॥ ८३

वज्रो वज्रधरस्येव सोऽयं ते सततार्चितः ।
रणे शत्रुप्रहरणो हेमजालपरिष्कृतः ॥ ८४

परिघो व्यवकीर्णस्ते बाणैश्छिन्नस्सहस्रधा ।
प्रियामिवोपगूह्य त्वं शेषे समरमेदिनीम् ॥ ८५

अप्रियामिव कस्माच्च मां नेच्छस्यभिभाषितुम् ।
धिगस्तु हृदयं यस्या ममेदं न सहस्रधा ॥ ८६

त्वयि पञ्चत्वमापन्ने फलते शोकपीडितम् ।"
इत्येवं विलपन्त्येव बाष्पव्याकुललोचना ॥ ८७

स्नेहावस्कन्नहृदया देवी मोहमुपागमत् ! ।
कश्मलाभिहता सन्ना बभौ सा रावणोरसि ॥ ८८

सन्ध्यानुरक्ते जलदे दीप्ता विद्युदिवासिते ।
तथा गतां समुत्पत्य सपत्न्यस्ता भृशातुराः ॥ ८९

पर्यवस्थापयामासू रुदन्त्यो रुदतीं भृशम् ।
"न ते सुविदिता देवि ! लोकानां स्थितिरध्रुवा ॥ ९०

दशाविभागपर्याये राज्ञां चञ्चलया श्रिया ।"
इत्येवमुच्यमाना सा सशब्दं प्ररुरोद ह ॥ ९१

स्नापयन्ती त्वभिमुखौ स्तनावस्राम्बुविस्रवैः ।
एतस्मिन्नन्तरे रामो विभीषणमुवाच ह ॥ ९२

"संस्कारः क्रियतां भ्रातुः स्त्रियश्चैता निवर्तय ।"
तं प्रश्रितस्ततो रामं श्रुतवाक्यो विभीषणः ॥ ९३

विमृश्य बुद्ध्या धर्मज्ञो धर्मार्थसहितं वचः ।
रामस्यैवानुवृत्त्यर्थमुत्तरं प्रत्यभाषत ॥ ९४

"त्यक्तधर्मव्रतं क्रूरं नृशंसमनृतं तथा ।
नाहमर्होऽस्मि संस्कर्तुं परदाराभिमर्शिनम् ॥ ९५

भ्रातृरूपो हि मे शत्रुरेष सर्वाहिते रतः ।
रावणो नार्हते पूजां पूज्योऽपि गुरुगौरवात् ॥ ९६

नृशंस इति मां कामं वक्ष्यन्ति मनुजा भुवि ।!
श्रुत्वा तस्य गुणान्सर्वे वक्ष्यन्ति सुकृतं पुनः ॥ ९७

तच्छ्रुत्वा परमप्रीतो रामो धर्मभृतां वरः ।
विभीषणमुवाचेदं वाक्यज्ञो वाक्यकोविदम् ॥ ९८

"तवापि मे प्रियं कार्यं त्वत्प्रभावाच्च मे जितम् ।
अवश्यं तु क्षमं वाच्यो मया त्वं राक्षसेश्वर! ॥ ९९

अधर्मानृतसंयुक्तः कामं त्वेष निशाचरः ।
तेजस्वी बलवान् शूरस्संयुगेषु च नित्यशः ॥ १००

शतक्रतुमुखैर्देवैश्श्रूयते न पराजितः ।
महात्मा बलसम्पन्नो रावणो लोकरावणः ॥ १०१

मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥ १०२

त्वत्सकाशाद्दशग्रीवस्संस्कारं विधिपूर्वकम् ।
प्राप्तुमर्हति धर्मज्ञ! त्वं यशोभाग्भविष्यसि ॥" १०३

राघवस्य वचश्श्रुत्वा त्वरमाणो विभीषणः ।
संस्कारेणानुरूपेण योजयामास रावणम् ॥ १०४

चितां चन्दनकाष्ठानां पद्मकोशीरसंवृताम् ।
ब्राह्मया संवेशयांचक्रूराङ्कवास्तरणावृताम् ॥ १०५

वर्तते वेदविहितो राज्ञो वै पश्चिमः क्रतुः ।
प्रचक्रू राक्षसेन्द्रस्य पितृमेधमनुक्रमम् ॥ १०६

वेदिं च दक्षिणप्राच्यां यथास्थानं च पावकम् ।
पृषदाज्येन संपूर्णां स्रुवं सर्वे प्रचिक्षिपुः ॥ १०७

पादयोश्शकटं प्रादुरन्तरूर्वोरुलूखलम् ।
दारुपात्राणि सर्वाणि अरणिं चोत्तरारणिम् ॥ १०८

दत्त्वा तु मुसलं चान्यद्यथास्थानं विचक्षणाः ।
शास्त्रदृष्टेन विधिना महर्षिविहितेन च ॥ १०९

तत्र मेध्यं पशुं हत्वा राक्षसेन्द्रस्य राक्षसाः ।
परिस्तरणिकां राज्ञो घृताक्तां समवेशयन् ॥ ११०

गन्धैर्माल्यैरलंकृत्य रावणं दीनमानसाः ।
विभीषणसहायास्ते वस्त्रैश्च विविधैरपि ॥ १११

लाजैश्चावकिरन्ति स्म बाष्पपूर्णमुखास्तदा ।
ददौ च पावकं तस्य विधियुक्तं विभीषणः ॥ ११२

स्नात्वा चैवार्द्रवस्त्रेण तिलान्दूर्वाभिमिश्रितान् ।
उदकेन च संमिश्रान्प्रदाय विधिपूर्वकम् ॥ ११३

प्रदाय चोदकं तस्मै मूर्ध्ना चैनं नमस्य च ।
ताः स्त्रियोऽनुनयामास सान्त्वमुक्त्वा पुनः पुनः ॥ ११४

'गम्यता' मिति तास्सर्वा विविशुर्नगरीं तदा ।
प्रविष्टासु च सर्वासु राक्षसीषु विभीषणः ॥ ११५

रामपार्श्वमुपागम्य तदाऽतिष्ठद्विनीतवत् ।
रामोऽपि सह सैन्येनससुग्रीवस्सलक्ष्मणः ॥ ११६

हर्षं लेभे रिपुं हत्वा यथा वृत्रं शतक्रतुः ॥

इति श्रीमद्युद्धकाण्डे चतुर्दशोत्तरशततमस्सर्गः ॥

---

## ॥ पञ्चदशोत्तरशततमस्सर्गः ॥

ते रावणवधं दृष्ट्वा देवगन्धर्वदानवाः ।
जग्मुस्स्वैस्स्वैर्विमानैस्ते कथयन्तश्शुभाः कथाः ॥ १

रावणस्य वधं घोरं राघवस्य पराक्रमम् ।
सुयुद्धं वानराणां च सुग्रीवस्य च मन्त्रितम् ॥ २

अनुरागं च वीर्यं च सौमित्रेर्लक्ष्मणस्य च ।
कथयन्तो महाभागा जग्मुर्हृष्टा यथागतम् ॥ ३

राघवस्तु रथं दिव्यमिन्द्रदत्तं शिखिप्रभम् ।
अनुज्ञाय महाभागो मातलिं प्रत्यपूजयत् ॥ ४

राघवेणाभ्यनुज्ञातो मातलिश्शक्रसारथिः ।
दिव्यं तं रथमास्थाय दिवमेवारुरोह सः ॥ ५

तस्मिंस्तु दिवमारूढे सुरसारथिसत्तमे ।
राघवः परमप्रीतस्सुग्रीवं परिषस्वजे ॥ ६

परिष्वज्य च सुग्रीवं लक्ष्मणेन प्रचोदितः ।
पूज्यमानो हरिश्रेष्ठैराजगाम बलालयम् ॥ ७

अब्रवीच्च तदा रामस्समीपपरिवर्तिनम् ।
सौमित्रिं सत्यसम्पन्नं लक्ष्मणं दीप्ततेजसम् ॥ ८

" विभीषणमिमं सौम्य ! लङ्कायामभिषेचय ।
अनुरक्तं च भक्तं च मम चैवोपकारिणम् ॥ ९

एष मे परमः कामो यदीमं रावणानुजम् ! ।
लङ्कायां सौम्य ! पश्येयमभिषिक्तं विभीषणम् ॥" १०

एवमुक्तस्तु सौमित्री राघवेण महात्मना ।
'तथे' त्युक्त्वा तु संहृष्टस्सौवर्णं घटमाददे ॥ ११

तं घटं वानरेन्द्राणां हस्ते दत्त्वा मनोजवान् ।
आदिदेश महासत्त्वान् समुद्रसलिलानये ॥ १२

इति शीघ्रं ततो गत्वा वानरास्ते महाबलाः ।
आगतास्तज्जलं गृह्य समुद्राद्वानरोत्तमाः ॥ १३

ततस्त्वेकं घटं गृह्य संस्थाप्य परमासने ।
घटेन तेन सौमित्रिरभ्यषिञ्चद्विभीषणम् ॥ १४

लङ्कायां रक्षसां मध्ये राजानं रामशासनात् ।
विधिना मन्त्रदृष्टेन सुहृद्गणसमावृतम् ॥ १५

अभ्यषिञ्चत्स धर्मात्मा शुद्धात्मानं विभीषणम् ।
तस्यामात्या जहृषिरे भक्ता ये चास्य राक्षसाः ॥ १६

दृष्ट्वाऽभिषिक्तं लङ्कायां राक्षसेन्द्रं विभीषणम् ।
(राघवः परमां प्रीतिमाजगाम सलक्ष्मणः) ॥ १७

स तद्राज्यं महत्प्राप्य रामदत्तं विभीषणः ।
प्रकृतीस्सान्त्वयित्वा च ततो राममुपागमत् ॥ १८

अक्षतान्मोदकाल्लाजान्दिव्यास्सुमनसस्तदा ।
आजह्रुरथ संहृष्टाः पौरास्तस्मै निशाचराः ॥ १९

स तान्गृहीत्वा दुर्धर्षो राघवाय न्यवेदयत् ।
मङ्गल्यं मङ्गळं सर्वं लक्ष्मणाय च वीर्यवान् ॥ २०

कृतकार्यं समृद्धार्थं दृष्ट्वा रामो विभीषणम् ।
प्रतिजग्राह तत्सर्वं तस्यैव प्रियकाम्यया ॥ २१

(तत्प्रगृह्य परां प्रीतिं जगाम सहलक्ष्मणः) ।
ततश्शैलोपमं वीरं प्राञ्जलिं पार्श्वतः स्थितम् ॥ २२

अब्रवीद्राघवो वाक्यं हनुमन्तं प्लवङ्गमम् ।
"अनुमान्य महाराजमिमं सौम्य! विभीषणम् ॥ २३

गच्छ सौम्य! पुरीं लङ्कामनुज्ञाप्य यथाविधि ।
प्रविश्य रावणगृहं विजयेनाभिनन्द्य च ॥ २४

वैदेह्यै मां कुशलिनं ससुग्रीवं सलक्ष्मणम् ।
आचक्ष्व जयतां श्रेष्ठ! रावणं च मया हतम् ॥ २५

प्रियमेतदुदाहृत्य मैथिल्यास्त्वं हरीश्वर!
प्रतिगृह्य च सन्देशमुपावर्तितुमर्हसि ॥" २६

इति श्रीमद्युद्धकाण्डे पञ्चदशोत्तरशततमस्सर्गः ॥

---

## ॥ षोडशोत्तरशततमस्सर्गः ॥

इति प्रतिसमादिष्टो हनूमान्मारुतात्मजः ।
प्रविवेश पुरीं लङ्कां पूज्यमानो निशाचरैः ॥ १
प्रविश्य च महातेजा रावणस्य निवेशनम् ।
ददर्श मृजया हीनां सातङ्कामिव रोहिणीम् ॥ २
वृक्षमूले निरानन्दां राक्षसीभिस्समावृताम् ।
निभृतः प्रणतः प्रह्वस्सोऽभिगम्याभिवाद्य च ॥ ३
दृष्ट्वा तमागतं देवी हनूमन्तं महाबलम् ।
तूष्णीमास्ते तदा दृष्ट्वा स्मृत्वा प्रमुदिताऽभवत् ॥ ४
सौम्यं दृष्ट्वा मुखं तस्या हनुमान् प्लवगोत्तमः ।
रामस्य वचनं सर्वमाख्यातुमुपचक्रमे ॥ ५
"वैदेहि! कुशली रामस्सहसुग्रीवलक्ष्मणः ।
विभीषणसहायश्च हरीणां सहितो बलैः ॥ ६
कुशलं चाह सिद्धार्थो हतशत्रुररिन्दमः ।
विभीषणसहायेन रामेण हरिभिस्सह ॥ ७
निहतो रावणो देवि! लक्ष्मणस्य नयेन च ।
पृष्ट्वा च कुशलं रामो वीरस्त्वां रघुनन्दनः ॥ ८
अब्रवीत्परमप्रीतः कृतार्थेनान्तरात्मना ।
प्रियमाख्यामि ते देवि! त्वां तु भूयस्सभाजये ॥ ९
दिष्ट्या जीवसि धर्मज्ञे! जयेन मम संयुगे ।
लब्धो नो विजयस्सीते! स्वस्था भव गतव्यथा ॥ १०
(रावणो निहतः पापस्सामात्यस्ससुतो मृधे) ।
रावणश्च हतश्शत्रुर्लङ्का चेयं वशे स्थिता ॥ ११

मया ह्यलब्धनिद्रेण दृढेन तव निर्जये ।
प्रतिज्ञैषा सुनिस्तीर्णा बद्ध्वा सेतुं महोदधौ ॥ १२

संभ्रमश्च न गन्तव्यो वर्तन्त्या रावणालये ।
विभीषणविधेयं हि लङ्कैश्वर्यमिदं कृतम् ॥ १३

तदाश्वासिहि विश्वस्ता स्वगृहे परिवर्तसे ।
अयं चाभ्येति संहृष्टस्त्वद्दर्शनसमुत्सुकः ॥" १४

एवमुक्ता समुत्पत्य सीता शशिनिभानना ।
प्रहर्षेणावरुद्धा सा व्याजहार न किंचन ॥ १५

अब्रवीच्च हरिश्रेष्ठस्सीतामप्रतिजल्पतीम् ।
"किंनु चिन्तयसे देवि! किंनु मां नाभिभाषसे ॥" १६

एवमुक्ता हनुमता सीता धर्मे व्यवस्थिता ।
अब्रवीत्परमप्रीता हर्षगद्गदया गिरा ॥ १७

"प्रियमेतदुपश्रुत्य भर्तुर्विजयसंश्रितम् ।
प्रहर्षवशमापन्ना निर्वाक्याऽस्मि क्षणान्तरम् ॥ १८

न हि पश्यामि सदृशं चिन्तयन्ती प्लवङ्गम! ।
मत्प्रियाख्यानकस्येह तव प्रत्यभिनन्दनम् ॥ १९

न च पश्यामि तत्सौम्य! पृथिव्यामपि वानर! ।
सदृशं मत्प्रियाख्याने तव दातुं भवेत्समम् ॥ २०

हिरण्यं वा सुवर्णं वा रत्नानि विविधानि च ।
राज्यं वा त्रिषु लोकेषु नैतदर्हति भाषितुम् ॥" २१

एवमुक्तस्तु वैदेह्या प्रत्युवाच प्लवङ्गमः ।
"गृहीतप्राञ्जलिर्वाक्यं सीतायाः प्रमुखे स्थितः ॥ २२

भर्तुः प्रियहिते युक्ते ! भर्तुर्विजयकाङ्क्षिणि ! ।
स्निग्धमेवं विधं वाक्यं त्वमेवार्हसि भाषितुम् ॥ २३

तवैतद्वचनं सौम्ये ! सारवत्स्निग्धमेव च ।
रत्नौघाद्विविधाच्चापि देवराज्याद्विशिष्यते ॥ २४

अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः ।
हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् ॥" २५

तस्य तद्वचनं श्रुत्वा मैथिली जनकात्मजा ।
ततश्शुभतरं वाक्यमुवाच पवनात्मजम् ॥ २६

"अतिलक्षणसम्पन्नं माधुर्यगुणभूषितम् ।
बुद्ध्या ह्यष्टाङ्गया युक्तं त्वमेवार्हसि भाषितुम् ॥ २७

श्लाघनीयोऽनिलस्य त्वं पुत्रः परमधार्मिकः ।
बलं शौर्यं श्रुतं सत्त्वं विक्रमो दाक्ष्यमुत्तमम् ॥ २८

तेजः क्षमा धृतिः स्थैर्यं विनीतत्वं न संशयः ।
एते चान्ये च बहवो गुणास्त्वय्येव शोभनाः ॥" २९

अथोवाच पुनस्सीतामसम्भ्रान्तो विनीतवत् ।
प्रगृहीताञ्जलिर्हर्षात्सीतायाः प्रमुखे स्थितः ॥ ३०

"इमास्तु खलु राक्षस्यो यदि त्वमनुमन्यसे ।
हन्तुमिच्छाम्यहं सर्वा याभिस्त्वं तर्जिता पुरा ॥ ३१

क्लिश्यन्तीं पतिदेवां त्वामशोकवनिकां गताम् ।
घोररूपसमाचाराः क्रूराः क्रूरतरेक्षणाः ॥ ३२

राक्षस्यो दारुणकथा वरमेतत्प्रयच्छ मे ।
मुष्टिभिः पाणिभिस्सर्वाश्चरणैश्चैव शोभने ! ॥ ३३

इच्छामि विविधैर्घोरैर्हन्तुमेतास्सुदारुणाः ।
घोरैर्जानुप्रहारैश्च दशनानां च पातनैः ॥ ३४

भक्षणैः कर्णनासानां केशानां लुञ्छनैस्तथा ।
नखैश्शुष्कमुखीभिश्च दारणैर्लङ्घनैर्हतैः ॥ ३५

निपात्य हन्तुमिच्छामि तव विप्रियकारिणीः ।
एवं प्रकारैर्बहुभिर्विप्रकारैर्यशस्विनि ! ॥ ३६

हन्तुमिच्छाम्यहं देवि ! तवेमाः कृतकिल्बिषाः ।
एवमुक्ता हनुमता वैदेही जनकात्मजा ॥ ३७

उवाच धर्मसहितं हनूमन्तं यशस्विनी ।
"राजसंश्रयवश्यानां कुर्वन्तीनां पराज्ञया ॥ ३८

विधेयानां च दासीनां कः कुप्येद्वानरोत्तम !।
भाग्यवैषम्ययोगेन पुरा दुश्चरितेन च ॥ ३९

मयैतत्प्राप्यते सर्वं स्वकृतं ह्युपभुज्यते ।
प्राप्तव्यं तु दशायोगान्मयैतदिति निश्चितम् ॥ ४०

दासीनां रावणस्याहं मर्षयामीह दुर्बला ।
आज्ञप्ता रावणेनैता राक्षस्यो मामतर्जयन् ॥ ४१

हते तस्मिन्न कुर्युर्हि तर्जनं वानरोत्तम ! ।
अयं व्याघ्रसमीपे तु पुराणो धर्मसंस्थितः ॥ ४२

ऋक्षेण गीतः श्लोको मे तं निबोध प्लवङ्गम ! ।
न परः पापमादत्ते परेषां पापकर्मणाम् ॥ ४३

समयो रक्षितव्यस्तु सन्तश्चारित्रभूषणाः ।
पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम ! ॥ ४४

कार्यं करुणमार्येण न कश्चिन्नापराध्यति ।
लोकहिंसाविहाराणां रक्षसां कामरूपिणाम् ॥ ४५

कुर्वतामपि पापानि नैव कार्यमशोभनम् ।"
एवमुक्तस्तु हनुमान् सीतया वाक्यकोविदः ॥ ४६

प्रत्युवाच ततस्सीतां रामपत्नीं यशस्विनीम् ।
"युक्ता रामस्य भवती धर्मपत्नी यशस्विनी ॥ ४७

प्रतिसन्दिश मां देवि ! गमिष्ये यत्र राघवः ।"
एवमुक्ता हनुमता वैदेही जनकात्मजा ॥ ४८

अब्रवी "द्रष्टुमिच्छामि भर्तारं वानरोत्तम !" ।
तस्यास्तद्वचनं श्रुत्वा हनूमान्पवनात्मजः ॥ ४९

हर्षयन्मैथिलीं वाक्यमुवाचेदं महाद्युतिः ।
"पूर्णचन्द्राननं रामं द्रक्ष्यस्यार्ये ! सलक्ष्मणम् ॥ ५०

स्थिरमित्रं हतामित्रं शचीव त्रिदशेश्वरम् ।"
तामेवमुक्त्वा राजन्तीं सीतां साक्षादिव श्रियम् ॥ ५१

आजगाम महावेगो हनूमान्यत्र राघवः ।

इति श्रीमद्युद्धकाण्डे षोडशोत्तरशततमस्सर्गः ॥

---

## ॥ सप्तदशोत्तरशततमस्सर्गः ॥

स उवाच महाप्राज्ञमभिगम्य प्लवङ्गमः ।
रामं वचनमर्थज्ञो वरं सर्वधनुष्मताम् ॥ १

"यन्निमित्तोऽयमारम्भः कर्मणां च फलोदयः ।
तां देवीं शोकसन्तप्तां मैथिलीं द्रष्टुमर्हसि ॥ २

सा हि शोकसमाविष्टा बाष्पपर्याकुलेक्षणा ।
मैथिली विजयं श्रुत्वा तव हर्षमुपागमत् ॥ ३

पूर्वकात्प्रत्ययाच्चाहमुक्तो विश्वस्तया तया ।
भर्तारं द्रष्टुमिच्छामि कृतार्थं सहलक्ष्मणम् ॥ " ४

एवमुक्तो हनुमता रामो धर्मभृतां वरः ।
अगच्छत्सहसा ध्यानमीषद्बाष्पपरिप्लुतः ॥ ५

दीर्घमुष्णं विनिश्श्वस्य मेदिनीमवलोकयन् ।
उवाच मेघसङ्काशं विभीषणमुपस्थितम् ॥ ६

" दिव्याङ्गरागां वैदेहीं दिव्याभरणभूषिताम् ।
इह सीतां शिरस्स्नातामुपस्थापय माचिरम् ॥ " ७

एवमुक्तस्तु रामेण त्वरमाणो विभीषणः ।
प्रविश्यान्तःपुरं सीतां स्त्रीभिस्स्वाभिरचोदयत् ॥ ८

(तत्र सीतां महाभागां दृष्ट्वोवाच विभीषणः ।
मूर्ध्नि बद्धाञ्जलिश्श्रीमान् विनीतो राक्षसेश्वरः) ॥ ९

" दिव्याङ्गरागा वैदेहि! दिव्याभरणभूषिता ।
यानमारोह भद्रं ते भर्ता त्वां द्रष्टुमिच्छति ॥ " १०

एवमुक्ता तु वैदेही प्रत्युवाच विभीषणम् ।
" अस्नाता द्रष्टुमिच्छामि भर्तारं राक्षसाधिप ! " ॥ ११

तस्यास्तद्वचनं श्रुत्वा प्रत्युवाच विभीषणः ।
" यदाह राजा भर्ता ते तत्तथा कर्तुमर्हसि ॥ " १२

तस्य तद्वचनं श्रुत्वा मैथिली पतिदेवता ।
भर्तृभक्तिव्रता साध्वी तथेति प्रत्यभाषत ॥ १३

ततस्सीतां शिरस्स्नातां युवतीभिरलंकृताम् ।
महार्हाभरणोपेतां महार्हाम्बरधारिणीम् ॥ १४

आरोप्य शिबिकां दीप्तां पराध्याम्बरसंवृताम् ।
रक्षोभिर्बहुभिर्गुप्तामाजहार विभीषणः ॥ १५

सोऽभिगम्य महात्मानं ज्ञात्वापि ध्यानमास्थितम् ।
प्रणतश्च प्रहृष्टश्च प्राप्तां सीतां न्यवेदयत् ॥ १६

तामागतामुपश्रुत्य रक्षोगृहचिरोषिताम् ।
हर्षो दैन्यं च रोषश्च त्रयं राघवमाविशत् ॥ १७

ततः पार्श्वगतं दृष्ट्वा सविमर्शं विचारयन् ।
विभीषणमिदं वाक्यमहृष्टं राघवोऽब्रवीत् ॥ १८

"राक्षसाधिपते! सौम्य! नित्यं मद्विजये रत! ।
वैदेही सन्निकर्षं मे शीघ्रं समुपगच्छतु ॥" १९

स तद्वचनमाज्ञाय राघवस्य विभीषणः ।
तूर्णमुत्सारणे यत्नं कारयामास सर्वतः ॥ २०

कञ्चुकोष्णीषिणस्तत्र वेत्रजर्झरपाणयः ।
उत्सारयन्तः पुरुषास्समन्तात्परिचक्रमुः ॥ २१

ऋक्षाणां वानराणां च राक्षसानां च सर्वशः ।
बृन्दान्युत्सार्यमाणानि दूरमुत्तस्थुस्तदा ॥ २२

तेषामुत्सार्यमाणानां सर्वेषां ध्वनिरुत्थितः ।
वायुनोद्धूयमानस्य सागरस्येव निस्स्वनः ॥ २३

उत्सार्यमाणांस्तान्दृष्ट्वा समन्ताज्जातसम्भ्रमान् ।
दाक्षिण्यात्तद्मर्षाच्च वारयामास राघवः ॥ २४

संरुधश्चाब्रवीद्रामश्चक्षुषा प्रदहन्निव ।
विभीषणं महाप्राज्ञं सोपालम्भमिदं वचः ॥ २५

" किमर्थं मामनादृत्य क्लिश्यतेऽयं त्वया जनः ।
निवर्तयैनमुद्योगं जनोऽयं स्वजनो मम ॥ २६

न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥ २७

व्यसनेषु न कृच्छ्रेषु न युद्धेषु स्वयंवरे ।
न क्रतौ न विवाहे च दर्शनं दुष्यति स्त्रियाः ॥ २८

सैषा युद्धगता चैव कृच्छ्रे च महति स्थिता ।
दर्शनेऽस्या न दोषस्स्यान्मत्समीपे विशेषतः ॥ २९

तदानय समीपं मे शीघ्रमेनां विभीषण ।
सीता पश्यतु मामेषा सुहृद्गणवृतं स्थितम् ॥ ३०

एवमुक्तस्तु रामेण सविमर्शो विभीषणः ।
रामस्योपानयत्सीतां सन्निकर्षं विनीतवत् ॥ ३१

ततो लक्ष्मणसुग्रीवौ हनूमांश्च प्लवङ्गमः ।
निशम्य वाक्यं रामस्य बभूवुर्व्यथिता भृशम् ॥ ३२

कळत्रनिरपेक्षैश्च इङ्गितैरस्य दारुणैः ।
अप्रीतमिव सीतायां तर्कयन्ति स्म राघवम् ॥ ३३

लज्जयात्ववलीयन्ती स्वेषु गात्रेषु मैथिली ।
विभीषणेनानुगता भर्तारं साऽभ्यवर्तत ॥ ३४

सा वस्त्रसंरुद्धमुखी लज्जया जनसंसदि ।
रुरोदासाद्य भर्तारं 'मार्यपुत्रे' ति भाषिणी ॥ ३५

विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता ।
उदैक्षत मुखं भर्तुस्सौम्यं सौम्यतरानना ॥ ३६

अथ समपनुदन्मनःक्लमं सा सुचिरमदृष्टमुदीक्ष्य वै प्रियस्य ।
वदनमुदितपूर्णचन्द्रकान्तं विमलशशाङ्कनिभानना तदानीम् ॥ ३७

इति श्रीमद्युद्धकाण्डे सप्तदशोत्तरशततमस्सर्गः ॥

---

## ॥ अष्टादशोत्तरशततमस्सर्गः ॥

तां तु पार्श्वस्थितां प्रह्वां रामस्सम्प्रेक्ष्य मैथिलीम् ।
हृदयान्तर्गतक्रोधो व्याहर्तुमुपचक्रमे ॥ १

"एषासि निर्जिता भद्रे! शत्रुं जित्वा मया रणे ।
पौरुषाद्यदनुष्ठेयं तदेतदुपपादितम् ॥ २

गतोऽस्म्यन्तममर्षस्य धर्षणा संप्रमार्जिता ।
अवमानश्च शत्रुश्च मया युगपदुद्धृतौ ॥ ३

अद्य मे पौरुषं दृष्टमद्य मे सफलः श्रमः ।
अद्य तीर्णप्रतिज्ञत्वात्प्रभवामीह चात्मनः ॥ ४

या त्वं विरहिता नीता चलचित्तेन रक्षसा ।
दैवसंपादितो दोषो मानुषेण मया जितः ॥ ५

सम्प्राप्तमवमानं यस्तेजसा न प्रमार्जति ।
कस्तस्य पुरुषार्थोऽस्ति पुरुषस्याल्पतेजसः ॥ ६

लङ्घनं च समुद्रस्य लङ्कायाश्चावमर्दनम् ।
सफलं तस्य तच्छ्लाघ्यं महत्कर्म हनूमतः ॥ ७

युद्धे विक्रमतश्चैव हितं मन्त्रयतश्च मे ।
सुग्रीवस्य ससैन्यस्य सफलोऽद्य परिश्रमः ॥ ८

निर्गुणं भ्रातरं त्यक्त्वा यो मां स्वयमुपस्थितः ।
विभीषणस्य भक्तस्य सफलोऽद्य परिश्रमः ॥" ९

इत्येवं ब्रुवतस्तस्य सीता रामस्य तद्वचः ।
मृगी वोत्फुल्लनयना बभूवाश्रुपरिप्लुता ॥ १०

पश्यतस्तां तु रामस्य भूयः क्रोधो व्यवर्धत ।
प्रभूताज्यावसिक्तस्य पावकस्येव दीप्यतः ॥ ११

स बद्ध्वा भ्रुकुटीं वक्त्रे तिर्यक्प्रेक्षितलोचनः ।
अब्रवीत्परुषं सीतां मध्ये वानररक्षसाम् ॥ १२

"यत्कर्तव्यं मनुष्येण धर्षणां परिमार्जता ।
तत्कृतं सकलं सीते! शत्रुहस्तादमर्षणात् ॥ १३

निर्जिता जीवलोकस्य तपसा भावितात्मना ।
अगस्त्येन दुराधर्षा मुनिना दक्षिणेव दिक् ॥ १४

विदितश्चास्तु वे भद्रे! योऽयं रणपरिश्रमः ।
स तीर्णस्सुहृदां वीर्यान्न त्वदर्थं मया कृतः ॥ १५

रक्षता तु मया वृत्तमपवादं च सर्वशः ।
प्रख्यातस्यात्मवंशस्य न्यङ्गं च परिरक्षता ॥ १६

(निर्जितासि मया भद्रे शत्रुं जित्वा महारणे) ।
प्राप्तचारित्रसन्देहा मम प्रतिमुखे स्थिता ॥ १७

दीपो नेत्रातुरस्येव प्रतिकूलासि मे दृढम् ।
तद्गच्छह्यभ्यनुज्ञाता यथेष्टं जनकात्मजे ॥ १८

एता दश दिशो भद्रे कार्यमस्ति न मे त्वया!
कः पुमान्हि कुले जातः स्त्रियं परगृहोषिताम् ॥ १९

तेजस्वी पुनरादद्यात्सुहृल्लेख्येन चेतसा ।
रावणाङ्कपरिभ्रष्टां दृष्टां दुष्टेन चक्षुषा ॥ २०

कथं त्वां पुनरादद्यां कुलं व्यपदिशन् महत् ।
तदर्थं निर्जिता मे त्वं यशः प्रत्याहृतं मया ॥ २१

नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामितः ।
इति प्रव्याहृतं भद्रे! मयैतत्कृतबुद्धिना ॥ २२

लक्ष्मणे भरते वा त्वं कुरु बुद्धिं यथा सुखम् ।
सुग्रीवे वानरेन्द्रे वा राक्षसेन्द्रे विभीषणे ॥ २३

निवेशय मनस्सीते! यथा वा सुखमात्मनः ।
न हि त्वां रावणो दृष्ट्वा दिव्यरूपां मनोरमाम् ॥ २४

मर्षयेत चिरं सीते स्वगृहे परिवर्तिनीम् । ”
ततः प्रियार्हश्रवणा तदप्रियं प्रियादुपश्रुत्य चिरस्य मैथिली ।
मुमोच बाष्पं सुभृशं प्रवेपिता गजेन्द्रहस्ताभिहतेव सल्लकी ॥ २५

इति श्रीमद्युद्धकाण्डे अष्टादशोत्तरशततमस्सर्गः ॥

---

## ॥ एकोनविंशत्युत्तरशततमस्सर्गः ॥

एवमुक्ता तु वैदेही परुषं रोमहर्षणम् ।
राघवेण सरोषेण भृशं प्रव्यथिताऽभवत् ॥ १

सा तदश्रुतपूर्वं हि जने महति मैथिली ।
श्रुत्वा भर्तृवचो रूक्षं लज्जया व्रीडिताऽभवत् ॥ २

प्रविशन्तीव गात्राणि स्वान्येव जनकात्मजा ।
वाक्छल्यैस्तैस्सशल्येव भृशमश्रूण्यवर्तयन् ॥ ३

ततो बाष्पपरिक्लिष्टं प्रमार्जन्ती स्वमाननम् ।
शनैर्गद्गदया वाचा भर्तारमिदमब्रवीत् ॥ ४

" किं मामसदृशं वाक्यमीदृशं श्रोत्रदारुणम् ।
रूक्षं श्रावयसे वीर ! प्राकृतः प्राकृतामिव ॥ ५

न तथास्मि महाबाहो ! यथा त्वमवगच्छसि ।
प्रत्ययं गच्छ मे येन चारित्रेणैव ते शपे ॥ ६

पृथक् स्त्रीणां प्रचारेण जातिं तां परिशङ्कसे ।
परित्यजेमां शङ्कां तु यदि तेऽहं परीक्षिता ॥ ७

यद्यहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो ! ।
कामकारो न मे तत्र दैवं तत्रापराध्यति ॥ ८

मदधीनं तु यत्तन्मे हृदयं त्वयि वर्तते ।
पराधीनेषु गात्रेषु किं करिष्याम्यनीश्वरा ॥ ९

सह संवृद्धभावाच्च संसर्गेण च मानद ।
यद्यहं ते न विज्ञाता हता तेनास्मि शाश्वतम् ॥ १०

प्रेषितस्ते यदा वीरो हनुमानवलोककः ।
लङ्कास्थाऽहं त्वया वीर ! किं तदा न विसर्जिता ॥ ११

प्रत्यक्षं वानरेन्द्रस्य तद्वाक्यसमनन्तरम् ।
त्वया संत्यक्तया वीर ! त्यक्तं स्याज्जीवितं मया ॥ १२

न वृथा ते श्रमोऽयं स्यात्संशये न्यस्य जीवितम् ।
सुहृज्जनपरिक्लेशो न चायं निष्फलस्तव ॥ १३

त्वया तु नरशार्दूल ! क्रोधमेवानुवर्तता ।
लघुनेव मनुष्येण स्त्रीत्वमेव पुरस्कृतम् ॥ १४

अपदेशेन जनकान्नोत्पत्तिर्वसुधातलात् ।
मम वृत्तं च वृत्तज्ञ ! बहु तेन पुरस्कृतम् ॥ १५

न प्रमाणीकृतः पाणिर्बाल्ये बालेन पीडितः ।
मम भक्तिश्च शीलं च सर्वं ते पृष्ठतः कृतम् ॥" १६

एवं ब्रुवाणा रुदती बाष्पगद्गदभाषिणी ।
अब्रवील्लक्ष्मणं सीता दीनं ध्यानपरं स्थितम् ॥ १७

चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम् ।
मिथ्योपघातोपहता नाहं जीवितुमुत्सहे ॥ १८

अप्रीतस्य गुणैर्भर्तुस्त्यक्ताया जनसंसदि ।
मा क्षमा मे गतिर्गन्तुं प्रवेक्ष्ये हव्यवाहनम् ॥" १९

एवमुक्तस्तु वैदेह्या लक्ष्मणः परवीरहा ।
अमर्षवशमापन्नो राघवाननमैक्षत ॥ २०

स विज्ञाय ततश्छन्दं रामस्याकारसूचितम् ।
चितां चकार सौमित्रिर्मते रामस्य वीर्यवान् ॥ २१

(इन्धनैर्वानरानीतैः श्रीगन्धागरुचन्दनैः) ।
अधोमुखं तदा रामं शनैः कृत्वा प्रदक्षिणम् । २२

उपासर्पत वैदेही दीप्यमानं हुताशनम् ॥
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ॥ २३

बद्धाञ्जलिपुटा चेदमुवाचाग्निसमीपतः ।
"यथा मे हृदयं नित्यं नापसर्पति राघवात् ॥ २४

तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।
यथा मां शुद्धचारित्रां दुष्टां जानाति राघवः ॥ २५

तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।
कर्मणा मनसा वाचा यथा नातिचराम्यहम् ॥ २६
राघवं सर्वधर्मज्ञं तथा मां पातु पावकः ।
आदित्यो भगवान्वायुर्दिशश्चन्द्रस्तथैव च ॥ २७
अहश्चापि तथा सन्ध्ये रात्रिश्च पृथिवी तथा ।
यथाऽन्येऽपि विजानन्ति तथा चारित्रसंयुताम् ॥" २८
(तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम् ॥ २९
विवेश ज्वलनं दीप्तं निस्सङ्गेनान्तरात्मना ।
जनस्स सुमहांस्त्रस्तो बालवृद्धसमाकुलः ॥ ३०
ददर्श मैथिलीं तत्र प्रविशन्तीं हुताशनम् ।
सा तप्तनवहेमाभा तप्तकाञ्चनभूषणा ॥ ३१
पपात ज्वलनं दीप्तं सर्वलोकस्य सन्निधौ ।
(ददृशुस्तां विशालाक्षीं पतन्तीं हव्यवाहने ॥ ३२
सीतां सर्वाणि भूतानि रुक्मवेदिनिभां तदा ।)
ददृशुस्तां महाभागां प्रविशन्तीं हुताशनम् ॥ ३३
सीतां कृत्स्नास्त्रयो लोकाः पुण्यामाज्याहुतीमिव ।
प्रचुक्रुशुः स्त्रियस्सर्वास्तां दृष्ट्वा हव्यवाहने ॥ ३४
पतन्तीं संस्कृतां मन्त्रैर्वसोर्धारामिवाध्वरे ।
ददृशुस्तां त्रयो लोका देवगन्धर्वदानवाः ॥ ३५
शप्तां पतन्तीं निरये त्रिदिवाद्देवतामिव ।
तस्यामग्निं विशन्त्यां तु हाहेति विपुलः स्वनः ॥ ३६
रक्षसां वानराणां च संबभूवाद्भुतोपमः ।

इति श्रीमद्युद्धकाण्डे एकोनविंशत्युत्तरशततमस्सर्गः ॥

## ॥ विंशत्युत्तरशततमस्सर्गः ॥

ततो हि दुर्मना रामश्श्रुत्वैव वदतां गिरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ १

ततो वैश्रवणो राजा यमश्चामित्रकर्शनः ।
सहस्राक्षो महेन्द्रश्च वरुणश्च परन्तपः ॥ २

षडर्धनयनश्श्रीमान् महादेवो वृषध्वजः ।
कर्ता सर्वस्य लोकस्य ब्रह्मा ब्रह्मविदां वरः ॥ ३

एते सर्वे समागम्य विमानैस्सूर्यसन्निभैः ।
आगम्य नगरीं लङ्कामभिजग्मुश्च राघवम् ॥ ४

ततस्सहस्ताभरणान् प्रगृह्य विपुलान्भुजान् ।
अब्रुवंस्त्रिदशश्रेष्ठाः प्राञ्जलिं राघवं स्थितम् ॥ ५

" कर्ता सर्वस्य लोकस्य श्रेष्ठो ज्ञानवतां वरः ।
उपेक्षसे कथं सीतां पतन्तीं हव्यवाहने ॥ ६

कथं देवगणश्रेष्ठमात्मानं नावबुध्यसे ।
ऋतुधामा वसुः पूर्वं वसूनां त्वं प्रजापतिः ॥ ७

त्रयाणां त्वं हि लोकानामादिकर्ता स्वयं प्रभुः ।
रुद्राणामष्टमो रुद्रस्साध्यानामसि पञ्चमः ॥ ८

अश्विनौ चापि ते कर्णौ चन्द्रसूर्यौ च चक्षुषी ।
अन्ते चादौ च लोकानां दृश्यसे त्वं परन्तप ॥ ९

उपेक्षसे च वैदेहीं मानुषः प्राकृतो यथा" ।
इत्युक्तो लोकपालैस्तैस्स्वामी लोकस्य राघवः ॥ १०

अब्रवीत्त्रिदशश्रेष्ठान्रामो धर्मभृतां वरः ।
(नाहं विष्णुर्न रुद्रश्च न देवा न पितामहः) ॥ ११

"आत्मानं मानुषं मन्ये रामं दशरथात्मजम् ।
योऽहं यस्य यतश्चाहं भगवांस्तद्ब्रवीतु मे ॥" १२

इति ब्रुवाणं काकुत्स्थं ब्रह्मा ब्रह्मविदां वरः ।
"अब्रवीच्छृणु मे राम ! सत्यं सत्यपराक्रम ! ॥ १३

भवान्नारायणो देवश्श्रीमांश्चक्रायुधो विभुः ।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥ १४

अक्षरं ब्रह्म सत्यं च मध्ये चान्ते च राघव ! ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ॥ १५

शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृद्विष्णुः कृष्णश्चैव बृहद्बलः ॥ १६

सेनानीर्ग्रामणीश्च त्वं बुद्धिस्सत्वं क्षमा दमः ।
प्रभवश्चाप्ययश्च त्वमुपेन्द्रो मधुसूदनः ॥ १७

इन्द्रकर्मा महेन्द्रस्त्वं पद्मनाभो रणान्तकृत् ।
शरण्यं शरणं च त्वामाहुर्दिव्या महर्षयः ॥ १८

सहस्रशृङ्गो वेदात्मा शतजिह्वो महर्षयः ।
त्वं त्रयाणां हि लोकानामादिकर्ता स्वयं प्रभुः ॥ १९

सिद्धानामपि साध्यानामाश्रयश्चासि पूर्वजः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारः परन्तपः ॥ २०

प्रभवं निधनं वा ते न विदुः को भवानिति ।
दृश्यसे सर्वभूतेषु ब्राह्मणेषु च गोषु च ॥ २१

दिक्षु सर्वासु गगने पर्वतेषु वनेषु च ।
सहस्रचरणश्श्रीमान् शतशीर्षस्सहस्रदृक् ॥ २२

त्वं धारयसि भूतानि वसुधां च सपर्वताम् ।
अन्ते पृथिव्यास्सलिले दृश्यसे त्वं महोरगः ॥ २३

त्रीन्लोकान्धारयन्राम ! देवगन्धर्वदानवान् ।
अहं ते हृदयं राम ! जिह्वा देवी सरस्वती ॥ २४

देवा गात्रेषु रोमाणि स्थितास्ते ब्रह्मणः प्रभो ! ।
निमेषस्ते भवेद्रात्रिरुन्मेषस्ते भवेद्दिवा ॥ २५

संस्कारास्तेऽभवन्वेदा न तदस्ति त्वया विना ।
जगत्सर्वं शरीरं ते स्थैर्यं ते वसुधातलम् ॥ २६

अग्निः कोपः प्रसादस्ते सोमश्श्रीवत्सलक्षणः ।
त्वया लोकास्त्रयः क्रान्ताः पुराणे विक्रमैस्त्रिभिः ॥ २७

महेन्द्रश्च कृतो राजा बलिं बद्ध्वा महासुरम् ।
सीता लक्ष्मीर्भवान्विष्णुर्देवः कृष्णः प्रजापतिः ॥ २८

वधार्थं रावणस्येह प्रविष्टो मानुषीं तनुम् ।
तदिदं नः कृतं कार्यं त्वया धर्मभृतां वर ! ॥ २९

निहतो रावणो राम ! प्रहृष्टो दिवमाक्रम ।
अमोघं बलवीर्यं ते अमोघस्ते पराक्रमः ॥ ३०

अमोघं दर्शनं राम न च मोघस्तव स्तवः ।
अमोघास्ते भविष्यन्ति भक्तिमन्तश्च ये नराः ॥ ३१

ये त्वां देवं ध्रुवं भक्ताः पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति सदा कामानिह लोके परत्र च ॥ ३२

इममार्षं स्तवं नित्यमितिहासं पुरातनम् ।
ये नराः कीर्तयिष्यन्ति नास्ति तेषां पराभवः ॥ ३३

इति श्रीमद्युद्धकाण्डे विंशत्युत्तरशततमस्सर्गः

---

## ॥ एकविंशत्युत्तरशततमस्सर्गः ॥

एतच्छ्रुत्वा शुभं वाक्यं पितामहसमीरितम् ।
अङ्केनादाय वैदेहीमुत्पपात विभावसुः ॥ १
स विधूय चितां तां तु वैदेहीं हव्यवाहनः ।
उत्तस्थौ मूर्तिमानाशु गृहीत्वा जनकात्मजाम् ॥ २
तरुणादित्यसङ्काशां तप्तकाञ्चनभूषणाम् ।
रक्ताम्बरधरां बालां नीलकुञ्चितमूर्धजाम् ॥ ३
अक्लिष्टमाल्याभरणां तथारूपां मनस्विनीम् ।
ददौ रामाय वैदेहीमङ्के कृत्वा विभावसुः ॥ ४
अब्रवीच्च तदा रामं साक्षी लोकस्य पावकः ।
"एषा ते राम! वैदेही पापमस्या न विद्यते ॥ ५
नैव वाचा न मनसा नानुध्यानान्न चक्षुषा ।
सुवृत्ता वृत्तशौण्डीर! न त्वामतिचचारह ॥ ६
रावणेनापनीतैषा वीर्योत्सिक्तेन रक्षसा ।
त्वया विरहिता दीना विवशा निर्जनाद्वनात् ॥ ७
रुद्धा चान्तःपुरे गुप्ता त्वच्चित्ता त्वत्परायणा ।
रक्षिता राक्षसीसङ्घैर्विकृतैर्घोरदर्शनैः ॥ ८
प्रलोभ्यमाना विविधं भर्त्स्यमाना च मैथिली ।
नाचिन्तयत तद्रक्षस्त्वद्गतेनान्तरात्मना ॥ ९
विशुद्धभावां निष्पापां प्रतिगृह्णीष्व राघव! ।
न किञ्चिदभिधातव्यमहमाज्ञापयामि ते ॥" १०
ततः प्रीतमना रामश्श्रुत्वैतद्वदतां वरः ।
दध्यौ मुहूर्तं धर्मात्मा बाष्पव्याकुललोचनः ॥ ११

एवमुक्तो महातेजा धृतिमान्दृढविक्रमः ।
अब्रवीत्त्रिदशश्रेष्ठं रामो धर्मभृतां वरः ॥ १२

" अवश्यं त्रिषु लोकेषु न सीता पापमर्हति ।
दीर्घकालोषिता हीयं रावणान्तःपुरे शुभा ॥ १३
'बालिशः खलु कामात्मा रामो दशरथात्मजः ।'
इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥ १४
अनन्यहृदयां भक्तां मच्चित्तपरिवर्तिनीम् ।
अहमप्यवगच्छामि मैथिलीं जनकात्मजाम् ॥ १५
प्रत्ययार्थं तु लोकानां त्रयाणां सत्यसंश्रयः ।
उपेक्षे चापि वैदेहीं प्रविशन्तीं हुताशनम् ॥ १६
इमामपि विशालाक्षीं रक्षितां स्वेन तेजसा ।
रावणो नातिवर्तेत वेलामिव महोदधिः ॥ १७
न हि शक्तस्स दुष्टात्मा मनसापि हि मैथिलीम् ।
प्रधर्षयितुमप्राप्तां दीप्तामग्निशिखामिव ॥ १८
नेयमर्हति चैश्वर्यं रावणान्तःपुरे शुभा ।
अनन्या हि मया सीता भास्करेण प्रभा यथा ॥ १९
विशुद्धा त्रिषु लोकेषु मैथिली जनकात्मजा ।
न हि हातुमियं शक्या कीर्तिरात्मवता यथा ॥ २०
अवश्यं तु मया कार्यं सर्वेषां वो वचश्शुभम् ।
स्निग्धानां लोकमान्यानामेवं च ब्रुवतां हितम् ॥" २१
इतीदमुक्त्वा विदितं महाबलैः प्रशस्यमानस्स्वकृतेन कर्मणा ।
समेत्य रामः प्रियया महाबलस्सुखं सुखार्होऽनुबभूव राघवः ॥ २२

इति श्रीमद्युद्धकाण्डे एकविंशत्युत्तरशततमस्सर्गः ॥

## ॥ द्वाविंशत्युत्तरशततमस्सर्गः ॥

एतच्छ्रुत्वा शुभं वाक्यं राघवेण सुभाषितम् ।
इदं शुभतरं वाक्यं व्याजहार महेश्वरः ॥ १
" पुष्कराक्ष ! महाबाहो ! महावक्षः ! परन्तप ! ।
दिष्ट्या कृतामिदं कर्म त्वया शस्त्रभृतां वर ! ॥ २
दिष्ट्या सर्वस्य लोकस्य प्रवृद्धं दारुणं तमः ।
अपावृत्तं त्वया संख्ये राम ! रावणजं भयम् ॥ ३
आश्वास्य भरतं दीनं कौसल्यां च यशस्विनीम् ।
कैकेयीं च सुमित्रां च दृष्ट्वा लक्ष्मणमातरम् ॥ ४
प्राप्य राज्यमयोध्यायां नन्दयित्वा सुहृज्जनम् ।
इक्ष्वाकूणां कुले वंशं स्थापयित्वा महाबल ॥ ! ५
इष्ट्वा तुरगमेधेन प्राप्य चानुत्तमं यशः ।
ब्राह्मणेभ्यो धनं दत्वा त्रिदिवं गन्तुमर्हसि ॥ ६
एष राजा विमानस्थः पिता दशरथस्तव ।
काकुत्स्थ ! मानुषे लोके गुरुस्तव महायशाः ॥ ७
इन्द्रलोकं गतश्श्रीमांस्त्वया पुत्रेण तारितः ।
लक्ष्मणेन सह भ्रात्रा त्वमेनमभिवादय ॥" ८
महादेववचश्श्रुत्वा काकुत्स्थस्सहलक्ष्मणः ।
विमानशिखरस्थस्य प्रणाममकरोत्पितुः ॥ ९
दीप्यमानं स्वया लक्ष्म्या विरजोम्बरधारिणम् ।
लक्ष्मणेन सह भ्रात्रा ददर्श पितरं विभुः ॥ १०
हर्षेण महताविष्टो विमानस्थो महीपतिः ।
प्राणैः प्रियतरं दृष्ट्वा पुत्रं दशरथस्तदा ॥ ११

आरोप्याङ्कं महाबाहुर्वरासनगतः प्रभुः ।
बाहुभ्यां संपरिष्वज्य ततो वाक्यं समाददे ॥ १२

न मे स्वर्गो बहुमतस्संमानश्च सुरर्षिभिः ।
त्वया राम! विहीनस्य सत्यं प्रतिशृणोमि ते ॥ १३

(अद्य त्वां निहतामित्रं दृष्ट्वा सम्पूर्णमानसम् ।
निस्तीर्णवनवासं च प्रीतिरासीत्परा मम ॥ १४

कैकेय्यां यानि चोक्तानि वाक्यानि वदतां वर! ।
तव प्रव्राजनार्थानि स्थितानि हृदये मम ॥ १५

त्वां तु दृष्ट्वा कुशलिनं परिष्वज्य सलक्ष्मणम् ।
अद्य दुःखाद्विमुक्ताऽस्मि नीहारादिव भास्करः ॥ १६

तारितोऽहं त्वया पुत्र! सुपुत्रेण महात्मना ।
अष्टावक्रेण धर्मात्मा तारितो ब्राह्मणो यथा ॥ १७

इदानीं तु विजानामि यथा सौम्य! सुरेश्वरैः ।
वधार्थं रावणस्येदं विहितं पुरुषोत्तम! ॥ १८

सिद्धार्था खलु कौसल्या या त्वां राम! गृहागतम् ।
वनान्निवृत्तं संहृष्टा द्रक्ष्यत्यरिनिषूदन! ॥ १९

सिद्धार्थाः खलु ते राम! नरा ये त्वां पुरीं गतम् ।
जलार्द्रमभिषिक्तं च द्रक्ष्यन्ति वसुधाधिपम् ॥ २०

अनुरक्तेन बलिना शुचिना धर्मचारिणा ।
इच्छामि त्वामहं द्रष्टुं भरतेन समागतम् ॥ २१

चतुर्दशसमास्सौम्य! वने निर्यापितास्त्वया ।
वसता सीतया सार्धं लक्ष्मणेन च धीमता ॥ २२

निवृत्तवनवासोऽपि प्रतिज्ञा सफला कृता ।
रावणं च रणे हत्वा देवास्ते परितोषिताः ॥ २३

कृतं कर्म यशश्श्लाघ्यं प्राप्तं ते शत्रुसूदन ! ।
भ्रातृभिस्सह राज्यस्थो दीर्घमायुरवाप्नुहि ॥" २४

इति ब्रुवाणं राजानं रामः प्राञ्जलिरब्रवीत् ।
"कुरु प्रसादं धर्मज्ञ ! कैकेय्या भरतस्य च ॥ २५

सपुत्रां त्वां त्यजामीति यदुक्ता कैकयी त्वया ।
स शापः कैकयीं घोरस्सपुत्रां न स्पृशेत्प्रभो ! ॥" २६

स 'तथे'ति महाराजो राममुक्त्वा कृताञ्जलिम् ।
लक्ष्मणं च परिष्वज्य पुनर्वाक्यमुवाच ह ॥ २७

"रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ।
कृता मम महाप्रीतिः प्राप्तं धर्मफलं च ते ॥ २८

धर्मं प्राप्स्यति धर्मज्ञ यशश्च विपुलं भुवि ।
रामे प्रसन्ने स्वर्गं च महिमानं तथैव च ॥ २९

रामं शुश्रूष भद्रं ते सुमित्रानन्दवर्धन ! ।
रामस्सर्वस्य लोकस्य शुभेष्वभिरतस्सदा ॥ ३०

एते सेन्द्रास्त्रयो लोकास्सिद्धाश्च परमर्षयः ।
अभिगम्य महात्मानमर्चन्ति पुरुषोत्तमम् ॥ ३१

एतत्तदुक्तमव्यक्तमक्षरं ब्रह्मनिर्मितम् ।
वेदानां हृदयं सौम्य ! गुह्यं रामः परन्तपः ॥ ३२

अवाप्तं धर्मचरणं यशश्च विपुलं त्वया ।
रामं शुश्रूषता भक्त्या वैदेह्या सह सीतया ॥' ३३

स तथोक्त्वा महाबाहुर्लक्ष्मणं प्राञ्जलिं स्थितम् ।
उवाच राजा धर्मात्मा वैदेहीं वचनं शुभम् ॥ ३४

"कर्तव्यो न तु वैदेहि ! मन्युस्त्यागमिमं प्रति ।
रामेण त्वद्विशुद्ध्यर्थं कृतमेतद्धितैषिणा ॥ ३५

न त्वं सुभ्रु ! समाधेया पतिशुश्रूषणं प्रति ।
अवश्यं तु मया वाच्यमेष ते दैवतं परम् ॥" ३६

इति प्रतिसमादिश्य पुत्रौ सीतां तथा स्नुषाम् ।
इन्द्रलोकं विमानेन ययौ दशरथो ज्वलन् ॥ ३७

इति श्रीमद्युद्धकाण्डे द्वाविंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ त्रयोविंशत्युत्तरशततमस्सर्गः ॥

प्रतिप्रयाते काकुत्स्थे महेन्द्रः पाकशासनः ।
अब्रवीत्परमप्रीतो राघवं प्राञ्जलिं स्थितम् ॥ १

"अमोघं दर्शनं राम ! तवास्माकं परन्तप ! ।
प्रीतियुक्ताः स्म तेन त्वं ब्रूहि यन्मनसेच्छसि ॥" २

एवमुक्तस्तु काकुत्स्थः प्रत्युवाच कृताञ्जलिः ।
लक्ष्मणेन सह भ्रात्रा सीतया सह भार्यया ॥ ३

"यदि प्रीतिस्समुत्पन्ना मयि सर्वसुरेश्वर ! ।
वक्ष्यामि कुरु ते सत्यं वचनं वदतां वर ! ॥ ४

मम हेतोः पराक्रान्ता ये गता यमसादनम् ।
ते सर्वे जीवितं प्राप्य समुत्तिष्ठन्तु वानराः ॥ ५

मत्कृते विप्रयुक्ता ये पुत्रैर्दारैश्च वानराः ।
(तान्प्रीतमानसान् सर्वान् द्रष्टुमिच्छामि मानद ॥ ६

विक्रान्ताश्चापि शूराश्च न मृत्युं गणयन्ति ये ।
कृतयत्ना विपन्नाश्च जीवेयुस्ते सुरर्षभ) ॥ ७
मत्प्रियेष्वभियुक्ताश्च न मृत्युं गणयन्ति च ।
त्वत्प्रसादात्समेयुस्ते वरमेतदहं वृणे ॥ ८
नीरुजो निर्व्रणांश्चैव सम्पन्नबलपौरुषान् ।
गोलाङ्गूलांस्तथैवर्क्षान्द्रष्टुमिच्छामि मानद ॥ ९
अकाले चापि मुख्यानि मूलानि च फलानि च ।
नद्यश्च विमलास्तत्र तिष्ठेयुर्यत्र वानराः ॥" १०
श्रुत्वा तु वचनं तस्य राघवस्य महात्मनः ।
महेन्द्रः प्रत्युवाचेदं वचनं प्रीतिलक्षणम् ॥ ११
" महानयं वरस्तात ! त्वयोक्तो रघुनन्दन ! ।
द्विर्मया नोक्तपूर्वं हि तस्मादेतद्भविष्यति ॥ १२
समुत्थास्यन्ति हरयो ये हता युधि राक्षसैः ।
ऋक्षाश्च सहगोपुच्छा निकृत्ताननबाहवः ॥ १३
नीरुजो निर्व्रणाश्चैव सम्पन्नबलपौरुषाः ।
समुत्थास्यन्ति हरयस्सुप्ता निद्राक्षये यथा ॥ १४
सुहृद्भिर्बान्धवैश्चैव ज्ञातिभिस्स्वजनैरपि ।
सर्वे एव समेष्यन्ति संयुक्ताः परया मुदा ॥ १५
अकाले पुष्पशबलाः फलवन्तश्च पादपाः ।
भविष्यन्ति महेष्वास नद्यश्च सलिलायुताः ॥ १६
सव्रणैः प्रथमं गात्रैरसंवृत्तैर्निर्व्रणैः पुनः ।
ततस्समुत्थितास्सर्वे सुप्त्वेव हरिपुङ्गवाः ॥ १७

बभूवुर्वानरास्सर्वे 'किमते' दिति विस्मिताः ।
ते सर्वे वानरास्तस्मै राघवायाभ्यवादयन् ॥ १८

काकुत्स्थं परिपूर्णार्थं दृष्ट्वा सर्वे सुरोत्तमाः ।
ऊचुस्ते प्रथमं स्तुत्वा स्तवार्हं सहलक्ष्मणम् ॥ १९

"गच्छायोध्यामितो वीर! विसर्जय च वानरान्! ।
(मैथिलीं सान्त्वयस्वैनामनुरक्तां तपस्विनीम् ॥ २०

शत्रुघ्नं च महात्मानं मातॄस्सर्वाः परन्तप! ।
भ्रातरं पश्य भरतं त्वच्छोकाद्व्रतधारिणम् ॥ २१

अभिषेचय चात्मानं पौरान्गत्वा प्रहर्षय ।"
एवमुक्त्वा तमामन्त्र्य रामं सौमित्रिणा सह ॥ २२

विमानैस्सूर्यसङ्काशैर्हृष्टा जग्मुस्सुरा दिवम् ।
अभिवाद्य च काकुत्स्थस्सर्वांस्तांस्त्रिदशोत्तमान् ॥ २३

लक्ष्मणेन सह भ्रात्रा वासमाज्ञापयत्तदा ।
ततस्तु सा लक्ष्मणरामपालिता महाचमूर्हृष्टजना यशस्विनी ।
श्रिया ज्वलन्ती विरराज सर्वतो निशा प्रणीतेन हि शीतरश्मिना ॥

इति श्रीमद्युद्धकाण्डे त्रयोविंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ चतुर्विंशत्युत्तरशततमस्सर्गः ॥

तां रात्रिमुषितं रामं सुखोत्थितमरिन्दमम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं जयं पृष्ट्वा विभीषणः ॥ १

"स्नानानि चाङ्गरागाणि वस्त्राण्याभरणानि च ।
चन्दनानि च दिव्यानि माल्यानि विविधानि च ॥ २

अलङ्कारविदश्चेमा नार्यः पद्मनिभेक्षणाः ।
उपस्थितास्त्वां विधिवत्स्नापयिष्यन्ति राघव ! ॥ ३

प्रतिगृह्णीष्व तत्सर्वं मदनुग्रहकाम्यया । ”
एवमुक्तस्तु काकुत्स्थः प्रत्युवाच विभीषणम् ॥ ४

“ हरीन् सुग्रीवमुख्यांस्त्वं स्नानेनाभिनिमन्त्रय ।
स तु ताम्यति धर्मात्मा मम हेतोस्सुखोचितः ॥ ५

सुकुमारो महाबाहुः कुमारस्सत्यसंश्रवः ।
तं विना कैकयीपुत्रं भरतं धर्मचारिणम् ॥ ६

न मे स्नानं बहुमतं वस्त्राण्याभरणानि च ।
इत एव पथा क्षिप्रं प्रतिगच्छामि तां पुरीम् ॥ ७

अयोध्यामागतो ह्येष पन्थाः परमदुर्गमः । ”
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ॥ ८

“ अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ।
पुष्पकं नाम भद्रं ते विमानं सूर्यसन्निभम् ॥ ९

मम भ्रातुः कुबेरस्य रावणेनाहृतं बलात् ।
हृतं निर्जित्य सङ्ग्रामे कामगं दिव्यमुत्तमम् ॥ १०

त्वदर्थे पालितं चैतत्तिष्ठत्यतुलविक्रम ! ।
तदिदं मेघसङ्काशं विमानमिह तिष्ठति ॥ ११

तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः ।
अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ॥ १२

वस तावदिह प्राज्ञ ! यद्यस्ति मयि सौहृदम् ।
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्यया ॥ १३

अर्चितस्सर्वकामैस्त्वं ततो राम! गमिष्यसि ।
प्रीतियुक्तस्य मे राम! ससैन्यस्ससुहृद्गणः ॥ १४

सत्क्रियां विहितां तावद्गृहाण त्वं मयोद्यताम् ।
प्रणयाद्बहुमानाच्च सौहृदेन च राघव ॥ १५

प्रसादयामि प्रेष्योऽहं न खल्वाज्ञापयामि ते ।"
एवमुक्तस्ततो रामः प्रत्युवाच विभीषणम् ॥ १६

रक्षसां वानराणां च सर्वेषां चोपशृण्वताम् ।
"पूजितोऽहं त्वया सौम्य! साचिव्येन परन्तप ॥ १७

सर्वात्मना च चेष्टाभिस्सौहृदेनोत्तमेन च ।
न खल्वेतन्न कुर्यां ते वचनं राक्षसेश्वर ॥ १८

तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ।
मां निवर्तयितुं योऽसौ चित्रकूटमुपागतः ॥ १९

शिरसा याचतो यस्य वचनं न कृतं मया ।
कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ॥ २०

गुरूंश्च सुहृदश्चैव पौरांश्च तनयैस्सह ।
(एतान् सर्वांश्च मे द्रष्टुमतीव त्वरते मनः) ॥ २१

उपस्थापय मे क्षिप्रं विमानं राक्षसेश्वर! ।
कृतकार्यस्य मे वासः कथंस्विदिह सम्मतः ॥ २२

अनुजानीहि मां सौम्य! पूजितोऽस्मि विभीषण! ।
मन्युर्न खलु कर्तव्यस्त्वरितं त्वाऽनुमानये ॥ २३

(तस्य तद्वचनं श्रुत्वा रामस्य सुमहात्मनः ।
तथेत्युक्त्वा मनश्चक्रे आदातुं पुष्पकं तदा) ॥ २४

राघवस्य वचश्श्रुत्वा राक्षसेन्द्रो विभीषणः ।
तं विमानं समादाय तूर्णं प्रति निवर्तत ॥ २५

ततः काञ्चनचित्राङ्गं वैडूर्यमयवेदिकम् ।
कूटागारैः परिक्षिप्तं सर्वतो रजतप्रभम् ॥ २६

पाण्डुराभिः पताकाभिर्ध्वजैश्च समलंकृतम् ।
शोभितं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितम् ॥ २७

प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षितम् ।
घण्टाजालैः परिक्षिप्तं सर्वतो मधुरस्वनम् ॥ २८

यन्मेरुशिखराकारं निर्मितं विश्वकर्मणा ।
बहुभिर्भूषितं रम्यैर्मुक्तारजतसन्निभैः ॥ २९

तलैस्स्फाटिकचित्राङ्गैर्वैडूर्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥ ३०

उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ।
निवेदयित्वा रामस्य तस्थौ तत्र विभीषणः ॥ ३१

इति श्रीमद्युद्धकाण्डे चतुर्विंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ पञ्चविंशत्युत्तरशततमस्सर्गः ॥

उपस्थितं तु तं दृष्ट्वा पुष्पकं पुष्पभूषितम् ।
अविदूरस्थितो रामं प्रत्युवाच विभीषणः ॥ १

स तु बद्धाञ्जलिः प्रह्वो विनीतो राक्षसेश्वरः ।
अब्रवीत्त्वरयोपेतः 'किं करो' मीति राघवम् ॥ २

तमब्रवीन्महातेजा लक्ष्मणस्योपशृण्वतः ।
विमृश्य राघवो वाक्यमिदं स्नेहपुरस्कृतम् ॥ ३

"कृतप्रयत्नकर्माणो विभीषणवनौकसः ।
रत्नैरर्थैश्च विविधैर्भूषणैश्चापि पूजय ॥ ४

सहैभिरजिता लङ्का निर्जिता राक्षसेश्वर ! ।
हृष्टैः प्राणभयं त्यक्त्वा सङ्ग्रामेष्वनिवर्तिभिः ॥ ५

त इमे कृतकर्माणः पूज्यन्तां सर्ववानराः ।
धनरत्नप्रदानेन कर्मैषां सफलं कुरु ॥ ६

एवं सम्मानिताश्चेमे मानार्हा मानद! त्वया ॥
भविष्यन्ति कृतज्ञेन निर्वृता हरियूथपाः ॥ ७

त्यागिनं संगृहीतारं सानुक्रोशं यशस्विनम् ।
यतस्त्वामवगच्छन्ति ततस्सम्बोधयाम्यहम् ॥ ८

(एतैर्युक्तं गुणैस्सर्वैरभिहन्तारमाहवे ।
भजन्ते नृपतिं सैन्यास्तस्माद्भूमिपतेर्व्रतम्) ॥ ९

हीनं रतिगुणैस्सर्वैरभिहन्तारमाहवे ।
त्यजन्ति नृपतिं सैन्यास्संत्रिग्नास्तं नरेश्वरम् ॥" १०

एवमुक्तस्तु रामेण वानरांस्तान्विभीषणः ।
रत्नार्थैस्संविभागेन सर्वानेवाभ्यपूजयत् ॥ ११

ततस्तान्पूजितान्दृष्ट्वा रत्नैरर्थैश्च यूथपान् ।
आरुरोह ततो रामस्तद्विमानमनुत्तमम् ॥ १२

अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥ १३

अब्रवीच्च विमानस्थः पूजयन् सर्ववानरान् ।
सुग्रीवं च महावीर्यं काकुत्स्थस्सविभीषणम् ॥ १४

(मित्रकार्यं कृतमिदं भवद्भिर्वानरोत्तमाः ।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥ १५
यत्तु कार्यं वयस्येन सुहृदा वा परन्तप ! ।
कृतं सुग्रीव ! तत्सर्वं भवताऽधर्मभीरुणा ॥ १६
किष्किन्धां प्रति याह्याशु स्वसैन्येनाभिसंवृतः ।
स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ! ॥ १७
न त्वां धर्षयितुं शक्तास्सेन्द्रा अपि दिवौकसः ।
अयोध्यां प्रतियास्यामि राजधानीं पितुर्मम ॥ १८
अभ्यनुज्ञातुमिच्छामि सर्वांश्चामन्त्रयामि वः ।"
एवमुक्तास्तु रामेण वानरास्ते महाबलाः ॥ १९
ऊचुः प्राञ्जलयो रामं राक्षसश्च विभीषणः ।
"अयोध्यां गन्तुमिच्छामस्सर्वान्नयतु नो भवान् ॥ २०
उद्युक्ता विचरिष्यामो वनानि नगराणि च ।
दृष्ट्वा त्वामभिषेकार्द्रं कौसल्यामभिवाद्य च ॥ २१
अचिरेण गमिष्यामस्स्वान्गृहान्नृपतेस्सुत !" ।
एवमुक्तस्तु धर्मात्मा वानरैस्सविभीषणैः ॥ २२
अब्रवीद्राघवः श्रीमान् ससुग्रीवविभीषणान् ।
"प्रियात्प्रियतरं लब्धं यदहं ससुहृज्जनः ॥ २३
सर्वैर्भवद्भिस्सहितः प्रीतिं लप्स्ये पुरीं गतः ।
क्षिप्रमारोह सुग्रीव विमानं वानरैस्सह ॥ २४
त्वमध्यारोह सामात्यो राक्षसेन्द्र ! विभीषण!" ।
ततस्तत्पुष्पकं दिव्यं सुग्रीवस्सह सेनया ॥ २५

अध्यारोहत्त्वरन् शीघ्रं सामात्यश्च विभीषणः ।
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ॥ २६

राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ।
ययौ तेन विमानेन हंसयुक्तेन भास्वता ॥ २७

प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ।
ते सर्वे वानरा हृष्टा राक्षसाश्च महाबलाः ॥ २८

यथासुखमसम्बाधं दिव्ये तस्मिन्नुपाविशन् ।

इति श्रीमद्युद्धकाण्डे पञ्चविंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ षड्विंशत्युत्तरशततमस्सर्गः ॥

अनुज्ञातं तु रामेण तद्विमानमनुत्तमम् ।
उत्पपात महामेघश्श्वसनेनोद्धतो यथा ॥ १

पातयित्वा ततश्चक्षुस्सर्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामश्शशिनिभाननाम् ॥ २

"कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि ! निर्मितां विश्वकर्मणा ॥ ३

एतदायोधनं पश्य मांसशोणितकर्दमम् ।
हरीणां राक्षसानां च सीते ! विशसनं महत् ॥ ४

अत्र दत्तवरश्शेते प्रमाथी राक्षसेश्वरः ।
तव हेतोर्विशालाक्षि ! रावणो निहतो मया ॥ ५

कुम्भकर्णोऽत्र निहतः प्रहस्तश्च निशाचरः ।
धूम्राक्षश्चात्र निहतो वानरेण हनूमता ॥ ६

विद्युन्माली हतश्चात्र सुषेणेन महात्मना ।
लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे ॥ ७

अङ्गदेनात्र निहतो विकटो नाम राक्षसः ।
विरूपाक्षश्च दुर्धर्षो महापार्श्वमहोदरौ ॥ ८

अकम्पनश्च निहतो बलिनोऽन्ये च राक्षसाः ।
(त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ ॥ ९

युद्धोन्मत्तश्च मत्तश्च राक्षसप्रवरौ हतौ ।
निकुम्भश्चैव कुम्भश्च कुम्भकर्णात्मजौ हतौ ॥ १०

वज्रदंष्ट्रस्वदंष्ट्रश्च बहवो राक्षसा हताः ।
मकराक्षश्च दुर्धर्षो मया युधि निपातितः ॥ ११

अकम्पनः कम्पनश्च शोणिताक्षश्च वीर्यवान् ।
यूपाक्षश्च प्रजङ्घश्च निहतोऽत्र महाहवे ॥ १२

विद्युज्जिह्वोऽत्र निहतो राक्षसो भीमदर्शनः ।
यज्ञशत्रुश्च निहतस्सुप्तघ्नश्च महाबलः ॥ १३

सूर्यशत्रुश्च निहतो ब्रह्मशत्रुस्तथापरः) ।
अत्र मन्दोदरी नाम भार्या तं पर्यदेवयत् ॥ १४

सपत्नीनां सहस्रेण सास्रेण परिवारिता ।
एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने ! ॥ १५

यत्र सागरमुत्तीर्य तां रात्रिमुषिता वयम् ।
एष सेतुर्मया बद्धस्सागरे सलिलार्णवे ॥ १६

तव हेतोर्विशालाक्षि ! नळसेतुस्सुदुष्करः ।
पश्य सागरमक्षोभ्यं वैदेहि ! वरुणालयम् ॥ १७

अपारमभिगर्जन्तं शङ्खशुक्तिनिषेवितम् ।
हिरण्यनाभं शैलेन्द्रं काञ्चनं पश्य मैथिलि ! ॥ १८

विश्रमार्थं हनुमतो भित्त्वा सागरमुत्थितम् ।
एतत्कुक्षौ समुद्रस्य स्कन्धावारनिवेशनम् ॥ १९

एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् ॥ २०

एतत्पवित्रं परमं महापातकनाशनम् ।
अत्र पूर्वं महादेवः प्रसादमकरोत्प्रभुः ॥ २१

अत्र राक्षसराजोऽयमाजगाम विभीषणः ।
एषा सा दृश्यते सीते ! किष्किन्धा चित्रकानना ॥ २२

सुग्रीवस्य पुरी रम्या यत्र वाली मया हतः । ”
अथ दृष्ट्वा पुरीं सीता किष्किन्धां वालिपालिताम् ॥ २३

अब्रवीत्प्रश्रितं वाक्यं रामं प्रणयसाध्वसा ।
“ सुग्रीवप्रियभार्याभिस्ताराप्रमुखतो नृप ॥ २४

अन्येषां वानरेन्द्राणां स्त्रीभिः परिवृता ह्यहम् ।
गन्तुमिच्छे सहायोध्यां राजधानीं त्वयानघ ! ” २५

एवमुक्तोऽथ वैदेह्या राघवः प्रत्युवाच ताम् ।
एवमस्त्विति किष्किन्धां प्राप्य संस्थाप्य राघवः ॥ २६

विमानं प्रेक्ष्य सुग्रीवं वाक्यमेतदुवाच ह ।
“ ब्रूहि वानरशार्दूल ! सर्वान्वानरपुङ्गवान् ॥ २७

स्वदारसहितास्सर्वे ह्ययोध्यां यान्तु सीतया ।
तथा त्वमपि सर्वाभिः स्त्रीभिस्सह महाबल ! ॥ २८

अभित्वरस्व सुग्रीव! गच्छामः प्लवगेश्वर!।"
एवमुक्तस्तु सुग्रीवो रामेणामिततेजसा ॥ २९

वानराधिपतिश्श्रीमांस्तैश्च सर्वैस्समावृतः।
प्रविश्यान्तः पुरं शीघ्रं तारामुद्वीक्ष्य भाषत ॥ ३०

"प्रिये! त्वं सह नारीभिर्वानराणां महात्मनाम्।
राघवेणाभ्यनुज्ञाता मैथिलीप्रियकाम्यया ॥ ३१

त्वर त्वमभिगच्छामो गृह्य वानरयोषितः।
अयोध्यां दर्शयिष्यामस्सर्वा दशरथस्त्रियः" ॥ ३२

सुग्रीवस्य वचश्श्रुत्वा तारा सर्वाङ्गशोभना।
आहूय चाब्रवीत्सर्वा वानराणां तु योषितः ॥ ३३

"सुग्रीवेणाभ्यनुज्ञाता गन्तुं सर्वैश्च वानरैः।
मम चापि प्रियं कार्यमयोध्यादर्शनेन च ॥ ३४

प्रवेशं चापि रामस्य पौरजानपदैस्सह।
विभूतिं चैव सर्वासां स्त्रीणां दशरथस्य च" ॥ ३५

तारया चाभ्यनुज्ञातास्सर्वा वानरयोषितः।
नैपथ्यं विधिपूर्वेण कृत्वा चापि प्रदक्षिणम् ॥ ३६

अध्यारोहन्विमानं तत्सीतादर्शनकाङ्क्षया।
ताभिस्सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ॥ ३७

ऋश्यमूकसमीपे तु वैदेहीं पुनरब्रवीत्।
"दृश्यतेऽसौ महान् सीते! सविद्युदिव तोयदः ॥ ३८

ऋश्यमूको गिरिश्रेष्ठः काञ्चनैर्धातुभिर्वृतः।
अत्राहं वानरेन्द्रेण सुग्रीवेण समागतः ॥ ३९

समयश्च कृतस्सीते ! वधार्थं वालिनो मया ।
एषा सा दृश्यते पम्पा नळिनी चित्रकानना ॥ ४०

त्वया विहीनो यत्राहं विललाप सुदुःखितः ।
अस्यास्तीरे मया दृष्टा शबरी धर्मचारिणी ॥ ४१

अत्र योजनबाहुश्च कबन्धो निहतो मया ।
दृश्यते च जनस्थाने सीते ! श्रीमान्वनस्पतिः ॥ ४२

यत्र युद्धं महद्वृत्तं तव हेतोर्विलासिनि ! ।
रावणस्य नृशंसस्य जटायोश्च महात्मनः ॥ ४३

खरश्च निहतो यत्र दूषणश्च निपातितः ।
त्रिशिराश्च महावीर्यो मया बाणैरजिह्मगैः ॥ ४४

एतत्तदाश्रमपदमस्माकं वरवर्णिनि ! ।
पर्णशाला तथा चित्रा दृश्यते शुभदर्शना ॥ ४५

यत्र त्वं राक्षसेन्द्रेण रावणेन हृता बलात् ।
एषा गोदावरी रम्या प्रसन्नसलिला शिवा ॥ ४६

अगस्त्यस्याश्रमो ह्येष दृश्यते पश्य मैथिलि ! ।
दीप्तश्चैवाश्रमो ह्येष सुतीक्ष्णस्य महात्मनः ॥ ४७

वैदेहि ! दृश्यते चात्र शरभङ्गाऽश्रमो महान् ।
उपयातस्सहस्राक्षो यत्र शक्रः पुरन्दरः ॥ ४८

अस्मिन्देशे महाकायो विराधो निहतो मया ।
एते हि तापसावासा दृश्यन्ते तनुमध्यमे ! ॥ ४९

अत्रिः कुलपतिर्यत्र सूर्यवैश्वानरप्रभः ।
अत्र सीते ! त्वया दृष्टा तापसी धर्मचारिणी ॥ ५०

असौ सुतनु! शैलेन्द्रश्चित्रकूटः प्रकाशते ।
यत्र मां कैकयीपुत्रः प्रसादयितुमागतः ॥ ५१

एषा सा यमुना दूराद्दृश्यते चित्रकानना ।
भरद्वाजाश्रमो यत्र श्रीमानेष प्रकाशते ॥ ५२

एषा त्रिपथगा गङ्गा दृश्यते वरवर्णिनि ।
नानाद्विजगणाकीर्णा संप्रपुष्पितकानना ॥ ५३

(बहुतीर्थसमायुक्ता त्रिवेणी लोकपावनी) ।
शृङ्गिबेरपुरं चैतद्गुहो यत्र समागतः ॥ ५४

एषा सा दृश्यते सीते! सरयूर्यूपमालिनी ।
नानातरुशताकीर्णा संप्रपुष्पितकानना ॥ ५५

एषा सा दृश्यतेऽयोध्या राजधानी पितुर्मम ।
अयोध्यां कुरु वैदेहि! प्रणामं पुनरागता" ॥ ५६

ततस्ते वानरास्सर्वे राक्षसश्च विभीषणः ।
उत्पत्योत्पत्य ददृशुस्तां पुरीं शुभदर्शनाम् ॥ ५७

ततस्तु तां पाण्डुरहर्म्यमालिनीं विशालकक्ष्यां गजवाजिसंकुलाम् ।
पुरीमयोध्यां ददृशुः प्लवङ्गमाः पुरीं महेन्द्रस्य यथाऽमरावतीम् ॥ ५८

इति श्रीमद्युद्धकाण्डे षड्विंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ सप्तविंशत्युत्तरशततमस्सर्गः ॥

पूर्णे चतुर्दशे वर्षे पञ्चम्यां लक्ष्मणाग्रजः ।
भरद्वाजाश्रमं प्राप्य ववन्दे नियतो मुनिम् ॥ १

सोऽपृच्छदभिवाद्यैनं भरद्वाजं तपोधनम् ।
" शृणोषि कच्चिद्भगवन्! सुभिक्षानामयं पुरे? ॥ २

कच्चिच्च युक्तो भरतो जीवन्त्यपि च मातरः ?"।
एवमुक्तस्तु रामेण भरद्वाजो महामुनिः ॥ ३

प्रत्युवाच रघुश्रेष्ठं स्मितपूर्वं प्रहृष्टवत् ।
"पङ्कदिग्धस्तु भरतो जटिलस्त्वां प्रतीक्षते ॥ ४

पादुके ते पुरस्कृत्य सर्वं च कुशलं गृहे ।
त्वां पुरा चीरवसनं प्रविशन्तं महावनम् ॥ ५

स्त्रीतृतीयं च्युतं राज्याद्धर्मकामं च केवलम् ।
पदातिं त्यक्तसर्वस्वं पितुर्वचनकारिणम् ॥ ६

सर्वभोगैः परित्यक्तं स्वर्गच्युतमिवामरम् ।
दृष्ट्वा तु करुणा पूर्वं ममाऽसीत्समितिंजय ! ॥ ७

कैकेयीवचने युक्तं वन्यमूलफलाशिनम् !
सांप्रतं सुसमृद्धार्थं समित्रगणबान्धवम् ॥ ८

समीक्ष्य विजितारिं त्वां मम प्रीतिरनुत्तमा ।
सर्वं च सुखदुःखं ते विदितं मम राघव ! ॥ ९

यत्त्वया विपुलं प्राप्तं जनस्थानवधादिकम् ।
ब्राह्मणार्थे नियुक्तस्य रक्षितुस्सर्वतापसान् ॥ १०

रावणेन हृता भार्या बभूवेयमनिन्दिता ।
मारीचदर्शनं चैव सीतोन्मथनमेव च ॥ ११

कबन्धदर्शनं चैव पम्पाभिगमनं तथा ।
सुग्रीवेण च ते सख्यं यच्च वाली हतस्त्वया ॥ १२

मार्गणं चैव वैदेह्याः कर्म वातात्मजस्य च ।
विदितायां च वैदेह्यां नळसेतुर्यथा कृतः ॥ १३

यथा वा दीपिता लङ्का प्रहृष्टैर्हरियूथपैः ।
सपुत्रबान्धवामात्यस्सबलस्सहवाहनः ॥ १४

यथा विनिहतस्सङ्ख्ये रावणो देवकण्टकः ।
तथा च निहते तस्मिन्रावणे देवकण्टके ॥ १५

समागमश्च त्रिदशैर्यथा दत्तश्च ते वरः ।
सर्वं ममैतद्विदितं तपसा धर्मवत्सल ! ॥ १६

सम्पतन्ति च मे शिष्याः प्रवृत्त्याख्याः पुरीमितः ।
अहमप्यत्र ते दद्मि वरं शस्त्रभृतां वर ! ॥ १७

अर्घ्यमद्य गृहाणेदमयोध्यां श्वो गमिष्यसि । ”
तस्य तच्छिरसा वाक्यं प्रतिगृह्य नृपात्मजः ॥ १८

‘बाढ’ मित्येव संहृष्टो धीमान्वरमयाचत ।
“ अकाले फलिनो वृक्षास्सर्वे चापि मधुस्रवाः ॥ १९

फलान्यमृतकल्पानि बहूनि विविधानि च ।
भवन्तु मार्गे भगव ! न्नयोध्यां प्रतिगच्छतः ॥ ” २०

तथे ’ति च प्रतिज्ञाते वचनात्समनन्तरम् ।
अभवन्पादपास्तत्र स्वर्गपादपसन्निभाः ॥ २१

निष्फलाः फलिनश्चासन्विपुष्पाः पुष्पशालिनः ।
शुष्कास्समग्रपत्रास्ते नगाश्चैव मधुस्रवाः ॥ २२

सर्वतो योजना त्रीणि गच्छतामभवंस्तदा ।
ततः प्रहृष्टाः प्लवगर्षभास्ते बहूनि दिव्यानि फलानि चैव ।
कामादुपाश्नन्ति सहस्रशस्ते मुदान्वितास्स्वर्गजितो यथैव ॥ २३

इति श्रीमद्युद्धकाण्डे सप्तविंशत्युत्तरशततमस्सर्गः ॥

## ॥ अष्टाविंशत्युत्तरशततमस्सर्गः ॥

अयोध्यां तु समालोक्य चिन्तयामास राघवः ।
चिन्तयित्वा हनूमन्तमुवाच प्लवगोत्तमम् ॥ १

"जानीहि कच्चित्कुशली जनो नृपतिमन्दिरे ? ।
शृङ्गिबेरपुरं प्राप्य गुहं गहनगोचरम् ॥ २

निषादाधिपतिं ब्रूहि कुशलं वचनान्मम ।
श्रुत्वा तु मां कुशलिनमरोगं विगतज्वरम् ॥ ३

भविष्यति गुहः प्रीतस्समममात्मसमस्सखा ।
अयोध्यायाश्च ते मार्गं प्रवृत्तिं भरतस्य च ॥ ४

निवेदयिष्यति प्रीतो निषादाधिपतिर्गुहः ।
भरतस्तु त्वया वाच्यः कुशलं वचनान्मम ॥ ५

सिद्धार्थं शंस मां तस्मै सभार्यं सहलक्ष्मणम् ।
हरणं चापि वैदेह्या रावणेन बलीयसा ॥ ६

सुग्रीवेण च संसर्गं वालिनश्च वधं रणे ।
मैथिल्यन्वेषणं चैव यथा चाधिगता त्वया ॥ ७

लङ्घयित्वा महातोयमापगापतिमव्ययम् ।
उपयानं समुद्रस्य सागरस्य च दर्शनम् ॥ ८

यथा च कारितस्सेतू रावणश्च यथा हतः ।
वरदानं महेन्द्रेण ब्रह्मणा वरुणेन च ॥ ९

महादेवप्रसादाच्च पित्रा मम समागमम् ।
उपयातं च मां सौम्य ! भरतस्य निवेदय ॥ १०

सह राक्षसराजेन हरीणां प्रवरेण च ।
एतच्छ्रुत्वा यमाकारं भजते भरतस्तदा ॥ ११
स च ते वेदितव्यस्स्यात्सर्वं यच्चापि मां प्रति ।
जित्वा शत्रुगणान्रामः प्राप्य चानुत्तमं यशः ॥ १२
उपयाति समृद्धार्थस्सह मित्रैर्महाबलैः ।
ज्ञेयास्सर्वे च वृत्तान्ता भरतस्येङ्गितानि च ॥ १३
तत्त्वेन मुखवर्णेन दृष्ट्या व्याभाषणेन च ।
सर्वकालसमृद्धं हि हस्त्यश्वरथसंकुलम् ॥ १४
पितृपैतामहं राज्यं कस्य नावर्तयेन्मनः ।
सङ्गत्या भरतश्श्रीमान् राज्यार्थी चेत्स्वयं भवेत् ॥ १५
प्रशास्तु वसुधां कृत्स्नामखिलां रघुनन्दनः ।
तस्य बुद्धिं च विज्ञाय व्यवसायं च वानर! ॥ १६
यावन्न दूरं याताः स क्षिप्रमागन्तुमर्हसि ।"
इति प्रतिसमादिष्टो हनुमान्मारुतात्मजः ॥ १७
मानुषं धारयन्रूपमयोध्यां त्वरितो ययौ ।
अथोत्पपात वेगेन हनुमान्मारुतात्मजः ॥ १८
गरुत्मानिव वेगेन जिघृक्षन्भुजगोत्तमम् ।
लङ्घयित्वा पितृपथं भुजगेन्द्रालयं शुभम् ॥ १९
गङ्गायमुनयोर्मध्ये सन्निपातमतीत्य च ।
शृङ्गिबेरपुरं प्राप्य गुहमासाद्य वीर्यवान् ॥ २०
स वाचा शुभया हृष्टो हनूमानिदमब्रवीत् ।
"सखा तु तव काकुत्स्थो रामस्सत्यपराक्रमः ॥ २१

ससीतस्सह सौमित्रिस्स त्वां कुशलमब्रवीत् ।
पञ्चमीमद्य रजनीमुषित्वा वचनान्मुनेः ॥ २२

भरद्वाजाभ्यनुज्ञातं द्रक्ष्यस्यद्यैव राघवम् ।"
एवमुक्त्वा महातेजास्संप्रहृष्टतनूरुहः ॥ २३

उत्पपात महावेगो वेगवानविचारयन् ।
सोऽपश्यद्रामतीर्थं च नदीं वालुकिनीं तथा ॥ २४

गोमतीं तां च सोऽपश्यद्भीमं सालवनं तथा ।
प्रजाश्च बहुसाहस्राः स्फीताञ्जनपदानपि ॥ २५

स गत्वा दूरमध्वानं त्वरितः कपिकुञ्जरः ।
आससाद द्रुमान्फुल्लान्नन्दिग्रामसमीपगान् ॥ २६

स्त्रीभिस्सपुत्रैर्वृद्धैश्च रममाणैस्स्वलंकृतान् ।
सुराधिपस्योपवने यथा चैत्ररथे द्रुमान् ॥ २७

क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥ २८

जटिलं मलदिग्धाङ्गं भ्रातृव्यसनकर्शितम् ।
फलमूलाशिनं दान्तं तापसं धर्मचारिणम् ॥ २९

समुन्नतजटाभारं वल्कलाजिनवाससम् ।
नियतं भावितात्मानं ब्रह्मर्षिसमतेजसम् ॥ ३०

पादुके ते पुरस्कृत्य शासन्तं वै वसुन्धराम् ।
चातुर्वर्ण्यस्य लोकस्य त्रातारं सर्वतो भयात् ॥ ३१

उपस्थितममात्यैश्च शुचिभिश्च पुरोहितैः ।
बलमुख्यैश्च युक्तैश्च काषायाम्बरधारिभिः ॥ ३२

न हि ते राजपुत्रं तं चीरकृष्णाजिनाम्बरम् ।
परिभोक्तुं व्यवस्यन्ति पौरा वै धर्मवत्सलाः ॥ ३३

तं धर्ममिव धर्मज्ञं देहवन्तमिवापरम् ।
(अग्निं प्रज्वाल्य विधिवद्देहत्यागैषिणं शुचिम्) ॥ ३४

उवाच प्राञ्जलिर्वाक्यं हनूमान्मारुतात्मजः ।
"वसन्तं दण्डकारण्ये यं त्वं चीजटाधरम् ॥ ३५

अनुशोचसि काकुत्स्थं स त्वां कुशलमब्रवीत् ।
प्रियमाख्यामि ते देव! शोकं त्यक्ष्यसि दारुणम् ॥ ३६

अस्मिन्मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः ।
निहत्य रावणं रामः प्रतिलभ्य च मैथिलीम् ॥ ३७

उपयाति समृद्धार्थस्सह मित्रैर्महाबलैः ।
लक्ष्मणश्च महातेजा वैदेही च यशस्विनी ॥ ३८

सीता समग्रा रामेण महेन्द्रेण यथा शची ।"
एवमुक्तो हनुमता भरतो भ्रातृवत्सलः ॥ ३९

पपात सहसा हृष्टो हर्षान्मोहं जगाम ह ।
ततो मुहूर्तादुत्थाय प्रत्याश्वस्य च राघवः ॥ ४०

हनूमन्तमुवाचेदं भरतः प्रियवादिनम् ।
अशोकजैः प्रीतिमयैः कपिमालिङ्ग्य सम्भ्रमात् ॥ ४१

सिषेच भरतश्श्रीमान् विपुलैरास्रबिन्दुभिः ।
"देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ॥ ४२

प्रियाख्यानस्य ते सौम्य! ददामि ब्रुवतः प्रियम् ।
गवां शतसहस्रं च ग्रामाणां च शतं परम् ॥ ४३

सुकुण्डलाश्शुभाचारा भार्याः कन्याश्च षोडश ।
हेमवर्णास्सुनासोरूश्शशिसौम्याननाः स्त्रियः ॥ ४४

सर्वाभरणसम्पन्नास्सम्पन्नाः कुलजातिभिः ”
निशम्य रामागमनं नृपात्मजः कपिप्रवीरस्य तदद्भुतोपमम् ।
प्रहर्षितो रामदिदृक्षयाऽभवत्पुनश्च हर्षादिदमब्रवीद्वचः ॥ ४५

इति श्रीमद्युद्धकाण्डे अष्टाविंशत्युत्तरशततमस्सर्गः ॥

---

## ॥ एकोनत्रिंशदुत्तरशततमस्सर्गः ॥

“ बहूनि नाम वर्षाणि गतस्य सुमहद्वनम् ।
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ॥ १

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ २

राघवस्य हरीणां च कथमासीत्समागमः ।
कस्मिन्देशे किमाश्रित्य तत्त्वमाख्याहि पृच्छतः ॥” ३

स पृष्टो राजपुत्रेण बृस्यां समुपवेशितः ।
आचचक्षे ततस्सर्वं रामस्य चरितं वने ॥ ४

“ यथा प्रव्राजितो रामो मातुर्दत्तो वरस्तव ।
यथा च पुत्रशोकेन राजा दशरथो मृतः ॥ ५

यथा दूतैस्त्वमानीतस्तूर्णं राजगृहात्प्रभो ! ।
त्वयाऽयोध्यां प्रविष्टेन यथा राज्यं न चेप्सितम् ॥ ६

चित्रकूटं गिरिं गत्वा राज्येनामित्रकर्शनः ।
निमन्त्रितस्त्वया भ्राता धर्ममाचरता सताम् ॥ ७

स्थितेन राज्ञो वचने यथा राज्यं विसर्जितम् ।
आर्यस्य पादुके गृह्य यथाऽसि पुनरागतः ॥ ८
सर्वमेतन्महाबाहो ! यथावद्विदितं तव ।
त्वयि प्रतिप्रयाते तु यद्वृत्तं तन्निबोध मे ॥ ९
अपयाते त्वयि तदा समुद्भ्रान्तमृगद्विजम् ।
परिद्यूनमिवात्यर्थं तद्वनं समपद्यत ॥ १०
तद्धस्तिमृदितं घोरं सिंहव्याघ्रमृगायुतम् ।
प्रविवेशाथ विजनं सुमहद्दण्डकावनम् ॥ ११
तेषां पुरस्ताद्बलवान्गच्छतां गहने वने ।
निनदन् सुमहानादं विराधः प्रत्यदृश्यत ॥ १२
तमुत्क्षिप्य महानादमूर्ध्वबाहुमधोमुखम् ।
निखाते प्रक्षिपन्ति स्म नदन्तमिव कुञ्जरम् ॥ १३
तत्कृत्वा दुष्करं कर्म भ्रातरौ रामलक्ष्मणौ ।
सायाह्ने शरभङ्गस्य रम्यमाश्रममीयतुः ॥ १४
शरभङ्गे दिवं प्राप्ते रामस्सत्यपराक्रमः ।
अभिवाद्य मुनीन् सर्वाञ्जनस्थानमुपागमत् ॥ १५
ततः पश्चाच्छूर्पणखा रामपार्श्वमुपागता ।
ततो रामेण सन्दिष्टो लक्ष्मणस्सहसोत्थितः ॥ १६
प्रगृह्य खड्गं चिच्छेद कर्णनासं महाबलः ।
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् ॥ १७
हतानि वसता तत्र राघवेण महात्मना ।
एकेन सह सङ्गम्य रणे रामेण सङ्गताः ॥ १८

अह्नश्चतुर्थभागेन निश्शेषा राक्षसाः कृताः ।
महाबला महावीर्यास्तपसो विघ्नकारिणः ॥ १९

निहता राघवेणाजौ दण्डकारण्यवासिनः ।
राक्षसाश्च विनिष्पिष्टाः खरश्च निहतो रणे ॥ २०

(दूषणश्चाग्रतो नष्टस्त्रिशिरास्तदनन्तरम्) ।
ततस्तेनार्दिता बाला रावणं समुपागता ॥ २१

रावणानुचरो घोरो मारीचो नाम राक्षसः ।
लोभयामास वैदेहीं भूत्वा रत्नमयो मृगः ॥ २२

अथैनमब्रवीद्रामं वैदेही गृह्यतामयम् ।
अहो मनोहरः कान्त! आश्रमो नो भविष्यति" ॥ २३

ततो रामो धनुष्पाणिर्धावन्तमनुधावति ।
स तं जघान धावन्तं शरेणाऽऽनतपर्वणा ॥ २४

अथ सौम्य! दशग्रीवो मृगं याते तु राघवे ।
लक्ष्मणे चापि निष्क्रान्ते प्रविवेशाश्रमं तदा ॥ २५

जग्राह तरसा सीतां ग्रहः खे रोहिणीमिव ।
त्रातुकामं ततो युद्धे हत्वा गृध्रं जटायुषम् ॥ २६

प्रगृह्य सीतां सहसा जगामाशु स रावणः ।
ततस्त्वद्भुतसङ्काशाः स्थिताः पर्वतमूर्धनि ॥ २७

सीतां गृहीत्वा गच्छन्तं वानराः पर्वतोपमाः ।
ददृशुर्विस्मितास्तत्र रावणं राक्षसाधिपम् ॥ २८

(ततः शीघ्रतरं गत्वा तद्विमानं मनोजवम् ।
आरुह्य सह वैदेह्या पुष्पकं स महाबलः) ॥ २९

प्रविवेश ततो लङ्कां रावणो लोकरावणः ।
तां सुवर्णपरिक्रान्ते शुभे महति वेश्मनि ॥ ३०

प्रविश्य मैथिलीं वाक्यैस्सान्त्वयामास रावणः ।
तृणवद्भाषितं तस्य तं च नैर्ऋतपुङ्गवम् ॥ ३१

अचिन्तयन्ती वैदेही अशोकवनिकां गता ।
न्यवर्तत ततो रामो मृगं हत्वा महावने ॥ ३२

निवर्तमानः काकुत्स्थो दृष्ट्वा गृध्रं प्रविव्यथे ।
गृध्रं हतं तदा दग्ध्वा रामः प्रियसखं पितुः ॥ ३३

मार्गमाणस्तु वैदेहीं राघवस्सहलक्ष्मणः ।
गोदावरीमन्वचरद्वनोद्देशांश्च पुष्पितान् ॥ ३४

आसेदतुर्महारण्ये कबन्धं नाम राक्षसम् ।
ततः कबन्धवचनाद्रामस्सत्यपराक्रमः ॥ ३५

ऋश्यमूकं गिरिं गत्वा सुग्रीवेण समागतः ।
तयोस्समागमात्पूर्वं प्रीत्या हार्दो व्यजायत ॥ ३६

भ्रात्रा निरस्तः क्रुद्धेन सुग्रीवो वालिना पुरा ।
इतरेतरसंवादात्प्रगाढः प्रणयस्तयोः ॥ ३७

रामस्य बाहुवीर्येण स्वराज्यं प्रत्यपादयत् ! ।
वालिनं समरे हत्वा महाकायं महाबलम् ॥ ३८

सुग्रीवस्स्थापितो राज्ये सहितस्सर्ववानरैः ।
रामाय प्रतिजानीते राजपुत्र्याश्च मार्गणम् ॥ ३९

आदिष्टा वानरेन्द्रेण सुग्रीवेण महात्मना ।
दशकोट्यः प्लवङ्गानां सर्वाः प्रस्थापिता दिशः ॥ ४०

तेषां नो विप्रकृष्टानां विन्ध्ये पर्वतसत्तमे ।
भृशं शोकाभितप्तानां महान्कालोऽत्यवर्तत ॥ ४१

भ्राता तु गृध्रराजस्य संपातिर्नाम वीर्यवान् ।
समाख्याति स्म वसतिं सीताया रावणालये ॥ ४२

सोऽहं शोकपरीतानां दुःखं तद् ज्ञातिनां नुदन् ।
आत्मवीर्यं समास्थाय योजनानां शतं प्लुतः ॥ ४३

तत्राहमेकामद्राक्षमशोकवनिकां गताम् ।
कौशेयवस्त्रां मलिनां निरानन्दां दृढव्रताम् ॥ ४४

तया समेत्य विधिवत्पृष्ट्वा सर्वमनिन्दिताम् ।
(अभिज्ञानं मया दत्तमङ्गुळीयमनुत्तमम् ॥ ४५

मां दृष्ट्वा मैथिली हृष्टा त्वाशशंसे च जीवितम् ) ।
अभिज्ञानं च मे दत्तमर्चिष्मान् स महामणिः ॥ ४६

(रावणस्य मनः कान्तामशोकवनिकां तदा ।
विध्वंसयित्वा समरे हत्वा राक्षसपुङ्गवान् ॥ ४७

लङ्कां च भस्मसात्कृत्वा प्रहृष्टेनान्तरात्मना) ।
अभिज्ञानं मणिं लब्ध्वा चरितार्थोऽहमागतः ॥ ४८

मया च पुनरागम्य रामस्याक्लिष्टकर्मणः ।
अभिज्ञानं मया दत्तमर्चिष्मान् स महामणिः ॥ ४९

श्रुत्वा तु मैथिलीं हृष्टस्त्वाशशंसे च जीवितम् ।
जीवितान्तमनुप्राप्तः पीत्वाऽमृतमिवातुरः ॥ ५०

उद्योजयिष्यन्नुद्योगं दध्रे कामं वधे मनः ।
जिघांसुरिव लोकान्ते सर्वान् लोकान्विभावसुः ॥ ५१

ततस्समुद्रमासाद्य नळं सेतुमकारयत् ।
अतरत्कपिवीराणां वाहिनी तेन सेतुना ॥ ५२

प्रहस्तमवधीन्नीलः कुम्भकर्णं तु राघवः ।
लक्ष्मणो रावणसुतं स्वयं रामस्तु रावणम् ॥ ५३

स शक्रेण समागम्य यमेन वरुणेन च ।
महेश्वरस्वयम्भूभ्यां तथा दशरथेन च ॥ ५४

तैश्च दत्तवरः श्रीमान् ऋषिभिश्च समागतः ।
सुरर्षिभिश्च काकुत्स्थो वरान्लेभे परन्तपः ॥ ५५

स तु दत्तवरः प्रीत्या वानरैश्च समागतः ।
पुष्पकेण विमानेन किष्किन्धामभ्युपागमत् ॥ ५६

तं गङ्गां पुनरासाद्य वसन्तं मुनिसन्निधौ ।
अविघ्नं पुष्ययोगेन श्वो रामं द्रष्टुमर्हसि ॥ ५७

ततस्तु सत्यं हनुमद्वचो महन्निशम्य हृष्टो भरतः कृताञ्जलिः ।
उवाच वाणीं मनसः प्रहर्षिणीं चिरस्य पूर्णः खलु मे मनोरथः ॥५८

इति श्रीमद्युद्धकाण्डे एकोनत्रिंशदुत्तरशततमस्सर्गः ॥

---

## ॥ त्रिंशदुत्तरशततमस्सर्गः ॥

श्रुत्वा तु परमानन्दं भरतस्सत्यविक्रमः ।
हृष्टमाज्ञापयामास शत्रुघ्नं परवीरहा ॥ १

"दैवतानि च सर्वाणि चैत्यानि नगरस्य च ।
सुगन्धमाल्यैर्वादित्रैरर्चन्तु शुचयो नराः ॥ २

सूताः स्तुतिपुराणज्ञास्सर्वे वैताळिकास्तथा ।
सर्वे वादित्रकुशला गणिकाश्चापि सङ्घशः ॥ ३

अभिनिर्यान्तु रामस्य द्रष्टुं शशिनिभं मुखम्" ।
भरतस्य वचः श्रुत्वा शत्रुघ्नः परवीरहा ॥ ४
विष्टीरनेकसाहस्राश्चोदयामास वीर्यवान् ।
समीकुरुत निम्नानि विषमाणि समानि च ॥ ५
स्थलानि च निरस्यन्तां नन्दिग्रामादितः परम् ।
सिञ्चन्तु पृथिवीं कृत्स्नां हिमशीतेन वारिणा ॥ ६
ततोऽभ्यवकिरन्त्वन्ये लाजैः पुष्पैश्च सर्वशः ।
समुच्छ्रितपताकास्तु रथ्याः पुरवरोत्तमे ॥ ७
शोभयन्तु च वेश्मानि सूर्यस्योदयनं प्रति ।
स्रग्दामभिर्मुक्तपुष्पैस्सुगन्धैः पञ्चवर्णकैः ॥ ८
राजमार्गमसम्बाधं किरन्तु शतशो नराः ।
राजदारास्तथाऽमात्यास्सैन्यास्सेनागणाङ्गनाः ॥ ९
ब्राह्मणाश्च सराजन्याः श्रेणीमुख्यास्तथा गणाः ॥
धृष्टिर्जयन्तो विजयस्सिद्धार्थो ह्यर्थसाधकः । १०
अशोको मन्त्रपालश्च सुमन्त्रश्चापि निर्ययुः ।
मत्तैर्नागसहस्रैश्च शातकुम्भविभूषितैः ॥ ११
अपरे हेमकक्ष्याभिस्सगजाभिः करेणुभिः ।
निर्ययुस्तुरगाक्रान्तैः रथैश्च सुमहारथाः ॥ १२
शक्त्यष्टिप्रासहस्तानां सध्वजानां पताकिनाम् ।
तुरगाणां सहस्रैश्च मुख्यैर्मुख्यनरान्वितैः ॥ १३
पदातीनां सहस्रैश्च वीराः परिवृता ययुः ।
ततो यानान्युपारूढास्सर्वा दशरथस्त्रियः ॥ १४

कौसल्यां प्रमुखे कृत्वा सुमित्रां चापि निर्ययुः ।
कैकेय्या सहितास्सर्वा नन्दिग्राममुपागमन् ॥ १५

कृत्स्नं च नगरं तत्तु नन्दिग्राममुपागमत् ।
अश्वानां खुरशब्देन रथनेमिस्वनेन च ॥ १६

शङ्खदुन्दुभिनादेन सञ्चचालेव मेदिनी ।
द्विजातिमुख्यैर्धर्मात्मा श्रेणीमुख्यैस्सनैगमैः ॥ १७

माल्यमोदकहस्तैश्च मन्त्रिभिर्भरतो वृतः ।
शङ्खभेरीनिनादैश्च वन्दिभिश्चाभिवन्दितः ॥ १८

आर्यपादौ गृहीत्वा तौ शिरसा धर्मकोविदः ।
पाण्डुरं छत्रमादाय शुक्लमाल्योपशोभितम् ॥ १९

शुक्ले च वालव्यजने राजार्हे हेमभूषिते ।
उपवासकृशो दीनश्चीरकृष्णाजिनाम्बरः ॥ २०

भ्रातुरागमनं श्रुत्वा तत्पूर्वं हर्षमागतः ।
प्रत्युद्ययौ ततो रामं महात्मा सचिवैस्सह ॥ २१

समीक्ष्य भरतो वाक्यमुवाच पवनात्मजम् ।
"कच्चिन्न खलु कापेयी सेव्यते चलचित्तता ? ॥ २२

न हि पश्यामि काकुत्स्थं राममार्यं परन्तपम् ।
कच्चि न्न खलु दृश्यन्ते वानराः कामरूपिणः ?" ॥ २३

अथैवमुक्ते वचने हनुमानिदमब्रवीत् ।
अर्थं विज्ञापयन्नेव भरतं सत्यविक्रमम् ॥ २४

"सदाफलान्कुसुमितान् वृक्षान् प्राप्य मधुस्रवान् ।
भरद्वाजप्रसादेन मत्तभ्रमरनादितान् ॥ २५

तस्य चैष वरो दत्तो वासवेन परन्तप ! ।
ससैन्यस्य तथाऽऽतिथ्यं कृतं सर्वगुणान्वितम् ॥ २६

निस्वनश्श्रूयते भीमः प्रहृष्टानां वनौकसाम् ।
मन्ये वानरसेना सा नदीं तरति गोमतीम् ॥ २७

रजोवर्षं समुद्भूतं पश्य वालुकिनीं प्रति ।
मन्ये सालवनं रम्यं लोलयन्ति प्लवङ्गमाः ॥ २८

तदेतद्दृश्यते दूराद्विमलं चन्द्रसन्निभम् ।
विमानं पुष्पकं दिव्यं मनसा ब्रह्मनिर्मितम् ॥ २९

रावणं बान्धवैस्सार्धं हत्वा लब्धं महात्मना ।
तरुणादित्यसङ्काशं विमानं रामवाहनम् ॥ ३०

धनदस्य प्रसादेन दिव्यमेतन्मनोजवम् ।
एतस्मिन्भ्रातरौ वीरौ वैदेह्या सह राघवौ ॥ ३१

सुग्रीवश्च महातेजा राक्षसश्च विभीषणः" ।
ततो हर्षसमुद्भूतो निस्वनो दिवमस्पृशत् ॥ ३२

स्त्रीबालयुववृद्धानां रामोऽयमिति कीर्तिते ।
रथकुञ्जरवाजिभ्यस्तेऽवतीर्य महीं गताः ॥ ३३

ददृशुस्तं विमानस्थं नरास्सोममिवाम्बरे ।
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ॥ ३४

स्वागतेन यथार्थेन ततो राममपूजयत् ।
मनसा ब्रह्मणा सृष्टे विमाने भरताग्रजः ॥ ३५

रराज पृथुदीर्घाक्षो वज्रपाणिरिवापरः ।
ततो विमानाग्रगतं भरतो भ्रातरं तदा ॥ ३६

ववन्दे प्रयतो रामं मेरुस्थमिव भास्करम् ।
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ ३७

हंसयुक्तं महावेगं निष्पपात महीतले ।
आरोपितो विमानं तद्भरतस्सत्यविक्रमः ॥ ३८

राममासाद्य मुदितः पुनरेवाभ्यवादयत् ।
तं समुत्थाप्य काकुत्स्थश्चिरस्याक्षिपथं गतम् ॥ ३९

अङ्के भरतमारोप्य मुदितः परिषस्वजे ।
ततो लक्ष्मणमासाद्य वैदेहीं चाभ्यवादयत् ॥ ४०

अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत् ।
सुग्रीवं कैकयीपुत्रो जाम्बवन्तं तथाऽङ्गदम् ॥ ४१

मैन्दं च द्विविदं नीलमृषभं परिषस्वजे ।
सुषेणं च नळं चैव गवाक्षं गन्धमादनम् ॥ ४२

शरभं पनसं चैव भरतः परिषस्वजे ।
ते कृत्वा मानुषं रूपं वानराः कामरूपिणः ॥ ४३

कुशलं पर्यपृच्छंस्ते प्रहृष्टा भरतं तदा ।
अथाब्रवीद्राजपुत्रस्सुग्रीवं वानरर्षभम् ॥ ४४

परिष्वज्य महातेजा भरतो धर्मिणां वरः ।
'त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव! पञ्चमः ॥ ४५

सौहृदाज्जायते मित्रमपकारोऽरिलक्षणम्" ।
विभीषणं च भरतस्सान्त्वं वाक्यमथाब्रवीत् ॥ ४६

"दिष्ट्या त्वया सहायेन कृतं कर्म सुदुष्करम्" ।
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ॥ ४७

सीतायाश्चरणौ पश्चाद्विनयादभ्यवादयत् ।
रामो मातरमासाद्य विषण्णां शोककर्शिताम् ॥ ४८
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ।
अभिवाद्य सुमित्रां च कैकेयीं च यशस्विनीम् ॥ ४९
स मातॄश्च ततस्सर्वाः पुरोहितमुपागमत् ।
"स्वागतं ते महाबाहो! कौसल्यानन्दवर्धन! ॥ ५०
इति प्राञ्जलयस्सर्वे नागरा राममब्रुवन् ।
तान्यञ्जलिसहस्राणि प्रगृहीतानि नागरैः ॥ ५१
आकोशानीव पद्मानि ददर्श भरताग्रजः ।
पादुके ते तु रामस्य गृहीत्वा भरतस्स्वयम् ॥ ५२
चरणाभ्यां नरेन्द्रस्य योजयामास धर्मवित् ।
अब्रवीच्च तदा रामं भरतस्स कृताञ्जलिः ॥ ५३
"एतत्ते रक्षितं राजन्राज्यं निर्यातितं मया ।
अद्य जन्म कृतार्थं मे संवृत्तश्च मनोरथः ॥ ५४
यत्त्वां पश्यामि राजानमयोध्यां पुनरागतम् ।
अवेक्षतां भवान्कोशं कोष्ठागारं पुरं बलम् ॥ ५५
भवतस्तेजसा सर्वं कृतं दशगुणं मया" ।
तथा ब्रुवाणं भरतं दृष्ट्वा तं भ्रातृवत्सलम् ॥ ५६
मुमुचुर्वानरा बाष्पं राक्षसश्च विभीषणः ।
ततः प्रहर्षाद्भरतमङ्कमारोप्य राघवः ॥ ५७
ययौ तेन विमानेनससैन्यो भरताश्रमम् ।
भरताश्रममासाद्य ससैन्यो राघवस्तदा ॥ ५८

अवतीर्य विमानाग्रादवतस्थे महीतले ।
अब्रवीत्तु तदा रामस्तद्विमानमनुत्तमम् ॥ ५९
"वह वैश्रवणं देवमनुजानामि गम्यताम्" ।
ततो रामाभ्यनुज्ञातं तद्विमानमनुत्तमम् ॥ ६०
उत्तरां दिशमागम्य जगाम धनदालयम् ।
पुरोहितस्यात्मसमस्य राघवो बृहस्पतेश्शक्र इवामराधिपः ।
निपीड्य पादौ पृथगासने शुभे सहैव तेनोपविवेश राघवः ॥ ६१

इति श्रीमद्युद्धकाण्डे त्रिंशदुत्तरशततमस्सर्गः ॥

---

## ॥ एकत्रिंशदुत्तरशततमस्सर्गः ॥

शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः ।
बभाषे भरतो ज्येष्ठं रामं सत्यपराक्रमम् ॥ १
"पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद्ददामि पुनस्तुभ्यं यथा त्वमददा मम ॥ २
धुरमेकाकिना न्यस्तामृषभेण बलीयसा ।
किशोरीव गुरुं भारं न वोढुमहमुत्सहे ॥ ३
वारिवेगेन महता भिन्नस्सेतुरिव क्षरन् ।
दुर्बन्धनमिदं मन्ये राज्यच्छिद्रमसंवृतम् ॥ ४
गतिं खर इवाश्वस्य हंसस्येव च वायसः ।
नान्वेतुमुत्सहे राम ! तव मार्गमरिन्दम ! ॥ ५
यथा चारोपितो वृक्षो जातश्चान्तर्निवेशने ।
महांश्च सुदुरारोहो महास्कन्धप्रशाखवान् ॥ ६

शीर्येत पुष्पितो भूत्वा न फलानि प्रदर्शयन् ।
तस्य नानुभवेदर्थं यस्य हेतोस्सरोप्यते ॥ ७

एषोपमा महाबाहो ! त्वमर्थं वेत्तुमर्हसि ।
यद्यस्मान्मनुजेन्द्र ! त्वं भक्तान्भृत्यान्नशाधि हि ॥ ८

जगदद्याभिषिक्तं त्वामनुपश्यतु सर्वतः ।
प्रतपन्तमिवादित्यं मध्याह्ने दीप्ततेजसम् ॥ ९

तूर्यसङ्घातनिर्घोषैः काञ्चीनूपुरनिस्वनैः ।
मधुरैर्गीतशब्दैश्च प्रतिबुध्यस्व राघव ! ॥ १०

यावदावर्तते चक्रं यावती च वसुन्धरा ।
तावत्त्वमिह सर्वस्य स्वामित्वमनुवर्तय" ॥ ११

भरतस्य वचः श्रुत्वा रामः परपुरञ्जयः ।
तथेति प्रतिजग्राह निषसादासने शुभे ॥ १२

ततश्शत्रुघ्नवचनान्निपुणाः श्मश्रुवर्धकाः ।
सुखहस्तास्सुशीघ्राश्च राघवं पर्युपासत ॥ १३

पूर्वं तु भरते स्नाते लक्ष्मणे च महाबले ।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥ १४

विशोधितजटस्स्नातश्चित्रमाल्यानुलेपनः ।
महार्हवसनो रामस्तस्थौ तत्र श्रिया ज्वलन् ॥ १५

प्रतिकर्म च रामस्य कारयामास वीर्यवान् ।
लक्ष्मणस्य च लक्ष्मीवानिक्ष्वाकुकुलवर्धनः ॥ १६

प्रतिकर्म च सीतायास्सर्वा दशरथस्त्रियः ।
आत्मनैव तदा चक्रुर्मनस्विन्यो मनोहरम् ॥ १७

ततो वानरपत्नीनां सर्वासामेव शोभनम् ।
चकार यत्नात्कौसल्या प्रहृष्टा पुत्रलालसा ॥ १८

ततश्शत्रुघ्नवचनात्सुमन्त्रो नाम सारथिः ।
योजयित्वाऽभिचक्राम रथं सर्वाङ्गशोभनम् ॥ १९

अर्कमण्डलसङ्काशं दिव्यं दृष्ट्वा रथोत्तमम् ।
आरुरोह महाबाहू रामस्सत्यपराक्रमः ॥ २०

सुग्रीवो हनुमांश्चैव महेन्द्रसदृशद्युती ।
स्नातौ दिव्यनिभैर्वस्त्रैर्जग्मतुश्शुभकुण्डलौ ॥ २१

वराभरणसंपन्ना ययुस्ताश्शुभकुण्डलाः ।
सुग्रीवपत्न्यस्सीता च द्रष्टुं नगरमुत्सुकाः ॥ २२

अयोध्यायां तु सचिवा राज्ञो दशरथस्य ये ।
पुरोहितं पुरस्कृत्य मन्त्रयामासुरर्थवत् ॥ २३

अशोको विजयश्चैव सुमन्त्रश्चैव सङ्गताः ।
मन्त्रयन्रामवृद्ध्यर्थमृद्ध्यर्थं नगरस्य च ॥ २४

" सर्वमेवाभिषेकार्थं जयार्हस्य महात्मनः ।
कर्तुमर्हत रामस्य यद्यन्मङ्गळपूर्वकम् " ॥ २५

इति ते मन्त्रिणस्सर्वे सन्दिश्य तु पुरोहितम् ।
नगरान्निर्ययुस्तूर्णं रामदर्शनबुद्धयः ॥ २६

हरियुक्तं सहस्राक्षो रथमिन्द्र इवानघः ।
(रथमुत्तममारुह्य रराज रघुनायकः) ॥ २७

प्रययौ रथमास्थाय रामो नगरमुत्तमम् ।
जग्राह भरतो रश्मीन् शत्रुघ्नश्छत्रमाददे ॥ २८

लक्ष्मणो व्यजनं तस्य मूर्ध्नि सम्पर्यवीजयत् ।
श्वेतं च वालव्यजनं जग्राह पुरतः स्थितः ॥ २९

अपरं चन्द्रसङ्काशं राक्षसेन्द्रो विभीषणः ।
ऋषिसङ्घैस्तदाकाशे देवैश्च समरुद्गणैः ॥ ३०

स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ।
ततश्शत्रुंजयं नाम कुञ्जरं पर्वतोपमम् ॥ ३१

आरुरोह महातेजास्सुग्रीवः प्लवगर्षभः ।
नवनागसहस्राणि ययुरास्थाय वानराः ॥ ३२

मानुषं विग्रहं कृत्वा सर्वाभरणभूषिताः ।
शङ्खशब्दप्रणादैश्च दुन्दुभीनां च निस्वनैः ॥ ३३

प्रययौ पुरुषव्याघ्रस्तां पुरीं हर्म्यमालिनीम् ।
ददृशुस्ते समायान्तं राघवं सपुरस्सरम् ॥ ३४

विराजमानं वपुषा रथेनातिरथं तदा ।
ते वर्धयित्वा काकुत्स्थं रामेण प्रतिनन्दिताः ॥ ३५

अनुजग्मुर्महात्मानं भ्रातृभिः परिवारितम् ।
अमात्यैर्ब्राह्मणैश्चैव तथा प्रकृतिभिर्वृतः ॥ ३६

श्रिया विरुरुचे रामो नक्षत्रैरिव चन्द्रमाः ।
स पुरोगामिभिस्तुर्यैस्ताळस्वस्तिकपाणिभिः ॥ ३७

प्रव्याहरद्भिर्मुदितैर्मङ्गळानि ययौ वृतः ।
अक्षतं जातरूपं च गावः कन्यास्तथा द्विजाः ॥ ३८

नरा मोदकहस्ताश्च रामस्य पुरतो ययुः ।
सख्यं च रामस्सुग्रीवे प्रभावं चानिलात्मजे ॥ ३९

वानराणां च तत्कर्म राक्षसानां च तद्बलम् ।
विभीषणस्य संयोगमाचचक्षे च मन्त्रिणाम् ॥ ४०

श्रुत्वा तु विस्मयं जग्मुरयोध्यापुरवासिनः ।
द्युतिमानेतदाख्याय रामो वानरसंवृतः ॥ ४१

हृष्टपुष्टजनाकीर्णामयोध्यां प्रविवेश ह ।
ततो ह्यभ्युच्छ्रयन्पौराः पताकास्ते गृहे गृहे ॥ ४२

ऐक्ष्वाकाध्युषितं रम्यमाससाद पितुर्गृहम् ।
अथाब्रवीद्राजसुतो भरतं धर्मिणां वरम् ॥ ४३

अर्थोपहितया वाचा मधुरं रघुनन्दनः ।
पितुर्भवनमासाद्य प्रविश्य च महात्मनः ॥ ४४

कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत् ।
"यच्च मद्भवनं श्रेष्ठं साशोकवनिकं महत् ॥ ४५

मुक्ता वैडूर्यसंकीर्णं सुग्रीवाय निवेदय ।'
तस्य तद्वचनं श्रुत्वा भरतस्सत्यविक्रमः ॥ ४६

पाणौ गृहीत्वा सुग्रीवं प्रविवेश तमालयम् ।
ततस्तैलप्रदीपांश्च पर्यङ्कास्तरणानि च ॥ ४७

गृहीत्वा विविशुः क्षिप्रं शत्रुघ्नेन प्रचोदिताः ।
उवाच च महातेजास्सुग्रीवं राघवानुजः ॥ ४८

"अभिषेकाय रामस्य दूतानाज्ञापय प्रभो!" ।
सौवर्णान्वानरेन्द्राणां चतुर्णां चतुरो घटान् ॥ ४९

ददौ क्षिप्रं स सुग्रीवस्सर्वरत्नविभूषितान् ।
"यथा प्रत्यूषसमये चतुर्णां सागराम्भसाम् ॥ ५०

पूर्णैर्घटैः प्रतीक्षध्वं तथा कुरुत वानराः"
एवमुक्ता महात्मानो वानरा वारणोपमाः ॥ ५१

उत्पेतुर्गगनं शीघ्रं गरुडाइव शीघ्रगाः ।
जाम्बवांश्च हनूमांश्च वेगदर्शी च वानरः ॥ ५२

ऋषभश्चैव कलशान्जलपूर्णानथानयन् ।
नदीशतानां पञ्चानां जलं कुम्भेषु चाहरन् ॥ ५३

पूर्वात्समुद्रात्कलशं जलपूर्णमथाऽनयत् ।
सुषेणस्सत्त्वसंपन्नस्सर्वरत्नविभूषितम् ॥ ५४

ऋषभो दक्षिणात्तूर्णं समुद्राज्जलमाहरेत् ।
रक्तचन्दनशाखाभिस्संवृतं काञ्चनं घटम् ॥ ५५

गवयः पश्चिमात्तोयमाजहार महार्णवात् ।
रत्नकुम्भेन महता शीतं मारुतविक्रमः ॥ ५६

उत्तराच्च जलं शीघ्रं गरुडानिलविक्रमः ।
आजहार स धर्मात्मा नळस्सर्वगुणान्वितः ॥ ५७

ततस्तैर्वानरश्रेष्ठैरानीतं प्रेक्ष्य तज्जलम् ।
अभिषेकाय रामस्य शत्रुघ्नस्सचिवैस्सह ॥ ५८

---

॥ श्रीरामपट्टाभिषेकघट्टः ॥

पुरोहिताय श्रेष्ठाय सुहृद्भ्यश्च न्यवेदयत् ।
ततस्सप्रयतो वृद्धो वसिष्ठो ब्राह्मणैस्सह ॥ ५९

रामं रत्नमये पीठे सहसीतं न्यवेशयत् ।
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः ॥ ६०

कात्यायनस्सुयज्ञश्च गौतमो विजयस्तथा ।
अभ्यषिञ्चन्नरव्याघ्रं प्रसन्नेन सुगन्धिना ॥ ६१
सलिलेन सहस्राक्षं वसवो वासवं यथा ।
ऋत्विग्भिर्ब्राह्मणैः पूर्वं कन्याभिर्मन्त्रिभिस्तथा ॥ ६२
योधैश्चैवाभ्यषिञ्चंस्ते संप्रहृष्टास्सनैगमैः ।
सर्वौषधिरसैर्दिव्यैर्दैवतैर्नभसि स्थितैः ॥ ६३
चतुर्भिर्लोकपालैश्च सर्वैर्देवैश्च संगतैः ।
(ब्रह्मणा निर्मितं पूर्वं किरीटं रत्नशोभितम् ॥ ६४
अभिषिक्तः पुरा येन मनुस्तं दीप्ततेजसम् ।
तस्यान्ववाये राजानः क्रमाद्येनाभिषेचिताः ॥ ६५
सभायां हेमवर्णायां शोभितायां महाधनैः ॥ ६६
रत्नैर्नानाविधैश्चैव चित्रितायां सुशोभनैः ।
नानारत्नमये पीठे कल्पयित्वा यथाविधि ॥ ६७
किरीटेन ततः पश्चाद्वसिष्ठेन महात्मना ।
ऋत्विग्भिर्भूषणैश्चैव समयोक्ष्यत राघवः) ॥ ६८
छत्रं तु तस्य जग्राह शत्रुघ्नः पाण्डुरं शुभम् ।
श्वेतं च वालव्यजनं सुग्रीवो वानरेश्वरः ॥ ६९
अपरं चन्द्रसंकाशं (वालव्यजनमुत्तमम् ।
हृष्टो जग्राह रामस्य) राक्षसेन्द्रो विभीषणः ॥ ७०
मालां ज्वलन्तीं वपुषा काञ्चनीं शतपुष्कराम् ।
राघवाय ददौ वायुर्वासवेन प्रचोदितः ॥ ७१
सर्वरत्नसमायुक्तं मणिरत्नविभूषितम् ।
मुक्ताहारं नरेन्द्राय ददौ शक्रप्रचोदितः ॥ ७२

अजगुर्देवगन्धर्वा ननृतुश्चाप्सरोगणाः ।
अभिषेके तदर्हस्य तदा रामस्य धीमतः ॥ ७३

भूमिस्सस्यवती चैव फलवन्तश्च पादपाः ।
गन्धवन्ति च पुष्पाणि बभूवू राघवोत्सवे ॥ ७४

सहस्रशतमश्वानां धेनूनां च गवां तथा ।
ददौ शतं वृषान्पूर्वं द्विजेभ्यो मनुजर्षभः ॥ ७५

त्रिंशत्कोटीर्हिरण्यस्य ब्राह्मणेभ्यो ददौ पुनः ।
नानाभरणवस्त्राणि महार्हाणि च राघवः ॥ ७६

अर्करश्मिप्रतीकाशां काञ्चनीं मणिविग्रहाम् ।
सुग्रीवाय स्रजं दिव्यां प्रायच्छन्मनुजर्षभः ॥ ७७

वैडूर्यमणिचित्रे च वज्ररत्नविभूषिते ।
वालिपुत्राय धृतिमानङ्गदायाङ्गदे ददौ ॥ ७८

मणिप्रवरजुष्टं च मुक्ताहारमनुत्तमम् ।
सीतायै प्रददौ रामश्चन्द्ररश्मिसमप्रभम् ॥ ७९

अरजे वाससी दिव्ये शुभान्याभरणानि च ।
अवेक्षमाणा वैदेही प्रददौ वायुसूनवे ॥ ८०

अवमुच्यात्मनः कण्ठाद्धारं जनकनन्दिनी ।
अवैक्षत हरीन् सर्वान्भर्तारं च मुहुर्मुहुः ॥ ८१

तामिङ्गितज्ञस्संप्रेक्ष्य बभाषे जनकात्मजाम् ।
"प्रदेहि सुभगे! हारं यस्य तुष्टासि भामिनि! ॥ ८२

पौरुषं विक्रमो बुद्धिर्यस्मिन्नेतानि सर्वशः" ।
ददौ सा वायुपुत्राय तं हारमसितेक्षणा ॥ ८३

हनूमांस्तेन हारेण शुशुभे वानरर्षभः ।
चन्द्रांशुचयगौरेण श्वेताभ्रेण यथाऽचलः ॥ ८४

ततो द्विविदमैन्दाभ्यां नीलाय च परंतपः ।
सर्वान्कामगुणान्वीक्ष्य प्रददौ वसुधाधिपः ॥ ८५

सर्ववानरवृद्धाश्च ये चान्ये वानरेश्वराः ।
वासोभिर्भूषणैश्चैव यथार्हं प्रतिपूजिताः ॥ ८६

विभीषणोऽथ सुग्रीवो हनूमाञ्जाम्बवांस्तथा ।
सर्ववानरमुख्याश्च रामेणाक्लिष्टकर्मणा ॥ ८७

यथार्हं पूजितास्सर्वैः कामै रत्नैश्च पुष्कलैः ।
प्रहृष्टमनसस्सर्वे जग्मुरेव यथागतम् ॥ ८८

[दृष्ट्वा रामाभिषेकं ते महात्मानः कपीश्वराः] ।
दृष्ट्वा सर्वे महात्मानं ततस्ते प्लवगर्षभाः ॥ ८९

विसृष्टाः पार्थिवेन्द्रेण किष्किन्धामभ्युपागमन् ।
सुग्रीवो वानरश्रेष्ठो दृष्ट्वा रामाभिषेचनम् ॥ ९०

[पूजितश्चैव रामेण किष्किन्धां प्राविशत्पुरीम् ।
रामेण सर्वकामैश्च यथार्हं प्रतिपूजितः] ॥
लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः ॥ ९१

स राज्यमखिलं शासन्निहतारिर्महायशाः ।
राघवः परमोदारश्शशास परया मुदा ॥ ९२

[स वानरे कपीन्द्रे तु राक्षसेन्द्रे विभीषणे] ।
उवाच लक्ष्मणं रामो धर्मज्ञं धर्मवत्सलः ॥ ९३

" आतिष्ठ धर्मज्ञ ! मया सहेमां गां पूर्वराजाध्युषितां बलेन ।
तुल्यं मया त्वं पितृभिर्धृता या तां यौवराज्ये धुरमुद्वहस्व " ॥ ९४

सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम् ।
नियुज्यमानोऽपि च यौवराज्ये ततोऽभ्यषिञ्चद्भरतं महात्मा ॥ ९५

पौण्डरीकाश्वमेधाभ्यां वाजपेयेन चासकृत् ।
अन्यैश्च विविधैर्यज्ञैरयजत्पार्थिवर्षभः ॥ ९६

राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः ।
शताश्वमेधानाजह्रे सदश्वान्भूरिदक्षिणान् ॥ ९७

आजानुलम्बबाहुस्स महास्कन्धः प्रतापवान् ।
लक्ष्मणानुचरो रामः पृथिवीमन्वपालयत् ॥ ९८

राघवश्चापि धर्मात्मा प्राप्य राज्यमनुत्तमम् ।
ईजे बहुविधैर्यज्ञैस्ससुहृज्ज्ञातिबान्धवः ॥ ९९

न पर्यदेवन्विधवा न च व्यालकृतं भयम् ।
न व्याधिजं भयं वापि रामे राज्यं प्रशासति ॥ १००

निर्दस्युरभवल्लोको नानर्थः कंचिदस्पृशत् ।
न च स्म वृद्धा बालानां प्रेतकार्याणि कुर्वते ॥ १०१

सर्वं मुदितमेवासीत्सर्वो धर्मपरोऽभवत् ।
राममेवानुपश्यन्तो नाभ्यहिंसन्परस्परम् ॥ १०२

आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
निरामया विशोकाश्च रामे राज्यं प्रशासति ॥ १०३

"रामो रामो राम" इति प्रजानामभवन् कथाः ।
रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ १०४

नित्यपुष्पा नित्यफलास्तरवस्स्कन्धविस्तृताः ।
काले वर्षी च पर्जन्यस्सुखस्पर्शश्च मारुतः ॥ १०५

ब्राह्मणाः क्षत्त्रिया वैश्याश्शूद्रा लोभविवर्जिताः ।
स्वकर्मसु प्रवर्तन्ते तुष्टास्स्वैरेव कर्मभिः ॥ १०६

आसन्प्रजा धर्मरता रामे शासति नानृताः ।
सर्वे लक्षणसंपन्नास्सर्वे धर्मपरायणाः ॥ १०७

दशवर्षसहस्राणि दशवर्षशतानि च ।
भ्रातृभिस्सहितः श्रीमान्रामो राज्यमकारयत् ॥ १०८

धन्यं यशस्यमायुष्यं राज्ञां च विजयावहम् ।
आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥ १०९

यः पठेच्छृणुयाल्लोके नरः पापाद्विमुच्यते ।
पुत्त्रकामस्तु पुत्त्रान्वै धनकामो धनानि च ॥ ११०

लभते मनुजो लोके श्रुत्वा रामाभिषेचनम् ।
महीं विजयते राजा रिपूंश्चाप्यधितिष्ठति ॥ १११

राघवेण यथा माता सुमित्रा लक्ष्मणेन च ।
भरतेनैव कैकेयी जीवपुत्त्रास्तथा स्त्रियः ॥ ११२

श्रुत्वा रामायणमिदं दीर्घमायुश्च विन्दति ।
रामस्य विजयं चैव सर्वमक्लिष्टकर्मणः ॥ ११३

शृणोति य इदं काव्यमार्षं वाल्मीकिना कृतम् ।
श्रद्दधानो जितक्रोधो दुर्गाण्यतितरत्यसौ ॥ ११४

[ प्रवसन्तो लभन्ते वै बान्धवैस्तु समागमम् ] ।
समागमं प्रवासान्ते लभते चापि बान्धवैः ॥ ११५

प्रार्थितांश्च वरान् सर्वान्प्राप्नुयादिह राघवात् ।
श्रवणेन सुरास्सर्वे प्रीयन्ते संप्रशृण्वताम् ॥ ११६

विनायकाश्च शाम्यन्ति गृहे तिष्ठन्ति यस्य वै ।
विजयेत महीं राजा प्रवासी स्वस्तिमान्व्रजेत् ॥ ११७

स्त्रियो रजस्वलाः श्रुत्वा पुत्रान्सूयुरनुत्तमान् ।
पूजयंश्च पठंश्चेममितिहासं पुरातनम् ॥ ११८

सर्वपापात्प्रमुच्येत दीर्घमायुरवाप्नुयात् ।
प्रणम्य शिरसा नित्यं श्रोतव्यं क्षत्रियैर्द्विजात् ॥ ११९

ऐश्वर्यं पुत्रलाभश्च भविष्यति न संशयः ।
रामायणमिदं कृत्स्नं शृण्वतः पठतस्सदा ॥ १२०

प्रीयते सततं रामस्स हि विष्णुस्सनातनः ।
आदिदेवो महाबाहुर्हरिर्नारायणः प्रभुः ॥ १२१

[ प्रयच्छत्यायुरारोग्यं मुक्तिमप्यतिदुर्लभाम् ]
कुटुम्बवृद्धिं धनधान्यवृद्धिं स्त्रियश्च मुख्यास्सुखमुत्तमं च ।
श्रुत्वा शुभं काव्यमिदं महार्थं प्राप्नोति सर्वां भुवि चार्थसिद्धिम् ॥

आयुष्यमारोग्यकरं यशस्यं सौभ्रातृकं बुद्धिकरं सुखं च ।
श्रोतव्यमेतन्नियमेन सद्भिराख्यानमोजस्करमृद्धिकामैः ॥ १२३

एवमेतत्पुरा वृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ १२४

देवाश्च सर्वे तुष्यन्ति श्रवणाद्ग्रहणात्तथा ।
रामायणस्य श्रवणात्तुष्यन्ति पितरस्तथा ॥ १२५

भक्त्या रामस्य ये चेमां संहितामृषिणा कृताम् ।
लेखयन्तीह च नरास्तेषां वासस्त्रिविष्टपे ॥ १२६

इत्यार्षे श्रीमद्रामायणे आदिकाव्ये वाल्मीकीये चतुर्विंशत्सहस्रिकायां संहितायां श्रीयुद्धकाण्डे श्रीरामपट्टाभिषेकोनामैकत्रिंशदुत्तरशततमस्सर्गः ॥

रावणादिनिहन्तारं श्रीशं रुद्रादिसेवितम् ।
सीतादेवीयुतं यौद्धे रामं ध्यायेद्धृदम्बुजे ।
श्रीरामचन्द्राश्रितपारिजातः समस्तकल्याणगुणाम्बुराशिः ।
सीतामुखाम्भोरुहचञ्चरीको निरन्तरं मङ्गळमातनोतु ॥

श्रीमद्रामायणं समाप्तम् ॥

---

Printed by V. Ramaswamy Sastrulu & Sons, at the 'Vavilla' Press, Madras.

# ॥ संस्कृतग्रन्थानां सूची ॥

## ॥ वैदिकग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| पञ्चसूक्तानि | ० | ३ |
| रुद्रनमकचमकम्—सस्वरम् | ० | ३ |
| सन्ध्यावन्दनम् (याजुषम्) | ० | ३ |
| दर्शतर्पणम् | ० | ३ |
| पञ्चायतनपूजा | ० | ३ |
| तैत्तिरीयोपनिषत्— ब्रह्ममेधसहिता सस्वरा | १ | ० |
| त्रिकाण्डसारार्थबोधिनी— (श्रीविद्यामन्त्रभाष्यात्मिका) | २ | ८ |
| महात्रिपुरसुन्दरी पूजाकल्पः | १ | ० |
| वैष्णवाह्निकम्—(याजुषम्) | ० | ८ |
| स्मार्ताह्निकम् ,, | ० | १० |
| Vedic Law of Marriage | १ | ४ |
| व्रतरत्नाकरः | १ | १२ |

## ॥ वेदान्तग्रन्थाः ॥

| | | |
|---|---|---|
| श्रीमद्भगवद्गीता—(मूलमात्रम्) | ० | ८ |
| श्रीमद्भगवद्गीता by A. M. Sastri | ८ | ० |
| श्रीमद्भगवद्गीता—संस्कृतद्रविडश्लोकैः द्रमिडतात्पर्येण च सहिता | २ | ८ |
| ब्रह्मसूत्राणि—(मूलम्) | ० | ४ |
| उपनिषत्सु (Minor Upanishads Vol. I.) | २ | ० |
| दक्षिणामूर्तिस्तोत्रम्— (Minor Upanishads Vol. II) | ४ | ० |
| विवेकचूडामणिः | ० | ८ |

## ॥ पुराणानि-इतिहासग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| बालरामायणम् | ० | ३ |
| श्रीमद्वाल्मीकिरामायणम्— मूलमात्रम् (सम्पुटद्वयम्) | १० | ० |
| ,, बालकाण्डः | १ | ४ |
| ,, अयोध्याकाण्डः | २ | ८ |
| ,, आरण्यकाण्डः | १ | ८ |
| ,, किष्किन्धाकाण्डः | १ | ८ |
| ,, सुन्दरकाण्डः | १ | ८ |
| ,, युद्धकाण्डः | ३ | ० |
| श्रीमन्महाभारतम्—अष्टादश (१८) सम्पुटात्मकम् | ७० | ० |
| श्रीमद्भागवतम् (मूलमात्रम्) | १० | ० |

## ॥ तर्क, व्याकरणग्रन्थाः ॥

| | | |
|---|---|---|
| तर्कसङ्ग्रहः, न्यायबोधिनी— निरुक्ति-पदकृत्यसहितः | १ | ४ |
| शब्दमञ्जरी—(दढपत्रात्मिका) | ० | १२ |
| तिङन्तमञ्जरी-धातुपाठसहिता | ० | ५ |
| लघुसिद्धान्तकौमुदी | १ | ० |

## ॥ निघण्टुग्रन्थाः ॥

| | | |
|---|---|---|
| अमरकोशः—(मूलमात्रम्) | १ | ० |
| संस्कृतान्ध्रनिघण्टुः | ३ | ८ |

## ॥ काव्यग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| शिशुपालवधः-८ सर्गपर्यन्तः | १ | २ |
| किरातार्जुनीयम्-सव्याख्यानम् | २ | ८ |
| सुभाषितनीवी-व्याख्यानसहिता (मुद्र) | | |
| कुमारसम्भवः सव्याख्यः १-८ सर्गाः | १ | १२ |
| कुमारसम्भवः-आङ्गलार्थानुवादसहितः १,२,३,४,५,६ सर्गपर्यन्तः | ४ | ० |
| भर्तृहरिविरचितनीतिशतकम्—आङ्गलानुवादसहितम् | २ | ० |
| भर्तृहरिशतकत्रयम्-मूलम् | ० | ८ |
| सुभाषितत्रिशती-भर्तृहरिप्रणीता रामचन्द्रविरचितव्याख्यानसहिता | २ | ८ |
| श्रीकृष्णकर्णामृतम्—मूलम् | ० | १२ |
| ,, आङ्गलानुवादसहितम् | २ | ८ |
| यादवाभ्युदयः-अप्पय्यदीक्षितीयव्याख्यानसहितः ४ सर्गपर्यन्तः आङ्गलानुवादतत्प्रतिपदार्थसहितः | २ | ८ |
| हंससन्देशः-सव्याख्यः | ० | ६ |
| हंससन्देशः-सव्याख्यःप्रतिपदाङ्गलार्थानुवादाभ्यां सहितः (एतद्व्याख्या चेन्नपुरीय पच्चयप्पकलाशालायां संस्कृतपण्डितेन श्वेतारण्यं नारायणशास्त्रिणा विरचिता) | १ | ८ |
| मार्तण्डोदयम्—शेषशास्त्रि विरचितम् | ० | १२ |
| रघुवंशः— मल्लिनाथीयव्याख्यासमेतः | ४ | ८ |
| मेघसंदेशः— मल्लिनाथव्याख्यासहितः | १ | ० |
| मेघसन्देशः— मल्लिनाथीयव्याख्यासमेतः, सम्पूर्ण पीठिकाङ्गलार्थ विन्यासैः सहितः | ३ | ० |
| रामकर्णामृतम् | ० | १२ |

## ॥ अलङ्कारग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| काव्यादर्शः—दण्डिविरचितः सव्याख्यः | (मुद्रणे) | |
| चन्द्रालोकः—सव्याख्यः | १ | ० |

## ॥ चम्पू, गद्यग्रन्थाः ॥

| | रू. | अ. |
|---|---|---|
| चम्पूरामायणम्—सव्याख्यानम् | ३ | ८ |
| भोजचरित्रम् | १ | ० |
| दशकुमारचरितम्-दण्डिविरचितं सव्याख्यानम् | २ | ८ |
| दशकुमारचरितम् — पूर्वभागः with Notes & Translation | २ | ८ |
| हर्षचरितम्-तृतीयोच्छ्वासमात्रम् | १ | ८ |
| भाषामञ्जरी (प्रश्नोत्तरे) | ० | ८ |
| हितोपदेशः | १ | १२ |
| विक्रमार्कचरित्रम् | १ | ० |
| मन्दारवती (कपिस्थलं कृष्णमाचार्यविरचिता बृहत्कथामञ्जर्युद्धृताभिनवकथा) | ० | १२ |
| षेक्स्पियर् नाटककथावली | २ | ८ |
| संस्कृतबालशिक्षा— | | |
| द्राविड प्रतिपदार्थसहिता | ० | ५ |
| ,, आङ्गलप्रतिपदार्थसहिता | ० | ५ |
| ,, आन्ध्रप्रतिपदार्थसहिता | ० | ५ |

## ॥ श्रीमद्वाल्मीकिरामायणम् ॥

इदं किल सर्वेषामप्यैहिकामुष्मिकफलाभिलाषिणामर्थज्ञानपूर्वपारायणसौकर्याय द्रमिडप्रतिपदार्थ-तात्पर्याभ्यां संवलितमचिरादेव मुद्रापयिष्यते प्रकाशयिष्यते च ॥

## ॥ नामावळीसहितस्तोत्रादीनि ॥

| | रू. | अ. | | रू. | अ. |
|---|---|---|---|---|---|
| कनकधारास्तवः | ० | २ | भवानीसहस्रनामस्तोत्रम् | ० | ६ |
| आपदुद्धारकस्तोत्रम् | ० | २ | अन्नपूर्णासहस्रनामस्तोत्रम् | ० | ६ |
| रामब्रह्ममानसिकपूजा | ० | २ | गणपतिसहस्रनामस्तोत्रम् | ० | ६ |
| नारायणकवचम् | ० | २ | श्रीगोपालसहस्रनामस्तोत्रम् | ० | ६ |
| आदित्यहृदयम् | ० | २ | श्रीकाळिकासहस्रनामस्तोत्रम् | ० | ६ |
| दक्षिणामूर्तिस्तोत्रम् | ० | २ | कृष्णसहस्रनामस्तोत्रम् | ० | ६ |
| देवीस्तोत्रकदम्बः | ० | १२ | श्रीलक्ष्मीनृसिंहसहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीनारायणहृदयम् | ० | ४ | लक्ष्मीसहस्रनामस्तोत्रम् | ० | ६ |
| लक्ष्मीनृसिंहस्तोत्रम् | ० | २ | सुब्रह्मण्यसहस्रनामस्तोत्रम् | ० | ६ |
| सौन्दर्यलहरी | ० | ३ | वटुकभैरवसहस्रनामस्तोत्रम् | ० | ६ |
| सूर्यनमस्कारः | ० | ३ | रामसहस्रनामस्तोत्रम् | ० | ६ |
| श्यामलादण्डकम् | ० | २ | शिवसहस्रनामस्तोत्रम् | ० | ६ |
| मुकुन्दमाला | ० | २ | गायत्रीसहस्रनामस्तोत्रम् | ० | ६ |
| देवीखड्गमाला | ० | ३ | बालासहस्रनामस्तोत्रम् | ० | ६ |
| देवीमानसिकपूजा | ० | २ | श्रीसीतासहस्रनामस्तोत्रम् | ० | ६ |
| परमेश्वरस्तोत्रकदम्बः | ० | १२ | ललितासहस्रनामस्तोत्रम् | ० | १० |
| शिवानन्दलहरी | ० | ३ | वेङ्कटेशसहस्रनामस्तोत्रम् | ० | ६ |
| शिवकवचम् | ० | २ | श्रीशङ्कराचार्यादिस्तोत्राणि | ० | ३ |
| आलवन्दार् स्तोत्रम् | ० | ३ | नवग्रहस्तोत्रम् | ० | १० |
| | | | दशावतारस्तोत्रम् | ० | ४ |
| श्रीगोविन्दद्वादश (चतुर्दश) मञ्जरिकास्तोत्रम् | ० | २ | स्तोत्ररत्नाकरः (प्रथमभागस्य) (१४४) स्तोत्राणि | ३ | ८ |
| हरिमीडेस्तोत्रम् | ० | २ | ,, (द्वितीयभागस्य) | | |
| गद्यत्रयम् | ० | ३ | (१४३) स्तोत्राणि | ३ | ८ |
| गोपिकागीता, वेणुगीतेत्यादयः | ० | ३ | | | |
| श्रीविष्णुसहस्रनामस्तोत्रम् | ० | ६ | | | |
| आञ्जनेयसहस्रनामस्तोत्रम् | ० | ६ | | | |

अत्र कार्यालये द्रविडान्ध्राङ्गलभाषामयाः ग्रन्थाः सर्वेऽपि समुपलभ्यन्ते ॥

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स् ,
पोस्ट् बाक्स् नंबर् १३७२. २९२, एस्प्लनेड्, चेन्नपुरी. १.